# प्रायश्चित्तविवेकः

महामहोपाध्यायशूलपाणिप्रणीतः ।

गोविन्दानन्दटीकासमेतः ।

बि, ए, उपाधिधारिणा पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।

द्वितीयसंस्करणम् ।



कलिकातायां

सिद्धेश्वरयन्त्रे मुद्रितः ।

१८९३

निश्चयसंयुक्तं पापक्षयसाधनत्वेन निश्चितमित्यर्थः। तथा हारीतः। प्रयतत्वाद्वोपचितमशुभं नाशयतीति प्रायश्चित्तम्।

---

फलं ब्रह्मलोकाव्याप्त्यादपि फलान्तरमस्तीति यदा तु ब्रह्महत्यापापापनोदनायाश्वमेधः क्रियते तदा सोऽपि प्रायश्चित्तमेवेति एवं गङ्गास्नानादेरपि कदाचित् स्वर्गजनकत्वेऽपि कदाचित् पापक्षयमात्रसाधनतया प्रायश्चित्तत्वमस्तीति तेन पापक्षयमात्रसाधनतया कृतिसाध्यं कर्म प्रायश्चित्तमिति सूचयता प्रायश्चित्तस्य स्वध्वंससाधनत्वादसम्भवदोषो निराकृतः। तथा देहगतपापविशेषोद्देशेन पुरुषस्य प्रवृत्तेर्न तत्र दोषः पापनिवृत्त्या तस्य स्वतः सिद्धत्वात्। न च पञ्चसूनानुत्पत्त्यर्थेषु पञ्चमहायज्ञेष्वव्याप्तिरिति वाच्यं तेषां प्रत्यवायानुत्पादफलकत्वात् ब्रह्मयज्ञात् ब्रह्मलोकप्राप्तिः पितृयज्ञात् पितृलोकावाप्तिर्नृयज्ञात् स्वर्गः भूतदेवयज्ञाभ्यामन्नशुद्धिश्चेत्यानुषङ्गिकफलान्तरसाधनत्वाच्च। ननु विघ्नध्वंसफलकत्वान्मङ्गलेऽतिव्याप्तिः न च समाप्तिरपि तत् फलमिति वाच्यं प्रमाणाभावात् समाप्तेः स्वकारणादेव सिद्धत्वात् अन्यथा कृतमङ्गलस्य मूर्खस्य प्रारिप्सितग्रन्थसमाप्तिः स्यात्। एतेन मङ्गलस्य विघ्ननिवर्त्तकसुकृतजनकत्ववादिनोऽपि निरस्ताः। अत्र केचित्। "ख्यापनेनानुतापेन तपसाध्ययनेन च। पापकृन्मुच्यते पापात्तथा दानेन चापदि॥ शोषणेन शरीरस्य तपसाध्ययनेन च। पापकृन्मुच्यते पापाद्दानेन च दमेन च॥ इति मनुयमादिवचनैः सामान्यतः पापत्वावच्छिन्नपापक्षयमात्रसाधनानां प्रायश्चित्तत्वावगमात् मङ्गलस्य तु प्रारिप्सितग्रन्थसमाप्तिप्रतिबन्धकपापविशेषक्षयहेतुत्वान्न तस्य प्रायश्चित्तरूपतेत्याहुस्तन्न सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्। तया सकाये निर्दग्धे मुच्यते पातकात्ततः। एवं कृतव्रतो नित्यं ब्रह्मचारी समाहितः। समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति। इत्यादि मन्वाद्यनेकमुनिवचनैर्विशिष्यबोधितेषु अग्निवर्णसुरापानादिषु तत्पापविशेषक्षयसाधनेष्वव्याप्तिः पापकृन्मुच्यते पापादित्यादौ ख्यापनानुतापादीनां लघुप्रायश्चित्तानां ब्रह्मवधादिगुरुपापक्षयसाधनत्वाभावाल्लघुतमपापविशेषक्षयसाधनतया अवश्यं वाच्यत्वाच्च। उच्यते। निश्चितपापानां क्षयसाधनस्य प्रायश्चित्तत्वाभ्युपगमादनिश्चितपापक्षयसाधने मङ्गले नातिव्याप्तिः तत्र तु प्रतिबन्धकदुरितसन्देहेनैव प्रवृत्तिः। अतएव प्रायश्चित्तस्य नैमित्तिकत्वं सङ्गच्छते। न च यत्र किञ्चित् पापं निश्चित्य प्रवृत्तिः तत्रातिव्याप्तिरिति वाच्यं पापस्य प्रारिप्सितप्रतिबन्धकत्वे मानाभावात्। एवञ्च दशहरास्नाने दशविधपापसत्त्वे मानाभावात् सन्देहेनैव तत्र

एतेन पापक्षयमात्रसाधनं कर्म प्रायश्चित्तमिति प्रायश्चित्त-लक्षणम्। मात्रपदं तुलापुरुषाश्वमेधादिव्यावृत्त्यर्थम् ॥ २ ॥

ननु किं पापलक्षणम्। उच्यते। चोदनालक्षणोऽर्थो धर्म इत्यस्मिन् सूत्रे। वेदैकप्रतिपाद्योऽर्थो धर्म इति धर्मलक्षणम् कुर्वता सूत्रकारेण जैमिनिना वेदैकप्रतिपाद्योऽनर्थोऽधर्म इत्यधर्मलक्षणं सूचितम्। अनर्थश्चानिष्टसाधनम्। तथा

---

प्रवृत्तेर्नातिव्याप्तिः। यत्र दृष्टविषयपापसत्त्वे प्रमाणमस्ति तत्र तस्य प्रायश्चित्तत्व-मेवेति। तर्हि संवत्सरस्यैकमपि चरेत् कृच्छ्रं द्विजोत्तमः। अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषत इति मनुना पापानिश्चये प्राजापत्यं विहितं तत्राव्याप्तिः न च नैतत् प्रायश्चित्तमिति वाच्यं तत्प्रकरणे पाठात् सत्यं भुक्तमिति सामान्यतो ज्ञायते तत् किमिति विशेषतो न ज्ञायते इति सामान्यतस्तत्रापि पापनिश्चयोऽस्तीति मनुना अज्ञातभुक्तशुद्ध्यर्थमिति वदता दर्शितम् अतएव ज्ञातस्य तु विशेषत इत्य-नेन ज्ञातद्रव्यभक्षणे तत्तद्विशेषप्रायश्चित्तमभिहितमिति। अथवा ऐहिकपापक्षय-मात्रसाधनमित्यभिप्रेतं तेन मङ्गलेनातिव्याप्तिः नापि दशहरास्नानादौ। न च कासशूलादिरोगोपशमनार्थं तद्धेतुभूतप्राग्भवीयपापप्रायश्चित्तं कर्मविपाके यदुक्तं तत्राव्याप्तिरिति वाच्यं तत्र प्रायश्चित्तपदाप्रयोगात् यदि कदाचित् प्रयोगो दृश्यते तदा भाक्तप्रयोग इति सर्वं सामञ्जस्यम् ॥ २ ॥

ननु पापक्षयज्ञानाधीनमेव प्रायश्चित्तज्ञानं ततश्च किं पापस्वरूपमित्याह नन्विति। चोदनेति चोदनापदेनापूर्वरूपकार्य्यप्रतिपादकं वाक्यमुच्यते तेन लक्ष्यते प्रमीयते योऽपूर्वरूपः कार्य्योऽर्थः स धर्म इति सूत्रार्थः। अयमर्थः लोके घटं कुर्य्यात् पटं निरूपयेदित्यादावावापोद्वापाभ्यां निष्कृष्य लिङः कार्य्यत्वमात्रे शक्तिः कृप्ता पश्चाच्च वेदे अग्निष्टोमेन स्वर्गकामो यजेतेत्यादौ यागस्य स्वर्गसाधनत्वा-नुपपत्त्यापूर्वरूपकार्य्ये शक्तौ निर्णीतायां लोके शक्तिभ्रमादेव प्राक् प्रयोगः। परमस्तु वाक्यैकदेशे कार्य्यत्वमात्रे लाक्षणिक एव अतएव लोके लिङ् लाक्षणिकी-त्युक्तम्। एवञ्च काम्यस्थलेऽपूर्वे लिङादीनां शक्तौ निर्णीतायां नित्ये निषिद्धे प्रायश्चित्ते चापूर्वं प्रामाणिकं वाचकशब्दसद्भावात् अतएव ग्रन्थकृता ब्रह्मवधप्रक-रणे तत्तत्तन्निरूपणे न चात्रप्रयोगविधीनामपूर्वाणां भिन्नत्वादित्यनेन प्रायश्चित्ते-ऽप्यपूर्वमुक्तमिति। अथ इति कोऽर्थो योऽभ्युदयाय इति वक्ष्यमाणभाष्यकृद्वचना-

चोक्तं भाष्यकृता। कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयाय। ननु पापसत्त्वायां किं प्रमाणम्। न तावद्वेदस्तस्य कार्य्ये कार्य्यान्विते वा प्रामाण्यात्। न च दुरितापूर्वं कार्य्यं कार्य्यान्वितं वा न च नित्यकर्माकरणस्य निषिद्धाचरणस्य च वेदोक्तप्रत्यवायसाधनत्वानुपपत्त्या कल्प्यम्। तस्य तथाविधशब्दाभावेन सिद्धत्वेन चावगन्तुमशक्यत्वात्॥ ३॥

दर्थपदेनेष्टसाधनमुच्यते तेन निषिद्धाचरणजन्यापूर्वव्यावृत्तिः नित्यकर्मापूर्वस्य तु आनुषङ्गिकफलसाधनत्वाद्धर्मत्वमेव अतएव नित्ये धर्मपदव्यवहारः सङ्गच्छते तथा च नित्यश्रुत्युदितस्वधर्मेति ग्रन्थकृतोक्तम्। किञ्च श्येनेनाभिचरन् यजेत इत्यादावभिचारयागजन्यापूर्वव्यावृत्त्यर्थमर्थपदं तथा हि अर्थपदेन बलवदनिष्टाननुबन्धीष्टसाधनमुच्यते बलवत्त्वञ्च इष्टादनिष्टाधिक्यं ततश्च हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म चेत्युपपातकमध्ये मनुना पठितत्वाच्चिरकालोपभोग्यनरकानिष्टाधिक्यान्नार्थपदवाच्यत्वमभिचारस्येति तद्व्यावृत्तिः। पुरुषप्रवृत्तिस्तु रागौत्कट्यादिति। न च वेदोऽखिलो धर्ममूलमिति मनुवचनेऽखिलपदव्याघात इति वाच्यम्। आततायिनमुद्दिश्याभिचारे दोषाभावादिष्टमात्रसाधनस्य श्येनापूर्वस्य धर्मत्वात् सामान्यतस्तद्बोधकवेदस्य धर्ममूलत्वासम्भवात् अध्ययनब्रह्मयज्ञाभ्यां सर्वेषां वेदानां धर्ममूलत्वाच्च। अतएव न कलञ्जं भक्षयेदित्यादेरपि धर्ममूलत्वं सिद्धमिति ध्येयम्। वेदैकप्रतिपाद्य इति वेदपदेन वेदो वेदोपजीविप्रमाणञ्चोच्यते तन्मात्रगम्योऽर्थः इत्यर्थः। अर्थः अर्थपदार्थो व्याख्यात एव। एकपदम् उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये इत्यादौ लौकिकप्रमाणगम्यार्थस्य व्यावृत्त्यर्थम्। एतच्च सूत्रे चोदनापदाल्लभ्यते विधेरप्राप्तप्रापकत्वात् तथाऽधर्मलक्षणेऽप्येकपदं यत् यत् परवशं कर्म तत्तत् यत्नेन वर्जयेदित्यादौ लौकिकप्रमाणसिद्धस्य दुःखजनकस्य पराधीनत्वादेर्व्यावृत्त्यर्थं ज्ञेयम्। सूचितमिति अधर्मस्य धर्मविपरीततया तात्पर्य्यलभ्यत्वादित्यर्थः। अभ्युदय इष्टसिद्धिः अनभ्युदयोऽनिष्टसिद्धिरित्यर्थः। अथ अधर्मलक्षणं कृतं लक्ष्यसिद्धौ हि लक्षणं लक्ष्ये च प्रमाणं नास्तीत्याह न तावदिति तस्य वेदस्य कार्य्येऽपूर्वे कार्य्यान्विते यागतत्तत्फलादौ। न चेति प्रत्यवायो नरकं निषिद्धाचरणादेस्तावत्कालस्थायित्वाभावान्नरकसाधनत्वासम्भवात् अन्यथानुपपत्त्या दुरितादृष्टं द्वारं कल्प्यमित्यर्थः। तस्येति तस्य प्रत्यवाय-

एतेन पापक्षयमात्रसाधनं कर्म प्रायश्चित्तमिति प्रायश्चित्त-लक्षणम् । मात्रपदं तुलापुरुषाश्वमेधादिव्यावृत्त्यर्थम् ॥ २ ॥

ननु किं पापलक्षणम् । उच्यते । चोदनालक्षणोऽर्थो धर्म इत्यस्मिन् सूत्रे । वेदैकप्रतिपाद्योऽर्थो धर्म इति धर्मलक्षणम् कुर्वता सूत्रकारेण जैमिनिना वेदैकप्रतिपाद्योऽनर्थोऽधर्म इत्यधर्मलक्षणं सूचितम् । अनर्थश्चानिष्टसाधनम् । तथा

---

प्रवृत्तेर्नातिव्याप्तिः । यत्र दृष्टविषयपापसत्त्वे प्रमाणमस्ति तत्र तस्य प्रायश्चित्तत्व-मेवेति । तर्हि संवत्सरस्यैकमपि चरेत् कृच्छ्रं द्विजोत्तमः । अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषत इति मनुना पापानिश्चये प्राजापत्यं विहितं तत्राव्याप्तिः न च नैतत् प्रायश्चित्तमिति वाच्यं तत्प्रकरणे पाठात् सत्यं भुक्तमिति सामान्यतो ज्ञायते तत् किमिति विशेषतो न ज्ञायते इति सामान्यतस्तत्रापि पापनिश्चयोऽस्तीति मनुना अज्ञातभुक्तशुद्ध्यर्थमिति वदता दर्शितम् अतएव ज्ञातस्य तु विशेषत इत्य-नेन ज्ञातद्रव्यभक्षणे तत्तद्विशेषप्रायश्चित्तमभिहितमिति । अथवा ऐहिकपापक्षय-मात्रसाधनमित्यभिप्रेतं तेन मङ्गलेनातिव्याप्तिः नापि दशहरास्नानादौ । न च कासशूलादिरोगोपशमनार्थं तद्धेतुभूतप्राग्भवीयपापप्रायश्चित्तं कर्मविपाके यदुक्तं तत्राव्याप्तिरिति वाच्यं तत्र प्रायश्चित्तपदाप्रयोगात् यदि कदाचित् प्रयोगो दृश्यते तदा भाक्तप्रयोग इति सर्वं सामञ्जस्यम् ॥ २ ॥

ननु पापक्षयज्ञानाधीनमेव प्रायश्चित्तज्ञानं ततश्च किं पापस्वरूपमित्याह नन्विति । चोदनेति चोदनापदेनापूर्वरूपकार्य्यप्रतिपादकं वाक्यमुच्यते तेन लक्ष्यते प्रमीयते योऽपूर्वरूपः कार्य्योऽर्थः स धर्म इति सूत्रार्थः । अयमर्थः लोके घटं कुर्य्यात् पटं निरूपयेदित्यादावावापोद्वापाभ्यां निष्कृष्य लिङः कार्य्यत्वमात्रे शक्तिः कृप्ता पश्चाच्च वेदे अग्निष्टोमेन स्वर्गकामो यजेतेत्यादौ यागस्य स्वर्गसाधनत्वा-नुपपत्त्यापूर्वरूपकार्य्ये शक्तौ निर्णीतायां लोके शक्तिभ्रमादेव प्राक् प्रयोगः । परमस्तु वाक्यैकदेशे कार्य्यत्वमात्रे लाक्षणिक एव अतएव लोके लिङ् लाक्षणिकी-त्युक्तम् । एवञ्च काम्यस्थलेऽपूर्वे लिङादीनां शक्तौ निर्णीतायां नित्ये निषेधे प्रायश्चित्ते चापूर्वे प्रामाणिकं वाचकशब्दसद्भावात् अतएव अन्यकृता अश्वमेधप्रक-रणे तद्वत्तानिरूपणे न चात्रप्रयोगविधीनामपूर्वाणां भिन्नत्वादित्यनेन प्रायश्चित्ते-ऽप्यपूर्वमुक्तमिति । धर्म इति कोऽर्थो योऽभ्युदयाय इति वक्ष्यमाणभाष्यकृद्वचना-

चोक्तं भाष्यकृता। कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयाय। ननु पापसत्त्वायां किं प्रमाणम्। न तावद्वेदस्तस्य कार्य्ये कार्य्यान्विते वा प्रामाण्यात्। न च दुरितापूर्वं कार्य्यं कार्य्यान्वितं वा न च नित्यकर्माकरणस्य निषिद्धाचरणस्य च वेदोक्तप्रत्यवायसाधनत्वानुपपत्त्या कल्प्यम्। तस्य तथाविधशब्दाभावेन सिद्धत्वेन चावगन्तुमशक्यत्वात्॥ ३॥

---

दर्थपदेनेष्टसाधनमुच्यते तेन निषिद्धाचरणजन्यापूर्वव्यावृत्तिः नित्यकर्मापूर्वस्य तु आनुषङ्गिकफलसाधनत्वाद्धर्मत्वमेव अतएव नित्ये धर्मपदव्यवहारः सङ्गच्छते तथा च नित्यश्रुत्युदितस्वधर्मेति ग्रन्थकृतोक्तम्। किञ्च श्येनेनाभिचरन् यजेत इत्यादावभिचारयागजन्यापूर्वव्यावृत्त्यर्थमर्थपदं तथा हि अर्थपदेन बलवदनिष्टाननुबन्धीष्टसाधनमुच्यते बलवत्त्वञ्च इष्टादनिष्टाधिक्यं ततश्च हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म चेत्युपपातकमध्ये मनुना पठितत्वाच्चिरकालोपभोग्यनरकानिष्टाधिक्यान्नार्थपदवाच्यत्वमभिचारस्येति ;तद्व्यावृत्तिः। पुरुषप्रवृत्तिस्तु रागौत्कट्यादिति। न च वेदोऽखिलो धर्ममूलमिति मनुवचनेऽखिलपदव्याघात इति वाच्यम्। आततायिनमुद्दिश्याभिचारे दोषाभावादिष्टमात्रसाधनस्य श्येनापूर्वस्य धर्मत्वात् सामान्यतस्तद्बोधकवेदस्य धर्ममूलत्वासम्भवात् अध्ययनब्रह्मयज्ञाभ्यां सर्वेषां वेदानां धर्ममूलत्वाच्च। अतएव न कलञ्जं भक्षयेदित्यादेरपि धर्ममूलत्वं सिद्धमिति ध्येयम्। वेदैकप्रतिपाद्य इति वेदपदेन वेदो वेदोपजीविप्रमाणञ्चोच्यते तन्मात्रगम्योऽर्थः इत्यर्थः। अर्थः अर्थपदार्थो व्याख्यात एव। एकपदम् उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये इत्यादौ लौकिकप्रमाणगम्यार्थस्य व्यावृत्त्यर्थम्। एतच्च सूत्रे चोदनापदाल्लभ्यते विधेरप्राप्तप्रापकत्वात् तथाऽधर्मलक्षणेऽप्येकपदं यत् यत् परवशं कर्म तत्तत् यत्नेन वर्जयेदित्यादौ लौकिकप्रमाणसिद्धस्य दुःखजनकस्य पराधीनत्वादेर्व्यावृत्त्यर्थं ज्ञेयम्। सूचितमिति अधर्मस्य धर्मविपरीततया तात्पर्य्यलभ्यत्वादित्यर्थः। अभ्युदय इष्टसिद्धिः अनभ्युदयोऽनिष्टसिद्धिरित्यर्थः। अथ अधर्मलक्षणं कृतं लक्ष्यसिद्धौ हि लक्षणं लक्ष्ये च प्रमाणं नास्तीत्याह न तावदिति तस्य वेदस्य कार्य्येऽपूर्वे कार्य्यान्विते यागतत्तत्फलादौ। न चेति प्रत्यवायी नरकं निषिद्धाचरणादेस्तावत्कालस्थायित्वाभावान्नरकसाधनत्वासम्भवात्तदन्यथानुपपत्त्या दुरितादृष्टं द्वारं कल्प्यमित्यर्थः। तस्येति तस्य प्रत्यवाय-

उच्यते यो ब्राह्मणायावगुरेत्तं शतेन यातयेदिति श्रुतौ लिङ्द्वयश्रुतेरवगोरणशतयातनयोः साध्यसाधनभावोऽवगम्यते। हेतुहेतुमतोर्लिङिति लिङ्स्मरणात् इति यथोक्तं शंयूधिकरणे तथात्रापि। क्वचित् पञ्चम्या क्वचित् तृतीयया क्वचिद्विशेषणेन तदवगम्यते। यथा याज्ञवल्क्यः।

> विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
> अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥

मनुः। शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।

> वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥
> इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा।
> प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम्॥

---

साधनत्वस्यावगन्तुमशक्यत्वादित्यन्वयः। तत्र हेतुस्तथाविधेति नित्याकरणं निषिद्धाचरणञ्च प्रत्यवायसाधनमित्येवं रूपशब्दाभावेनेत्यर्थः। ननु सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मस्वित्यादि वचनमस्तीत्यत आह सिद्धत्वेनेति नदीतीरे पञ्चफलानि सन्तीतिवत् सिद्धार्थवादत्वेन तस्य प्रामाण्याभावादित्यर्थः॥ ३॥

तथाविधशब्दाभावेनेति यदुक्तं तद्दूषयति यो ब्राह्मणायेति यो ब्राह्मणायेत्यादि स्मरणादित्यन्तं यथोक्तं शंयूधिकरणे अत्राप्यर्थापत्त्या प्रापकत्वनेऽपि तथेत्यन्वयः हेतुहेतुमद्वाचकशब्दसद्भावात् निषिद्धाचरणादीनां प्रत्यवायसाधनत्वस्य शाब्दत्वादर्थापत्त्या प्रापकत्वनं सिद्धमिति निर्गलितार्थः। यो ब्राह्मणायावगुरेत्तं शतेन यातयेत् यो ब्राह्मणायोपचरेत् स शंयुर्भवेदिति श्रुतेरर्थौ यत्र निर्णीयते तत्शंयूधिकरणम्। श्रुतेरयमर्थः अवगोरणं हस्तोद्यमनादिकं कर्तृभूतमदृष्टद्वारा तम् अवगोरणकर्त्तारं शतेन शताब्दकालेन यातयेत् यातनाभाजं करोति यथा मनुः अवगुर्य्य त्वब्दशतं सहस्रमभिहत्य तु। जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते। अन्ये तु शतयातना नाम्ना नरकेणेत्याहुः। तन्न वक्ष्यमाणनरकगणने पुराणादौ वा शतयातनानामनरकाप्रसिद्धेः। अवगोरणाच्छताब्दं यावत्

तथा विष्णुपुराणम्।

नरकं कर्मणां लोपादेवमाहुर्महर्षयः ॥

तथा यमः।

सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयकृन्नरः।
पतितैः संप्रयुक्तश्च कृतघ्नो गुरुतल्पगः।
एते पतन्ति सर्वेषु नरकेष्वनुपूर्वशः ॥

अत्र एते सुरापादयः पतन्तीति। सुरापादीनां पतनकर्तृत्वावगतेः कर्तृत्वञ्च साधनत्वविशेषः। अतः सुरापानादिविशिष्टस्य पुरुषस्य पतनसम्बन्धे विशेषणस्य सुरापानादेः सति सम्भवे पतनसाधनत्वमवगम्यते। सप्तदशप्राजापत्यान् पशूनालभेत इतिवत्। एवंवारिदस्तृप्तिमाप्नोतीत्यादावपि ॥ ४ ॥

---

यातना जायते ब्राह्मणहिताचरणाच्च शंयुता कल्याणं स्वर्गो जायते इति। अत्र लिङा अवगोरणहिताचरणयोः साधनत्वं यातनाकल्याणयोश्च साध्यत्वं बोध्यते। यद्यपि परस्पराघटकोपस्थितिं विना लिङादपि बोधयितुं न शक्यते तथापि पूर्ववर्त्तित्वोत्तरवर्त्तित्वयोर्बोधनात् सिद्धसाध्यसमभिव्याहारव्युत्पत्तिलभ्यः कार्य्यकारणभावः। हेत्विति हेतुहेतुमतोर्लिङिति सूत्रेण पाणिनिमुनिना लिङः स्मरणात् ज्ञापनादित्यर्थः। श्रुतिमुपन्यस्य स्मृतिमपि प्रमाणयति क्वचिदिति हेतुवाचकशब्दात् तत् प्रत्यवायसाधनत्वं नित्याकरणादीनामवगम्यते इत्यर्थः। अनिग्रहाच्चेति इन्द्रियस्वातन्त्र्येण हि अभिशापादिना पापं जायते त्रिशङ्कोश्चाण्डालत्ववत्। पतनं पातकम्। रूपविपर्य्ययं काणत्वखञ्जत्वादि। अत्रेति सुरापादीनां पतनकर्तृत्वावगतेः सुरापानादेः पतनसाधनत्वमवगम्यते इति पश्चात्तनेन सम्बन्धः कथमित्याह कर्तृत्वञ्चेति सति सम्भव इति सुरापाने द्विजातेरेव पतनसम्भवो न तु शूद्रादीनाम् अतो यत्र पतनयोग्यता तत्र पतनहेतुत्वमित्यर्थः। सप्तेति अत्र यथा विशेषणस्य सप्तदशसंख्याया आलभनसाधनत्वं प्रकृतेऽपि तथा एवमिति कर्तृविशेषणस्य वारिदानस्य तृप्तिसाधनत्वमवगन्तव्यमित्यर्थः ॥ ४ ॥

नरकसाधनत्वस्य कार्य्यान्वयाभावात् कथं शब्दादवगतिरिति चेत् शंयुवद्विषयविशेषणतयेति ब्रूमः। यथा यातनासाधनावगोरणान्निवर्त्तितव्यमिति विधिः। तथा नरकसाधनात् सुरापानादेर्निवर्त्तितव्यमिति। नित्येऽपि यस्याकरणात् प्रत्यवायस्तस्मिन् कर्मणि प्रवर्त्तेतेति विध्यङ्गीकारात्। अथवा यद्यस्य साधनं तदभावस्तत्परिहारसाधनमिति लोकादवगतत्वात् अर्थात् प्रत्यवायपरिहारस्योपस्थितत्वात् तदर्थिनोऽधिकारो नित्ये निषेधेष्वपि। ननु अहरहः सन्ध्यामुपासीत इत्यादौ जीवनस्य सन्ध्योपासनव्याप्यवगमात्। जीवनवतोऽधिकारः। न कलञ्जं भक्षयेदित्यादौ निवृत्तिस्वभावलब्धा प्रवृत्तिरधिकारिणो विशेषणं तथा चोक्तम्।

मनसा तु प्रवृत्तस्य भूतचेष्टावतोऽपि वा।
यदनागतभावस्य वर्जनं तन्निवर्त्तनमिति॥

नरकेति कार्य्यस्य कार्य्यान्वितस्य च द्वयोरेव वेदादवगम इत्युक्तं पूर्ववचनानामर्थवादरूपत्वेन नरकसाधनत्वस्य कार्य्यान्वयाभावात् कथं वेदशब्दादवगम इति पूर्वपक्षार्थः। शंयुवदिति प्रवृत्तिविषयस्य नित्यकर्मणो निवृत्तिविषयस्य च निषिद्धस्य सुरापानादेर्विशेषणतया कार्य्यान्वयान्नरकसाधनत्वस्य वेदादवगम इत्यर्थः। एतत् सर्वं शंयुदृष्टान्तेन सह स्वयमेव विवृणोति यथेति। ननु प्रवृत्तिविषयस्य नित्यकर्मणो निवृत्तिविषयस्य च सुरापानादेर्विशेषणतया कार्य्यान्वयान्नरकसाधनत्वं न विशेषणं किन्तु तदभावस्यैवेति परम्पराविशेषणत्वमपि व्यतिरेकमुखेनैव वाच्यं ततश्च तस्य शब्दान्नावगम इत्याशङ्क्याह अथ वेति यत् यस्य साधनं तदभावः साधनाभावः तत्परिहारसाधनमिति लोकादवगतत्वात् प्रकृतेऽपि नित्याकरणं निषिद्धाचरणञ्च प्रत्यवायसाधनं तदभावश्च प्रत्यवायपरिहारसाधनमित्यर्थात् प्रत्यवायपरिहारस्योपस्थितत्वात्तदर्थितया तस्याधिकारिविशेषणत्वे नित्यविधौ निषेधे च प्रत्यवायस्य कार्य्येऽन्वयात् शब्दादवगम इत्यर्थः। निवृत्तिस्वभावेति निवृत्तिप्रतियोगिकत्वं स्वभावः ततः प्राप्तेत्यर्थः। भूतेति पञ्चभूतात्मकं शरीरं तच्चेष्टावतः

अतः कथं प्रत्यवायपरिहारार्थिनोऽधिकारः। उच्यते प्रत्यवायपरिहारस्याप्युपस्थितत्वात्। जातेष्टिवत् संवलिताधिकार एव भविष्यति। तथा च जाबालः।

क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते।
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते॥
नित्यक्रियां तथैवान्ये ह्यनुषङ्गफलां श्रुतिम्।

अनुत्पत्तिमित्यनेन प्रत्यवायपरिहारः फलमित्युक्तम्। अथवा प्रायश्चित्तविधिषु रात्रिसत्रन्यायेनार्थवादिकपापक्षयार्थिनोऽधिकारात्। त एव विधयः पापसत्तां बोधयन्ति। तथा चाङ्गिराः।

उद्गच्छन् यद्वदादित्यस्तमः सर्वं व्यपोहति।
तद्वत् कल्याणमातिष्ठन् सर्वं पापं व्यपोहति॥
पापञ्चेत् पुरुषः कृत्वा कल्याणमभिपद्यते।
मुच्यते पातकैः सर्वैर्महाभ्रैरिव चन्द्रमाः॥

---

पुंसो यदनागतभावस्याप्राप्तपदार्थस्य वर्जनं न ममेदं कार्य्यमिति मानसव्यापारः तन्निवर्त्तनमित्यर्थः। जातेष्टिवदिति पुत्रे जाते वैश्वानरं द्वादशकपालं निर्वपेदिति विहितायां जातेष्टौ पुत्राभ्युदयकामस्य पुत्रोत्पत्तिनिमित्तवती यथा संवलिताधिकारस्तथात्रापीत्यर्थः। प्रत्यवायस्यानुत्पत्तिं प्रागभावपरिपालनमित्यर्थः। नित्यक्रियां नित्यक्रियायामित्यार्षः लक्षणया नित्यक्रियाबोधिकामिति वार्थः। ननु अनुमानात् प्रत्यवायपरिहारोपस्थितिस्तस्य चाधिकारविशेषणत्वमिति प्रागुक्तं तच्चानुमानं न घटते साधनत्वानिर्णयात् नित्याकरणस्य प्रत्यवायसाधनतायाः कार्य्यान्वयाभावात् सन्दिह्यमानत्वादित्यत आह अथ वेति य एता रात्रीरुप यजन्ति ते प्रतितिष्ठन्ति अन्नदा ब्रह्मवर्चस्विनो भवन्तीत्यर्थवादश्रुतौ श्रुतस्य फलस्य रात्रिसत्रं कुर्य्यादिति विध्येकवाक्यतया अधिकारिविशेषणत्वे सति प्रामाण्यमिति रात्रिसत्रन्यायः तद्वदत्राप्यार्थवादिकपापक्षयस्य प्रायश्चित्तविध्येकवाक्यतयाधि-

कल्याणं प्रायश्चित्तम्। यमः।

तपसोऽन्ते विशुद्ध्यन्ति कर्मणां वा परिक्षयात्।
तस्मात् कर्त्तव्यमितैस्तु प्रायश्चित्तं विशुद्धये॥

कर्मणां भोगेन परिक्षयादित्यर्थः। अपरं स्मृत्यन्तरे ज्ञेयम्॥ ५॥

ननु किं पापोत्पत्तिकारणम्। उच्यते विहिताकरणं निषिद्धाचरणञ्च पापकारणम्। तदाह मनुः

अकुर्वन् विहितं कर्म निषिद्धञ्च समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥

प्रायश्चित्तार्हताज्ञापनेन पापसत्तां प्रतिपादयति।

तथा याज्ञवल्क्यः।

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥
नन्विन्द्रियार्थप्रसङ्गस्य कथं पृथगुपन्यासः।
इन्द्रियार्थेषु सर्वेषु न प्रसज्जेत कामतः॥

त्यनेन मनुना तस्यापि निषिद्धत्वात्। इन्द्रियार्थप्रसङ्गा-
ासेन पापाधिक्यार्थमिति कल्पतरुः। तदसत् अभ्यासस्या-
ब्दार्थत्वात्तथात्वेऽपि वा

अज्ञानाद्यदि वा ज्ञानात् कृत्वा कर्म विगर्हितम्।
तस्माद्विमुक्तिमन्विच्छन् द्वितीयं न समाचरेत्॥

इत्यनेन मनुवचनेन पुनरुक्तत्वापत्तेः। उच्यते। इन्द्रियार्थप्रसङ्गेनात्र स्वकार्य्यतया दंशाभिशापौ लक्ष्येते। तयोरपि पापोत्पादकत्वप्रतिपादनार्थमिदम्। यथा पैठीनसिः। अनृतमभिशप्यमानः कृच्छ्रं मासं समाचरेत्। पातकेषु महापातकेषु द्विमासं कृच्छ्रमिति। तथा मनुः।

श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च।
नराश्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति॥

न च दंशाभिशापौ निषिद्धौ। तयोरागतः प्रवृत्त्यभावेन निषेधस्यानुपपत्तेः। दश्यमानाभिशप्यमानयोस्तत्कर्मत्वेनाकर्त्तृत्वात् न च तौ क्षुतादिवत् पूर्वोत्पन्नदुरितसूचकौ। पापोत्पादकप्रकरणे पाठात्। क्षुतादीनान्तु ज्योतिरागमे सूचकप्रकरणे पाठात्। अथेन्द्रियार्थप्रसङ्गं विनापि दंशाभिशापौ दृश्येते यथा महर्षेर्माण्डव्यस्य चौराभिशापपूर्वं शूले निपातनम्। तथा लक्षसंख्यजनरक्षितस्यापि परीक्षितस्य तक्षकेण दंशनम्। अतः कथं तत्कार्य्यत्वमिति न तयोरपि

---

तथापीदानीं तस्य विवेचनं पृच्छति नन्विति। उच्यते इति नित्याकरणं निषिद्धाचरणञ्च द्वयं प्रायिकत्वात् प्रथमत उक्तं दंशाभिशापयोरपि वक्ष्यमाणत्वादिति। अज्ञानादिति न च विगर्हितमित्यनेन निषिद्धस्य परदारोपसेवादेरेवाभ्यासो निषिद्धः न त्विन्द्रियार्थप्रसङ्गस्येति न पुनरुक्तिरिति वाच्यं पूर्ववचने तस्यापि निषिद्धत्वेन विगर्हितत्वात्। अनृतमभिशप्यमान इति पातकेषु अनुपातकेषु मिथ्यापरिवादग्रस्तः इत्यर्थः ग्राम्यैः क्रव्याद्भिविड़ालादिभिरित्यर्थः तत्कर्मत्वेन दंशाभिशापकर्मत्वेन इत्यर्थः। कथं तत्कार्य्यत्वमिति इन्द्रियार्थप्रसङ्गकार्य्यत्वं

पूर्वकृतेन्द्रियार्थप्रसङ्गजनितमुनिशापोत्पन्नत्वात्। अतस्त्रिविधं पापकारणम्। एतेन यद्गोतमेनोक्तं शिष्टस्याक्रियाप्रतिषिद्ध-सेवनमिति द्वैविध्यम्। तत् प्रायिकत्वेन नर इत्यनेन ब्राह्म-णादिचाण्डालान्तानां सर्वेषां पापं दर्शयति। अस्ति च चाण्डालादीनामपि विधिर्निषेधश्च। यथा देवलः। स्वजाति-शोचनं सर्वजनप्रणामस्तितिक्षा व्यवहारशुद्धिरपरापमानं स्वभृत्यपोषणं प्रधानकर्मपरिवर्जनमिति चाण्डालधर्मः। मनुः

> गवार्थे ब्राह्मणार्थे वा प्राणत्यागोऽनुपस्कृतः।
> स्त्रीबालाभ्युपपत्तौ च वाह्यानां शुद्धिकारणम्॥

अतो वेदार्थव्यवहारिणामेव प्रायश्चित्तीयता। न चाण्डाला-दीनामिति प्रत्युक्तम्॥ ६॥

अथ पापकर्मफलनिवृत्तिः तत्र मनुः।

> शुभाशुभफलं कर्म मनोवाग्देहसम्भवम्।
> कर्मजा गतयो नृणामुत्तमाधममध्यमाः॥
> मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्।
> वाचा वाचा कृतं कर्म कायेनैव तु कायिकम्॥

---

दंशाभिशापयोः येन तदुपलक्षकत्वं तस्येत्यर्थः। त्रिविधमिति इन्द्रियार्थप्रसङ्ग-जन्यत्वेन दंशाभिशापयोरेकरूपत्वात्। अकुर्वन्नित्यादि मनुवचने नरपदं व्याचष्टे नर इत्यनेनेति स्वजातिशोचनं निकृष्टजातौ जन्मेत्यनुतापः। तितिक्षा क्षमा अपरापमानं परापमानवर्जनम्। प्रधानस्य ब्राह्मणस्य कर्मणः पञ्चयज्ञप्रतिग्रहादे-र्वर्जनमित्यर्थः। अनुपस्कृत अकपटकृतः स्त्रीबालादीनामभ्युपपत्तिस्त्राणं तदर्थ-श्चेत्यर्थः॥ ६॥

अथेति पापकर्मफलोपभोगान्निवृत्तिर्निरूप्यते इति शेषः कर्मजा इति त्रिवि-धानां शुभाशुभकर्मणां मध्यादेकैककर्मणस्त्रिविधा उत्तमाद्या गतयो देहा जायन्ते कर्मणस्तारतम्यादित्यर्थः।

गतिर्देहप्राप्तिः। हारीतः। यस्मिन् यस्मिन् वयसि यः करोति शुभाशुभानि तस्मिंस्तस्मिन् वयसि शारीरवाचिकमानसानि प्राप्नोति। याज्ञवल्क्यः।

अनन्ताश्च यथाभावाः शरीरेषु शरीरिणाम्।
रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम्॥
विपाकः कर्मणां प्रेत्य केषाञ्चिदिह जायते।
इह चामुत्र चैकेषां भावस्तत्र प्रयोजनम्॥

रूपाण्यन्धत्वकुञ्जत्वादीनि। प्रयोजनं प्रयोजकः। अशुभकर्मणा देहत्रितयप्राप्तिर्यथाक्रममुक्ता विष्णुधर्मोत्तरे।

तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्।
ऊर्द्ध्वं व्रजन्ति भूतानि त्रीण्यस्मात्तस्य विग्रहात्॥

तथा, आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव।
केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्॥

तथा, प्रेतपिण्डैस्ततोदत्तैर्देहमाप्नोति भार्गव।
भोगदेहमिति प्रोक्तं क्रमादेव न संशयः॥

---

विपाकः फलं प्रेत्य परलोके इह इह लोके एकेषाम् अन्येषां भावश्चित्तवृत्तिः। विष्णुधर्मवचनस्य निर्गलितार्थमुपन्यस्य तद्वचनमुपन्यस्यति अशुभेति। तत्क्षणात् मृत्युक्षणात् अतिवहतीत्यतिवाहो वायुः आतिवाहिकं वायवीयमित्यर्थः। अस्माद्विग्रहादिति ल्यप्लोपे पञ्चमी इमं वायुसमवेतं देहं प्राप्य पृथिव्यप्तेजांसि त्रीणि भूतानि मृतस्यादूर्द्ध्वं व्रजन्तीत्यर्थः वायुप्राधान्येनोर्द्ध्वं क्षिपेदित्यर्थः।

प्रेतपिण्डैः पूरकपिण्डैर्द्वितीयं देहं प्राप्नोति सपिण्डीकरणे कृते देहमन्यं तृतीयं प्रतिपद्यते इति ऋज्वर्थं पश्यन्तो देहत्रितयप्राप्तिरिति पाठं मन्यन्ते वस्तुतस्तु देहद्वितयप्राप्तिरिति ग्रन्थकृतः पाठः पूरकपिण्डानां द्वितीयशरीरजनने प्रमाणाभावात् तथाहि आतिवाहिकाख्यः प्रेतदेहः पूरकपिण्डैस्तस्यैवाङ्गपूरणं क्रियते अतएव पुष्टिजननकत्वात् पूरकपिण्ड इत्युच्यते ततः आतिवाहिकदेहप्राप्त्यनन्तरं क्रमाद्दत्तैः

प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोचणम्।
श्माशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते॥
तत्रास्य यातना घोरा शीतवातातपोद्भवा।
ततः सपिण्डीकरणे बान्धवैः स कृते नरः॥
पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते।
ततः स नरके याति स्वर्गे वा स्वेन कर्मणा॥

तत्त्वणात् मृत्युचणादित्यर्थः। प्रेतशरीरञ्च पूर्वदेहरूपमत्यन्त-गतिमत्। यथा मार्कण्डेयपुराणम्।

यायुप्रसारि तद्रूपं देहमन्यत् प्रपद्यते।
तत्कर्मजं यातनार्थं न मातापितृसम्भवम्॥
तत्प्रमाणवयोवस्था संस्थानं प्रागभवं यथा।

कर्मानुरूपं तत्तत्कालं तत्तन्नरकाननुभूय तिर्य्यगादिशरीरं प्राप्य पापकर्मशेषेण तत्तल्लक्षणोपेतं मनुष्यशरीरं प्राप्नोति। यथा विष्णुः। अथ नरकानुभूतदुःखानां तिर्य्यक्त्वादुत्तीर्णानां मानुष्ये लक्षणानि भवन्ति। कुष्ठातिपातकी ब्रह्महा यक्ष्मी सुरापः श्यावदन्तकः। स्वर्णापहारी कुनखी गुरुतल्पगो दुश्चर्मा इत्यादि। तथा मनुः।

---

प्रेतोद्दिष्टकाधिक्ये: पूरकादिसपिण्डीकरणान्तषोड़शश्राद्धपिण्डैर्भोगदेहमाप्नोति तथाचैव विष्णुधर्मोत्तरे। कृते सपिण्डीकरणे नरः संवत्सरात्परं प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते। एतेषामवश्यकर्त्तव्यतामाह प्रेतपिण्डा न दीयन्ते इति तथा च यमः। यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श। पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि इति तत्र प्रेतदेहे इत्यर्थः। कदा तद्भोगदेहप्राप्तिरित्या-काङ्क्षायामाह ततः सपिण्डीकरणे इति। ततः यातनोपभोगानन्तरं पूर्णे संवत्सरे बान्धवैः पुत्रादिभिः सपिण्डीकरणे कृते सति अत आतिवाहिकाख्यात् प्रेतदेहात् अन्यं द्वितीयं भोगदेहं प्रपद्यते इत्यर्थः अतो देहद्वयमेवेति। मार्कण्डेय-

एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः ।
जड़मूकान्धवधिरा विकृताकृतयस्तथा ॥

तथा, सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम् ।
ब्रह्महा यक्ष्मरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥ ७ ॥

अथ नरकाः तत्र मनुः ।

तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
नरकं कालसूत्रञ्च महानरकमेव च ॥
सञ्जीवनं महावीचिं तपनं सम्प्रतापनम् ।
सङ्घातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥
लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलं नदीम् ।
असिपत्रवनञ्चैव लोहचारकमेव च ॥

यातीति पूर्ववचनस्थमनुषज्यते । तामिस्रोऽन्धकारः अन्धतामिस्रः निविड़ान्धकारः । महारौरवरौरवौ तप्तभूमिवर्त्मबहुलात्मकौ कालसूत्रं कुलालचक्रसूत्रच्छेदनरूपं महानरकः यत्र महती सर्वप्रकारपीड़ा सञ्जीवनं यत्र सञ्जीव्य पुनर्व्यापाद्यते । महावीचिः यत्र महाकल्लोलेन लीयते । तपनोऽग्न्यादिदाहात्मकः । सम्प्रतापनं कुम्भीपाकः । सङ्घातोऽत्यन्तसंहते देशे बहूनामवस्थानम् । काकोलः यत्र काकैर्भक्ष्यते । कुट्मलं यत्र रज्जुभिः पीड़नम् । पूतिमृत्तिकं यत्र पुरीषगन्धिमृत्तिका । लोहशङ्कुः सूचीभेदनं ऋजीषं पिष्ट-

---

पुराणे इति मरणानन्तरं पार्थिवदेहादन्यमातिवाहिकाख्यं प्रेतदेहं तद्रूपं मनुष्यदेहसदृशं प्रपद्यत इत्यर्थः तद्रूपं स्पष्टयति तत्प्रमाणेति प्रागभवं मनुष्यशरीरं यथेत्यर्थः । अत्राप्यातिवाहिकाख्यशरीरमात्रमुक्तम् ॥ ७ ॥

अथ नरका इति । नरकमिति कालसूत्रविशेषणं कपालादिकं घटयित्वा

पचनप्रक्षेपो यत्र पत्या यत्र अटाय्यते शाल्मलो यत्र शाल्मलि-कण्टकैस्ताड्यते नदी यत्र नद्या अपक्रियते। नदी वैतरण्यादिका। यथा जमदग्निः।

> नदी वैतरणी नाम दुर्गन्धा रुधिरावहा।
> उष्णतोया महावेगा अस्थिकेशतरङ्गिणी॥
> असिपत्रवनं नाम प्रवेशेयत्र विदार्य्यते।

लौहचारको यत्र निगड़बन्धः लौहदारक इति वा पाठः तदा व्यक्त एवार्थः अन्यनरका मार्कण्डेयपुराणादिषु द्रष्टव्याः॥ ८॥

अथ प्रायश्चित्तानुष्ठाननिर्णयः।

तत्र गौतमः। अथ खल्वयं पुरुषो वाच्येन कर्मणा लिप्यते यथैतदयाज्ययाजनम् अभक्ष्यभक्षणम् अवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनमिति। तत्र प्रायश्चित्तं कुर्य्यात् न कुर्य्यादिति मीमांसन्ते न कुर्य्यादित्याहुः न हि कर्म्म क्षीयते कुर्य्यादित्यपरे पुनस्तोमेनेष्ट्वा पुनः सवनमुपयान्तीति विज्ञायते व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते अग्निष्टुताभिशस्यमानं याजयेदिति। वाच्येन गर्हणीयेन न कुर्य्यादित्य-

---

कुलालेन यथा चक्रस्थसूत्रेण छिद्यते इत्यर्थः यत्र यत्रेत्यनेन तत्तत्प्रदेशविशेषस्य तत्तद्विशेषसंज्ञेत्युक्तम्। यत्र कुम्भे कृत्वा विपच्यते स कुम्भीपाकः॥ ८॥

अथेति। प्रायश्चित्तमनुष्ठातव्यमनेनेति निर्णयः क्रियत इति शेषः। वाच्यं कर्म्म अथैतदिति। शिष्टस्य वेदानुशिष्टस्य सन्ध्यादिनित्यकर्मणोऽकरणमित्यर्थः। मीमांसन्ते विविच्य निर्णयन्ति मनीषिण इति शेषः। करणे श्रुतिं प्रमाणयति पुनस्तोमेनेति सायंप्रातर्होमबाधे पुनस्तोमयागः प्रायश्चित्तम् अभिशस्यमानं

नेन पूर्वपक्षो दर्शितः। अत्र हेतुः न हि कर्म क्षीयते भोगमन्तरेण कर्मक्षयाभावादित्यर्थः। कुर्य्यादित्यपरे इत्यनेन सिद्धान्तो दर्शितः। पुनः स्तोमादीनां प्रायश्चित्तानां श्रुतौ दर्शनादिति हेतुः। एतेन विचार्य्य प्रायश्चित्तमनुष्ठेयमिति निर्णीतम्। तथाच हारीतः। यथा क्षारोपस्वेदचण्डनिर्णोदनप्रक्षालनादिभिर्वासांसि शुध्यन्ति एवं तपोयज्ञदानैः पापकृतः शुद्धिमुपयान्ति ध्मायमाना इव धातवोऽग्नौ दोषेभ्यः तस्मात् विस्रम्भात् स्नेहात् लोभात् भयात् प्रमादात् वा अशुभं कृत्वा सद्यः शौचमारभेत। मनुः।

चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।

तत्तत् पापफलमभिधायाहतुः शङ्खलिखितौ।

तस्मात् कर्त्तव्यमेवेह प्रायश्चित्तं विशुद्धये।

अत्र भविष्यपुराणम्।

व्यतिक्रमाद्यथा पुत्र दोषोत्पत्तिर्भवेदिह।
प्रायश्चित्तात्तु देवेन्द्र दोषक्षय इति श्रुतिः॥

पातकविषये मिथ्याप्रवाददूषितम्। सिद्धान्तो दर्शित इति। ननु मा भुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् इति स्मृतेः का गतिः। सत्यं शरीरारम्भकशुभाशुभकर्मणामेव भोगैकनाश्यत्वमिति नियमो नान्येषामित्यविरोधः। न च बलवत्या श्रुत्या दुर्बलस्मृतेर्बाधोऽस्त्विति वाच्यं ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्ज्जुन इति भगवद्गीताविरोधे तत्त्वज्ञानिनां शुकनारदादीनाम् उपभोगदर्शनात् शरीरारम्भकादृष्टानां भोगैकनाश्यत्वनियमस्य कृप्तत्वात्। उपस्वेदोऽग्नितापः चण्डनिर्णोदनं तीव्रोपघातः धातवः काञ्चनादयः दोषेभ्यः मालिन्यादिभ्यः शुद्धिं यथोपयान्तीत्यन्वयः। विस्रम्भात् विश्वासादित्यर्थः सद्यः शौचं प्रायश्चित्ते विलम्बो न कार्य्य इत्यर्थः। नित्यमवश्यम्। व्यतिक्रमान्निषिद्धाचरणात् यथा पापोत्पत्तिस्तथा प्रायश्चित्तात् पापक्षयोऽपीत्यर्थः।

अतो रात्रिसत्रन्यायेन आर्थवादिकपापक्षयकामिना प्रायश्चित्तं कर्त्तव्यमिति निर्णीतम्। यद्यपि पापकर्मनिमित्तवतोऽधिकारमाह बृहस्पतिः ।

विहितस्याननुष्ठानात् प्रतिषिद्धनिषेवणात् ।
प्रायश्चित्तं यत् क्रियते तन्नैमित्तिकमुच्यते ॥

तथापि द्वयोरेवावगम्यमानत्वात् अत्र जातेष्टिवत् संवलिताधिकारः अतएव जावालः ।

काम्यानां स्वफलार्थञ्च दोषघातार्थमेव च ।
अतः काम्यं नैमित्तिकं प्रायश्चित्तमिति स्थितिः ॥ ६ ॥

अथ कामाकामकृतविकल्पः । तत्र मनुः ।

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः ।
कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात् ॥
अकामतः कृतं पापं वेदाभ्यासेन शुध्यति ।
कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः ॥

अकामत इति सावधारणोऽयं निर्देशः। अकामत एव प्रायश्चित्तमिति पूर्वपक्षयित्वा कामकारकृतेऽपीति सिद्धान्तो

---

काम्यानामिति काम्यानां कामनोपाधिकर्त्तव्यानामग्निष्टोमादीनां स्वीयस्वर्गादिफलमर्थः प्रयोजनं यस्य ईदृशं यतः प्रायश्चित्तम् अतः काम्यं पातकिनामग्निष्टोमादिष्वनधिकारात्तत्फलानुरोधात्तदर्थमनुष्ठीयमानतया प्रायश्चित्तस्य कामनोपाधिक[illegible]त्वेन काम्यत्वमिति भावः । दोषः पापं तत्क्षयार्थमनुष्ठीयमानत्वात् नैमित्तिकं प्रायश्चित्तं कारीरीवत् दोषस्याप्यनाद्दष्टिवत् प्रयोजकत्वान्निमित्तत्वमिति भावः. अन्यैस्त्वन्यथा प्रलपितम् ॥ ६ ॥

अथेति । आत्तात्त्वका उपस्थानः बुद्धिपूर्वकमिति एतच्च आत्तात्त्वकेभ्यः प्रायश्चित्तविधेन लभ्यमिति भावः । नन्विति कामतःपदसमभिव्याहारान्नोक्त-

दर्शितः। हेतुमाह श्रुतिनिदर्शनादिति। श्रुतिस्तु इन्द्रो-यतीन् शालावृकेभ्यः प्रायच्छत् तमश्लीला वागभ्यवदत् स प्रजापतिमुपधावत् तस्मै इन्द्राय उपहव्यं प्रायच्छत् इति। अश्लीला निष्ठुरा अत्र इन्द्राय बुद्धिपूर्वकं श्वभ्यो यतीन् खाद-यितुं दत्तवते प्रजापतिरुपहव्याख्यं कर्म प्रायश्चित्तं दत्तवान् अतः कामकृतेऽप्यस्ति प्रायश्चित्तमिति कामाकामभेदेन प्राय-श्चित्तमाह। अकामत इति वेदाभ्यास इति कामकृतप्राय-श्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणम् अन्येषामपि श्रवणात् पृथग्विधैः प्रायश्चित्तान्तरैरित्यर्थः। ननु मोहादिति को मोहः। अत्र मोहशब्देन देवेन्द्रबुद्धिपूर्वो व्यतिक्रमः। उच्यते पण्डितैर्नित्यं पुराणे शांशपायन इति भविष्यपुराणवचनात् जातबुद्धिपूर्वो व्यतिक्रमः मोह इति जिकनः। तन्न कामना-सामर्थ्यादेव बुद्धेर्लब्धत्वात्। उच्यते। शूद्रस्य ब्राह्मणीं मोहात् गच्छत इत्यादौ मुहवैचित्त इति धात्वर्थानुसारात् अज्ञानमात्रं मोहः यत्र तु कामनाशब्दोऽस्ति तत्र भविष्य-पुराणसङ्केतितमोहशब्दो न ग्राह्यः किन्तु धर्मविमूढत्वं मोहः

---

शब्दस्याज्ञानार्थत्वानुपपत्तेः को मोहशब्दार्थ इति प्रश्नः। तत्र मोहशब्दार्थनिर्णये। मोहशब्देनेति वचनानुसाराज्जिकन आहेत्यन्वयः। शांशपायननामा मुनिः पुराणे इति वदतीति शेषः शांशपायनेति सम्बोधनमिति केचित् पूर्वार्द्धे देवे-न्द्रेति कार्त्तिकेयसम्बोधनात् शांशपायन इति लुप्तविसर्गनिर्देशाच्चेति। जात-बुद्धिपूर्वं इति बुद्धेः पूर्वं जातः इति भूतपूर्ववदनामकसमासः। व्यतिक्रमः शास्त्रोल्लङ्घनानुकूलव्यापारः। भविष्यवचनस्य ऋज्वर्थं विकल्पश्च दूषयति उच्यते इति यत्र केवलमोहशब्दोऽस्ति तत्र भविष्यवर्णितार्थमोहशब्दस्य ग्रहणम् उत वा यत्र काममोहपदे स्तः तत्रेति आद्यं दूषयति शूद्रस्येति द्वितीयं दूषयति यत्र पदद्वयमस्ति तत्र निरुक्तस्य ऋज्वर्थं भविष्यसङ्केतितमोहशब्दो न ग्रहीतुं शक्यः

सदा धर्मबुद्धौ सत्यामप्यकर्त्तव्ये रागात् कर्त्तव्यता भ्रमः। यथा व्यासः।

मोहो धर्मविमूढ़त्वं मानस्त्वात्माभिमानिता।

एवञ्च भविष्यपुराणीयबुद्धिशब्दोऽप्यधर्मज्ञानमेवाभिधत्ते। सत्यधर्मज्ञाने पापगौरवार्थमिदं मोहादिति। याज्ञवल्क्यः।

प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्।
कामतो व्यवहार्य्यस्तु वचनादिह जायते॥

कामत इत्यज्ञानकृतप्रायश्चित्तेन ज्ञानकृतपापापगमो न भवति किन्तु व्यवहार्य्यतामात्रम्॥ ननु सति पापे कथं व्यवहार्य्यता अत्राह वचनात् इति। अयमभिप्रायः अर्द्ध-प्रायश्चित्तानुष्ठानेनार्द्धपापक्षयात् सम्भाषणस्पर्शनदर्शनादिलघु-व्यवहारो न दुष्टः। न तु भोजनपरिणयनादिव्यवहारोऽपि वचनादेव। यथा कुनखित्वादिव्याधिसूचितमहापापशेष-सद्भावे व्यवहार्य्यता इति॥ १०॥

अथवा अकारप्रश्लेषात् यथोक्तप्रायश्चित्तेन कामतोऽपि

---

पूर्वोक्तहेतोः अकि च कृत्वा इति अकार्थे क्त्वप्रत्ययः तर्हि तत्र कोऽयं इत्यात किन्त्विति एवञ्चेति एवमुक्तप्रकारेण भविष्यपुराणवचनस्य निर्विषयत्वापत्ते-स्तत्रत्यबुद्धिशब्दे व्यासवचनैकवाक्यतया अधर्मज्ञानलक्षणा अवश्यं वाच्या तत्र मनुवचने कामतो मोहादिति च पदद्वयमुपपन्नमित्यर्थः। मनुवचने प्रयोजनमाह सर्व्वेति। वचनादित्यस्यार्थं युक्त्या निरूपयति अयमभिप्राय इति न तु वचनाद्भोजनादिव्यापारोऽपि न दुष्टः यथा कुनख्यादीनां लघु-व्यापारो न दुष्टः भोजनादिगुरुव्यवहारस्तन्निषिद्ध एवेत्यर्थः। ननु अकाम-कृतप्रायश्चित्तात् कथमर्द्धपापक्षयः पापस्यात्मगुणत्वेन भागानुपपत्तेः सत्यम् अर्द्धोप-भोग्यत्वकत्वेनार्द्धक्षयो भाक्त इति॥ १०॥

पापक्षयो भवत्येव किन्तु अव्यवहार्य्यः पापाभावेऽपि वचनात्।
अतएव मनुः।

> बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
> शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्॥

याज्ञवल्क्यः। शरणागतबालस्त्रीहिंसकान् संवसेन्न तु।

> चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्॥
> कृतनिर्णेजकांश्चैव न जुगुप्सेत कर्हिचित्।

इति मनुवचनमज्ञानकृतपापे बोध्यम् इति। भवदेवस्तु सर्व्वत्र मृतः शुद्धिमवाप्नुयादिति दर्शनात् अत्राव्यवहार्य्यता-वचनं निन्दार्थमित्याह। जिकनस्तु पापकर्म्मणा इयं जन्यते शरीरगतमप्रायत्यम् आत्मगतञ्च पापम्। तच्च स्पर्शनादौ वैदिककर्म्मणि च अनर्हत्वलक्षणं तेनात्र कामनाकृतः केवल-शरीरदोषः प्रायश्चित्तेनापनीयते जन्मान्तरकृतदुरितस्येवात्मनः शरीरान्तरस्य व्यवहाराधिकारित्वम् आत्मगतञ्च पापं भोगादेव

---

नन्‌ कामकृते पापेऽकामकृतप्रायश्चित्तस्य विधानाभावादेव तत्र पुरुष-प्रवृत्तेरभावात् कथं तत्र वचनादव्यवहार्य्यतेत्यत आह अथ वेति। भवदेवस्त्विति अयमत्रास्वरसः निन्दार्थत्वे प्रमाणं नास्ति न च मरणात् परमव्यवहार्य्यताया असम्भावान्निन्दार्थत्वमिति वाच्यं स्यात्त्वकामंकृते यत्तु द्विगुणं बुद्धिपूर्वके इत्य-ङ्गिरोवचनात् कामकृतपापद्विगुणप्रायश्चित्तानन्तरम्। व्यवहार्य्यतायाः सम्भवात्। जिकनस्त्विति व्यवहार्य्यपाठं मत्वा इत्याहेति शेषः अप्रायत्यमशुद्धिरूपं पापात् पृथगेव पदार्थान्तरं तच्च अप्रायत्यम् अन्येषां स्पर्शसम्भाषणादौ स्वस्य च वैदिक-कर्म्मण्यनर्हत्वरूपमित्यर्थः केवलेति न तु पापमित्यर्थः यतोऽकृतप्रायश्चित्तस्य गृहीतशरीरान्तरस्यैव व्यवहाराधिकारित्वमतो व्यवहाराधिकारार्थं प्रायश्चित्तं कार्य्यमित्यर्थः इव पाठे तु यथा जन्मान्तरकृतपापस्य गृहीतशरीरान्तरस्य पापसत्तायामपि व्यवहाराधिकारित्वं तथा कृतप्रायश्चित्तस्य पापसत्तायामपी-

कामाकामकृतन्त्वेवं महापापं द्विधा स्मृतम्।
पुरुषापेक्षया चैव निष्कृतिर्द्विविधा स्मृता॥

हारीतः। मनसा सङ्कल्पयति वाचा अभिलपति कर्मणा चोपपादयतीति त्रिविधं कामकृतं तस्मादकामकृते प्रायश्चित्तं कामकृतेऽप्येके। अकामतो यत्प्रायश्चित्तमुपदिष्टं तत्र कामकृते किन्तु तदधिकमित्यर्थः। यत्रोपदिष्टमधिकमस्ति तत्र तदेव कर्त्तव्यमिति। अनुपदेशे तु द्वैगुण्यमाह अङ्गिराः।

स्यात्त्वकामकृते यत्तद्द्विगुणं बुद्धिपूर्वके।

एवं यत् कामकृते उक्तं तदकामतोऽर्द्धमूहनीयम्। यत्र तु कामकृते मरणमुद्दिष्टमस्ति तत्र अकामकृतप्रायश्चित्तस्य द्वादशवार्षिकादेर्द्वैगुण्यं मरणेन सह विकल्पितं कर्त्तव्यम्। यथा ब्रह्महत्याव्रतमभिधायाह व्यासः।

गत्वैतदेव कुर्वीत गुरुतल्पमकामतः।
कामतो द्विगुणं प्रोक्तं पूर्वेषु च यदुच्यते॥

पापवत्पुण्येऽपि द्वैगुण्यमाह आपस्तम्बः। तथा पुण्यक्रियासु चेति। अभ्यासे पापाधिक्यमाह देवलः।

---

विशिष्टज्ञाने न व्यभिचरत्येव तस्यास्तज्जन्यत्वादित्यर्थः। पुरुषापेक्षयेति कामकारिणां गुरुप्रायश्चित्तम् अकामकारिणान्तु लघ्वित्यर्थः। त्रिविधमिति मानसिकवाचनिककायिकभेदात्त्रिविधं कामकृतं तत्रोत्तरोत्तरं गुरु तस्मादभिसन्धिमो गुरुत्वात् त्रिविधे कामकृते नास्ति प्रायश्चित्तं किन्त्वकामकृत एवेति पूर्वपक्षः सिद्धान्तमाह कामकृतेऽप्येक इति प्रागुक्तमनुवचनसमानार्थम् अत्रापि कामाकामभेदेन त्रिविधमेवोक्तमित्यर्थः। कामकारकृतेऽप्येक इति सूत्रस्य तात्पर्यार्थं विवृणोति अकामत इति यत्रेति यथा यमः मुक्त्वा चैषां स्त्रियो गत्वा पौल्वापः प्रविश्य च। कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयमित्यादि। गत्वैतदिति एतत् प्रागुक्तं प्राणायामव्रतमाचरेत्गायत्रीजपसहितत्रैवार्षिकब्रह्महत्याव्रतमित्यर्थः। पूर्वेषु

विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम्।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः॥

नास्ति निष्कृतिरिति त्रिगुणनिष्कृत्यभावपरम्। चतुर्थे सर्वमित्यापस्तम्बवचनात्॥ ११॥

अथ प्रायश्चित्तिनः पर्षदुपस्थानम्।

तत्र अङ्गिराः।

कृते निःसंशये पापे न भुञ्जीतानुपस्थितः।
भुञ्जानो वर्द्धयेत् पापमसत्यं पर्षदि ब्रुवन्॥
सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः।
उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं गतः॥
गात्रैश्च शिरसा चैव न च किञ्चिदुदीरयेत्।

उपस्थानञ्च ब्राह्मणान् वस्त्रादिना तोषयित्वा कार्य्यम्। तोषयित्वा द्विजोत्तमानिति देवलवचनात् महत्पापेषु राजाद्युपस्थितिः कार्य्येत्याह देवलः।

स्वयं वा ब्राह्मणैः कृच्छ्रमल्पदोषे विधीयते।

---

धेति पूर्वेषु ब्रह्महत्यादिषु अकामतो यदुक्तं कामतस्तद्द्विगुणमुच्यते इत्यर्थः। पुण्य-दृष्टान्तेन कामकृतपापे द्वैगुण्यं द्रढयति पापवदिति। चतुर्थे सर्वमिति सकृत् सवर्णापरदारगमने ब्रह्महत्याव्रतस्य पादः द्वितीये द्विपादस्तृतीये त्रिपादश्चतुर्थे सर्वं ब्रह्महत्याव्रतमित्यापस्तम्बसूत्रार्थः तच्च सूत्रमगम्यागमनप्रायश्चित्ते वक्ष्यते॥ ११॥

अथेति। प्रायश्चित्तिनः कृतपापस्येत्यर्थः। पर्षत् प्रायश्चित्तनिर्णायकविद्वत्-सभा। कृत इति यावत् पर्षदि नोपतिष्ठते तावन्न भुञ्जीत हेतुमाह यथा। पर्षदि असत्यं ब्रुवन् पापं वर्द्धयेत् तथा पर्षदुपस्थानस्य प्राक् भुञ्जानः पापं वर्द्धयेदित्यर्थः। देवल इति पापी चेद्विद्वान् स्यात् तदा स्वयमेव कृच्छ्रं प्राय-श्चित्तं निर्वर्त्तव्यम् अविद्वांश्चेत्तदा ब्राह्मणैरित्यर्थः एकेति मीमांसादिपारगैरेक-विंशतिभिः परिषत् स्यात् चातुर्वैद्यादिभिर्दशभिर्वा पर्षदित्यर्थः। परिषीदन्त्य-

राज्ञा च ब्राह्मणैश्चैव महत्सु परिचक्ष्यते ॥

परिषदमाह अङ्गिराः ।

एकविंशतिसंख्याकैर्मीमांसान्यायपारगैः ।
वेदाङ्गकुशलैश्चैव परिषत्त्वं प्रकल्पयेत् ॥
चातुर्वैद्यं विकल्पी च अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वं पर्षत् स्यात्तु दशावरा ॥

पर्षच्छब्दोऽत्र सभार्थे पृषोदरादित्वात् साधुः चातुर्वैद्यं चतुर्वेदपारगः विकल्पी सर्वधर्मज्ञः धर्मपारगः धर्मशास्त्रज्ञः । मनुः, त्रैविद्योहैतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वं परिषत् स्याद्दशावराः ॥

अङ्गिराः ।

एषा तु लघुकार्य्येषु मध्यमेषु तु मध्यमाः ।
महापातकिशोध्येषु शतशो भूय एव वा ॥

प्रदर्शनार्थमिदं यावद्भिरेव निरूपणं भवति तावद्भिरेव परिषत् दृष्टार्थत्वादेव तस्याः । तथा च यमः,

एको द्वौ वा त्रयो वापि यद् ब्रूयुर्धर्मपाठकाः ।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥

---

स्यामिति पर्षत् पृषोदरादित्वादिकारलोपो विकल्पितः चतस्रो वेदविद्या येषां ते चातुर्विदः तेषां समूह इति समूहार्थविहितेऽनि द्विपदवृद्ध्या चातुर्वैद्यमिति रूपम् । विकल्पी न्यायशास्त्रवित् धर्मशास्त्रं मन्वादिस्मृतिः तज्ज्ञः ब्रह्मचारिगृहस्थवानप्रस्थास्त्रय इत्यर्थः वक्ष्यमाणवचनात् । मनुरिति त्रैविद्यो वेदत्रयवित् हैतुको न्यायवित् तर्को मीमांसकः त्रयो ब्रह्मचारिगृहस्थोदयः तस्याः परिषद इत्यर्थः । यद्वदन्तीति मूर्खा मीमांसाद्यनभिज्ञाः अवविदोऽनधीतधर्मशास्त्रास्तथापि तमोमूढा अज्ञानमोहिताः सन्तो यद्धर्मं कृत्वा वदन्ति

यद्वदन्ति तमो मूढ़ा मूर्खा धर्ममतद्विदः।
तत् पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥

वृद्धशातातपः।

अबुद्धा धर्मशास्त्राणि प्रायश्चित्तं वदन्ति ये।
प्रायश्चित्ती भवेत् पूतस्तत्पापं तेषु गच्छति ॥

अङ्गिराः, आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः।
जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः ॥
अनर्चितैरनाहूतैरपृष्टैश्चैव संसदि।
प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः ॥

तथा, न्यायतो मार्गमाणस्य क्षत्रियादेः प्रणामिनः।
अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत् ॥

अशक्तावनुग्रहमाह हारीतः।

यथा वयो यथा कालं यथा प्राणश्च ब्राह्मणे।
प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः ॥
तस्मात् कृच्छ्रमथाप्यर्द्धं पादं वापि विधानतः।
ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत् ॥

---

तदवद्यवदनं शतधा पापं भूत्वा तद्वक्तॄन् अधिरोहति तेनावद्यवदनेन पापानि जायन्ते इत्यर्थः। अबुद्धेति असति बाधके तदुक्तप्रायश्चित्तानुष्ठानेनैव यथाविध्यकृतप्रायश्चित्तोऽपि पापी पूतो भवेदेवास्मादेव वचनादिति तेषु तत्तुल्यपापं जायते इत्यर्थः। जल्पतः प्रलपतो जनस्य न वक्तव्यमित्यर्थः। न्यायत इति न्यायतो मार्गमाणस्य यथाविधप्रायश्चित्तं प्रार्थयतः क्षत्रियादेः प्रणामिनः प्रणमतः प्रमादिन इति पाठे पापिन इत्यर्थः। ब्राह्मणमन्तरा कृत्वा ब्राह्मणद्वारा एव प्रायश्चित्तं वक्तव्यं यथा स शृणोति न तु साक्षादित्यर्थः। यथा

वयोबाल्यादिः कालोग्रीष्मादिः यथा प्राणमशक्तत्वादि पाव वेति न ततो न्यूनमित्यर्थः। पराशरः,

दुर्बलेऽनुग्रहः कार्य्यस्तथा वै शिशुवृद्धयोः।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रही भवेत्॥
स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा।
कुर्वन्त्यनुग्रहं ये तु तत् पापं तेषु गच्छति॥

शास्त्रीयं प्रायश्चित्तमुदाहृत्य पश्चादनुग्रहः कार्य्यं इत्याह अङ्गिराः। कृत्वा पूर्वमुदाहारं यथोक्तं धर्मवक्तृभिः।

पश्चात् कार्य्यानुसारेण शक्त्या कुर्वन्त्यनुग्रहम्॥
एको नार्हति तत् कर्त्तुमनूचानोऽप्यनुग्रहम्।
धर्मज्ञा बहवो विप्राः कर्त्तुमर्हन्त्यनुग्रहम्॥

विष्णुः, अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोड़शः।

प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च॥

च्यवनः। बालवृद्धस्त्रीणामर्द्धं प्रायश्चित्तम् आषोड़शाद्बालाः सप्तत्यूर्द्धं स्थविराः। स्थविरोऽत्यन्तजीर्णो ग्राह्यः। लघुविष्णुः।

स्त्रीणामर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा।
पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः॥

पादविधिरयम् ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य बालस्य। यथा अङ्गिराः,

---

प्राणं यथा बलम् इत्यर्थः तस्मादिति दुर्बलत्वादिनिमित्तं विना नानुग्रही भवेत् मोहात् अहङ्कारात् अज्ञानतः शास्त्रानभिज्ञतयेत्यर्थः धर्मवक्तृभिः धर्मशास्त्र-वक्तृभिर्मन्वादिभिर्यथोक्तम् उक्तानतिक्रमेण उदाहारं व्याहारं कृत्वा इत्यर्थः एक इति अनूचानोऽपि धर्मप्रवचनक्षमोऽप्येकाकी तदनुग्रहं कर्त्तुं नार्हति किन्तु बहव एव तादृत्यार्थः सामान्यविशेषभावेन वान्वयः। अशीतिर्यस्येति विष्णु

ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च।
चरेद् गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये॥
ततो न्यूनतरस्यास्य नापराधो न पातकम्।
न चास्य राजदण्डोऽस्ति प्रायश्चित्तं न विद्यते॥

आदिपर्वणि।

आचतुर्दशकाद्वर्षान्न भविष्यति पातकम्।
परेण कुर्वतामेवं दोष एव भविष्यति॥

अत्यन्तगुणवद्बालविषयम् इदम्। तथा च विश्वामित्रः।

जातिशक्तिगुणापेक्षं सकृद् बुद्धिकृतं तथा।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्॥

प्रायश्चित्तदाने फलमाह अङ्गिराः।

यत् पुण्यमुद्धृते विप्रे म्रियमाणे जलादिषु।
तत् पुण्यं तारिते पापात् प्रायश्चित्तैस्तु मानवे॥

इति॥ १२॥

अथ पापनिष्क्रमणादि।

तत्र मनुः, ख्यापनेनानुतापेन तपसाध्ययनेन च।
पापकृन्मुच्यते पापात्तथा दानेन चापदि॥

---

वचनेन सह समत्यूर्द्धमिति च्यवनवचनस्य विरोधमाशङ्क्य व्याचष्टे स्थविर इति समत्यूर्द्ध्वं योऽत्यन्तजीर्णः तस्यैवार्द्धमित्यर्थः। आचतुर्दशकादिति चतुर्दशवर्षाभ्यन्तरे कृताल्पपापस्य तस्मात् पापात् मिथ्यावादेन दत्तत्रिशूलस्य माण्डव्यमुनेरुक्तिरियं चतुर्दशवर्षाभ्यन्तरे पापं न भविष्यति तत्र प्रायश्चित्तं परद्वारापि न कार्य्यं करणे प्रत्युत दोष एव तत्रेत्यर्थः अत्यन्तगुणवत्त्वं वेदाध्ययनब्रह्मचर्य्यशालित्वम् अनुबन्धोऽत्यन्ताभिनिवेशः तत् पुण्यं तज्जातीयं पुण्यमित्यर्थः॥ १२॥

अथेति पापेभ्यो निष्क्रमणं वहिर्भावः आदिपदाल्लघुगुरुप्रायश्चित्तव्यवस्थादीनां

योगियाज्ञवल्क्यः।

अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात्।
रहस्याचरितात् पापात् मुच्यते स्नानमाचरन्॥

एभिर्वचनैः ख्यापनानुतापाध्ययनप्राणायामध्यानहोमनारायणस्मरणकीर्त्तनस्नानादीनां पापशोधकत्वमुक्तम्। एष्वेव यल्लघु तत् लघुनि पापे योज्यं यद् गुरु तद् गुरुणि। यथा गोतमः। हिरण्यं गौर्वासोऽश्वो भूमिस्तिला घृतमन्नमिति देयानि। एतान्येवानादेशे विकल्पेन क्रियेरन् एनसि लघुनि लघूनि गुरुणि गुरूणीति। विष्णुपुराणे।

पापे गुरुणि गुरूणि स्वल्पान्यल्पे च तद्विदः।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः।

भविष्यपुराणम्।

एवं विषयभेदाद्धि व्यवस्थाप्यानि पुत्रक।
प्रायश्चित्तानि सर्वाणि गुरूणि च लघूनि च॥
अन्यथा हि महाबाहो लघूनामुपदेशतः।
गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत्॥

---

मैत्रेय जगुः स्वायम्भुवादयः। इत्यनन्तरमेव तद्वचनमभिहितम्। न चात्र बहुकालापेक्षास्तीत्याह प्रातर्निशीति अनुदिनं नारायणं स्मरन् चिन्तयन् सद्य एकेनैव दिवसेन सर्वपापक्षयमाप्नोतीत्यर्थः। वासुदेवस्य कीर्त्तनं नामग्रहणम् अनुदिनं कृत्वा सर्वपापेभ्यः प्राक्तनानेकजन्मकृतपापेभ्यो विमुक्तो भवेत् किमुत ऐहिकेभ्य इति सरित् स्रवः पुण्यनदीस्नानं स्नानमाचरन् यथाविधि समन्त्रकस्नानं कुर्वन् इत्यर्थः एवं लघुगुरुप्रायश्चित्तव्यवस्थामुक्त्वा गङ्गास्नाने तु नास्तीत्याह महाभारत इति तथा भविष्ये। गङ्गायां मौषलं स्नानं महापातकनाशनम्। वाराहे। ब्रह्मघ्नो वा सुरापो वा गोघ्नो वा महापातकी। सर्वे ते निष्कृतिं यान्ति गङ्गास्नानान्न संशयः। न च गुरुप्रायश्चित्तोपदेशवैफल्य-

महाभारते, यथकार्य्यशतं कृत्वा कृतं गङ्गाभिषेचनम्।
सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः॥

देवलः, कृत्वा पापमविज्ञानात् भ्रूणहत्यादि तत् पुनः।
निरस्यति महायज्ञैरथ वा तीर्थचर्य्यया॥

एतेन पापक्षयसाधनत्वमुक्तं गङ्गास्नानतीर्थचर्य्याणाम्। व्रतानि शुद्धिकारणान्याह विश्वामित्रः,

कृच्छ्रचान्द्रायणादीनि शुद्धग्भ्युदयकारणम्।
प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे॥
प्राजापत्यः सान्तपनः शिशु कृच्छ्रः पराककः।
अतिकृच्छ्रः पूर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः॥
महासान्तपनः शुद्धै तप्तकृच्छ्रस्तु पावनः।
जलोपवासकृच्छ्रश्च ब्रह्मकूर्चस्तु शोधकः॥
एते व्यस्ताः समस्ता वा प्रत्येकमेकशोऽपि वा।
पातकादिषु सर्वेषु पापकेषु प्रयत्नतः॥
कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये।
शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा॥
यवमध्यस्तथा प्रोक्तः तथा पिपीलिकाकृतिः।
उपवासस्त्रिरात्रं वा मासपक्षस्तदर्द्धकम्॥

---

मिति वाच्यं यत्र गङ्गा नास्ति तद्देशविषयं तदिति ब्रूमः। अथवा येषां गङ्गा-स्नानादेतत् पापक्षयो भवत्येव इति निश्चयः तेषामेव गङ्गास्नानं प्रायश्चित्तम्। यथोक्तमङ्गिरसा। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतमिति। येषान्तु सुकर-मिदं गङ्गास्नानं महति पातके शोधकं भवति न वेति सन्देहस्तेषां चान्द्रायणा-दिकं गुरुप्रायश्चित्तमिति न विरोधः। एवं श्रीगोविन्दनामग्रहणेऽपीति दिक्। महायज्ञैरश्वमेधादिभिः। अनुक्ते विशिष्यानुक्तप्रायश्चित्तके अस्फुटे मानसिके

षड़ह द्वादशाहादि कार्य्यं शुद्धिफलार्थिना।
उपपातकयुक्तानामनादिष्टेषु चैव हि॥
प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया।
जातिशक्ति गुणान् दृष्ट्वा सकृद् बुद्धिकृतं तथा॥
अनुबन्धादिकं दृष्ट्वा सर्वं कार्य्यं यथाक्रमम्।

अभ्युदयः स्वर्गादिः संशये पापस्य अनुक्ते विशेषतोऽनुक्ते अस्फुटे अव्यक्ते। प्रकाशकृते पापे व्रतानि मुख्यानि रहस्य-कृते जपादीनि। यथा प्राजापत्यानभिधायाह मनुः।

एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैस्तु शोधयेत्॥

देवलः, प्रकाश उक्तं यत्किञ्चिद्विंशभागो रहस्यके।
त्रिंशद्भागः षष्टिभागः कल्प्यो जात्याद्यपेक्षया॥

एतेन प्रकाशकृतप्रायश्चित्तस्य रहस्ये विंशभागादयो बोद्धव्याः व्याख्यास्यते चैतत्॥ १४॥

अथ पापोद्देशः।

अत्र विष्णुः, अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति परिग्रहप्रसङ्गात् विशेषेण गृहाश्रमिणस्तेनाय-

---

एत इति। महापातकादिषु पापेषु गुरुलघुपापभेदेन एते प्राजापत्यादयः प्रत्येकं समस्ता वा कार्य्याः व्यस्ता वा द्वौ वा त्रयो वा चत्वारो वा पापानुरूपं कार्य्याः एषां मध्ये एकश्च एको वा कार्य्य इत्यर्थः। उपपातकेति उपपातकिनाम् अनादिष्टप्रायश्चित्तपापवतः चान्द्रायणादिकं कार्य्यमित्यर्थः॥ १३॥

अथ पापोद्देशः। परिग्रहो विषयः तेन त्रिपुरत्रयेणाक्रान्तोऽयं पुरुष

माक्रान्तोऽतिपातकं महापातकानुपातकोपपातकेषु वर्त्तते जातिभ्रंशकरेषु शङ्करीकरणेषु अपात्रीकरणेषु मलावहेषु प्रकीर्णेषु अनेन नवविधत्वं पापस्योक्तम्। हारीतस्तु पञ्चविधमाह पञ्चविधमशुभं भवति प्रासङ्गिकोपपातकमहापातकात्यन्तपातकानि। पूर्ववचने पूर्वं पूर्वं गरीयः अत्र तु उत्तरोत्तरं गरीयः प्रासङ्गिकं जातिभ्रंशकरादि पञ्चकं पातकपदमनुपातकपर्य्यायः। ननु नवस्वेव पापेषु पातकशब्दो दृश्यते। यथा पैठीनसिः। स्त्रीगोवृषलवैश्यक्षत्रियघाती सोमविक्रयी शूद्रयाजी शूद्रसहभोजी कन्यादूषी अगारदाही वृषलीपतिः अग्न्युच्छेदी चेति पातकिनः। नवविधपापमभिधायाह विष्णुः।

एवं पातकिनः पापमनुभूय सुदुःखिताः।
तिर्य्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च॥

याज्ञवल्क्यः।

नीचाभिगमनं गर्भपातनं भर्त्तृहिंसनम्।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्॥

पतनीयानि पातकानीत्यर्थः। कृत्यल्युटो बहुलमिति करणेऽनीयः। तथा गोतमः ब्रह्महा सुरापगुरुतल्पग पितृमातृसुतत्यागि पितृमातृयोनिसम्बन्धागस्तेन नास्तिकनिन्दितकर्मा-

---

इत्यर्थः पूर्वेति एतेन महापातकादतिपातकं महदिति दर्शितम् एवमिति पापं पापोपभोगम्। गोतम इति पितृमातृयोनिसम्बन्धाः पितृमातृसपिण्डास्तासां गन्ता नास्तिकः स्वधर्मत्यागी।

मृगादीति मृगपदस्य कृष्णसारचमरादिपशुषु शक्तस्यापि विशेषहरिणे शक्तिः

भ्यासि पतितात्यागपतितत्यागिनश्च पतिताः। पात संयोजकाश्च तैश्चाब्दं समाचरन्। पातकसंयोजकाश्च सु पानादौ यः परान् प्रयोजयति। सत्यं सामान्यशक्तस्या विशेषशक्तिर्भविष्यति मृगादिपदस्येव हारीतेन विशेषगण पाठात्। तथा च्यवनः। अथ पातकोपपातक महापा कानि व्याख्यास्याम इति। तथा पठन्ति।

महापातकतुल्यानि पापान्युक्तानि यानि तु।
तानि पातकसंज्ञानि तदूनमुपपातकम्॥

इति अतो महापातकतुल्यपापविशेषेऽप्यस्य शक्तिः। पत शब्दार्थमाह गोतमः। द्विजातिकर्मभ्यो हानिः पतनं प चासिद्धिस्तमेके नरकं द्विजातिकर्मश्रौतमग्निहोत्रादिस्मा मष्टकादिप्रायश्चित्ततदङ्गजपादिव्यतिरिक्तं तेभ्यो हानि नधिकार इति। द्विजातिग्रहणं प्राधान्यार्थं शूद्रस्यापि वाक न्तरेण पातित्याभिधानात् इहलोके तावत् पातित्यलक्ष मनिष्टं परलोके चासिद्धिः पापकर्मप्रतिबन्धात् उपात्तसुकृ फलानिष्पत्तिः नरकं वा सूतकादिव्यावृत्त्यर्थमिदम्। द्विजा कर्मानधिकारश्च महापातके श्रूयते यथा देवलः। प तानि महापातकानि कृत्वा ब्राह्मणः सद्भिर्नानुसम्भा नानुग्राह्योऽभिशस्तः सर्वकर्मविवर्जितः पतिततमो भव महापातकाधिकारे मनुः।

---

तथा पापसामान्यशक्तस्यापि पातकशब्दस्य विशेषेऽनुपातके शक्तिरिति।

इति यद्यपि सामान्यवचनमपि पातकपदं विष्णुवचनैकवाक्यत्वेनानुपा विशेषपरमिति वक्तुं शक्यते तथापि वचनेन सङ्केतितत्वाच्छक्तिरित्युक्त

> असंभाष्या असंभोज्या अविवाह्या ह्यपाठिनः।
> चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः॥

अतो महापातकेषु द्विजातिकर्मानधिकारः तद्विहित द्वादश-वार्षिकप्रायश्चित्तापनेयत्वादतिपातकानुपातकयोरपि। अतो द्वादशवार्षिकप्रायश्चित्तापनेयार्हं पापं पतनम्। अर्हता च सामान्यशास्त्रबोधितत्वं तच्च स्त्रीत्वादिना असंपूर्णानुष्ठानेऽप्यस्त्येव कृष्णल इवावघातस्य॥ १४॥

---

अनिष्टं कर्मानधिकारः। परलोके च पापकर्मरूपप्रतिबन्धादुपात्तसुकृताना-मर्जितपुण्यानां फलानिष्पत्तिः फलोत्पत्तिप्रतिघातोऽसिद्धिः तेन परलोके सुकृति-फलप्रतिबन्धक ऐहिककर्मानधिकारः पातित्यमिति लक्षणं तस्मैके नरकमिति सूत्रं व्याचष्टे नरकं वेति पारलौकिकनरकयोग्य ऐहिककर्मानधिकारः पातित्य-मिति वा लक्षणम्। सूतकादीति परत्रासिद्धिर्नरकं वेति विशेषणमशौचव्या-वृत्त्यर्थम् आदिपदात् रक्तपातादीनां ग्रहणमित्यर्थः। कर्मानधिकारे किं प्रमाणमित्यत आह द्विजातिकर्मानधिकारश्चेति नानुग्राह्यो बान्धवैरभिशस्तः सर्वलोकगर्हणीयः। अपाठिनो न च तेऽध्याप्या न च तेभ्योऽध्येतव्यमित्यर्थः। अतिपातकानुपातकयोरपि कर्मानधिकारमाह तद्विहितेति महापातकविहिते-त्यर्थः। नन्वतिपातकेऽज्ञानेऽपि मरणस्य वक्ष्यमाणत्वात् कथं द्वादशवार्षिक-व्रतापनेयत्वम्। अत्र केचित् ब्रह्महत्याव्रतानुवृत्तौ। गत्वैतदेव कुर्वीत गुरुतल्प-मकामत इति व्यासवचनात् गुरुतल्पपदेन सामान्यतो मातुरपि विषयी-करणादित्याहुः। तन्न उत्तरग्रन्थाकलनात् गुरुतल्पपदस्य मातृसपत्नीपरतयैव वक्ष्यमाणत्वात् प्राणायामशतगायत्रीजपसहितत्रैवार्षिकव्रतानुवृत्तौ व्यासवचनस्य वक्ष्यमाणत्वाच्च इति। अन्ये तु तत्रापि मरणवैकल्पिकस्य द्विगुणद्वादशवार्षिक-व्रतस्य विहितत्वात्तदपनेयतार्हता अस्त्येवेत्याहुः। पतत्यनेनेति पतनं पातित्य-हेतुरित्यर्थः। ननु स्त्रीबालादीनामर्द्धप्रायश्चित्तत्वान्न तत्र द्वादशवार्षिकव्रताप-नेयत्वम् इत्याशङ्क्याह अर्हतेति स्त्र्यादिगोचरेऽपि सामान्यविधिविषयत्वमस्त्येव किन्तु स्त्रीबालादिनिमित्तेन तस्यैवासम्पूर्णता वचनान्तरेण विधीयत इति कृष्णल इति। सामान्यशास्त्रविहितचरुसाधनद्रव्यावघातः कृष्णलं श्रपयेदित्यत्र सुवर्ण-कृष्णलेऽपि परिप्राप्तः केवलं वितुषीकरणबाधान्न क्रियत इति तत्रावघातस्य यथा सामान्यविधिविषयत्वमस्तीत्यर्थः॥ १४॥

अथवा द्विजातिकर्मानधिकारापादकं पातकं पतनम्। अनधिकारश्च महापातके श्रुत एव अनुपातकेऽपि तत्समत्वादुपपातकादौ क्वचित् पततीति श्रुतेः अतिपातके च ततो गुरुत्वाल्लभ्यते। यद्वा महापातकानपकृष्टं पातकं पतनम् अनुपातकस्य तत्समत्वात् उपपातकादेश्च क्वचित् पतत्यभिधानात् अपकर्ष एव। अस्वजनब्राह्मणीगमने पतनपापाद्युत्पत्तिश्रवणादनपकर्षः एव। अतः सद्यः पतति मांसेनेति। शूद्रावेदी पतत्यत्रेरित्यादिमनुवचनं निन्दार्थम्। प्रकृतमभिधीयते। मनुना अष्टविधं पापं महापातकादिप्रकीर्णकान्त-

---

नन्वतिपातके मरणवैकल्पिकद्विगुणव्रतविधानाच्चतुर्विंशतिवर्षापनेयत्वमेव न तु द्वादशवर्षापनेयत्वमित्यत आह अथ वेति न चात्र सूतकादावतिव्याप्तिरिति वाच्यं परत्रापिद्विर्नरकं वेति प्रागेव पातित्यलक्षणे निवेशितत्वादत्रापि तथात्वात्। तत् समत्वादिति। वेदनिन्दागर्हिताध्ययनयोरनुपातकमध्ये गणना तत्रापि कर्मानधिकारे महाविप्लवापत्तिरिति केचित् तन्न अर्थतो ग्रन्थतश्चात्यन्ताभ्यासेन वेदनिन्दा गर्हिताध्ययनञ्चात्यन्ताभ्यस्तमनुपातकमिति वक्ष्यते प्रायश्चित्तमपीतरानुपातकतुल्यं वक्ष्यते एवञ्च कथं तत्र कर्मानधिकारी न स्यात् येनोच्यते महाविप्लवापत्तिरिति उपपातकादाविति आदिपदात् शूद्रावेदी पतत्यत्रेरित्यादीनां ग्रहणम्। ननु क्वचित् पततीति श्रुतेरुपपातकमात्रे यदि कर्मानधिकारस्तदा द्रुमच्छेदवार्द्धुषित्वादावतिप्रसङ्ग इत्यत आह यद्वेति अनुपातकस्य तत्समत्वादनपकृष्टत्वमिति शेषः कामकृते महापातके मरणम् अनुपातके कामकृतेऽपि द्वादशवार्षिकम् अतो यद्यप्यपकर्षस्तथापि द्वादशवार्षिकापनेयात् महापातकसामान्यात् अनपकृष्टत्वमस्त्येवेत्यर्थः। उपपातकादेरिति क्वचिदेव पततीति श्रुतेस्तदितरोपपातकेऽपकर्ष एवेति न तत् पतनमिति। यत्रोपपातके पततीति श्रुतिस्तदाह अस्वजनेति अस्वजनब्राह्मणीगमनोपपातके पतनस्य महापातकस्य पादादीनामेकपादद्विपादत्रिपादचतुष्पादानामुत्पत्तिश्रवणादनपकर्षः अतस्तत् पापं पतनमेव अतएव तत्प्रकरणे वक्ष्यते कामतोऽस्वजनश्रोत्रियब्राह्मण्या अनन्यपूर्वायाः सकृद्गमने महापातकस्य पादः द्वितीये पादद्वयं तृतीये

मुक्तं नातिपातकं ज्ञानादज्ञानाद्वा सकृदभ्यासाद्वा तत्र मरणान्तिकाभिधानात् तस्य चानिर्देश्यत्वात्। किमतिपातकं तदाह विष्णुः। मातृगमनं दुहितृगमनम् स्नुषागमनम् इत्यतिपातकानि। महापातकमाह मनुः।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापितैः सह ॥

एतानि स्वे स्वे स्थाने व्याख्येयानि ॥ १५ ॥

वर्णविशेषेण निन्दातिशयार्थं गौणं मुख्यं महापातकमाह च्यवनः। ब्रह्महत्या सुरापानं गुरुतल्पगमनं ब्राह्मणसुवर्णहरणं द्विजातीनां महापातकानि अदण्ड्यदण्डनं ब्रह्महत्या गुरुशय्यारोहणं युधि पलायनं क्षत्रियस्य। मानतुलानृतत्वं वैश्यस्य मांसविक्रयो ब्रह्महत्याब्राह्मणीगमनं कपिलापानं शूद्रस्य। तत्सम्पर्कात् पञ्चमं महापातकमिति। कपिला-

---

पादत्रयं चतुर्थे सम्पूर्णं महापातकमिति। अत इति यतो महापातकात् अनपकृष्टं पापं पतनम् अतस्तदपकृष्टे शूद्रावेदनादिपापे पततीति वचनं निन्दार्थं न तु तत्स्वरूपतः पतनमिति भावः। तस्य चानिर्देश्यत्वमिति प्रायश्चित्तविशेषनिरूपणार्थमेव हि पापविशेषनिर्देशः। अतिपातकप्रायश्चित्तस्य तु मरणस्य ज्ञानाज्ञानसकृदभ्यासादिभिर्विशेषतो निरूपणाभावात् तत् पापस्य चानिर्देश्यत्वमिति भावः ॥ १५ ॥

च्यवन इति ब्रह्महत्यादिचतुष्टयं द्विजातीनां ब्राह्मणक्षत्रियवैश्यानामेव शूद्रस्य तु सुरापानं न महापातकमिति तद्व्यावृत्तिः क्षत्रियस्य तु यत् पुनर्ब्रह्महत्या गुरुदारगमनोपादानं तदत्यन्तनिन्दार्थं गुरुशय्यारोहणेन गुरुदारगमनं लक्ष्यते पूर्वोक्तमनुवचनैकवाक्यत्वादिति। अदण्ड्यदण्डनस्य युधिपलायनस्य च महापातकातिदेशो निन्दार्थं तथा वैश्यस्य मानतुलानृतत्वं गौणं निन्दार्थं प्रागुक्तचतुष्टयन्तु मुख्यम्। तथा शूद्रस्य मांसविक्रयः कपिलाक्षीरपानं गौणं

पानं कपिलादुग्धपानम्। अत्र च तत्सम्पर्कात् पञ्चकं महापातकमित्यभिधानात् शिष्टाचाराच्च ब्रह्महत्यादिपञ्चकमेव महापातकं मुख्यं शूद्रस्य तु सुरापानस्थाने ब्राह्मणीगमनं महापातकमेव। यद्यपि गुर्वङ्गनागमने गुरुशब्देन पितैव वक्ष्यमाणस्तथापि—

> शूद्रस्य ब्राह्मणीं मोहाद् गच्छतः शुद्धिमिच्छतः।
> पूर्णमेव व्रतं देयं माता यस्माद्धि तस्य सा॥

इत्यगम्यागमने वक्ष्यमाणप्रचेतो वचने मातृत्वातिदेशात् सपत्नीमातेव ब्राह्मणीशूद्रस्य अतस्तद्गमने महापातकं युक्तमेव॥ १६॥

अतएवातिदेशिकञ्चेन्मातृत्वं नोपदेशिकं तेनातिपातकं न भवतीत्यविरोधः। एतेष्वेव गौरवमाह देवलः। गुरुपितृमातृभ्रूणवधो गर्भिण्या बधश्च ब्रह्महत्यायां तीव्रतमानि भवन्ति मासोपवासिसोमपाय्यग्निहोत्रिणां सुवर्णस्तेयं पातक-

---

ब्राह्मणीगमनन्तु मुख्यमेव सुरापानस्थाने तस्य वक्ष्यमाणत्वात् ब्राह्मणीगमनेन गुरुतल्पगमनमपि लक्ष्यते ब्रह्महत्यया ब्राह्मणसुवर्णहरणमपि प्रागुक्तमनुवचने सामान्योपदेशात्। यद्यपीति पितैव न तु ब्राह्मणादिरित्यर्थः सपत्नी मातेव इति अतिदेशात् वस्तुतोऽसम्भवाच्च ब्राह्मण्यां गौणमेव मातृत्वं तद्गमनस्य महापातकमध्ये गणनात् ब्राह्मण्याः सपत्नी मातृत्वमेव पर्य्यवस्यति अनयोर्मातृतुल्यत्वाच्च॥ १६॥

ननु प्रचेतो वचने मातृत्वोपदेशात् अतिपातकप्रायश्चित्तं कथं न स्यात् इति विरोधमाशङ्क्याह अतएवेति अतएव महापातकमध्ये गणनात् ब्राह्मण्यां मातृत्वमातिदेशिकत्वञ्चेन्निर्णीतं तदा तन्मातृत्वं प्रचेतो वचनादौपदेशिकं न भवति येनातिपातकप्रायश्चित्ताशङ्केति न विरोधः। एतेष्वेवेति एतेषु महापातकेषु तत्तुल्येषु अनुपातकेषु चेत्यर्थः। अतएव देवलवचने गर्भिणीवधोपा-

तमम्। उपाध्यायराजपितृभार्य्यागमनानि गुरुतल्पगमने कष्टतमानि भवन्ति पैष्टिकगौड़िकमाध्विकानां प्रमोहनीनां पानं सुरापाने कष्टतमम्। यौनमौखस्रौवाणि पतितसंप्रयोगे तत्तुल्यानि भवन्ति ॥ १७ ॥

अनुपातकमाह विष्णुः। पितृपितृव्यमातामहमातुलश्वशुर-नृपपत्न्यभिगमनं गुरुदारगमनसमं पितृस्वसृमातृस्वसृगमनञ्च श्रोत्रियर्त्विगुपाध्याय मित्रपत्न्यभिगमनं स्वसृसख्याः सगोत्राया उत्तमवर्णायाः कुमार्य्या अन्त्यजायाः रजस्वलायाः प्रव्रजिताया निक्षिप्तायाश्च। अन्त्यजा चाण्डाली।

अनुपातकिनस्त्वेते महापातकिनो यथा।
अश्वमेधेन शुद्ध्येयुस्तीर्थानुसरणेन वा ॥

उपपातकञ्च गोवधोऽयाज्य संयाज्य इत्यादि नास्तिक्यान्तं मनुनोक्तं तदवसरे वक्ष्यते ग्रन्थगौरवभयान्न लिखितम्। जातिभ्रंशकरादीत्याह मनुः।

---

ध्यायराजभार्य्यागमनानामनुपातकानामपि तीव्रतमत्वं वक्ष्यते भ्रूणः गर्भः यद्यपि गर्भिण्या वधे गर्भवधोऽस्ति तथापि यत् पुनर्गर्भिणीवधोपादानं तत्तस्मादपि तीव्रतमत्वख्यापनार्थं यद्वा गर्भिणीवधे दैवाद् गर्भस्य जीवने पुनरुपादानं सार्थकमेवेति उपाध्यायेति गुरुतल्पगमने तत्तुल्यपापमध्ये एतानि कष्टतमानि यदुपाध्यायादिभार्य्यागमनमिति सामान्यविशेषभावेनान्वयः। पितृभार्य्या हीनवर्णा इत्यनुपातकमध्ये वक्ष्यते। सुरापाने द्वादशविधमद्यपानमध्ये इत्यर्थः। यौनेति पतितसंप्रयोगे पतित संसर्गमध्ये यौनं योनिसम्बन्धः मौखं मुखसम्बन्धः अध्ययनम् अध्यापनञ्च स्रौवं स्रुवसम्बन्धः याजनं तत्तुल्यानि पतिततत्तुल्यत्वापादकानीत्यर्थः ॥ १७ ॥

विष्णुरिति पितृपत्नी हीनवर्णेति वक्ष्यते मनुरिति रुजः कृत्वा पीड़ाकरणम् अघ्रेयं लशुनादि तस्येच्छया घ्राणं जैह्म्यं मित्रेषु कुटिलत्वम् अनापदि ब्राह्मणस्य

ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः ।
जैम्ह्यं पुंसि च मैथुनं जातिभ्रंशकरं स्मृतम् ॥
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥
कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।
फलैधः कुसुमस्तेयमधैर्य्यञ्च मलावहम् ॥ १८ ॥

एतेष्वनन्तर्भूतं यत्तदनुक्तम् ।

अनुक्तनिष्कृतीनाञ्च पापानामपनुत्तये ।

इत्यनेन मनुनोक्तं यदनुक्तं तत्प्रकीर्णमिति विष्णुनोक्तं महापातकादतिपातकं गरीयः विष्णुना प्रथमं निर्दिष्टत्वात् चिरतरकाल नरकभोग्यत्वाच्च यथा रौरवादीन्यभिधायाह विष्णुः । एतेष्वकृतप्रायश्चित्तातिपातकिनः पर्य्यायेण कल्पं पच्यन्ते मन्वन्तरन्तु महापातकिनोऽनुपातकिनश्च उपपातकिनश्चतुर्युगमिति ।॰ किञ्च ज्ञानतोऽज्ञानतश्चात्र मरणान्तिकमेव श्रूयते यथा विष्णुः मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ।

अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।

---

वाणिज्यं वयः पक्षी मद्यानुगतानां मद्यसमीपगतानां फलमूलादीनां भक्षणम् अधैर्य्यं सर्वदा गीतश्रवणनृत्यदर्शनादि अल्पे अपचये अत्यन्तवैक्लव्यमिति कल्पतरुः ॥ १८ ॥

प्रकीर्णपापमाह एतेष्विति एतेषु मनुवचनेषु यन्नोक्तं तदनुक्तं तच्चानुक्तनिष्कृतीनामित्यनेन मनुनोक्तं तस्य च प्रकीर्णसंज्ञा विष्णुना कृतेत्याह यदुक्तं

न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथञ्च न॥

कथञ्चनेति ज्ञानतोऽज्ञानतश्च अन्यथा तदनर्थकं स्यात्। मरणे तु विशेषो वक्ष्यते तथा भविष्यपुराणम्।

अतिपातकयुक्तानां प्राणान्तिकमुदाहृतम्॥ १९॥

सकृद्गमनेऽप्यत्र प्राणान्तिकम्। यथा पूयन्त इत्यनुवृत्तौ हारीतः। सद्योऽग्निप्रवेशादतिपातकिनः। संवर्त्तः।

मातरं यदि गच्छेत्तु स्नुषां वा पुरुषाधमः।
न तस्य निष्कृतिः शक्या स्वकां दुहितरं तथा॥

षड्विंशन्मतम्।

पितृभार्य्यान्तु विज्ञाय सवर्णां योऽधिगच्छति।
जननीञ्चाप्यविज्ञाय मृतः शुद्धिमवाप्नुयात्॥

अत्राज्ञानतो मरणं स्पष्टमुक्तम्। यच्च बालकादिभिरभिहितं बहुधर्मं प्रायश्चित्ताभिधानात् महापातकं गुरु। अन्यथा लघुनो धर्मातिदेशः कथं गुरुणि स्यादिति। तदसङ्गतम् एतस्य गौरवाप्रयोजकत्वात् व्यभिचाराच्च। पापोद्देश एवातिपातकं स प्रायश्चित्तमुक्तम्। ननु किं महापातकलक्षणम्। न तावत् प्राणान्तिकप्रायश्चित्तनिमित्तं महापातकम् अतिपात-

---

तत्प्रकीर्णकमितीति। मरणेत्विति हारीतवचने सद्योऽग्निप्रवेशो विशेषो वक्ष्यत इत्यर्थः ज्ञानतोऽज्ञानतश्चातिपातके मरणे भविष्यपुराणमपि प्रमाणयति तथेति सामान्यतोऽभिधानादित्यर्थः॥ १९॥

सकृदिति अत्रातिपातक इत्यर्थः हारीत इति सद्योऽविलम्बेनेत्यर्थः तेन सकृद्गमनम् अर्थाल्लभ्यत इत्यर्थः। न निष्कृतिरिति अनेन शरीरेण इत्यनेन मरणवैकल्पिकद्विगुणद्वादशवार्षिकव्रतमपि नास्य निष्कृतिरिति दर्शितं अतएव

केऽपि सत्त्वात्। न च ज्ञानत एव यत्र मरणान्तिकमतिपात-
केऽज्ञानतोऽपीति वाच्यम् अस्यानुपातकेऽपि सत्त्वात्। चत्रि-
यादिकृत ब्राह्मणवधनिष्कृत्यभावस्याप्युक्तत्वादव्याप्तिश्च। न
च मन्वन्तरोपभोग्यनरकफलत्वमनुपातकेऽपि विद्यमानत्वात्।
उच्यते। नरकोत्तीर्णफलभेदस्तत्रोपाधिः। यथा विष्णुः।
अतिपातकिनां पर्य्यायेण सर्वाः स्थावरयोनयो महापातकिनां
कृमियोनयोऽनुपातकिनां पक्षियोनय उपपातकिनां जलज-

---

विष्णुवचने न ह्यन्या निष्कृतिरिति प्रागुक्तम्। बहुधर्मेति ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्। भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्। इत्यादिनोक्ता बहुधर्माः अन्यथेति आचार्य्याणीं स्वाञ्च सुतां गच्छंस्तु गुरुतल्पगः इति गुरुतल्पव्रतं कुर्य्यात् रेतः सिक्त्वा स्वयोनिषु। सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च इति याज्ञवल्क्यमनुभ्यां दुहितृस्नुषागमनयोर्गुरुतल्पगमनातिदेशो बालकाभिमत इत्यर्थः। यद्यपि स्वमते एतयोर्वचनयोर्दुहितृस्नुषापदं हीनवर्णदुहितृस्नुषापरमित्यनुपातकप्रकरणे वक्ष्यते ततश्चातिपातके महापातकातिदेशो नास्त्येव तथापि तन्मतमङ्गीकृत्यैवाह तदसङ्गतमिति एतस्य बहुधर्मप्रायश्चित्ताभिधानस्य गुरुत्वासाधकत्वात् हेत्वभावात् प्रतिबन्दिं दूषयति व्यभिचाराच्चेति यथा शूलगवः स्वर्ग्यः पशव्यो वेत्यनेन स्वर्गकामनया पशुकामनया वा विहितस्य लघुफलकस्य शूलगवाख्यगोयज्ञस्य धर्मातिदेशः अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः इत्यनेन पारस्करेण सप्तपूर्वसप्तावर पुरुषश्रवणफलके नीलवृषगोचरतया मोक्षफलके च गुरुणि वृषोत्सर्गे कृत इति यथा वा लघुफलकदर्शपौर्णमासातिदेशो गुरुफलकाश्वमेधराजसूयादौ दृश्यत इति। अस्येति अस्य ज्ञानमात्रे मरणान्तिकस्य मातुलानी पितृमातृस्वस्रादिगमनानुपातके सत्त्वादतिव्याप्तेरित्यर्थः। निष्कृत्यभावस्येति यथा विष्णुः। गुणान्वितन्तु यो विप्रं गुणैर्हीनस्तु चत्रियः। चिणुते बुद्धिपूर्वन्तु न भवेत्तस्य निष्कृतिरित्यादि वक्ष्यते।

उच्यते इति नरकोत्तीर्णानां फलं तत्र महापातके उपाधिर्भेदकधर्म इत्यर्थः नरकोत्तीर्णानां कृमिजन्मफलकं पापं महापातकमिति महापातकलक्षणं सम्पन्नम्। नन्वत्र महापातकज्ञानाधीनमेव कृमिजन्मज्ञानं तज्ज्ञाना-

योनय एतेन अतिपातकादीनामपि लक्षणमुन्नेयम्। अथ महापातकसामान्यप्रायश्चित्तानि। तत्र शङ्खः

नित्यं त्रिसवनस्नायी कृत्वा पर्णकुटीं वने।
अधःशायी जटाधारी पर्णमूलफलाशनः॥
ग्रामं विशेत्तु भिक्षार्थी स्वकर्म परिकीर्त्तयन्।
एककालं समश्नानो वर्षे तु द्वादशे गते॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे॥

विष्णुः। अश्वमेधेन शुध्येयुर्महापातकिनस्त्विमे।
पृथिव्यां सर्वतीर्थानां तथानुसरणेन वा॥

यथा देवलः। तीर्थे पुण्यतमे यथावद्देहसन्न्यासात् ब्राह्मणो महापातकात् प्रमुच्यते धर्मयुद्धे गोग्रहे ग्रामघातादिषु प्राणत्यागात् पूयते क्षत्रियः शस्त्रोपजीविनश्च। महापातकानुवृत्तौ च्यवनः। आसेतुदर्शनात् पूतो भवत्यश्वमेधावभृथस्नानात् पूतो भवत्युभयशिरसं वा प्रदाय ब्राह्मणेभ्यः पूतो भवति। उभयशिरसमुभयतो मुखीम्। पराशरः।

चातुर्विद्योपसम्पत्तौ ब्रह्महा गुरुतल्पगः।
सेतुं पश्येत् समुद्रस्य प्रायश्चित्तं विनिर्दिशेत्॥

---

धीनञ्च महापातकज्ञानमित्यन्योऽन्याश्रयदोषः। सत्यं विष्णुना ब्रह्मवधादीन्यभिधाय एतानि महापातकानीत्युक्त्वा महापातकपदेन ब्रह्मवधत्वादिरूपेण उपस्थितानां पञ्चानां कृमिजन्मफलमुक्तं ततश्च ब्रह्मवधादिज्ञानाधीनमेव कृमिजन्मज्ञानं न तु पातकज्ञानाधीनमिति नान्योन्याश्रयः। आसेतुदर्शनादिति सेतुदर्शनादवधेस्तत्परमित्यर्थः। वचनमिदमज्ञानविषयं चातुर्विद्येति चतसृणां वेदविद्यानां समूहः चातुर्विद्यमिति समूहार्थेऽण् तत्सम्पत्तावित्यर्थः चतुर्वेद-

सेतुबन्धं तथा पश्येत् लङ्कामार्गं महोदधेः ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ॥
रामभद्रसमादेशान्नलसञ्चय सञ्चितम् ।

प्रायश्चित्तमकृत्वा सेतुबन्धं पश्येदित्यर्थः । पद्मपुराणे ।

एवं वै स्तूयमानस्तु देवदेवो महेश्वरः ।
उवाच राघवं वाक्यं भक्तिनम्रं पुरःस्थितम् ॥
त्वया चेह कृते स्थाने मदीये रघुनन्दन ।
आराध्यमानं मां राम पश्येयुरिह सागरे ॥
महापातकयुक्ता वै तेषां पापं विनङ्क्ष्यति ॥ २० ॥

अथ ब्रह्मवधप्रायश्चित्तम् । तत्र ब्रह्मवधप्रायश्चित्तार्थं प्रथमं वध एव निरूप्यते । ननु कोऽयं वधः किंवा वधित्वं कति-

---

विद्वद्ब्राह्मणस्य अकामतो ब्रह्मवधविषयं प्रथमवचनं द्वितीयवचनन्तु निर्गुणस्याकामतो ब्रह्मवधविषयमित्यपुनरुक्तिः । तथापदस्यार्थं विवृणोति प्रायश्चित्तमिति ॥ २० ॥

अथ ब्रह्मवधप्रायश्चित्तम् । तत्रेति वधज्ञानाधीनमेव ब्रह्मवधज्ञानं तज्ज्ञानाधीनञ्च प्रायश्चित्तनिरूपणम् अतः स एव निरूप्यते विविच्यते इत्यर्थः । तत्र प्रथमं वधशब्दार्थं पृच्छति नन्विति किंवा वधित्वं वधिस्वरूपमित्यर्थः । अतएव कतिविधं वा तदिति तृतीयः प्रश्नः क्रमेणोत्तरयति उच्यते इति साक्षात् कर्त्तृव्यापारस्य प्राणवियोगफलकता अस्त्येव प्रयोजकादिव्यापाराणामपि वक्ष्यमाणरीत्या कर्त्तृव्यापारद्वारा मरणफलकता अस्तीति इषुकारव्यापारस्य तु कर्त्तृव्यापारो न द्वारं तज्जन्यत्वाभावात् अतस्तस्य न वधित्वम् एवं परिहासप्रहारे शराभ्यासात् प्रमादमरणे वा वध एव । तथा सप्ताहेन ज्वराक्रान्तो म्रियतेऽरिर्नसंशय इत्यागमोक्तप्रयोगविशेषाणां वधत्वमेव एवं श्येनयागोऽपि अतएवाभिचारो मूलकर्म च इत्युपपातकमध्ये पठ्यते अन्यथा वैधकर्मणः कथं प्रत्यवायजनकत्वमिति सोऽपि वध एव । न च सप्तम्यां तैलदानेन दृष्टा भार्य्या

विधं वा तत्। उच्यते। प्राणवियोगफलकव्यापारो बधः। तन्निष्पादकत्वञ्च साक्षात्परम्परोदासीनं स्मृतिकारपरिगणितं बधित्वम् अतो नेषुकारादिष्वतिव्याप्तिः। तच्च पञ्चविधं स्मृतिस्वरसात्। कर्त्ता प्रयोजकोऽनुमन्ता अनुग्राहको निमित्ती चेति। यथा आपस्तम्बः। प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलस्य भोक्तारो यो भूय आरभते तस्मिन् फले विशेषः॥ २१॥

---

विनश्यतीत्यत्रातिव्याप्तिः निषेधविधेर्निन्दामात्रार्थवादत्वात्तस्येति। गललग्नान्नमरणेऽपि बध एव तादृशवचनाद्दोषाभावान्न तथा व्यवहारः यथा याज्ञवल्क्यः। क्रियमाणोपकारे तु मृते विप्रे न पातकम्। संवर्त्तः औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च। प्राणिनां प्राणहत्यर्थे प्रायश्चित्तं न विद्यते। एवं यन्त्रादिपातनात् व्याघ्रादिमरणेऽपि बध एव। तथा व्रणपाकपरम्परामरणेऽपि बध एव किन्तु तत्र क्वचिद्वचनाद्दोषाभावः तथा अन्ने विषप्रक्षेपेऽपि बध एव मरणस्य तत्फलत्वात्। अथवा नेदं बधलक्षणं किन्तु बधिलक्षणानुकूलमेव तेन साक्षात्परम्परोदासीनप्राणवियोगफलकव्यापारनिष्पादकः स्मृतिकारपरिगणितो बधीति बधिलक्षणमेवोक्तम् एवञ्च बधिनः प्राणवियोगफलकव्यापारो बध इति बधलक्षणमुन्नेयं ततश्च गललग्नान्न मरणे नातिव्याप्तिः नापि सप्तमीतैलदानादौ स्मृतिकारपरिगणितबधिव्यापारेतरत्वात्। अन्ये तु अदृष्टाद्वारको मरणोद्देश्यकः प्राणवियोगफलको व्यापारो बध इति अदृष्टाद्वारकविशेषणात् सप्तमी तैलदानव्यावृत्तिः एवं श्येनादीनामपि मरणोद्देश्यविशेषणात् गललग्नान्न मरणव्यावृत्तिः परिहासप्रहारे शराभ्यासप्रहारात् प्रमादमरणे च न बधः किन्तु वचनादेव तत्र दोष इति वदन्ति। तन्न रागोद्देशात् प्रमादाद्वा स्वतः परत एव वा इति प्रमादकृतेऽपि घातकत्वोक्तेः प्रमादाद् ब्राह्मणमरणे द्वादशवार्षिकप्रायश्चित्तोपदेशाच्च अत्र लोके शास्त्रेऽपि बधव्यवहाराच्च। तन्निष्पादकत्वञ्चेति किं साक्षाद्बधनिष्पादकम् उत परम्परया वेति विकल्पं परिहरति साक्षादिति तर्हि इषुकारेष्वतिव्याप्तिरित्याशङ्क्याह स्मृतिकारेति अतः स्मृतिकारपरिगणितविशेषणादित्यर्थः। यो भूय इति क्रियां प्रति यस्याधिकानुकूल्यमित्यर्थः॥ २१॥

अनुग्राहकमाह याज्ञवल्क्यः।

चरेद् व्रतमहत्वापि घातार्थञ्चेत् समागतः।

तथा मनुः।

बहूनामेककार्य्याणां सर्वेषां शस्त्रधारिणाम्।
यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृताः॥

भविष्ये, यद्येकं बहवो विप्रा घ्नन्ति विप्रमनागसम्।
तदैषां निष्कृतिं वच्मि शृणुष्वैकमनागुह॥
तेषां यस्य प्रहारेण स विप्रो निधनं गतः।
सरस्वतीं प्रतिस्रोतः सञ्चरेत् पापशुद्धये॥

स च द्विविधः। एकोवध्यप्रतिरोधकः अपरः स्वल्पप्रहर्त्ता॥

निमित्तिनमाह विष्णुः।

अन्यायेन गृहीतस्वः न्यायमर्थयते तु यः।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्॥

अत्र नरान्तरव्यापाराव्यवधानेन बधनिष्पादकः। कर्त्ता यश्च कर्त्तारं कारयति स प्रयोजकः सोऽपि द्विविधः एकः स्वतोऽप्रवृत्तमेव पदातिं वेतनादिना बधार्थं प्रवर्त्तयति। अपरः स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति।

अनुमतिदाता अनुमन्ता अनुमतिश्च द्विविधा। एका यद्विरोधाद्धननं न सम्भवति तस्य विरोधिनो सया निरोधः

कर्त्तव्यः इति प्रयुक्तिरनुमतिः। अपरा एतं हन्मीति वचनश्रुतस्याप्रतिषेध एव। अतएव कात्यायनः।

स्वं द्रव्यं नीयमानञ्च यत्स्वामी न निवारयेत्।
ऋत्विग्भिर्वा परैर्वापि दत्तं तेनैव तद्भृगुः॥

दत्तमिति दत्तमनुमतमित्यर्थः। तथा

प्रार्थ्यमानोऽर्थिना यत्र यो ह्यर्थो न विघातितः।
दानकालेऽथवा तूष्णीं स्थितः सोऽर्थोऽनुमोदितः॥

अत्र प्रतिषेध एवानुमतिरुक्ता अतएव परवचनमप्रतिषिद्धमनुमतं भवतीति न्यायविदः॥ २२॥

वध्यस्य पलायनादिविरोधकोऽनुग्राहकः।
उद्देश्यत्वे सति हन्तुर्मन्यूत्पादको निमित्ती।

अत्र प्रयोजकस्य कर्त्तृप्रयुक्तिद्वारेण वधकारणत्वम् अनुमन्तुश्च हन्तुर्निर्भयत्वेन दृढतरप्रहारोत्पत्तिद्वारेण अनुग्राहकस्य पलायनाद्यसम्भवेन हननीयस्थैर्य्यं कुर्वतः प्रहारस्वरूपोत्पत्ति-

---

वक्ष्यते अन्यथा तद्विरोधः अतएव विषप्रचेतुः साक्षात् वधित्वमिति वक्ष्यते य इति कर्त्तारं वधकर्त्तारं यः कारयति प्रेरयतीत्यर्थः अतोऽनुमन्तृतो भेदः अनुमतिस्तु परैरध्यवसितस्य वस्तुनोऽनुज्ञानं तत् प्रेरणमित्यर्थः प्रोत्साहयतीति प्रवृत्त्युपदेशपूर्वकमिति शेषः अतोऽत्र प्रयोजकत्वमिति अप्रतिषेध एवेति प्रतिषेधाभावात् तदनुमतेरनुमेयत्वात् वचने श्रुतस्य वदत इत्यर्थः अप्रतिषेधेऽनुमतिश्च क्व दृष्टेत्याह अतएवेति तेनैव द्रव्यस्वामिना तद्द्रव्यं दातुमनुमतम् इति भृगुर्जगाद इति प्रामाण्यमुक्तम्। अर्थिना याचकेन न विघातितो द्रव्यस्वामिनेति शेषः दानकाले आदानकाले द्रव्यस्वामी तूष्णीं वा स्थित इत्यर्थः अत्रेति अप्रतिषेधेऽनुमतिरुक्ता झटित्यनुमेयत्वादित्यर्थः॥ २२॥

वध्यस्येति पलायनादीत्यादिशब्दाद् युद्धोद्यमादिग्रहणम्। उद्देश्यत्वे सतीति मन्यूत्पादको यदि मरणोद्देश्यः स्यादित्यर्थः यथाचमः पित्रादिभर्त्सनादात्मान-

द्वारेण कारणत्वं निमित्तिनो हन्तुर्मन्यूत्पादनद्वारेणेति। प्रयोजकादीनाञ्चतुर्णां व्यवहितहननकारणानाम् अवान्तर-व्यापारप्रकारभेदाद्भेदः। अतः पञ्चविधं बधित्वम् ॥ २३ ॥

जिकनस्तु त्रिविधमाह स्वतन्त्रः कर्त्ता तत्प्रयोजको हेतु-श्चेति पाणिनिस्वरसात्। स्वतः प्रवृत्तः कर्त्ता तत्प्रेरकः प्रयोज-यिता। यस्त्वप्रवृत्तमेव पुरुषं वेतनादिना कारयति स न प्रयो-जकः किन्तु कर्त्तैव स्वतःप्रवृत्तत्वेन स्वतन्त्रत्वात्। चेतनान्तर-व्यवधानेन कथं कर्त्तृत्वमिति चेन्न तस्य खड्गादिस्थानीयत्वेन अव्यवधायकत्वात्। तच्चेतनस्य तदधीनत्वेनासङ्कल्पत्वात्। ऋत्विजः प्रयुञ्जानो यजमानो यथा कर्त्ता याज्यस्याप्रयोजकस्य ऋत्विज एव तत्कर्त्तृभावनिष्पादका याजकाः अतः द्वावप्येतौ स्वतःप्रवृत्तपुरुषाव्यवहितव्यापारनिष्पादकौ साक्षाद्धन्तारौ अनु-

---

मषिच्चिप्यात्मानं व्यापादयति तत्र मन्यूत्पादकानां पित्रादीनां मरणोद्देश्यत्वा-भावान्न निमित्तबधित्वं किन्तु केवलं स एवात्मघातीति अतएव उद्देश्याभावे निमित्ततामात्रेण बधित्वं नास्तीति वक्ष्यते। प्रयुक्तिः प्रयोजना। अनुमन्तु-रिति यद्यपि दृढतरप्रहारोत्पत्तेर्नानुमन्तुर्व्यापारः तथापि तद्व्यापारकार्य्यत्वा-त्तथाभिधानम् अथवा उत्पदिरिह अन्तर्भूतण्यर्थः उत्पादनमित्यर्थः। अनुग्राहक-स्येति अत्रापि पूर्ववदित्यर्थः ॥ २३ ॥

जिकनस्त्विति प्रयोजयिता अनुमन्ता कर्त्ता चेति आपस्तम्बोक्तं त्रिविध-मेवेत्यर्थः स्वतन्त्रोऽनधीनः स्वेच्छया क्रियानिष्पादक इत्यर्थः। साक्षात् क्रियाश्रयः कर्त्तेत्युक्तं चेतनान्तरव्यापारव्यवधाने कथं कर्त्तृत्वमित्याह चेतनेति। ऋत्विज इति दक्षिणादिना ऋत्विजः प्रयुञ्जानो यजमानः स्वतः प्रवृत्तत्वात् कर्त्तैव न तु प्रयोजकः स्वतःप्रवृत्तपुरुषाप्रेरकत्वात् प्रत्युत याज्य एव सः अतो न प्रयोजकः अतएव तस्य कर्त्तृत्वनिष्पादका ऋत्विजो याजका उच्यते एवं प्रकृतेऽपि वेतनादि-भुजः पुरुषा अप्रवृत्तप्रवर्त्तकस्य कर्त्तृत्वनिष्पादका एवेत्यर्थः अत इति तौ स्वतः-प्रवृत्तपुरुषो वेतनदाता अव्यवहितव्यापाराणां निष्पादकौ वेतनभुक् च इत्युभौ

ग्राहकस्यापि एककार्य्याणामित्यभिधानात् स्वतः प्रवृत्तत्वेन कर्त्तृत्वमेव बध्यशरीरस्थैर्य्यजनकत्वेन नरान्तरव्यापाराव्यवहितमरणफलकहन्तृव्यापारनिष्पादकत्वात्। यथा सत्रे यद्यपि याजमानिकं कर्म गृहपतिरेवैकः कुरुते इतरे ऋत्विक्कर्मकरास्तथापि स्वतः प्रवृत्तत्वात् सर्व्व एव कर्त्तारः समफलभागिनश्च। एवमत्रापि प्रयोजकस्यानुमन्तुश्च स्वतोऽप्रवृत्तत्वात् न कर्त्तृत्वम्। निमित्त्यपि धनग्रहणमन्यायेन कुर्व्वाणस्तज्जन्यमन्योः शङ्कितमरणमनुमन्यमान एव तदा चरतीति पाक्षिकतन्मरणस्यानुमन्तैव इतरानुमन्तृतो जघन्यः। अतएव आपस्तम्बवचनात्त्रिविधमेव बधित्वमिति अतः साक्षाद्धन्तुरेव प्रथममभिधानात्तस्यैव निषेधः स्यात् न तु परम्पराहन्तुरिति निरस्तं तच्चिन्त्यम्॥ २४॥

एवं शिशोर्मोदकादिदानप्रवृत्तस्य सूपकारस्य च वेतनादिप्रवृत्तस्य स्वव्यापारेऽध्ययने पाके च कर्त्तृत्वं न स्यात्। तथा च शिशुरधीते सूपकारः पचति इति कर्त्तरि प्रयोगो न स्यात् तस्माच्चेतनान्तरव्यापाराव्यवधानेन धात्वर्थनिष्पादकः

---

हन्तारावित्यर्थः। अनुग्राहकस्येति मनुवचने बहूनामेककार्य्याणामित्यभिधानात्तस्यापि तत्कार्य्यत्वात् स्वतःप्रवृत्तत्वमित्यर्थः। नरान्तरं बध्य एवेत्यर्थः नरान्तरमरणफलकेति विशेषणं बध्यस्य कर्त्तृत्वव्यावर्त्तकम् एवमत्रापीति समानकार्य्यत्वादनुग्राहकोऽपि कर्त्तेत्यर्थः प्रयोजकस्य प्रवृत्त्युत्साहजनकस्येत्यर्थः तज्जन्यमन्योः धनग्रहणजन्यक्रोधात् शङ्कितमरणमाशङ्कितमरणमित्यर्थः शङ्कितत्वान्मरणस्य पाक्षिकत्वम् अत इति आपस्तम्बेन त्रिविधबधित्वप्रतिपादनान्निरस्तमित्यर्थः॥ २४॥

एवमिति एवं स्वतः प्रवृत्तस्यैककर्त्तृत्वे सतीत्यर्थः तस्मादिति चेतनान्तरव्यापारव्यवधानेनेति विशेषणं प्रयोजकादिव्यावर्त्तनाय प्रथमचेतनपदं वृक्षादिच्छेदाद्यव्यवधेन हन्तर्य्यव्याप्तिवारणाय द्वितीयचेतनपदं खड्गादावतिव्याप्तिवारणार्थमिति

चेतनः कर्त्ता, कर्मकरणादिकारकचक्रप्रयोक्ता वा कर्त्तेति सामान्येन कर्त्तृलक्षणं यत्र पदातिद्वारा ब्राह्मणं हन्ति तत्र पदातेर्न करणत्वं हननकाले कर्त्तृव्यापारव्याप्यत्वाभावात् न वा तस्याव्यवधायकत्वं प्रमाणाभावात् खड्गस्य तु व्यवधायकत्वेऽपि न दोषश्चेतनत्वाभावात् न वा तस्य व्यवधायकत्वं हन्तृव्यापारे हन्तुः साक्षादेव कारणात् द्वैधीभावफलनिष्पत्तौ हि खड्गव्यापारस्य सहकारितामात्रम्। अतएवाश्वेन पदातिभिश्च राजा सञ्चरतीति सत्यपि चेतनान्तरव्यापारे तस्य सहकारिता मात्रं न तु व्यवधायकत्वं स्वव्यापारे राज्ञः साक्षात् कारणत्वात्॥ २५॥

एवञ्च यजमानस्य स्वव्यापारे यागे देवतोद्देशेन द्रव्य-

---

अश्वेन गच्छतीत्यादावश्वादिव्यापारस्य न व्यवधायकत्वं सहकारित्वादिति वक्ष्यते रथो गच्छतीत्यादौ तु लाक्षणिकं कर्त्तृत्वं वृक्षश्चलतीत्यादौ गौणं कृत्याश्रयसादृश्यात्। एतेन क्रियाश्रयः कर्त्तेति किञ्चिल्लक्षणमपास्तं खड्गादावतिव्याप्तिः न च कृत्याश्रयत्वे सति क्रियाश्रयत्वं कर्त्तृत्वमिति युक्तं प्रयोजकादावतिव्याप्तिः तेषां प्रयोजनादि तत्कर्म्मीराश्रयत्वात्। नन्वश्वेन राजा सञ्चरतीत्यत्राश्वेऽतिव्याप्तिरित्यत आह कर्मकरणादीति करणादिकारकसमूहस्य क्रियायां नियोजयितेत्यर्थः। तच्च चेतनस्यैव सम्भवतीत्यर्थाच्चेतनत्वलाभः अतो नाप्रवृत्तप्रवर्त्तको नाप्यनुग्राहको हन्तेति यच्च खड्गादिस्थानीयत्वेन पदातेः करणत्वादिव्यवधायकत्वमित्युक्तं तदपि दूषयति यत्रेति न वेति तस्य पदातेरित्यर्थः। प्रमाणाभावादिति व्यवधानस्य प्रमितत्वादित्यर्थः चेतनत्वाभावादिति उक्तलक्षणं चेतनान्तरव्यापाराव्यवधानेनेत्युक्तत्वादित्यर्थः न वेति तस्य खड्गस्येत्यर्थः द्वैधीभावफलमपि हन्तृव्यापारस्यैव तत्र खड्गव्यापारस्य सहकारितामात्रं न च सहकारिणो व्यवधायकत्वं सहकारित्वानुपपत्तेरित्यर्थः॥ २५॥

ननु यागे ऋत्विग्व्यापारस्य व्यवधायकत्वात् कथं यजमानस्य कर्त्तृत्वमित्याशङ्क्याह एवञ्च इति द्रव्यत्यागलक्षणे यागे प्रधाने यजमानव्यापारे ऋत्विग्व्यापा-

त्यागलक्षणे साक्षात् कारणत्वमेव प्रक्षेपादौ च तदङ्गे ऋत्विगादिव्यापारः सर्व्वेऽपि साधारणद्रव्यत्यागे सप्तदशानामेव कर्त्तृत्वम्। एकस्य च तदसम्भवात्। यागव्यतिरिक्तकर्म्मणि प्रत्येकं सप्तदशानां कर्म्मव्यवस्था॥ २६॥

अथवा स्वर्गकामो यजेत सप्तदशावरा ऋद्धिकामाः सत्रमुपासीरन्निति वेदे कामिनां कर्त्तृत्वावगतेस्तदनुपपत्त्या ऋत्विग्व्यापारान्तर्भावो न व्यवधायकः। आग्नेयादिकारणत्वानुपपत्तिकल्पितोत्पत्त्यपूर्व्वमिव। न चेह तथा कर्त्तृत्वे

---

रस्य न व्यवधायकत्वं तदङ्गेऽग्निप्रक्षेपादावेव ऋत्विग्व्यापारात्। एतेनैतदुक्तं भवति यजमानेन मनसा देवतोद्देशेन त्यक्तस्य द्रव्यस्य स्वाहेत्यादिमन्त्रेण ऋत्विजोऽग्नौ तदङ्गप्रक्षेपमात्रं कुर्वन्ति तेषां तद्द्रव्ये स्वत्वाभावेन त्यागासम्भवात् अतो यागं प्रति यजमानस्यैव कर्त्तृत्वं प्रक्षेपं प्रत्येव ऋत्विजामिति। कथं तर्हि सप्तदशानां कर्त्तृत्वम् एकस्यैव यजमानत्वादन्येषामृत्विक्त्वादित्यत आह सत्र इति देवतोद्देशेन द्रव्यत्यागलक्षणे यागेऽव्यवधानेन क्रियानिष्पादनात् कारकचक्रप्रयोजनाच्च सर्वेषामेव समानं कर्त्तृत्वम् एकस्य गृहपतेस्तदसम्भवात् स्वत्वाभावेन सर्वद्रव्यत्यागासम्भवादित्यर्थः यागेतरेषु तदङ्गभूतब्रह्मादिकर्म्मस्वेव सप्तदशानां कर्म्मव्यवस्था कश्चिद्ब्रह्मा कश्चिदुद्गाता कश्चिद्धोताइत्यादि व्यवस्थेत्यर्थः॥ २६॥

ननु साङ्गप्रधानकर्म्मण्येव यजमानः कर्त्ता तस्यैव फलजनकत्वात् फलयोगश्च कर्त्तर्य्येव ततश्चाङ्गे ऋत्विग्व्यापारस्य व्यवधायकत्वात् कथं कर्त्तृत्वमित्याशङ्क्याह अथ वेति अग्निष्टोमादियागे कामिनः कर्त्तृत्वं वेदादेव प्रतीतं तस्य चान्यथानुपपत्त्या ऋत्विग्व्यापारो द्वारतया यजमानव्यापारान्तर्भूत एव न तु व्यवधायकः द्वारेण द्वारिणोऽव्यवधानात् अत्र दृष्टान्तमाह आग्नेयादीति दर्शपौर्णमासाभ्यां यजेतेत्यादौ दर्शपौर्णमासपदवाच्यानामग्न्यादिदैवतपुरोडाशादियागानां स्वर्गकारणत्वं वेदादवगतं तच्चानुपपन्नं क्षणविनष्टानां तेषां स्वर्गाव्यवहितपूर्वकाले असत्त्वात् अतस्तस्य कारणत्वानुपपत्त्या अपूर्वं द्वारं कल्प्यते तदयं यथा यागा-

प्रमाणाभावात्। तस्मात् पूर्वोक्तकर्त्तृत्वलक्षणाक्रान्तत्वादै-स्वतः प्रवृत्तपदातिप्रेरको न बधकर्त्ता किन्तु प्रयोजक एव अनुग्राहकोऽपि न कर्त्ता कर्त्तृलक्षणाव्याप्यत्वात्। सत्रे तु विशेष उक्त एव ॥ २७ ॥

एवं पाक्षिकमरणानुमन्तृत्वान्निमित्तिनोऽनुमन्तृत्वमयुक्तम्। एवं प्रयोजकस्यानुमन्तृत्वापत्तेः अतो मन्यूत्पादनद्वारा यो निमित्तवान् स निमित्त्यनुमन्तृतः प्रकारान्तर एवायं प्रयोजकादिवत् अतो यथाकथञ्चित् निमित्ततामात्रेण यदि निमित्तबधः तदा मातापित्रोरिषुकारस्यापि निमित्तत्वं स्यादिति निरस्तम्। ननु सत्यपि मन्यूत्पादने न निमित्तत्वं यथा वध्यस्य वधकमन्यूत्पादकस्य न ह्यनुत्पादितमन्युः कश्चित् कमपि व्यापादयति। असत्यपि मन्यूत्पादने निमित्तत्वं यथा मरणाभिसन्धानेनान्ने विषप्रक्षेप्तुर्न हि तस्य कर्त्तृत्वं सम्भवति नरान्तरविषभक्षणव्यापारव्यवधानात्। अतस्तत्रापि

---

व्यवधायकं तद्वदत्रापीत्यर्थः उत्पत्त्यपूर्वम् अङ्गविधिबोधितापूर्वं ननु गुरुमतेऽपूर्वं वाच्यं तत्कथं कल्पितमित्युक्तं सत्यं स्वर्गकामो दर्शपौर्णमासाभ्यां यजेतेत्युपदेशविधौ वाचकशब्दसद्भावात् अपूर्वं वाच्यमेव आग्नेयोऽष्टाकपालो भवतीत्याद्युत्पत्तिविधौ वाचकशब्दाभावेन स्वर्गसाधनत्वान्यथानुपपत्त्यापूर्वमवश्यं कल्पनीयमिति गुरूणां सिद्धान्तः। न चेहेति इह प्रयोजकादावित्यर्थः सत्रे त्विति सत्रदशानां द्रव्यत्यागे मुख्येऽपि कर्त्तृत्वं तदङ्गेऽपि ऋत्विग्व्यापारे कर्त्तृत्वमिति विशेषः प्रागुक्त इत्यर्थः ॥ २७ ॥

पाक्षिकेति यस्मिन् पक्षे मरणाशङ्का निमित्तिनी न जाता तत्र मरणानुमन्तृत्वाभावान्निमित्तवधित्वमव्याहतमेवेत्यतोऽयुक्तमित्यर्थः। एवमिति यथा कथञ्चिदनुमननाद यद्यनुमन्तृत्वं तदा प्रयोजकस्यापीत्यर्थः अत इति मन्यूत्पादनरूपनिमित्तविशेषस्य विवक्षितत्वान्निरस्तमित्यर्थः। न ह्यनुत्पादितेति कामतो

कर्त्तृत्वमस्तीति भवदेवमतमपास्तं सत्यं कर्त्रादिचतुष्टय-
विलक्षणो वाचनिकनिषिद्धनिमित्तिभाव एव निमित्तीति
निमित्तिलक्षणं नेषुकारस्य बध्यस्य वा निमित्तिभावो
निषिद्धः। अभक्ष्यदातुश्च निषिद्धोऽहितमाहारादिकं मरण-
फलकं हितनिश्चयेन क्रियमाणं न पातकहेतुरिति वदता
अहितं मरणफलकम् अहितबुद्ध्या क्रियमाणं पातकहेतुरिति
प्रदर्शितम्। निमित्तिबधापवादकवचनेन एतच्च वक्ष्यते। एवं
यत्राभिसन्धानं नास्ति हेत्वन्तरस्थापितं विषं खादित्वा कश्चित्
यत्र म्रियते तत्र न बधित्वम्। एवं व्याघ्रादिमारणार्थकृत-
यन्त्रादावन्यस्य मरणे न बधित्वम् एवं कूपखातादावपि मरणा-
भिसन्धाने तु तत्राप्यस्त्येव। यः कश्चित् संशयस्थाने प्रस्थाप्यते
बलवती च मरणशङ्का भवति तत्र प्रस्थापितोऽपि यदि

---

बधविषयमिदं मन्यूत्पादनं विनाप्यकामतस्तत्सम्भवात्। अथ बध्यगतमन्यूत्पादनं
विवक्षणीयमित्यत आह असत्यपीति। अभक्ष्यदातुरिति अन्ने विषादिप्रक्षेप्तु-
रित्यर्थः। निषिद्धत्वं दर्शयति अहितमिति औषधं स्नेहमाहारं ददद्गोब्राह्म-
णेषु च। प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तं न विद्यते इति बधापवादकसंवर्त्ता-
दिवचनेनेत्यर्थः। अहितबुद्ध्या क्रियमाणमिति नन्वपवादवचने हितबुद्ध्या
दोषाभावदर्शनात् तद्व्यतिरेको दोषकारणमित्युक्तं स च यथा अहितबुद्ध्याचरणं
तथा हिताहितबुद्ध्यौदासीन्येनाचरणमपि ततश्च वाणिज्याद्यर्थस्थापितं विषं
खादित्वा कस्यचिन्मरणे निमित्तबधित्वं प्रसज्येत नैवं हितबुद्ध्या दोषाभावात्
तत् प्रतियोगितया अहितबुद्धेरेवोपस्थितत्वात्तस्या एव दोषकारणत्वं न तु
हितबुद्धिव्यतिरेकस्य अप्रतियोगित्वात् तर्हि अन्यमुद्दिश्य अन्ने विषदातुरन्यस्य
मरणे दोषो न स्यात् तदीयमरणानुसन्धानाभावात् सत्यं निमित्तबधित्वं तस्मादेव
किन्तु ततोऽपि न्यूनं किञ्चिदेव अन्यमरणस्याप्याशङ्कितत्वेन पाक्षिकाभिसन्धानात्
अतएव संशयस्थाने शिष्यप्रस्थापने शङ्कितपाक्षिकमरणाभिसन्धानात् दोषो
वक्ष्यते अतो विषान्नभक्षणादन्यस्य मरणे प्रायश्चित्तमपि याज्ञवल्क्योक्तशिष्यप्रस्था-

म्रियते तत्र बधित्वं पाक्षिकमरणाभिसन्धानात्। अतएव इतरनिमित्तिनो विषप्रवेशुर्जघन्यत्वम्॥ २८॥

तथा च याज्ञवल्क्यः।

कृच्छ्रत्रयं गुरुः कुर्य्यात् म्रियते प्रहितो यदि।

बौधायनः, गुरुप्रयुक्तश्चेत् म्रियते गुरुस्त्रीन् कृच्छ्रांश्चरेत्। उपकाराचरणेन बधनिष्पत्तौ निमित्तबधापवादमाह संवर्त्तः

औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च।
प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तं न विद्यते॥
यन्त्रणे गोचिकित्सायां मूढ़गर्भविमोचने।
यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते॥

मूढ़गर्भः अन्तर्मृतगर्भः। तथा,

दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्।
द्विजानां गोहितार्थञ्चेत् प्रायश्चित्तं न विद्यते॥

याज्ञवल्क्यः।

क्रियमाणोपकारे तु मृते विप्रे न पातकम्।
विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च॥

विशेषमाह अङ्गिराः।

औषधेऽपि न दोषोऽस्ति स्वेच्छया पिबते यदि।

---

धनतुल्यं कृच्छ्रत्रयमेवेति। एवमिति अभिसन्धानं मरणाभिसन्धानं हस्त्यन्तरस्थापितं वाणिज्याद्यर्थस्थापितमित्यर्थः एवं व्याघ्रादीति न बधित्वं न निमित्तबधित्वं किन्तु ततोऽपि न्यूनं किञ्चिदेवेत्यर्थः॥ २८॥

औषधादिकं ददद् यः स्यात् तस्य प्राणिनां प्राणरक्षार्थं व्यवहारतः प्राय-

अन्यथा दीयमाने तु प्रायश्चित्तं न संशयः ॥

मन्यूत्पादने निमित्तबधमाह वृद्धशातातपः—

गोभूहिरण्यहरणे स्त्रीसम्बन्धे कृतेऽपि च।

यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

विष्णुः, अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः।

यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

तथा च वृहस्पतिनाम्ना पठितानि बचनानि।

ज्ञातिमित्रकलत्रार्थं सुहृत् क्षेत्रार्थमेव च।

यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च।

यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

गुर्वर्थं पितृमात्रर्थमात्मार्थमथवा पुनः।

यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

षट्त्रिंशन्मतम्।

आक्रोशितस्ताड़ितो वा धनैर्वा परिपीड़ितः।

यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

अत्रोद्दिश्येति सर्वत्र कीर्त्तनात् उद्देश्याभावे निमित्तता-मात्रेण वधित्वं नास्ति अर्थादिहरणाक्रोशनताड़नादीनां मन्युकारणानामुपात्तत्वात् एतेषामभावे धनाद्यर्थं वृक्षा-रोहणादिना अन्यमुद्दिश्य ये म्रियन्ते तत्र कीर्त्तनमात्रेण निमित्तबधो नास्ति ॥ २८ ॥

---

खित्वं नास्तीत्यर्थः। दारुच्छेदेति प्रक्षेपो भूमौ निपातनम्। धनाद्यर्थमिति धनादिलाभार्थमित्यर्थः ॥ २८ ॥

तथा पठन्ति।

असम्बन्धेन यः कश्चित् द्विजः प्राणान् परित्यजेत्।
तस्यैव तद्भवेत् पापं न तु यं परिकीर्त्तयेत्॥

असम्बन्धेनेति वाक्कृतादिसकलापराधसम्बन्धाभावपरम्।

यच्च,

सम्बन्धेन विना देव शुष्कवादेन कोपितः।

इति भविष्यपुराणवचनं वार्षिकप्रायश्चित्तविधायकम्। तद्वाक्-कृतेतरापराधाभावपरं शुष्कवादेन कोपित इत्यभिधानात् एवं यत्राक्रोशनादौ पश्चात्कृतेनापराधस्तत्रापि न बधः।

यथा बृहस्पतिः।

आक्रुष्टस्तु यदाक्रोशंस्ताड़ितः प्रतिताड़यन्।
हत्वाततायिनश्चैव नापराधी भवेन्नरः॥

शास्त्रविहितताड़नादौ कृते यत्र शिष्यादिः म्रियते तत्रापि बधो नास्त्येव। यथा भविष्यपुराणम्।

पुत्रः शिष्यस्तथा भार्य्या शासितश्चेद्विनश्यति।
न शास्ता तत्र दोषेण लिप्यते देवसत्तम!॥

अशास्त्रीयताड़नादौ भवत्येव। यथा मनुः।

पुत्रः शिष्यस्तथा भार्य्या दासी दासस्तु पञ्चमः।
प्राप्तापराधास्ताड्याः स्यूरज्ज्वा वेणुदलेन वा॥

---

दण्डादिशास्त्रविरोधादिति दण्डादिविधिविरोधात् तत्र ब्राह्मणो न हन्तव्य इति निषेधाप्रवृत्तेः अन्यथा दण्डविधेरननुष्ठानलक्षणाप्रामाण्यं स्यात्। ननु कथं तर्हि सोमविक्रयणे दोषः अरुणयैकहायन्या गवा सोमं क्रीणातीति वैधस्य

अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कदाचन।
अतोऽन्यथा हि प्रहरंश्चौरस्याप्नोति किल्विषम्॥

यत्र विहितदण्डाचरणे शास्त्रीयकरग्रहणे क्रियमाणे ब्राह्मणो म्रियते तदापि बधो नास्त्येव दण्डादिशास्त्रेण निषेधाप्रवृत्तेः। सोमविक्रयणे तु रागादेव प्रवृत्तिसम्भवान्न विरोधः। आततायिबधापवादमाह बृहस्पतिः।

नाततायिबधे हन्ता किल्विषं प्राप्नुयात् क्वचित्।
विनाशार्थिनमायान्तं घातयन्नापराध्नुयात्॥

किल्विषाभावः प्रायश्चित्तनिषेधार्थः। अपराधाभावो दण्डनिषेधार्थः यतः सर्वत एवात्मानं गोपायीतेति श्रुतिमूलमिदम्। अतः पलायनादिनापि आत्मरक्षणाभावे इदं बोद्धव्यम्। कात्यायनः।

आततायिनमायान्तमपि वेदान्तगं रणे।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥

जिघांसी सन् इयाद्गच्छेदित्यर्थः देवलः।

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्॥

भ्रूणो ब्राह्मणविशेषः दोषदर्शनं नियमार्थम्।

मनु विष्णू।

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।

---

सोमक्रयणस्य विक्रयणं विना असम्भवादित्याशङ्क्य परिहरति सोमेति रागप्राप्तत्वेन सोमविक्रयणस्य वैधत्वाभावादित्यर्थः। बधापवादं बधदोषापवादमित्यर्थः। दोषदर्शनमिति अहत्वा भ्रूणहा भवेदिति दोषकथनं हननावश्यकत्वार्थमित्यर्थः।

आततायिनमायान्तं हन्यादेवाविचारयन् ॥

एवकारो नियमार्थः । तथा

नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वा प्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥

तस्माद्धन्तुर्मन्युर्हन्यमानमन्युं नाशयति न पुनः पुरुषो हन्ति हन्यते वेति हननविधेरपवादः । आततायिनमाह वशिष्ठः ।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहा ।
क्षेत्रदारापहारी च षड़ेते आततायिनः ॥

विष्णुकात्यायनौ ।

उद्यतासिविषाग्निञ्च शापोद्यतकरं तथा ।
आथर्वणेन हन्तारं पिशुनञ्चैव राजसु ॥
भार्य्यातिक्रमिणञ्चैव विद्यात् सप्ताततायिनः ।
यशो वृत्तहरानन्यानाहुर्धर्मार्थहारकान् ॥

विशेषमाह कात्यायनः ।

अनाचारितपूर्वो यस्त्वपराधे प्रवर्त्तते ।
प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता ॥

अनाचारितः अनपकृतः । तेन पूर्वंकृतापकारस्य मारणोद्यतस्य नाततायिता । तेन प्रत्यपकारिवधे दोष एव ॥ ३० ॥

---

विषाग्निरिति विषाग्निदाने कृतनियमम् आथर्वणे न हन्तारम् अभिचार कर्त्तारं येन पैशुन्येन सर्वनाशः स्यात् तत् कर्त्तारम् अतिक्रमिणमिति नन्द्यादित्वात् युः । वृत्तं सच्चरितं तत्र पुत्रादीनां धर्मार्थकृततड़ागादिहारकान् प्राणरक्षाकरार्थहारकांश्च अनाचारितेति पूर्वं यस्यापकारी न कृतस्तादृशो यः प्राणद्रव्यापहारेऽपराधे प्रवर्त्तते तस्यैव तत्र प्रवर्त्तस्याततायित्वा न त्वपकृतस्येत्यर्थः । तेनेति पूर्वं कृतोपकारी यस्येत्यर्थः ॥ ३० ॥

नन्वाततायिनोरपि गोब्राह्मणयोर्हनने दोषमाह सुमन्तुः।
आततायिवधे न दोषोऽन्यत्र गोब्राह्मणाद् यदा हन्यात् प्राय-श्चित्तं कुर्य्यात्। तथा भविष्ये

चिखानमपि गोविप्रं न हन्याद्वै कदाचन।

इति। अतः पूर्ववचनविरोधः अत्र व्यवस्थामाह कात्यायनः।

आततायिनि चोत्कृष्टे तपः स्वाध्याय जन्मतः।
वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः॥

जन्मपदेन जातिः कुलञ्चोच्यते। तेन हन्तुरपेक्षया तपो विद्याजातिकुलैरुत्कृष्टो नाततायी वध्यस्तदन्यो वध्य एव। अतएव भगवद्गीतायामाह।

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः।

इति। एतान् भीष्मादीनत्यन्तोत्कृष्टगुणानित्यर्थः। एवं-भूताततायिनश्चाहनने फलमप्याह बृहस्पतिः।

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम्॥
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्।

यद्यपि गुरुं बहुश्रुतं हन्यादिति श्रूयते तथापि गुरोः सका-शात् कुलविद्यातपोभिः शिष्यस्याप्युत्कर्षसम्भवात्। एवं बहु-श्रुतादपि। एवमधमवर्णस्य उत्तमवर्णो न वध्यः पूर्वकृतापराध-विषयं वा सुमन्तुवचनं गौरातताय्यपि न वध्यः।

नखिनां शृङ्गिणाञ्चैव दंष्ट्रिणाञ्चाततायिनाम्।
हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक्॥

---

वधस्तत्रेति वधो विहितो न स्यादित्यर्थः। पापे पातकिनि हीने आत्मनो

इति कात्यायनवचनं गोव्यतिरिक्तशृङ्गिविषयं विशेषमाह कात्यायनः।

उद्यतानान्तु पापानां हन्तुर्दोषो न विद्यते।
निवृत्तास्तु यदारम्भाद् ग्रहणं न बधः स्मृतः॥ २१॥

अथ प्रायश्चित्तानि। तत्र मनुः

ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।
भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्॥

भैक्ष्यं वन्यफलाद्यभावे

भिक्षार्थी विचरेद् ग्रामं वन्यैर्यदि न जीवति।

इति संवर्त्तवचनात्। तच्च मृण्मयकपालेन मृण्मयेन कपालेनेति यमवचनात्। शवशिरोध्वजमिति शवशिरोऽन्वितं ध्वजं चिह्नं कृत्वेत्यर्थः। शवशिरश्च हतब्राह्मणस्यैव ब्राह्मणं हत्वा तस्य शिरः कपालमादायेति शातातपवचनात्। तदलाभे तज्जातीयं कार्य्यमित्येके। तथा

लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः॥

लक्ष्यमित्यनेन मृतः शुध्यति जीवन्नपि शुध्यति इति।

संग्रामे वा हतोलक्ष्यीभूतः शुद्धिमवाप्नुयात्।

निकृष्टगुणे। पूर्व्वक्तेति प्रागुक्तकात्यायनवचनैकवाक्यतया प्रत्यपकारिविषयमेवेत्यर्थः। आरम्भात् मारणोद्यमात् ग्रहणं धारणम्॥ २१॥

अथ प्रायश्चित्तानि। विशुद्धिः पापनिवृत्तिः। तच्चेति भैक्ष्याशनमित्यर्थः। अग्नौ वारत्रयानुप्रवेशान्मरणं तथैव कशिवाहुल्यात्। त्रिवृता वारत्रयानुष्ठिते-

मृतकल्पः प्रहारार्त्तो जीवन्नपि विशुध्यति ॥

इति याज्ञवल्क्यवचनात्। विदुषां पातकशोधनार्थमयं लब्धो भूत इति विजानताम्।

यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा।
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा ॥

गोसवेनेति स्वर्जितेत्यस्य विशेषणम्। त्रिवृतेत्यग्निष्टुद्विशेषणम्।

मनुना कीर्त्तितानीह त्रयोदश यथाक्रमम्।

इति भविष्ये त्रयोदशत्वश्रुतेः। तथा

जपन् वान्यतमं वेदं योजनानां शतं व्रजेत्।
ब्रह्महत्यापनोदाय मितभुक् संयतेन्द्रियः ॥
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥

सर्वस्वदानं द्वादशवार्षिकानुरूपं भविष्ये धनवानिति दर्शनात्। तथा

हविष्यभुग्वानुसरेत् प्रतिस्रोतः सरस्वतीम्।

---

नाग्निष्टोमेनेत्यर्थः। त्रयोदशेति द्वादशवार्षिकव्रतं प्रथमम्। शस्त्रभृतां लक्ष्य द्वितीयम्। अग्नावात्मप्रक्षेपः तृतीयम्। अश्वमेधः चतुर्थम्। स्वर्जिद्यज्ञः पञ्चमम्। अभिजिद्विश्वजिद् यज्ञौ षष्ठसप्तमौ। अग्निष्टुत् अष्टमम्। योजनशतगमनं नवमम्। द्वादशवार्षिकव्रतानुरूपं धनदानं सर्वस्वदानं न तु दरिद्रस्य यत् किञ्चित् सर्वस्वदानम् इदं दशमम्। ब्राह्मणाय जीवनयोग्यभूग्रामादिस्थिरजीविकादानं सोपकरणगृहदानञ्च वाशब्दः समुच्चये इदमेकादशः। सरस्वत्याः प्रतिस्रोतो गमनं द्वादशम्। वारत्रयवेदसंहितानपस्त्रयोदशमिति।

जपेद्वै नियताहारस्त्रिर्वै वेदस्य संहिताम् ॥

संहिताग्रहणं पदक्रमव्युदासार्थम्। तथा

कृतवापो विनिवसेद् ग्रामान्ते गोव्रजेऽपि वा।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥

द्वादशवार्षिकव्रताङ्गमिदम् एवं दृढ़व्रत इत्युपसंहारात् ॥३२॥

तथा, गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत्।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥

प्रक्रान्तद्वादशवार्षिकस्यान्तरा गोब्राह्मणार्थं प्राणत्यागात् परित्राणे च प्राणपरित्यागात् अपि पूतो भवति। द्वादशवार्षिकव्रता समाप्तावपि ब्राह्मणानां शतं वा परित्राय पूतो भवतीति हारीतदर्शनात् गवां द्वादशकस्य वेति याज्ञवल्क्यवचनाच्च विशेषो बोद्धव्यः। शतशब्दोऽत्र बह्वर्थः। तथा

त्र्यवरं प्रतियोद्धा वा सर्वस्वमभिजित्य वा।
विप्रस्य तन्निमित्ते वा प्राणलाभे विमुच्यते ॥

ब्राह्मणाद्यर्थमेव युद्धे त्रीन् वारान् कृतच्चतः सन्न मृतोऽपि अपवित्रायापि कृतयुद्धः शुध्यति चौरादिना सर्वस्वमपह्निय-

---

कृतवाप इत्यादि द्वादशवार्षिकव्रताङ्गमेव न तु पृथक्। गवार्थ इत्यादिना प्रक्रान्तद्वादशवार्षिकस्य शुद्धिहेतवो ये वक्ष्यमाणाः कर्मविशेषाः ते द्वादशवार्षिकस्यैव भेदाः न तु पृथगिति वयोदशैव इति अतएव एवं दृढ़व्रत इत्युपसंहारो वक्ष्यते। आश्रमे मुन्यादीनामिति शेषः ॥ ३२ ॥

त्र्यवरं प्रतियोद्धेति प्रक्रान्तद्वादशवार्षिक एवेत्यर्थः। सर्वस्वमवजित्येति व्याचष्टे चौरादिनेति। विप्रस्य तन्निमित्ते वेति व्याचष्टे यदीति इदमपि प्रक्रान्तद्वादशवार्षिकविषयम्। शिष्टेति प्रागुक्ताश्रमेधस्य शुद्धिप्रकारोऽयम् अव-

माणं विजित्य यदि प्रत्यानयति तदा अर्वागपि शस्त्रक्षताच्छु-ध्यति। यदि धनापहारक्लेशादात्महनने चौरैर्वा युद्धे मरणे प्रवर्त्तते विप्रस्तदापहृतसमधनदानेन स तं जीवयति तदापि शुध्यति।

तथा, एवं दृढ़व्रतो नित्यं ब्रह्मचारी समाहितः।
समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति॥
शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे।
स्वमेनोऽवभृथस्नातो हयमेधे विमुच्यते॥

आत्मीयपापं ब्राह्मणक्षत्रियसभायां निवेद्यावभृथस्नानाच्छु-ध्यतीत्यर्थः। क्षत्रियविषयमिदम्। तस्यैवाश्वमेधाधिकारात्।

तथा, अतोऽन्यतममास्थाय विधिं विप्रः समाहितः।
ब्रह्महत्याकृतं पापमपोहत्यात्मवत्तया॥

अन्यतमग्रहणादेकैकेन शुद्धिः। आत्मवत्तया दृढ़ज्ञानवत्तया। एवं द्वादशवार्षिकाद्यवभृथस्नानान्तानि त्रयोदशप्रायश्चित्ता-न्यभिधायाह मनुः।

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते॥

इत्यस्माद्वचनादेतानि द्वादशवार्षिकादीन्यकामकृतब्राह्मणवधे कामकृते तु प्रायश्चित्ताभाव इति प्रतीयते। ननु कामकृते

---

भृथस्नानं न तु पृथक् अतस्त्रयोदशविधमेव। शिष्ट्वा कथयित्वा भूमिदेवाः ब्राह्मणाः नरदेवा राजानः। कुल्लुकभट्टस्तु ऋत्विग्यजमानसमागमे यः कश्चि-द्विप्रादिः स्वपापं निवेद्य यजमानस्नानसमये स्नातः शुध्यतीति चतुर्दशमिदं एवं दृढ़व्रत इत्यनेन यथाक्रमोक्तानां त्रयोदशानामुपसंहृतत्वात् अतएव त्रयोदश यथा-

कथं प्रायश्चित्ताभावः। कामकृतेऽपि मरणान्तिकप्रायश्चित्त-श्रवणात्। यथा अङ्गिराः।

य: कामतो महापापं नरः कुर्य्यात् कथञ्चन ।
न तस्य शुद्धिर्विज्ञेया वह्नौ प्रपतनादृते ॥

यथा कामकारानुवृत्तौ अङ्गिराः।

शरीरं न दहेद् यावद् ब्रह्महा पापकृत्तमः ।
तावत्तस्य न शुद्धिः स्याद्भगवान् मनुरब्रवीत् ॥

तथा, प्राणान्तिकन्तु यत् प्रोक्तं प्रायश्चित्तं मनीषिभिः ।
तच्च कामकृतं प्राप्य विज्ञेयं नात्र संशयः ॥ ३२ ॥

कालिकापुराणे ।

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामो ब्राह्मणवधे जीवतो नास्ति निष्कृतिः ॥

जीवत इत्युपादानान्मरणाच्छुद्धिरुक्ता। अत्र भवदेवेन व्याख्यातम्। इयमिति द्वादशवार्षिकरूपा निष्कृतिर्नास्ति। मरणरूपा विद्यत एव न इयमित्यनेन प्रकृतत्वात् त्रयोदशप्रायश्चित्तानामुक्तत्वात् तन्मध्ये च मनुना मरणस्याप्यभिहितत्वात्। श्रीकरेण कामत इति ज्ञानयुक्तकामनया प्रायश्चित्ताभावः। केवलकामनया तु मरणमिति व्याख्यातम्।

---

कृतमिति भविष्यपुराणं तथा तत्रैव। यदा तु गुणवान् विप्रो हन्याद्विप्रन्तु निर्गुणम्। अकामतस्तदा गच्छेत् स्नानञ्चैवाश्वमेधिकम्। दृढ़ज्ञानवत्तयेति यस्मात् कर्मणोऽवश्यं ब्रह्महत्याव्यपगमे इति निश्चयवत्तयेत्यर्थः ॥ ३२ ॥

उच्यते इति। अतएव कामकृतेऽपि प्रायश्चित्तोपदेशादित्यर्थः न च कामतो मरणान्तिकस्य उक्तत्वादप्रवहार्य्यता निषेधासम्भवात् कथं प्रायश्चित्तात्तन्निष्कृति-

तदसङ्गतं ज्ञानकामनयोरव्यभिचारस्योक्तत्वात्। उच्यते। अतएव व्यवहार्य्यत्वनिष्कृत्यभावपरं इदम्। कामतोऽव्यवहार्य्य इति याज्ञवल्क्यवचनसमानार्थत्वात्। अथवा निष्कृतिर्नास्तीत्यस्यायमर्थः। नोक्तेन व्रतादिना नोक्तेन मरणप्रकारेण निष्कृतिरित्यर्थः। किन्तु मरणप्रकारान्तरेण महाक्लेशसाध्येन। तथा याज्ञवल्क्यः।

> लोमभ्यः स्वाहेति ऋचालोमप्रभृति वैतनुम्।
> मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्य्यथाक्रमम्॥

अथवा निन्दार्थमिदं निष्कृत्य भाववचनम् क्षत्रियादिकृत सगुणब्राह्मणवधविषयं वा। यथा भविष्ये महेश्वरपादाः।

> कामतो ब्राह्मणवधे यदेतद्भवतोदितम्।
> एकान्ततो विप्रवधवर्जनार्थमुदीरितम्॥
> यद्वा क्षत्रियादिविषयमेतद्वै वचनं विदुः।
> गुणान्वितन्तु यो विप्रं गुणैर्हीनस्तु क्षत्रियः॥
> क्षिणुते बुद्धिपूर्वन्तु न भवेत्तस्य निष्कृतिः।
> विट्शूद्राणां विशेषेण घ्नतां कामतो द्विजान्॥
> प्राणान्तिकी भवेद् यत्र कामतो निर्गुणे हते।
> सगुणे निहते कामान्निष्कृतिर्न विधीयते॥

---

र्नास्तीत्युक्तमिति वाच्यं मरणवैकल्पिकचतुर्विंशतिवार्षिकव्रते कृते व्यवहार्य्यतायाः सम्भवात् अथवा द्वयं पक्षान्तरे। सर्वेषां मतानां पश्चादुपसंहरिष्यमाणत्वात् भविष्यवचनानुसारेण मतद्वयमाह निन्दार्थमित्यादि। प्रागुक्तमतानां निर्गलितार्थमाह अत इति मनूक्तत्रयोदशविधप्रायश्चित्तमध्ये यन्मरणान्तिकं तदज्ञानतः सगुणब्राह्मणवधविषयं यच्च व्रतरूपं तदज्ञानतो निर्गुणवधविषयं कामतस्तु सगुणनिर्गुणवधे याज्ञवल्क्योक्तमरणं ब्राह्मणस्य इत्यर्थः। क्षत्रियादीनामिति अकामतो

विप्रवधवर्जनार्थमित्यनेन निन्दार्थतोक्ता। अतोऽज्ञानतो ब्राह्मणस्य सगुणनिर्गुणब्राह्मणवधे द्वादशवार्षिकादिव्रतम्। कामतस्तु याज्ञवल्क्योक्तप्रकारेण मरणं क्षत्रियादीनां निर्गुणब्राह्मणवधेऽप्येवं सगुणब्राह्मणवधे निष्कृत्यभावः ॥ २४ ॥

वस्तुतस्तु निष्कृत्यभाववचनं मरणविकल्पितचतुर्विंशतिवार्षिकप्रायश्चित्तेऽपि कृते व्यवहार्य्यताभावपरं न तु प्रायश्चित्ताभावपरम्। तथात्वे तत् संसर्गिणि प्रायश्चित्तव्यवस्था न स्यात्। हन्तुर्हन्यमानस्य चोभयोः सगुणत्वनिर्गुणत्वाभ्यां भविष्यपुराणे विशेषा द्रष्टव्याः। विस्तरभयान्नेह प्रस्तूयन्ते। द्वादशवार्षिकमहाव्रताधिकारे अङ्गिराः।

गते तु द्वादशे वर्षे ब्रह्महा पूयते नरः।

---

निर्गुणब्राह्मणवधे मनूक्तव्रतं कामतो निर्गुणब्राह्मणवधे मरणम् एतच्च ग्रन्थकृता सामान्येनोक्तं विशेषमत्र भविष्यपुराणवचनैर्वक्ष्यामः क्षत्रियादीनां कामतः सगुणब्राह्मणवधे भविष्योक्तनिष्कृत्यभाव इति ॥ २४ ॥

अत्रैव भविष्योक्ते निष्कृत्यभावे विशेषमाह वस्तुतस्त्विति क्षत्रियादीनां सगुणब्राह्मणवधे भविष्यमनुवचनयोर्निष्कृतिर्नास्तीति यदुक्तं तद्व्यवहार्य्यताविषयं ज्ञेयम्। तथात्वे प्रायश्चित्ताभावपरत्वे सतीत्यर्थः। व्यवस्था न स्यादिति शूलपाणिना प्रायश्चित्तमेव संसर्गिण्यतिदिष्टं तदभावे तदतिदेशाभाव इत्यर्थः विशेषा द्रष्टव्या इति मनूक्तानि त्रयोदशविधानि प्रायश्चित्तानि भविष्यविषयभेदेन यैर्वचनैर्व्याख्यातानि कल्लुकभट्टधृतानि तान्युच्यन्ते। हन्ता चेद् गुणवान् विप्रोऽकामान्निर्गुणो हतः। ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्। अकामतो वधे ब्राह्मणविषयमिदम्। तथा। लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः। यजेत वाश्वमेधेन क्षत्रियो ब्रह्मघातकः। प्रायश्चित्तं त्रयं ह्येतत् क्षत्रियस्य प्रकीर्त्तितम्। क्षत्रियो निर्गुणो वीर! ब्राह्मणं वेदपारगम्। निहत्य कामतः स्वेच्छं लक्ष्यं शस्त्रभृतां भवेत्। चतुर्वेदविदं वीर! ब्राह्मणं चाग्निहोत्रिणम्। निहत्य कामादात्मानं

षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुध्यति॥
मासि मासि पराकेण त्रिभिर्वर्षैर्व्यपोहति।
अर्द्धमासेन भुञ्जानो द्विवर्षाभ्यां विमुच्यते॥
संवत्सरेण मासाशी पूयते नात्र संशयः।

एषां द्वादशवार्षिकमहाव्रतषाड्वार्षिकप्राजापत्यत्रैवार्षिकप्रतिमासपराकद्वैवार्षिकप्रतिमासपक्षाभोजनवार्षिकैकमासान्तरितमासोपवासानामिच्छाविकल्पः। ननु कथमत्र इच्छाविकल्पः कालस्य गुरुलाघवेन विषमशिष्टत्वात्। एका देया तिस्रो देयाः षड् देया इति वत्॥ ३५॥

अतः षाड्वार्षिकप्राजापत्यादिकं लघुत्वेन प्रयोजकादि-

---

क्षिपेदग्नाववाक्शिराः। निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान् गुह!। यजेत वाश्वमेधेन क्षत्रियो यो महीपतिः। तथा। स्वर्जिदादैस्तु यद्वीर! कर्मणः पृतनापते!। अनुष्ठानं द्विजातीनां वधे ह्यमतिपूर्वके। अज्ञानतस्त्रैवर्णिकविषयमिदम्। तथा। जातिमात्रं यदा विप्रं हन्यादज्ञानपूर्वकम्। वेदावेदाग्निहोत्री च तदा तस्य भवेदिदम्। जपन् वान्यतमं वेदं योजनानां शतं व्रजेत्। ब्रह्महत्यापनोदाय मितभुक् संयतेन्द्रियः। तथा। जातिमात्रं यदा हन्यात् ब्राह्मणं ब्राह्मणो गुह!। वेदाभ्यासविहीनो वै धनवानग्निवर्जितः। प्रायश्चित्तं तदा कुर्य्यादिदं पापविशुद्धये। सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्। धनं वा जीवनायालं गृहं वा सपरिच्छदम्। इदमप्यज्ञानतः। तथा जातिमात्रे हते विप्रे देवेन्द्रमतिपूर्वकम्। हन्ता यदा वेदहीनो धनेन च भवेद् गुह!। तदेतत् कल्पयेत्तस्य प्रायश्चित्तं निबोध मे। हविष्यभुक् चानुवसेत् प्रतिस्रोतः सरस्वतीम्। एतज्ज्ञानतो जातिमात्रविप्रवधे निर्गुणविप्रविषयम्। तथा जातिमात्रं यदा हन्यात् विप्रं त्वमतिपूर्वकम्। ब्राह्मणोऽत्यन्तगुणवान् तदेदं परिकल्पयेत्। जपेद्वा नियताहारस्त्रिकृत्वो वेदसंहिताम्। एका देयेति अत्र नेच्छाविकल्पः किन्तु फलभूमैवेति॥ ३५॥

विषयमिति भवदेवव्याख्यानमेव युक्तम्। उच्यते। कालस्य गुरुलाघवेऽपि क्लेशसाम्यस्य धेनुभङ्गे वक्ष्यमाणत्वादिच्छाविकल्प एव युक्तः। अज्ञानविषयमिदम्। बध्यब्राह्मणस्य विशेषेण प्रायश्चित्तगौरवमुक्तं याज्ञवल्क्येन

द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्।

सवनस्थः यज्ञस्थः। तथा भविष्ये

बालं वृद्धं गुरुञ्चैव स्त्रियं वीर! रजस्वलाम्।
ब्राह्मणं यजमानञ्च हत्वा निष्कृतिमाचरेत्॥
चरित्वा द्वादशाब्दानि वीर! ब्रह्महनो व्रतम्।
गोसहस्रं ततो दद्याद् ब्राह्मणेभ्यः शताधिकम्॥
अथवा कल्पयेद्वीर! हन्तुर्द्रव्याद्यपेक्षया।
प्रायश्चित्तं महाबाहो! यथावत् शृणु सुव्रत!॥
द्रव्यहीनो यदा हन्ता बालादीनां सुराधिप!।
चरित्वा द्वादशाब्दानि सेतुबन्धञ्च पश्यति॥

तथा, मातरं पितरं हत्वा सोदर्य्यं भ्रातरं तथा।
गुरुं हत्वा श्रोत्रियञ्च आहिताग्निमथापि वा॥
आ उत्तमादुदुच्छ्वासाद् व्रतं चीर्त्वा विशुध्यति।

श्रोत्रियः साङ्गसकल्पसमस्तैकशाखाध्यायी। शताधिकगोसहस्रदानव्रतदक्षिणागौरवाद्गौरवं प्रायश्चित्तस्य एतच्चाप्यत्यन्तधनवतः। धनाभावे व्रतं कृत्वा सेतुबन्धं पश्येत्। सेतुबन्धदर्श-

---

धेनुभङ्गे धेनुविभागे धेनुसङ्कलन इत्यर्थः। भविष्ये इति ब्राह्मणमिति बालादीनां विशेषणं बालोऽत्र यः कश्चित् वृद्धादिसाहचर्य्यात् स्वबाल इत्यन्ये। मातरमिति एतदप्यज्ञानतः ब्राह्मणवधविषयं श्रोत्रियादिसाहचर्य्यात् ज्ञाने तु याज्ञ-

नच्च द्वादशवार्षिकव्रतवैकल्पिकत्वात् व्रतद्वैगुण्यमप्यूहनीयम् ॥ ३६ ॥

अा उत्तमादुदुच्छासादित्यनेन यावज्जीवव्रताचरणमुक्तम्। एतच्च द्विगुणद्वादशवार्षिकव्रतसमं बोद्धव्यं गुरुबधे पूर्ववचने द्वैगुण्यस्योक्तत्वादत्र च तत्साहचर्य्यात् द्वैगुण्यं बोद्धव्यं तथा ब्रह्मपुराणे।

यज्ञसंस्थौ तु पितरौ राजानञ्चाप्यनागसम्।
हत्वा चरेद् व्रतं तत्तु चतुर्विंशतिवत्सरान् ॥

भवदेवेन तूक्तं जीवनकालस्य अनियतत्वात् विंशत्यधिकशतं परमायुरेव ग्राह्यं तेन बधकालादूर्द्धं विंशत्यधिकशतस्य यावदवशिष्टं तावत् परिमाणमहाव्रतानुरूपा धेनवो दातव्या इति ॥ ३७ ॥

तच्चिन्त्यम् उक्तब्रह्मपुराणवचनविरोधात्। भविष्ये

हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम्।

---

वक्ष्यमाणोक्तमरणमेव। पूर्ववचने बालं वृद्धमित्यादि गुरुबधे द्वादशाब्दतत्तुल्यसेतुबन्धदर्शनयोरुक्तत्वात् द्वैगुण्योक्तिरित्यर्थः ॥ ३६ ॥

तस्मादा उत्तमादुदुच्छासादिति कालाधिक्यपरं लाक्षणिकम्। यज्ञसंस्थाविति वचनमिदं त्रैवर्णिकविषयं तस्यैव यज्ञाधिकारात् यदा यज्ञस्थ पितृमातृब्राह्मणबधेऽपि चतुर्विंशतिवार्षिकं तदा केवलपितृमातृब्राह्मणबधे सुतरामेव द्वैगुण्यं न च ततोऽधिकम् यावज्जीवमिति भावः। एवं यागस्थक्षत्रियवैश्यपितृमातृबधेऽपीति यागस्थक्षत्रियवैश्यमात्रबधे तु द्वादशवार्षिकमेव मन्वाद्युक्तं यथा। हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्। राजन्यवैश्यौ चेजानावात्रेयीमेव च स्त्रियम्। यागस्थेतरक्षत्रियवैश्यपितृमातृबधे तु क्षत्रियवैश्यबधोक्तं द्विगुणम् एवं शूद्रस्य पितृमातृबधेऽपीति ॥ ३७ ॥

कामतोऽपि चरेद्वीर! द्वादशाब्दाख्यमुत्तमम्॥
एतदत्यन्तोत्कृष्टगुणाततायिवधविषयं प्रागेवोक्तम्। एवंभूताततायिब्राह्मणवधे कामतोऽपि द्वादशवार्षिकव्रतमेव।
तथा, जातिमात्रे हते विप्रे कामतो यद्भवेत् शृणु।

चरेद्द्वादशवर्षाणि कृत्वा शवशिरोध्वजम्॥

इति एतत् पतितब्राह्मणवधविषयं एतस्मिन्नेव विषये व्यासः।

प्रायश्चित्तान्यथो वक्ष्ये संक्षेपेण निबोध मे।
ब्रह्महाब्दत्रयं विप्रो गायत्रीमभ्यसेत् सदा॥
प्राणायामशतं कुर्य्यात् प्रत्यहं नियतः शुचिः।
भिक्षाशी निवसेन्नित्यमरण्ये संयतेन्द्रियः॥
षोड़शब्राह्मणान् विप्रो भोजयित्वा समाहितः।
प्रयच्छेद्वस्त्रयुग्मानि हिरण्यञ्चापि शक्तितः॥

एतत्त्रैवार्षिकमपि वाचनिकं पापक्षयसाधनेति कर्त्तव्यताबाहुल्यात् द्वादशवार्षिकसमानमेव बहुप्रामाणिकसम्मतञ्चेदम्। यत्तु सुमन्तुवचनं ब्रह्महा वत्सरं कृच्छ्रं चरेत् पूर्णे तु वत्सरे हिरण्यमणिगोधृषान्नतिलभूमिसर्पींषि ब्राह्मणेभ्यो दद्यात्। एतद्गायत्र्यादिविवर्जित इति भविष्यपुराणदर्शनादाग्रहारिकब्राह्मणवधविषयम्।

कालिकापुराणे।

वृत्रं हत्वा ततः शक्रो माहेन्द्रे स्थाप्य शङ्करम्।
लिङ्गं विमुक्तः पापौघैस्ततः स त्रिदिवं गतः॥
रावणं सूदयित्वा तु रामो दाशरथिस्तथा।

---

त्रिन्त्यमिति वाच्यं वृद्धमित्याद्युक्तं भविष्यपुराणवचनविरोधोऽपि मन्तव्य-

विमुक्तो ब्रह्महत्यायाः स्थाप्य लिङ्गं सुतेजसम्॥
अद्यापीन्द्रेश्वरं दृष्ट्वा तथा रामेश्वरं प्रभुम्।
मुच्यते ब्रह्महत्याया नरो वै नात्र संशयः॥

अत्र विशेष उक्तो भविष्ये।

यद्युत्तरे वसेत् पार्श्वे विन्ध्यस्य सुरसत्तम!।
दक्षिणे वसतश्चेदं न भवेदिति तच्छृणु॥

अनुग्राहकादीनान्तु कामतो व्रतमेवं।

चरेद् व्रतमहत्वापि घातार्थश्चेत् समागतः॥

इति याज्ञवल्क्यवचनात् कामतोऽपि विशेषाश्रवणादनुग्राहकस्य व्रते कर्त्तव्ये प्रयोजकादीनां ततोऽपकृष्टत्वाद् व्रतमेव। यद्यपि सन्निधानाद्द्वादशवार्षिकव्रतमत्र प्रतीयते तथापि किञ्चिदूनं तदेव कर्त्तव्यम्। यो भूय आरभते तस्मिन् फले विशेष इति श्रवणात्। व्यवधाने तन्न्यूनत्वस्य युक्तत्वात्। एतेन यथा यथा व्यवधानं तथा तथा पादहानिरेव युक्ता गोवधे तथा दर्शनात्। यथा संवर्त्तः।

पादमेव चरेद्रोधे द्वौ पादौ बन्धने चरेत्।
योजने पादहीनं स्याच्चरेत् सर्वं निपातने॥

अष्टमाष्टमभागहानिरिति भवदेवव्याख्यानं प्रमाणशून्यम्। तेन यदेव साक्षाद्वधकर्त्तुः प्रायश्चित्तं द्वादशवार्षिकम् तदेवानुग्राहकस्य स्वल्पप्रहर्त्तुरप्रवृत्तप्रवर्त्तकप्रयोजकस्य च पादहीनं नव-

---

आग्रहारिकः करकटः। कालिकापुराणवचनमज्ञानतो निर्गुणब्राह्मणवधविषयम्। सम्बन्धे धनापहारताड़नादिसम्बन्धे असम्बन्धे वाऽज्ञातसम्बन्धे इत्यर्थः

वार्षिकव्रतमित्यर्थः। बध्यप्रतिरोधकानुग्राहकस्य प्रवृत्तप्रयोजकस्य च षाड्वार्षिकम्। अनुमन्तुस्त्रैवार्षिकम्। निमित्तिनस्तु वचनात्त्रैवार्षिकं सम्बन्धे असम्बन्धे वार्षिकम्। यथा भविष्ये

स सम्बन्धं यदा विप्रो हत्वात्मानं मृतो गुह !।
निर्गुणः सहसा क्रोधाद् गृहक्षेत्रादितो विभो !॥
त्रैवार्षिकं व्रतं कुर्य्यात् ब्रह्मचर्य्यञ्चरन् वने।

सम्बन्धशब्दोऽत्र धनसम्बन्धपरः। ताड़नादितिरस्कारेऽपि त्रैवार्षिकमाह स एव।

तिरस्कृतो यदा विप्रो निर्गुणो म्रियतेऽनघ !।
सनिमित्तं यदा विप्रस्तदेदं शुद्धये चरेत्॥
त्रैवार्षिकं ब्रह्मचर्य्यं कृत्वा शुध्येत विप्रहा।

धनताड़नादिसम्बन्धाभावे वाक्कलहमात्रेण मृते वार्षिकमाह स एव।

यमुद्दिश्य द्विजो हन्यात् ब्राह्मणः स्वयमेव हि।
आत्मानं सहसा क्रोधात्तस्य किं नु भवेदिदम्॥
सम्बन्धेन विना देव ! शुष्कवादेन कोपितः।
केशश्मश्रुनखादीनां कृत्वा वै वपनं गुह !॥
ब्रह्मचर्य्यं चरन् वीर ! वर्षेणैकेन शुध्यति।

एतत्त्रितयकारणाभावे लोभादिना मृते प्रायश्चित्ताभाव एवेति प्रागुक्तम्। काष्ठादिना विद्धो ब्राह्मणो यदि दैववशाज्जीवति

---

सम्बन्धं विवृणोति गृहक्षेत्रादित इति। ताड़नादिना तिरस्कृतः सनिमित्तं

तदा किं प्रायश्चित्तमित्यत्राह गोतमः। सृष्टश्चेद् ब्राह्मणवधेऽहत्वापीत्यनेन ब्रह्मवधप्रायश्चित्तातिदेशेन लघुत्वान्निमित्तवधोक्तमेव प्रायश्चित्तम्॥ ३८॥

कामाकामविशेषेण त्रैवार्षिकं वार्षिकं वा व्यवस्थेयम्। आत्मवधार्थमुद्बन्धनादौ कृते यदि न म्रियते। तत्र तप्तकृच्छ्रद्वयविकल्पितं चान्द्रायणमाह यमः।

जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशकच्युताः।
विषप्रपतनप्रायशस्त्रघातच्युताश्च ये॥
सर्वे ते प्रत्यवसिताः सर्वधर्मवहिष्कृताः।
चान्द्रायणेन शुध्येयुस्तप्तकृच्छ्रद्वयेन वा॥

क्षत्रियादीनान्तु ब्राह्मणवधे प्रायश्चित्तद्वैगुण्यादिकमाह भविष्यपुराणे।

पर्षद्विधानमुक्तं दसुक्तमाङ्गिरसेन तु।
द्विगुणा क्षत्रियाणान्तु वैश्यानां त्रिगुणा स्मृता॥
चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मना।
पर्षद्दद्व्रतं प्रोक्तं शुद्धये पापकर्मणाम्॥
अधमानान्तु वर्णानामुत्कृष्टहनने गुह!।
दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः॥

तेन क्षत्रियस्य ब्राह्मणवधे ब्राह्मणकृतब्रह्मवधप्रायश्चित्ताद्द्विगुणं

---

धनताड़नादिनिमित्तं यदा म्रियत इत्यर्थः। सम्बन्धेन विना धनादिसम्बन्धेन विना इत्यर्थः॥ ३८॥

कामाकामेति कामकृते धनताड़नादिनिमित्तवधोक्तं त्रैवार्षिकम् अकामकृते वाग्भावनिमित्तवधोक्तं वार्षिकमित्यर्थः। जलाग्न्यादीति प्रव्रज्या सन्न्यास-

प्रायश्चित्तम्। वैश्यस्य त्रिगुणं शूद्रस्य चतुर्गुणम्। अपरो विशेष उक्तो भविष्ये विस्तरभयान्न लिखितः। तथा आक्रोशितेऽपि दण्डद्वैगुण्यादिकं क्षत्रियादीनां दृश्यते। यथा याज्ञवल्क्यः

प्रतिलोमापवादेऽपि चतुस्त्रिद्विगुणा दमाः।
वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः॥

दण्डवत्प्रायश्चित्तानि भवन्तीति प्रायश्चित्तमपि तथैवोक्तम्। यच्च विष्णुवचनम्

विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यते॥

इति तत् सामान्यविशेषन्यायात् एषां वधेतरविषयम्। प्रकरणादभक्ष्यभक्षणविषयञ्च॥ २९॥

इदानीमिदं निरूप्यते। किमेकजातीयेष्वनेकपातकेष्वावृत्तं प्रायश्चित्तमुत तन्त्रेणेति तत्र महापातकजातीयेषु कामकृतेषु तन्त्रता न सम्भवत्येव अग्निप्रवेशाग्निवर्णसुरापानमुषलघातज्वलत्कूर्मीसमालिङ्गनानां मरणप्रकाराणां भिन्नत्वात्।

---

सर्व्वाद्द भ्रष्टाः। अनशको मरणपर्य्यन्तं सङ्कलिताहारत्यागः। प्रायो महापथगमनम्। प्रत्यवसिताः पतिता इत्यर्थः। तर्हि स्वर्णस्तेयादौ तथा स्यित्याभ्यज्ञाह प्रकरणादिति॥ २९॥

तन्त्रतां विवेचयितुम् उपक्रममाह इदानीमिति। एकजातीयेष्विति एकजातीयत्वञ्च सामान्यतो महापातकत्वरूपेण विशेषतो ब्रह्मवधत्वादिरूपेण चेत्यर्थः। न च ब्रह्मवधादिपञ्चस्वनुगतैकधर्माभावात् कथमेकजातीयतेति वाच्यं क्रमियोनिजनकत्वस्यैकधर्मस्य प्रागुक्तत्वात्। न चेति रुक्मस्तेयी, सुरापश्च ब्रह्महा

न चाकामकृतेषु महापातकजातीयेषु ब्रह्मबधजातीयेषु वा एकप्रायश्चित्तं प्रति प्रधानं गुणावृत्तेरेव युक्तत्वात् वचनाभावाच्च प्रत्युतावृत्तिमाह देवलः।

यस्मादनभिसन्धाय पापं कर्म सकृत् कृतम्।
तस्यैव निष्कृतिः प्रोक्ता धर्मविद्भिर्मनीषिभिः॥
विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम्।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः॥

यथा यमः, गोघ्नवद्विहितः कल्पश्चान्द्रायणमथापि वा।
अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात्॥

तयोः प्रकृतिविकृतिभूतयोरित्यर्थः। तथा आपस्तम्बः। सवर्णायामनन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशति। द्वितीये द्विपादः तृतीये त्रिपादः चतुर्थे सर्वमिति। तथा याज्ञवल्क्यः।

किञ्चित् सास्थिवधे देयं प्राणायामस्त्वनस्थिके।
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्।
अस्थिमतां सहस्राणि तथानस्थिमता मनः॥

---

गुरुतल्पगः। व्रतैरेतैर्व्यपोहन्ति महापातकिनस्त्विमे इति प्रागुक्ततुल्यप्रायश्चित्तबधकामकृतमहापातकजातीयेष्वित्यर्थः। प्रतिप्रधानमिति वनवासभिक्षाशित्वादिव्रतं प्रधानं द्वादशाब्दकालो गुणोऽङ्गं यावन्ति प्रधानानि तावन्त्येवाङ्गानि साङ्गप्रधानस्यैव फलजनकत्वादित्यर्थः। अन्ये तु पापं प्रधानं तदुद्दिश्य प्रायश्चित्तविधानात् प्रायश्चित्तं तदङ्गमित्याहुः तन्न न हि प्रायश्चित्तं पापाङ्गं अङ्गस्य प्रधानोपकारकत्वनियमात् प्रायश्चित्तस्य पापनाशकत्वादिति। तर्हि कथं गणशः क्रियमाणे तु मातृश्च पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमित्यादौ तन्त्रतेत्याशङ्क्याह वचना-

साक्षिप्राणिमारणे किञ्चिद्दानमुक्तम्। तन्त्रतापक्षे साक्षिप्राणिसहस्रमारणेऽपि तदेव स्यात् न शूद्रहत्याव्रतम्। एवमनस्थिमारणे प्राणायाम उक्तः शकटपूरणमारणेऽपि स एव स्यात्। तथाच गोतमः, एनसि गुरूणि गुरूणि लघुनि लघूनि इति ॥ ४० ॥

किञ्च एकैकस्मै वा कामायान्ये यज्ञक्रतव आक्रियन्ते सर्वेभ्यो दर्शपौर्णमासावित्यत्र सकृत्कृतेनैव दर्शपौर्णमासिनानेकफलसिद्धेर्नावृत्तिः स्यात् इति योगसिद्ध्यधिकरणविरोधः ॥ ४१ ॥

किञ्च सकृत्कृतादेव ज्योतिष्टोमात् सकलस्वर्गव्यक्तिसिद्धौ नावृत्तिः स्यादिति कर्माणि आरम्भाधिकरणविरोधः स्यात्।

---

भावाच्चेति तत्र वचनात्तथा अत्र तु तादृशवचनाभाव इत्यर्थः। तयोरिति तयोर्गोवधविविधसुरेतरमद्यपानयोः प्रकृतिविकृतिभूतयोरभ्यासे भूयः पुनरपि तदेव प्रायश्चित्तं कुर्य्यादित्यर्थः। आपस्तम्ब इति यस्मात् पापात् पुरुषः पतितो भवतीत्युपदिशति मन्वादिमुनिस्तस्य महापातकपापस्य पादश्चतुर्थांशः सकृत् सवर्णागमने भवतीत्यर्थः स्वयमेव व्याख्यास्यते ॥ ४० ॥

एकैकस्मा इति क्रतुः ससोमको यागः तदन्यो यज्ञः अन्ये दर्शपौर्णमासादितरे ये यज्ञक्रतवस्ते एकैकस्मै विधिबोधिताय कामायाक्रियन्ते। दर्शपौर्णमासौ तु सर्वेभ्योऽग्निष्टोमवाजपेयादिसर्वयज्ञोक्तफलेभ्यो भवतः अत्र सकृत्कृतेनैव दर्शपौर्णमासेन यदि सर्वफलसिद्धिः स्यात्तदा दर्शपौर्णमासावृत्तिर्न स्यात् ततश्च योगसिद्ध्यधिकरणविरोधः यत्रानेकजातीयफलान्येकप्रयोगान्न सिध्यन्तीति सिद्धान्तस्तद् योगसिद्ध्यधिकरणं ततश्च कामनाभेदाद्ध यथा दर्शपौर्णमासावृत्तिस्तथात्रापि महापातकभेदात् प्रायश्चित्तावृत्तिरित्यर्थः ॥ ४१ ॥

इदानीं सजातीये ब्रह्मवधान्तरे तन्त्रतां निरस्यति किञ्चेति यत्र सजातीयान्यनेकफलान्येकप्रयोगान्न सिध्यन्ति इति सिद्धान्तस्तत्कर्मण्यारम्भाधिकरणम्। तथा चोक्तं कर्मण्यारम्भभाव्यत्वात् प्रतिफलमावृत्तिरिति कर्मणि यत् फलं

किञ्च तन्त्रतापक्षे सकृत् कृतादेव ब्रह्मबधादनेकपापोत्पत्तिः स्यात्। किञ्च प्रयोगविध्यैक्ये हि तन्त्रता दृष्टा। प्रयाजादीनामिवाग्नेयादित्रितयोपकारकाणां न चात्र तथाप्रयोगविधीनामपूर्वाणां भिन्नत्वात्। किञ्च ब्राह्मणो न च हन्तव्य इति तरति ब्रह्महत्यामित्येकवचनमपि श्रूयते। अतः कथं तन्त्रता ॥ ४२ ॥

उच्यते बहूद्देशेन सकृदनुष्ठानं तन्त्रता। एकफलोद्देशेन सकृदनुष्ठानेऽपरफलसिद्धौ प्रसङ्गः। हेतुश्च तन्त्रताया अदृष्टार्थस्य कर्मण एकजातीयस्य देशकालकर्त्रादीनामैकत्वे उद्देश्यविशेषाग्रहः न तु प्रयोगविध्यैक्यमपि। अनावृत्तेनैव

---

तस्यारम्भभाव्यत्वात् आरम्भजन्यत्वात् प्रतिफलं कर्मणामावृत्तिरित्यर्थः। अतः षष्टिवर्षोपभोग्यफलस्य सकृज्ज्योतिष्टोमारम्भजन्यत्वादपरषष्टिवर्षफलं प्रति पुनरारम्भ इति सिद्धान्तः ततश्च तन्त्रतायां तद्विरोधः स्यादित्यर्थः अनेकपापोत्पत्तिः स्यादित्यादि ननु बहूद्देशेन सकृदनुष्ठानं तन्त्रतेति वक्ष्यते नात्रानेकपापानामुद्देश्यत्वम् अतः कथमनेकपापोत्पत्तिप्रसङ्गः सत्यम् अनेकफलकं सकृदनुष्ठानं तन्त्रतेति परमतमवलोक्य उक्तं स्वमते तु तन्त्रतालक्षणं पश्चाद्वक्ष्यते इति भावः। प्रयाजादीनामिति आग्नेयोऽष्टकपालो भवति ऐन्द्रं दधि भवत्यमावस्यायाम् ऐन्द्रं पयो भवत्यमावस्यायामिति यागत्रयं तेषां प्रयाजेयाजसंयाजानुयाजयाजाः पञ्चाङ्गानि तेषां तन्त्रता दर्शपौर्णमासप्रयोगविध्यैक्ये एव दृष्टा। न चात्रेति तथा प्रयोगविध्यैक्यं पापभेदेन प्रायश्चित्तप्रयोगजन्यानामपूर्वाणां भिन्नत्वात् प्रायश्चित्तापूर्वन्तु वाचकशब्दसद्भावात् प्रागङ्गीकृतमस्तीति ॥ ४२ ॥

बहूद्देशेनेति अनेकफलोद्देशेनेत्यर्थः तेनैकफलोद्देशेन सकृदनुष्ठाने प्रसङ्गादपरफलसिद्धौ कस्तन्त्रतायाः प्रसङ्गः येनातिव्याप्तिः यथा अमावास्याश्राद्धानुष्ठाने प्रसङ्गात्तीर्थश्राद्धफलसिद्धिः एवं गोदोहनेनापः प्रणयेदित्यादौ गुणोद्देशेन प्रधानावृत्तेर्न तन्त्रतेति। हेतुरिति अदृष्टार्थस्येति विशेषणं दृष्टार्थकर्मवारणाय तेन एककालजन्यानेकमशकक्रिय[illegible] धूमकरणे दृष्टार्थे नातिव्याप्तिः

कर्मणा नानादृष्टफलसिद्धेर्लाघवात् सकृदनुष्ठानमिति लाघवमेव सकृदनुष्ठाने हेतुः अङ्गेष्वेव प्रयोगविध्यैक्यमुक्तम्। अत्र तु ब्रह्मवधपापक्षयकामस्याधिकारे विनिगमनायां प्रमाणाभावात् देवदत्तादेश्च विशेषस्याशास्त्रीयत्वात्तन्त्रतायां बाधकाभावात् तन्त्रतैव। यत्र त्वभ्यासप्रायश्चित्तावृत्तिः प्रायश्चित्तान्तरं वा श्रूयते एकविषये वा गुरुलघुप्रायश्चित्तमवगम्यते तत्र तदेव बाधकम् ॥ ४३ ॥

योगसिद्ध्यधिकरणे च यः पुत्रकामो यः पशुकाम इत्युपक्रमे निरपेक्षफलश्रुतेः कामनाभेदान्न कर्त्रैक्यम्। अतएव न

---

उद्देश्यविशेषाग्रहः　　देवदत्तादिवधजन्यपापक्षयमात्रफलविशेषस्याग्रहोऽनुसन्धानं किन्तु सामान्यतः फलाभिसन्धानम् इत्यर्थः। नन्विति प्रयोगविध्यैक्यं न तन्त्रताहेतुः किन्तु लाघवमेवेत्यर्थः। अङ्गेष्वेवेति न तु प्रधानद्वये अयं भावः असति विरोधे लाघवमेव सर्वत्र तन्त्रताबीजं प्रयोगविध्यैक्यस्य तु देशकालकर्त्रादीनामैक्याद्विरोधाभावघटकतयैवाङ्गानां तन्त्रतायामुपयोगो न तु स्वरूपत इति। एवं प्रकृतेऽपि विरोधाभावं दर्शयति अत्र त्विति पूर्वपश्चात्कृतयोर्ब्रह्मवधयोरन्यतरस्य प्रायश्चित्ताधिकारे नास्ति विनिगमना कामनातौल्येन उभयोर्युगपदुपस्थितत्वात् न च वध्यस्य देवदत्तादेर्नामकृतः सम्बन्धकृतो वा विशेषोऽस्ति अशास्त्रीयत्वात्। न चात्र पर्य्येऽपर्य्योदके, चैव पिण्डदानेऽवनेजने। तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च इतिवत् तन्त्रताबाधकं वचनमस्ति बीजन्तु लाघवमस्ति न कथं तन्त्रता स्यादित्यर्थः। तर्हि पूर्वोक्तानि प्रायश्चित्तावृत्तिविधायकानि वचनानि कथमुपपन्नानीत्याशङ्क्याह यत्र त्विति तत्तद्विशेषस्थले तत्तद्विशेषवचनमेव तन्त्रताबाधकमित्यर्थः देवलवचनन्तु सवर्णागमनविषयमापस्तम्बोक्तसमानार्थमिति वक्ष्यते। प्रायश्चित्तान्तरं वेति प्रायश्चित्तविशेषो वेत्यर्थः ॥ ४३ ॥

योगेति यः पशुकाम इत्यादौ पुनः पुनर्यत्पदाद्वाक्यभेदावगमात् परस्परापेक्षाविरहेण फलानां पृथक् पृथक् प्रयोगसाध्यत्वात् कामनानां नरपेक्ष्यं ततश्च कामनाभेदेन कर्तृभेदात् न तन्त्रतेति अतएव वाक्यभेदेन नैरपेक्ष्यावगमान्न

तत्र दशहरादिन्यायात् मिलितफलकामस्याधिकारो दशपापहरा गङ्गेति तत्र समुच्चयावगतेः। अत्र तु पापव्यक्तीनां न निरपेक्षश्रुतिः। कर्मण्यारम्भाधिकरणे च स्वर्गगतषष्टिवर्षाद्युपभोगश्रुतिविरोधान्न तन्त्रता एवं पापकर्मण्यपि न तन्त्रता। नरकगतकल्पमन्वन्तराद्युपभोगश्रुतिविरोधादेव ॥ ४४ ॥

ब्राह्मणो न च हन्तव्य इति हविरुभयत्ववन्निमित्तविशेषणत्वादेकत्वमविवक्षितम्। तरति ब्रह्महत्यामित्येकत्वं स्वर्गकामो यजेतेति लिङ्गवदनाकाङ्क्षितमिति अतः सिद्धातन्त्रता ब्रह्महत्यायां विशेष उक्तो भविष्ये।

ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।

---

मिलिताधिकारी दशहरादौ तु वाक्यैक्यात् फलानां समुच्चयावगमान्मिलिताधिकार एव एवं यत्र वाक्यभेदस्तत्र न तन्त्रता नापि मिलिताधिकारः यत्र तु वाक्यैक्यं तत्र मिलिताधिकार एवेति निर्गलितार्थः प्रकृते तु नैवमित्याह अत्रत्विति पापव्यक्तीनां तत्प्रायश्चित्तानाञ्च न नैरपेक्ष्या श्रुतिः पृथग्विधायकवाक्याभावात् येन कामनाभेदेन कर्तृभेदात्तन्त्रता न स्यादित्यर्थः। एवमिति यद्यपि पापकर्मणि बहूद्देशाभावात् तन्त्रता न सम्भवति तथाप्यनेकफलकं सकृदनुष्ठानं तन्त्रतेति परमतमङ्गीकृत्य प्रकारान्तरेण पापकर्मणि तन्त्रताभावः प्रतिपादित इति भावः ॥ ४४ ॥

ब्राह्मण इत्येकवचनान्न तन्त्रतेति यदुक्तं तद्दूषयति ब्राह्मण इति यस्योभयं हविरार्त्तिमृच्छेत् स ऐन्द्रं पञ्चषड्वारं वा ओदनं निर्वपेदिति। अस्यार्थः यस्य सायं प्रातर्हविर्द्वयमार्त्तिमृच्छेत् विनश्येत् स ऐन्द्रदेवताकं पञ्चवारं षड्वारं वा ओदनं निर्वपेत् अत्रैकहविरभावेऽपि ऐन्द्रः पञ्चषड्वारमोदननिर्वापः क्रियते यतो हविरार्त्तौ किं स्यादित्याकाङ्क्षया उभयत्र तौल्यादुभयत्वविशेषणमप्रयोजकमेव उभयपदन्तु हविर्द्वयनाशेऽपि तद्देवेत्युपरञ्जकमात्रं तद्वदत्राप्याकाङ्क्षातौल्याद्‌ ब्राह्मणजातिमात्रनिमित्तमुद्दिश्य हनननिषेधप्रवृत्तेस्तद्विशेषणस्यैकत्वस्य-

अत्र वक्तव्यमस्त्येकं तन्निबोध सुरोत्तम ! ॥
ब्राह्मणस्य ब्राह्मणयोर्ब्राह्मणानाञ्च पुत्रक ! ।
प्रायश्चित्तस्य चैकत्वं जातिमाश्रित्य लभ्यते ॥ ४५ ॥

क्षामवत्यादिना यद्वत् कर्मणा पृतनापते ! ।
दैवदोषादकरणे जाते दोषकदम्बके ॥
होमेनैकेन दोषाणां सर्वेषां क्षयमादिशेत् ।
एकया क्षामवत्यासौ होमेनैकेन तस्य वै ॥
पुरोडाशादसन्देहे एवं यज्ञविदो विदुः ।
ब्रह्महाप्येकमेवेह प्रायश्चित्तं समाचरेत् ॥
एवमेव न सन्देहः किन्त्वत्र गदतः शृणु ।
एककालं यदा हन्यात् युगपन्नरसत्तम ! ॥
निमित्तमेकमाश्रित्य हेतिनैकेन वा मिती ।
ब्राह्मणं ब्राह्मणौ वीर ! ब्राह्मणान् सुबहूनपि ॥
नियत्य युगपद्वीर ! एकं प्राणान्तिकं चरेत् ।

---

विवक्षितत्वात् ब्रह्मवधमात्रपापक्षयकामः प्रायश्चित्ताधिकारीति। एवं यथा स्वर्गकामो यजेत इत्यत्र कामनावत्त्वमात्रस्यैव निमित्तत्वात् यजेत इत्यत्र लिङ एकत्वमनाकाङ्क्षितं तद्वदत्रापि ब्रह्मवधमात्रस्यैव निमित्तत्वात् तद्विशेषणमेकत्वमनाकाङ्क्षितमित्यविवक्षितमिति भावः। स्वर्गकामो यजेत इतिवदिति पाठे च यथा एकत्वमविवक्षितं तद्वत्रापीत्यर्थः ॥ ४५ ॥

क्षामवत्यादिना इति दैवयोगादनेककालं सायंप्रातर्होमाकरणे दोषसमूहे जाते सति क्षामवतीष्ट्या एकेनैव होमेन सर्वेषां दोषाणां क्षयं मुनिर्यथादिशेत् एवं ब्रह्महापि एकमेव प्रायश्चित्तं चरेदिति परेणान्वयः तत्र हेतुमाह यतो यज्ञविद एवं विदुरित्यन्वयः पुरोडाशहेतुकेनैकेन होमेन एकया क्षामवतीष्ट्या तस्य दोषकदम्बस्यासौ क्षयः स्यात् अत्रासन्देह इत्यर्थः एतेन क्रमकृते ब्रह्मवधे वक्तव्योक्ता युगपत् कृते तु विशेषमाह एककालमिति निमित्तमेकमाश्रित्य

किन्त्वत्र सुरशार्दूल ! विशेषं गदतः शृणु ॥
अकामतो यदा हन्यात् ब्राह्मणान् मानवो गुरु !।
चरेत्तदा वने घोरे यावत् प्राणपरिक्षयम् ॥
कामतश्च यदा हन्याद् ब्राह्मणान् सुरसत्तम !।
तदात्मानं दहेदग्नौ विधिना येन तच्छृणु ॥
भूत्वा निष्कालको वीर ! वेष्टयित्वा च वाससा।
घृताक्तेन महाबाहो ! दत्त्वा सर्वस्वमेव हि ॥
कृत्वा पादौ करीषाग्नौ दहेदात्मानमादरात्।
आ उत्तमाङ्गाद्विधिवदत्वसन् सुरसत्तम !॥

मितौ संग्रामे। करीषः शुष्कगोपुरीषः। अत एवैकजातित्वादनेकब्राह्मणवधेऽनेकदोषक्षयार्थं तन्त्रतानुष्ठाने चामवतीष्टिदृष्टान्तमभिधाय युगपदनेकब्रह्महत्याया विशेषो दर्शितः। हेतिरस्त्रम्। एकेनास्त्रेण एकप्रयत्नजन्यव्यापारवत्त्वस्य विवक्षितत्वादनेकेनास्त्रेणापि युगपद्व्याप्रियमाणेन निमित्तेनैकेन गृहदाहादिना युगपदनेकब्राह्मणवधे कामकृते मरणं सकृदेव किन्तु महाक्लेशसाध्यं तद्विशिष्टैकदुरितापूर्वक्षयजनकम्। दुरितापूर्वञ्चैकमेव एकप्रयत्नजन्यत्वात्। अकामकृते तस्मिन् यावज्जीवमहाव्रताचरणं महाक्लेशसाध्यं विशिष्टैकपापक्षयजनकम्। अतो बहुद्देशाभावान्न तन्त्रता युगप-

---

एकेन गृहदाहादिनिमित्तेन मितौ संग्रामे एकेनास्त्रेण वा युगपन्मिलितान् ब्राह्मणान् एककालं यदा हन्यात् तदा तान् युगपन्निहत्य स्थित एकं प्राणान्तिकं चरेत् अकामकृते वक्ष्यमाणं प्राणावधिकर्त्तव्यं व्रतरूपं प्राणान्तिकं कामकृते तु वक्ष्यमाणमरणरूपं प्राणान्तिकमित्यर्थः। निष्कालकः कृतसर्वाङ्गनखलोम-

दनेकब्राह्मणवधोक्तप्रायश्चित्तभेदस्यास्य एकब्राह्मणवधेऽनुक्तत्वाच्च। क्रमशः कृते तु पापभेदात् समानप्रायश्चित्तत्वात् चामवतीष्टिदृष्टान्तेन तन्त्रतैव। अतः क्रमशः कृते ब्रह्मवधे तन्त्रेण प्रायश्चित्तमिति बहूनां स्वरसः अतएव श्रीरामायणे क्रमकृते रावणकुम्भकर्णादिवधे सेतुबन्धे तन्त्रेण राघवेण लिङ्गप्रतिष्ठा कृता। तथा युधिष्ठिरेणापि भीष्मकर्णद्रोणाद्यनेकगुरुवधे तन्त्रेणाश्वमेधः कृतः॥ ४६॥

एवं सुरापानादिष्वपि जातिमाश्रित्याभिधानात्। विधेः प्राथमिकादिति देवलवचनं यस्मिन् पापविशेषे आवृत्तिविधायकं वचनमस्ति तद्विषयं बोद्धव्यम्। एवमतुल्यरूपेषु पापेषु समानजातीयेषु विजातीयेषु वा गुरुपापोद्देशेन द्वादशवार्षिकादिरूपप्रायश्चित्ते कृते स्वल्पपापानां पशुपुरो-

---

केशवापः। अत इति क्रमकृतेऽनेकब्राह्मणवधे इत्यर्थः। विशेषो दर्शित इति एककालं यदा हन्यादित्यादिनेत्यर्थः। प्रायश्चित्तभेदस्य प्रायश्चित्तविशेषस्येत्यर्थः। श्रीरामायणे श्रूयते इति शेषः॥ ४६॥

एवमिति क्रमकृतेषु सुरापानादिष्वपि तन्त्रता ज्ञातव्या। प्रायश्चित्तस्य चैकत्वं जातिमाश्रित्य लभ्यत इति प्रागुक्तभविष्यपुराणवचने ब्रह्मवधत्वसुरापानत्वादिजातिमाश्रित्यैव बहुष्वेकप्रायश्चित्ताभिधानादित्यर्थः। यस्मिन् पापविशेष इति सवर्णागमने आपस्तम्बोक्तमित्यर्थः। एवमिति न्यूनाङ्गकर्मणः फलनिष्पादकमधिकाङ्गकर्मानुष्ठानं प्रसङ्गः फलोत्पत्तौ तु हेतुः समानदेशकालकर्तृत्वे सति तुल्येतराङ्गत्वं फलं प्रति तावदवच्छेदकस्य कृत्स्नकारणत्वात् पशुपुरोडाशन्यायेनेति पशुयज्ञे आग्नेय यागः पशुयागश्चेति यागद्वयं तत्र पशुयागे प्रयाजाद्यधिकाङ्गपशुपुरोडाशः आग्नेययागे पुरोडाशमात्रं विहितं तत्र यथा पशुयागान्तर्गतेन अधिकाङ्गपुरोडाशेन प्रसङ्गादाग्नेययागान्तर्गतपुरोडाशसिद्धिः तद्वदत्रापि ब्रह्मवधमुद्दिश्य द्वादशवार्षिकप्रायश्चित्ते कृते प्रसङ्गात् षाडवार्षिक-

ङाशन्यायेन प्रसङ्गादेव कार्य्यसिद्धेर्लाघवात् न पृथक् प्रायश्चित्तानुष्ठानम् । अतएवाविज्ञातगर्भवधे पुरुषशङ्कया पुम्बधप्रायश्चित्तमेवोक्तं गुरुणा पुम्बधप्रायश्चित्तेन लघुनः स्त्रीबधपापस्य क्षयसम्भवात् । यथा वशिष्ठः ब्राह्मणं हत्वा भ्रूणहा

---

स्त्रियादिवधप्रायश्चित्तसिद्धिरिति । ननु साङ्गस्यैव काम्यकर्मणः फलजनकत्वं निर्णीतं प्रसङ्गे तु वागभिलापदक्षिणारूपाङ्गद्वयाभावात् कथं फलसिद्धिः नैवम् अधिकसाधनाभिलापेन न्यूनसाधनस्यापि जाताभिलापत्वात् तदन्तर्गतत्वात्तस्येति एवं दक्षिणायामपीति । न च षड्वर्षादिव्रतरूपेणाभिलापो नास्तीति वाच्यं व्रतत्वेनैव कारणत्वात् तद्रूपेण चाभिलापस्य जातत्वात् संख्या तूपरञ्जकमात्रमिति तदभिलापाभावो न किञ्चित् क्षतिकरः । ननु काम्ये कामनावानधिकारीति कामनाया अधिकारिविशेषणत्वात् तदभावे कथं तत् फलसिद्धिः । अत्र केचित् काम्ये कामनाभावादनधिकारिकृतत्वेन फलानुत्पत्तिर्युक्तैव यत्र तु कामनान्तरे कर्मणोऽधिकारि कृतत्वं तत्र फलोत्पत्तौ को विरोध इति तच्चिन्त्यं वस्तुतस्तु प्रायश्चित्तातिरिक्तस्थले कामनाधिकारिविशेषणं प्रायश्चित्तस्थले तु पापमात्रं न तु कामना यथा चाण्डालादिस्पर्शे निमित्तान्तरात् कृते स्नाने कामनाभावेऽपि तत्पापक्षयः अतएव पापस्यमात् तत् क्षयकामनया कृते प्रायश्चित्ते सत्यामपि कामनायामधिकारिविशेषणस्य पापस्याभावादेव न तत्फलसिद्धिः । तथा च मन्वाद्यनेकमुनिवचनेष्वपि पापमात्रमधिकारिविशेषणमवगम्यते यथा मनुः । पापकृन्मुच्यते पापात् तथा दानेन चापदि । तथा श्रीभागवते पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः । हरिरित्यवशो जल्पन् पुमान् नार्हति यातनाम् । सकृदपि परिगीतं श्रद्धया हेलया वा भृगुवरनरमात्रं तारयेत् कृष्णनाम । विष्णुपुराणे हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः । अभक्त्यापि महापापी गङ्गां स्पृष्ट्वा शुचिर्भवेत् । एवञ्च प्रसङ्गस्थलेऽप्यधिकारिविशेषणं पापमस्तीत्यधिकारिकृतत्वेन तत्फलसिद्धिर्दुर्निवारैव । यत्तु संवलिताधिकार इति ग्रन्थकृता प्रागुक्तं तत् यत्र पापक्षयकामना प्रहृत्त्यौपयिकी तत्र साप्यस्तीत्यभिप्रायेणाभिहितम् । यद्येवं तर्हि योगसिद्ध्यधिकरणविरोधस्य का गतिः सत्यम् एकप्रयोगात्तदीयानेकजातीयफलसिद्धौ योगसिद्ध्यधिकरणविरोधोऽङ्गीकृतः परस्परा-

भवति अविज्ञातञ्च गर्भम् अविज्ञाता हि गर्भाः पुमांसो भवन्ति तस्मात् पुंस्कृत्या जुहोतीति ॥ ४७ ॥

अत्र जिकनोक्तं यथा यस्मिन् दिने गृहीतयावज्जीवव्रत-संकल्पस्तस्मिन्नेव दिने म्रियते तथापि शुद्धो भवति। तथा द्वादशवार्षिकव्रतारम्भेऽपि। न त्वसमाप्तत्वादशुद्धिशङ्का कार्य्या द्वादशवार्षिकादिविधिभिरेवास्यार्थस्य स्वहस्तितत्वात्। अन्यथा असमाप्तिशङ्कया प्रवृत्त्यभावे विधिरनर्थकः स्यात्। यथा वृहन्मनुः।

प्रायश्चित्ते व्यवसिते कर्त्ता यदि विपद्यते।
शुद्धस्तदहरेवासाविह लोके परत्र च ॥

धर्मार्थव्रतेष्वेवमेव अङ्गिराः।

यो यदर्थं चरेद्धर्ममप्राप्य म्रियते तु तत्।
स तत् पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत् ॥

अत्र ब्राह्मणवधे संस्कृतवाचिद्विजपदस्य केनाप्यप्रयुक्तत्वात् सर्वैर्मुनिभिर्ब्राह्मणपदस्यैव प्रयोगात् तस्य च जातिवचनत्वात् अनुपनीतब्राह्मणवधेऽपि महापातकं तथा च पठितम्।

---

र्पेक्षितया फलानां पृथक्प्रयोगसाध्यत्वात् प्रसक्ते तु अधिकाङ्गकर्मानुष्ठानात् न्यूनाङ्गफलसिद्धौ को विरोधः तदवच्छेदेन तस्य कृप्तकारणत्वात्। सन्ध्यादौ तु ब्रह्मलोकाद्यानुषङ्गिकफलोत्पत्तौ फलबोधकवचनमेव प्रमाणम् अतएव। नित्यक्रियां तथैवान्ये ह्यनुषङ्गफलां श्रुतिमिति वचनमप्युपपन्नम्। एवञ्च काम-कृतब्रह्मवधे प्राणान्तिकप्रायश्चित्तकृते न द्वादशवार्षिकव्रतापनेयः पापचयः अतुल्य-रूपत्वेन तन्नतायाः अभावात् नापि प्रसङ्गात् अकृप्तकारणभावत्वात् न चाप्य-नुषङ्गात् तादृशवचनाभावात् अतएव चान्द्रायणात् न प्राजापत्यफलसिद्धिरिति सर्वमनवद्यम् ॥ ४७ ॥

जिकनोक्तमिति अत्रायमस्वरसः सङ्कल्पितयावज्जीवव्रतस्य चिरकालमरणवत्

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च॥

यत्र च अज्ञातब्राह्मणीगर्भवधे ब्रह्मवधप्रायश्चित्तमुक्तम्। तत्र जातस्याधिकवयःस्थस्य बधे ब्रह्मवधप्रायश्चित्तं सुतराम्। यथा मनुः।

हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्।

नन्वनुपनीतस्य शूद्रसमत्वमाह मनुः।

शूद्रेण हि समस्तावत् यावद्वेदे न जायते।

तथा शङ्खलिखितौ। अविज्ञातगर्भवधे यथा वर्णमादिशेत् शूद्रवदेवाव्रते सर्वेषामविशेषेणेति। आभ्यामव्रतब्राह्मणबधे शूद्रबधप्रायश्चित्तमुक्तम्। शूद्रसमत्वं वेदव्रताधिकारे वेद-ग्रहणनिषेधार्थं प्रकरणात् गर्भबधे यथा वर्णमादिशेदित्यभि-धाय यदव्रते शूद्रबधप्रायश्चित्ताभिधानं तदव्रतानर्हव्रात्यसङ्कर-जात्यभिप्रायेण। यथा मनुः।

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्।
तान् सावित्रीपरिभ्रष्टान् व्रात्यानित्यभिनिर्दिशेत्॥

ब्राह्मणीबधे त्वर्द्धं प्रायश्चित्तं वक्ष्यते। कृतद्वादशवार्षिकादि-व्रतस्य दक्षिणामाह विष्णुः।

समाप्ते तु व्रते दद्याद्गवामस्मिन् शतं विभो!।
ततोऽप्यर्द्धं तदर्द्धं वा दश वा भैक्ष्यसंभृताः॥

---

तदहर्मरणेऽपि यावज्जीवव्रताचरणस्य निष्पन्नत्वात् शुद्धिर्युक्तैव द्वादशवार्षिक-व्रतान्तर्मरणे तु संख्याया अङ्गत्वात् तदसिद्धौ कथं शुद्धिः तदहन्मनुवचनन्तु गृहीतयावज्जीवव्रतरूपप्रायश्चित्तविषयमेवेति। प्रोक्तार्थे मुनीनां स्वरसमाह

पराशरः।

> पूतश्च प्रविशेद्देश्म धर्मार्थैरुपपाद्य तु।
> द्वारि वस्त्रं पवित्राणि भोजनानि विशेषतः॥
> गवाञ्चैव शतं दद्याच्चातुर्वैद्याय दक्षिणाम्।

तत्र शक्ताशक्तभेदेन दक्षिणा व्यवस्था। यत्तु यमवचनं

> ब्राह्मणक्षत्रियविशां शूद्राणाञ्चरितव्रतः।
> दद्याद् यथानुपूर्वेण यथा शक्त्या च दक्षिणाम्॥
> गोसहस्रं सहस्रार्द्धं शतं वा दश वै तथा।
> वृषभश्चैव दातव्यो वर्णानां प्रवरस्तु यः॥

इदञ्च दक्षिणागौरवं विपुलधनधान्यत्वे बोद्धव्यम्। अत्र संक्षेपः॥ कामतो ब्राह्मणस्य ब्रह्मवधे याज्ञवल्क्योक्तेन प्रकारेण मरणं चतुर्विंशतिवार्षिकं वा। अकामतो द्वादशवार्षिकं व्रतं कर्त्तव्यम्। तदशक्तावशीत्युत्तरपयस्विधेनुशतं देयम्। तदशक्तौ चत्वारिंशत्पुराणोत्तरचूर्णी पञ्चशतमूल्यं हिरण्यादिकं देयं दक्षिणायां गोशतदानाशक्तौ चूर्णीशतमेकं देयम्। पयस्विधेनुमूल्यं पुराणत्रयं गोमूल्यं पुराणमेकम्। एतद्धेनुसंकलने वक्ष्यते। पूर्वोक्तरीत्या बालवृद्धस्त्रीणां प्रायश्चित्तह्रासः करणीयः मरणे तु तन्नास्ति तदर्द्धादिव्यवस्थाया असम्भवादिति। इति प्रायश्चित्तविवेके ब्रह्मवधप्रायश्चित्तम्॥ ४८॥

---

वर्षेति द्विजातय इति तानव्रतान् ब्रह्मचर्य्यरहितान् सावित्रीपरिभ्रष्टान् व्रात्यान् निर्दिशेत् अत्यन्ताशक्तौ भैक्ष्यसम्भृताः भिक्षालब्धा दशगा दद्यादित्यर्थः। स्वधर्मोपार्जितैरर्थैर्वस्त्राणि मेध्यानि च भोज्यान्युपपाद्य वेश्मद्वारि ब्राह्मणेभ्यो दद्यादित्यन्वयः। ब्राह्मणेति चरितव्रतः ब्राह्मणादिजातीनां यथानुपूर्व्येण यथाशक्ति

## अथ सुरापानप्रायश्चित्तम्।

तदर्थं सुरापाननिरूपणं क्रियते। अत्र कः सुराशब्दार्थः किंवा तस्याः पानं कस्य वा तत्पानं महापातकमिति निरूप्यते। तत्र मनुहारीतयमाः।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्।

यथा श्रुतिः। सुरा वै मलमन्नानामनृतं पाप्मा तमः सुरा इति। यद्यप्यन्नशब्दः शूकधान्यतण्डुलविकारविशेष ओदने प्रसिद्धस्तथापि बहुतरवचनात् पिष्टयवाग्वादिविकारमपि लक्षयति। तेनान्नविकारविशेषो मदहेतुः सुरेत्युच्यते। अत्रैके।

गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः॥

इति मनुहारीतवचनात्त्रिविधैव सुरेति। न पनसादिविकारः

---

दक्षिणां दद्यादित्यर्थः। वर्गाणां वृन्दानां प्रवरो यूथः श्रेष्ठ इत्यर्थः देशान्तरप्रसिद्धपुराणैकमूल्यताम्रनिर्मितमुद्राविशेषयूथौ॥ ४८॥

इति श्रीगोविन्दानन्दकविकङ्कणविरचितायां प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्यां ब्रह्मवधप्रायश्चित्तम्।

यद्यपीति शूकधान्यं यवव्रीह्यादि तथा चामरः शाषादयः शमीधान्ये शूकधान्ये यवादय इति यद्यप्यन्नवाचक ओदनशब्दस्तथापि बहुतरवचनाद्दण्डिन्यायात् अजहत् स्वार्थलक्षणया ओदनपिष्टयवाग्वादिसमुदायं तण्डुलविकारं लक्षयतीत्यर्थः। तेनेति अन्नानां तण्डुलविकाराणाम् ओदनपिष्टयवाग्वादीनां विकारविशेषो मदहेतुः सुरेत्यर्थः। विशेषत्वं चिरकालेनाम्लतापत्तिः मदश्चित्तविकारस्तद्धेतुः तेन काञ्जिकादिव्यावृत्तिः एतेन चिरावस्थानेनाम्लतापन्नो मद-

व्यावृत्तस्य त्रितयानुगतस्यैकस्य प्रवृत्तिनिमित्तस्याभावात् । न च महापातकहेतुपानकर्मत्वमुपाधिः । इतरेतराश्रयापत्तेः पुलस्त्यवचनविरोधाच्च यथा ।

पानसं द्राक्षमाधूकं खार्जुरं तालमैक्षवम् ।
माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम् ॥
समानानि विजानीयान्मद्यान्येकादशैव तु ।
द्वादशन्तु सुरामद्यं सर्वेषामधमं स्मृतम् ॥

अनेनैकादशानां सुरात्वं निषेधयति । मद्यशब्दस्तु मदहेतु-द्रवद्रव्यमात्रवचनः अस्मादेव वचनात् । न तु मद्यमात्रं सुराशब्दार्थः । तथा वृहस्पतिः ।

गौड़ीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत् ।
तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात् ॥

त्रयाणां सुरात्वे क्रमेण प्रायश्चित्तत्रयं न स्यात् यथा भविष्ये ।

सुरा तु पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे ।

पैष्टीति तण्डुलविकारमात्रोपलक्षणम् । इतरे गौड़ी-माध्व्यौ अतोऽन्नविकार एव सुराशब्दस्य मुख्यत्वात्त्रिविधा सुरेति गौड़ीमाध्व्योर्गौणसुरात्वज्ञापनार्थम् । तेनैतत्पानेऽपि महापातकत्वमतिदिशति । यथैवैका तथा सर्वेति पैष्ट्यां

हेतुस्तण्डुलविकाराणां विकारः सुरेति निर्गलितार्थः न चेति पानकर्मत्वं पान-क्रियाव्याप्यत्वमित्यर्थः । उपाधिरितरव्यावर्त्तकधर्मः सुराज्ञानाधीनं महापातक-ज्ञानं तज्ज्ञानाधीनञ्च सुराज्ञानम् इतीतरेतराश्रय इत्यर्थः । माधूकं मधूक-फलोद्भवम् । ऐक्षवं गुड़सम्भवम् । माध्वीकं मधुविकारोद्भवम् । टाङ्कादि-त्रयं देशविशेषप्रसिद्धफलविशेषजन्यमिति साम्प्रदायिकाः । वृहस्पतिरिति वचन-

पूर्वप्रसिद्धिं दर्शयति यथा पैष्टी सुरा तथा सर्वा गौड़ी च माध्वी चेति पूर्ववचनोक्ता तु पैष्टी दृष्टान्तत्वेनात्र दर्शिता। न पातव्या द्विजोत्तमैर्ब्राह्मणैरित्यर्थः। त्रैवर्णिकपरत्वे उत्तमपदानर्थक्यात् न च बहुवचनानर्थक्यपरिहारार्थं उत्तमप्रातिपदिकानर्थक्यं युक्तं बहुवचनस्य सजातीयानेकत्वे चरितार्थत्वात्। अतो ब्राह्मणस्यैव त्रिविधैव सुरा महापातकहेतुः। क्षत्रियवैश्ययोस्तु सुरा वै मलमन्नानामिति वचनेन पैष्ट्येवेति स्थितम्। गोविन्दराजविश्वरूपधारेश्वराणामयमनुमतोऽर्थः॥ ४९॥

अतएव, एका माध्वी च पैष्टी च गौड़ी च त्रिविधा सुरा।
द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचित्॥

इति यमवचनेऽपि। द्विजातिपदं ब्राह्मणपरमेव अतएव त्रिविधसुरापाने क्षत्रियादीनां महापातकं तावदस्तु दोषाभावमेवाह। वृद्धयाज्ञवल्क्यः।

कामादपि हि राजन्यो वैश्यो वापि कथञ्चन।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते॥

---

मिदं रोगिणो रोगापनयनार्थं ज्ञातसुरापानविषयमिति वक्ष्यते। पैष्टीति पैष्टीत्यत्र पिष्टपदं तण्डुलविकारमात्रस्य पिष्टौदनयवाग्वादिरूपलक्षणमित्यर्थः। पूर्ववचनेति सुरा वै मलमन्नानामिति पूर्ववचनोक्तेत्यर्थः। न चेति अत्र केचित् बहुवचनस्य ब्राह्मणव्यक्त्यपेक्षया चरितार्थत्वादिति हेतुमाहुः वस्तुतस्तु संख्यायाः प्रकृत्यर्थविशेषणत्वाद्विशेष्यस्य प्रकृत्यर्थस्य तदर्थसामर्थ्यायोगात् किञ्च उभयथैव बहुवचनानर्थक्यं द्विजपदात् त्रैवर्णिकप्रतीतेः अत्र आवश्यकत्वात् तस्यैवानर्थक्यं युक्तं न तु प्रातिपदिकार्थस्येति॥ ४९॥

एकेति माध्व्यादित्रिविधा सुरा एका तुल्येत्यर्थः अतएवेति महापातक-

तदेवं पैष्टीनिषेधस्त्रैवर्णिकानाम्। गौड़ीमाध्वीनिषेधस्तु ब्राह्मणानामेव। ननु ब्राह्मणराजन्याविति कर्त्तृविशेषणं लिङ्गमविवक्षितम् अतः कथं ब्राह्मण्याः सुरापानं महापातकम् ॥ ५० ॥

उच्यते निषिध्यमानक्रियाया अविधेयत्वेन तत्कर्त्तुरनुपादेयत्वात् तद्विशेषणं लिङ्गमविवक्षितं हविरुभयत्ववत्। अतस्तज्जातिस्त्रीणामपि सुरापाननिषेधः। तथा भविष्ये

तस्मान्न पेयं विप्रेण सुरामद्यं कथञ्चन।
ब्राह्मण्यापि न पेया वै सुरा पापभयावहा॥

या ब्राह्मणी सुरापी स्यान्न तां देवाः पतिलोकं नयन्तीति श्रुतिश्च

पतत्यर्द्धशरीरेण भार्य्या यस्य सुरां पिबेत्।
पतितार्द्धशरीरस्य निष्कृतिर्नोपपद्यते॥ ५१ ॥

न चैवं क्षत्रियवैश्यस्त्रीणामनिषेधः। ब्राह्मणीपदस्य निषिद्धसुरापानकर्त्तुर्भार्य्योपलक्षणत्वात्। भार्य्या यस्य सुरां पिबेत्

---

तावदस्तु दूरत इति शेषः। नन्विति सुरापानाभावविषयके कार्य्ये ब्राह्मणादीनां कर्त्तृत्वात् तद्विशेषणं पुंस्त्वं विवक्षितमित्यर्थः॥ ५० ॥

उच्यते इति निषिध्यमानक्रिया सुरापानं तदनुवादेन निषेध एव गीयते अतः पानक्रियाया अनुवाद्यत्वात् तत्कर्त्तुरनुपादेयत्वात् तद्विशेषणं पुंस्त्वमविवक्षितम्। अयं भावः अत्र निषेधविधौ पानक्रियाविषयः ब्राह्मणत्वादिजातिनिमित्तं तदुपहितस्य ब्राह्मणादेः कर्त्तुर्विशेषणं पुंस्त्वम् उपलक्षणमात्रमित्यविवक्षितम् अन्यथा निमित्तसङ्कोचापत्तेरिति हविरुभयत्ववदिति प्रागेव ब्रह्मवधप्रकरणे व्याख्यातं पतत्यर्द्धेति वचनं भविष्यपुराणीयम्॥ ५१ ॥

न चैवमिति भविष्यवचने श्रुतौ च ब्राह्मणीपदोपादानादित्यर्थः। निषिद्धेति निषिद्धं सुरापानं यस्य तादृशस्य तत्कर्त्तुर्भार्य्योपलक्षकत्वादित्यर्थः। उप-

इति सामान्यश्रवणाच्च। पानञ्च द्रवीभूतस्याभ्यवहारः स च कण्ठदेशादधोनयनं न तु वक्त्रमात्रप्रवेशः। निष्ठीवनाद्यर्थं कपोलधारणे पानशब्दाप्रयोगात्। यच्चोक्तं

जिघ्रन्न हि सुरां कश्चित् पिबतीत्यभिधीयते।
यावन्न क्रियते वक्त्रे गण्डूषस्य प्रवेशनम्॥

अत्र गण्डूषपरिमाणमविवक्षितं गण्डूषार्द्धपानेऽपि लोके पानशब्दप्रयोगात्। अतएव मुखप्रवेशनमप्यविवक्षितमत्र किन्तु मुखप्रवेशे कण्ठादधोनयनं भवतीति अतस्तदेवोपलक्षयति अतएवौष्ठमात्रे लेपे न पाननिष्पत्तिः। अतस्तत्रोत्तमाङ्गस्पर्शप्रायश्चित्तम्। एतेन केवलौष्ठसंयोगे तप्तकृच्छ्रं पुनः संस्काराविति बालकस्य व्याख्यानमसङ्गतं पानानिष्पत्तेरिति॥ ५२॥

अथ प्रायश्चित्तम्। तत्र मनुः।

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्।

---

लक्षणत्वे प्रमाणन्तु निषिध्यमानेत्यादिना प्रागुक्तं ब्राह्मणराजन्याविति मनुवचने पुंलिङ्गमविवक्षितमेव अतएव भविष्ये भार्य्या यस्येति सामान्योपदेशात् हेतुत्वेनोपन्यस्तः मनुवचने वा जातिमात्रस्यैव निषेधविषयत्वात् तथाच। सुरापाननिषेधोऽयं जात्याश्रय इति स्थितिरिति कुमारवचनं वक्ष्यते। न च स्मृतिविरोधे श्रुतेर्बलवत्त्वात् उक्तश्रुतौ ब्राह्मणीपदस्य इतरजातिस्त्रीव्यावर्त्तकत्वमस्तीति वाच्यं श्रुतेरुक्तोपलक्षकतयैव उपपत्तौ दोषत्रयदुष्टायां परिसंख्यायां प्रमाणाभावात्। यावदिति वक्त्रे प्रवेशनं पानमित्यर्थः अतएवेति अतएव कण्ठादधोनयन एव पानशब्दप्रयोगादित्यर्थः। पानानिष्पत्तेरिति अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति। तप्तकृच्छ्रान्वितेनेह केवलेन न शुध्यतीति भविष्यवचने पीत्वेत्युपदेशादित्यर्थः॥ ५२॥

इदानीं प्रायश्चित्तं निरूपयति अथेति सुरां पीत्वेति तया सुरया स द्विजः

तया सकायैर्निर्दग्धो मुच्यते किल्बिषात्ततः॥
गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा।
पयोघृतं वा मरणाद्गोशकृद्रसमेव वा॥

अग्निवर्णामग्निसंस्पर्शाम्। पयो घृतं गोरिव आदावन्ते च गोः कीर्त्तनात्। मोहशब्दोऽत्र बुद्धिपर इति जिकनः। याज्ञवल्क्यः,

सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम्।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति॥

देवलः। सुरापाने ब्राह्मणो रूप्यताम्रसीसानामन्यतममग्निकल्पं पीत्वा शरीरत्यागात् पूयते। रूप्यादयोऽत्र द्रवीभूताः पीत्वेति दर्शनात् स्वयमशक्तावन्यैरपि मुखे सेचनीया। यथा गोतमः। सुरापस्य ब्राह्मणस्य उष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येत। अतएव न सेचकानां बधोविहितत्वात् स्वयं पाने इव। एतच्च मरणप्रायश्चित्तं कामकृते। यथा बृहस्पतिः।

सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत्।
मुखे स हि विनिर्दग्धो मृतः शुद्धिमवाप्नुयात्॥

यथा शातातपः।

ब्राह्मणश्चेत् सुरापः स्यात् कथञ्चित्काममोहितः।
अग्निवर्णां सुरां पीत्वा मृतः शुद्धिमवाप्नुयात्॥

कथञ्चिदिति सकृदित्यर्थः। तथा च अङ्गिराः।

---

ततः सुरापानजन्यात् किल्बिषादित्यर्थः। मोहशब्दोऽत्रेति मोहशब्दस्य ज्ञानार्थत्वमदृष्टाश्रुतमित्युपेक्षितं वस्तुतस्तु अधर्मज्ञाने सत्यकर्त्तव्ये रागात् कर्त्तव्यभ्रमो

सुरापानं सकृत् कृत्वा योऽग्निवर्णां सुरां पिबेत्।
स पावयेदथात्मानमिह लोके परत्र च॥

भविष्ये, मतिपूर्वे सुरापाने प्राणान्तिकमुदाहृतम्।

पैष्टीपाने तु ऋषिभिर्नेतरासां कथञ्चन॥
शङ्खेनापि महावाहो! प्रायश्चित्तमुदाहृतम्।
सुरायाः कामतः पाने मुख्यायाः प्राणनाशनम्॥

पुनः पुनः पैष्टीविषयत्वाभिधानं त्रिविधा सुरा मुख्येति भ्रमनिरासार्थं कथञ्चन सकृदित्यर्थः। इतरासामसुराणां गौड़ीमाध्वीप्रभृतीनां ज्ञानतः सकृत्पाने मरणान्तिकं न भवति। गौड़ी माध्व्योस्तु ज्ञानतोऽभ्यस्तपाने गौड़ी माध्वीव्यतिरिक्तायास्त्वसुराया अत्यन्ताभ्यस्तपाने मरणान्तिकमुक्तम्। भविष्ये

गौड़ीमाध्व्योस्तथाभ्यासे प्राणान्तिकमुदाहृतम्।
अभ्यासे त्वसुरायास्तु तामेवाग्निनिभां पिबेत्॥

तथेति ज्ञानत इत्यर्थः॥ ५३॥

---

मोह इति प्रागुक्त एव न तु सुहवैचित्त इति पाल्यर्थानुसारादज्ञान परः मतिपूर्वे सुरापाने प्राणान्तिकमुदाहृतमिति वक्ष्यमाण मनुवचनात्। सुरापानं कृत्वेति इहलोके लोकप्रशंसा पुत्रादिभिः श्राद्धादिदानञ्चात्मनः पावनं परलोके तु नरकाभाव इत्यर्थः। भविष्य इति प्रागुक्त एव मतिपूर्वसुरापाने ऋषिभिर्यत् प्राणान्तिकप्रायश्चित्तमुक्तं तत्पैष्टीपान एव न तु गौड़ीमाध्व्यादीनां सकृत्पान इत्यर्थः। अत्र प्रमाणमाह शङ्खेनापीति मुख्यायाः पैष्ट्या इत्यर्थः। अभ्यासे त्वसुराया इति अत्रासुरापदं विविधसुरेतरपरम् अभ्यासपदम् अत्यन्ताभ्यासपरं पुनः पृथगुपादानात्। नन्वत्र द्रवद्रव्यस्य कण्ठादधोनयनं पानमिति प्रागुक्तं ततश्च द्रवद्रव्यस्यावयवावयविवृत्तिजातित्वात् किन्त्वाद्यवयवेऽपि सुरात्वादेकप्रयोग एवानेकसुरापानप्रसङ्गम्। नैवं पाकादौ एकोपक्रमाणां व्यापारनिचया-

अतएव, असकृत् ज्ञानतः पीत्वा वारुणीं पतति द्विजः।
मरणं तस्य निर्दिष्टं प्रायश्चित्तं विधीयते॥

इति यमवचनमप्येतद्विषयमेव। अत्राभ्यासे मरणविधानात्। द्वितीयवार एव मरणं कार्य्यं गौड़ीमाध्व्योः सकृत्कामतः पाने भविष्ये उक्तम्।

असुरा मद्यपाने तु कृते विप्रस्तु कामतः।
चान्द्रायणं समभ्यस्येच्छुद्धिकामः स्वशुद्धये॥
यद्वास्मिन्नेव विषये मानवीयं प्रकल्पयेत्।
कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि॥
सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी।

पिण्याकं खलिम्। एतत्तप्तसुरापानमायसेन पात्रेण इत्याह यमः।

आयसे भाजने तप्तां ब्राह्मणो वारुणीं पिबेत्॥ ५४॥

गोबालचीरवाससा तत्कर्त्तव्यमित्याह। उशनाः। गोवालचीरवासाः सुरापः सुरामग्निवर्णां पीत्वा पूतो भवति। अज्ञानतः सकृत् पैष्टीपाने ब्राह्मणस्य द्वादशवार्षिकं यथा ब्रह्महत्याव्रतानुवृत्तौ। यमः।

---

नामैकपर्य्यायतिधात्वर्थनिश्चयात् पानस्य तथात्वे पृथगुपक्रम एवाभ्यासो न त्वेकोपक्रम इति एवञ्च पैष्ट्याः सकृत् पानेऽनेकमहापातकभ्रमोऽपि निरस्तः॥ ५३॥

असकृत् इति अत्र वारुणीपदं गौड़ीमाध्वीपरं पूर्ववचनैकवाक्यत्वात्। चान्द्रायणं समभ्यस्येदिति चान्द्रायणद्वयं कुर्य्यादित्यर्थः। अत्रासुराशब्दो गौड़ीमाध्व्योः परः न तु पानसादिमद्यपरः तत्र पराशरवचने चान्द्रायणैकस्य वक्ष्यमाणत्वात्। यद्वेति मानवीयं मनुप्रोक्तम् एतेन चान्द्रायणद्वयवार्षिककणभक्षणयोस्तुल्यत्वमुक्तम्। सुराप इति एनां सुराम् असंस्पृश्याम् अत्यन्तोष्णामित्यर्थः॥ ५४॥

चरेतामेतदेवोभौ सुरापगुरुतल्पगौ।
सगोत्राद्दूषकश्चैव सुवर्णस्तेयकृन्नरः॥

शङ्खलिखितौ। सुरापोऽग्निवर्णामिनामसंस्पृश्यामुदकं गोमूत्रक्षुद्रसं घृतं वा पिबेत्। स तेन निर्दग्धकायः शरीरत्यागेन शुद्धिमाप्नोति। अथ वा बालचीरवासाः सुरापः खट्वाङ्गी गुरुतल्पगः ब्रह्महत्याव्रतमेव चरेतां तावतैव कालेन शुद्धिमाप्नुतः। तावता कालेन द्वादशवत्सरैरित्यर्थः। अत्र जिकनोक्तम्। अथ वा शब्दकरणात् द्वादशवार्षिकमत्र कामनाविषयम्। अतो मरणद्वादशवार्षिकयोरत्र तुल्यत्वमेव। तन्न। पूर्वलिखितव्यासवचने मरणचतुर्विंशतिवत्सरयोरेव तुल्यत्वात्। अथ चेत्यज्ञानविषयं व्यवस्थितविकल्पार्थं तथा च शङ्खः।

अधःशायी जटाधारी पर्णमूलफलाशनः।
एककालं समश्नानो वर्षे तु द्वादशे गते॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे॥

यच्चापस्तम्बेनोक्तमत्रोदाहरति। स्तेयं कृत्वा सुरां पीत्वा गुरुदारान् गत्वा ब्रह्महत्याञ्च कृत्वा चतुर्थकालमितभोजनाः स्युरपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरन्त एते

---

गोबालचीरवासा गोलोमयुक्ताजिनवासा इत्यर्थः। खट्वाङ्गं त्रिशूलम्। यच्चेति अत्र वक्ष्यमाणमुदाहरन्ति मुनय इति शेषः। चतुर्थकालेति दिवा चैकं रात्रौ चापरमित्यहोरात्रभोजनद्वयम्। ततश्चैकोपवासं कृत्वा परदिने रात्रौ भोजनं चतुर्थकालभोजनमित्यर्थः। सवनानुकल्पं प्रतिसवनं त्रिसवनमित्यर्थः अपोऽभ्युपेयुः स्नानं कुर्य्युः स्थानेन दण्डायमानं स्थित्वा आसनेन उप-

त्रिभिर्वर्षैरथ पापं नुदन्त इति। तत्त्रैवार्षिकमप्येतत् चतुर्थकालाहारत्वाच्चतुर्वार्षिकप्राजापत्यसमं सगुणब्राह्मणविषयञ्च। सुवर्णस्तेये श्रीमहादेवपादैस्तथा व्यवस्थितत्वात्। यच्च मनुवचनं,

कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि।
सुरापानापनुत्त्यर्थं बालवासा जटी ध्वजी॥

तदकामतोऽभ्यस्तगौडीमाध्वीपानविषयं कामतः सकृद्गौडीमाध्वीपानविषयं वा इति प्रागेव व्याख्यातम्। यच्च भविष्यपुराणवचनम्।

अकामतः सुरां पीत्वा पैष्टीं मत्कुलनन्दन!।
कृच्छ्रातिकृच्छ्रौ कृत्वा वै पुनः संस्कारतः शुचिः॥
कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि।
सुरापानापनुत्त्यर्थं बालवासा जटी ध्वजी॥

तज्जलादिमिश्रितसुरापानविषयमिति कश्चित्। तदसङ्गतं यतः सुरापानमात्रापनेयरोगस्य रोगिणोऽज्ञानतः पानविषयमिदमुक्तं भविष्ये यथा।

---

वेशनेन वा विहरन्तो दिनान्तं गमयन्त इत्यर्थः। चतुर्थकालाहारत्वादिति चतुर्थकालभोजने एकान्तरोपवासात् मासे पञ्चदशोपवासाः परदिने च रात्रिभोजनात् पञ्चोपवासाः मिलित्वा च मासे विंशतिरुपवासाः एवं वत्सरे चत्वारिंशदधिकशतद्वयम् एवं वत्सरत्रये विंशत्यधिकसप्तशतोपवासाः भवन्ति प्राजापत्ये चोपवाससंकलनया षडुपवासाः ततश्च विंशत्यधिकसप्तशतोपवासैर्विंशत्यधिकशतप्राजापत्यानि भवन्ति तानि च प्राजापत्यानि द्वादशाब्दसाध्यत्वात् चतुर्भिर्वत्सरैरेव सिध्यन्तीति तत्समत्वमित्यर्थः। एतच्चाज्ञानविषयं मन्तव्यम्। ननु कथमेतत् सगुणब्राह्मणवधविषयमिति निर्णीतमित्याह सुवर्णस्तेन इति भविष्यपुराण इति शेषः। यच्चेति अभ्यासोऽत्रात्यन्ताभ्यासः। गौडीम्

तथास्मिन्नेव विषये वशिष्ठं परिकीर्त्तितम्।
यदि रोगैर्भवेद् दुष्टो नेतरस्य कदाचन॥
कृच्छ्रं चात्र नरश्रेष्ठ! तप्तकृच्छ्र उदाहृतः।

कृच्छ्रातिकृच्छ्रावित्यत्र कृच्छ्रपदं न प्राजापत्यपरम्॥

किन्तु तप्तकृच्छ्रपरम्। अज्ञानतो गौड़ीमाध्व्योः सकृत्पाने उक्तं भविष्ये।

सकृत् पीत्वा तथा गौड़ीमज्ञानात् सुरसत्तम!।
कृच्छ्रातिकृच्छ्रौ विहितौ घृतप्राशनमेव च॥

अज्ञानाभ्यासे तत्रैवोक्तम्।

गौड़ीमज्ञानतः पीत्वा ब्राह्मणो ब्राह्मणप्रिय!।

---

अज्ञानतः पीत्वा इत्यनेनाज्ञानाभ्यासेन इतोऽल्पप्रायश्चित्तस्य वक्ष्यमाणत्वात् एतेन गौड़ीमाध्व्योरकामतोऽत्यन्ताभ्यासपानं कामतः सकृत्पानतुल्यमित्युक्तं मत्कुलनन्दनेति कार्त्तिकेयं प्रति महादेवसम्बोधनं कृच्छ्रातिकृच्छ्राविति कृच्छ्रोऽत्र तप्तकृच्छ्र इति वक्ष्यते। यत इति सुरापानमात्रेण न त्वौषधान्तरेणापनेयो रोगो यस्येत्यर्थः। इदं प्रागुक्तवचनम्। तथेति अस्मिन् उक्तप्रायश्चित्तविषये वशिष्ठपुत्रेणोक्तं रोगिण एवैतदितरस्य रोगिणो नैतदित्यर्थः। कृच्छ्रश्चात्रेति तप्तकृच्छ्रे धेनुचतुष्टयम् अतिकृच्छ्रेऽपि धेनुत्रयं पुनः संस्कारे च धेनुचतुष्टयं मिलित्वा एकादशधेनवः कणान्वेत्यत्र तु प्रागुक्तचान्द्रायणद्वयतुल्यतया पञ्चदशधेनवः अतो विषमशिष्टयोर्द्वयोरिच्छाविकल्पासम्भवात् सगुणनिर्गुणतया व्यवस्थितो विकल्प इति। ध्येयम् एतेन तक्रादिमिश्रितसुरापाने गन्धरसानुपलब्धौ अज्ञानतः सुरापानप्रायश्चित्तं गन्धवासोपलब्धेऽपि पाने ज्ञानोक्तमेव प्रायश्चित्तम् इति ग्रन्थकृता निरपेक्षमेवोक्तमित्यपि ध्येयम्। सकृत् पीत्वेति कृच्छ्रे धेनुरेका अतिकृच्छ्रे धेनुत्रयं मिलित्वा चतस्रः। गौड़ीमज्ञानत इत्यत्र गौड़ीपदं माध्वीमप्युपलक्षयति तुल्यत्वात् तप्तकृच्छ्रे धेनुचतुष्टयं संस्कारेऽपि धेनुचतुष्टयं मिलित्वा अष्टौ धेनवः॰ अतः प्रागुक्तसकृत्पानद्वैगुण्यादभ्यासविषयमिदं वचनमित्युक्तम्।

तप्तकृच्छ्रन्तु वै कृत्वा पुनः संस्कारतः शुचिः।
माध्वीं पीत्वा महाबाहोऽज्ञानाद्द्विजसत्तमः॥
शुद्ध्येत तप्तकृच्छ्रेण विकर्माभ्यसनात्तथा।
रेतोमूत्रपुरीषाणां गौड़ीमाध्वयोश्च प्राशने॥
क्रव्यादपक्षिविष्ठानां संस्काराच्छुद्धिरिष्यते॥ ५५॥

एतेन यदाह मनुः

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति।
मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः॥

मतिपूर्वं सुरां पीत्वा पूर्वोक्तप्रायश्चित्तमनिर्देश्यं किन्तु प्राणान्तिकमित्यर्थः। यमः

अज्ञानाद्वारुणीं पीत्वा प्राश्य मूत्रपुरीषयोः।
पुनःसंस्कारमर्हन्ति त्रयोवर्णा द्विजातयः॥

मूत्रपुरीषयोर्मध्ये एकं प्राश्येत्यर्थः। वारुणीपदं सुरापरम् उत्तरार्द्धे मरणनिर्देशात् तद्रोगिविषयं पूर्वोक्तमेव एतदुपनयनं तप्तकृच्छ्रपूर्वं ग्राह्यं यथैतन्मनुवचनमनुद्याभिहितं भविष्ये,

---

गौड़ीमाध्वीरकामतः सकृत्पाने कृच्छ्रातिकृच्छ्रौ प्रागुक्तौ अत्रैव पुनस्तुल्यप्रायश्चित्तान्तरद्वयं वचनद्वयेनाह माध्वीं पीत्वेति तप्तकृच्छ्रं वा संस्कारो वेत्यर्थः। उभयत्र धेनुचतुष्टयतुल्यं किं कर्मणां लशुनादिभक्षणनिन्दितकर्मणाम् अभ्यासादित्युक्तत्वात् अन्यत्र सकृद्विषयं वचनमिदम्। रेतोमूत्रपुरीषाणामिति अज्ञानविषयमिदमज्ञानाधिकारात्॥ ५५॥

एतेनेति यदाह तद्रोगिविषयं पूर्वोक्तमित्यनेनान्वयः। उत्तरार्द्धमिदं रोगिव्यतिरिक्तविषयं पूर्वार्द्धन्तु रोगिविषयं युक्तमेव वारुणीपदमिति मनुवचने त्रिविधसुरापरं विप्रविषयञ्च वारुणीपदं यमवचने पैष्टीपदं सुरामात्रपरं वचो

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति।
तप्तकृच्छ्रान्वितेनेह केवलेन न शुध्यति॥

एतेन संस्कारमात्रमिदमनुपनीतविषयञ्च मनुवचनमिति व्याख्यानं निरस्तं यमवचने पुनः शब्दोपादानाच्च॥ ५६॥

चान्द्रायणाद्यन्वितं तत् कार्य्यं सुराभेदेन।

यथा वृहस्पतिः

गौड़ीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्।
तप्तकृच्छ्रं पराकं वा चान्द्रायणमनुक्रमात्॥

सुरां पीत्वा द्विज इति मनुवचने द्विजपदश्रुतेः। क्षत्रिय-वैश्ययोरपि कामतः पैष्टीपाने मरणान्तिकमेव प्रायश्चित्तम्। एतेन देवलादिषु ब्राह्मणपदं द्विजातिपरमेव। क्षत्रिय-वैश्ययोः पृथक् प्रायश्चित्तानभिधानात्। प्राणान्तिके च पाद-ह्रानेरसम्भवात् तयोरपि यथोक्तं मरणमेव द्वादशवार्षिकादौ पादपादह्रानिः। अभक्ष्यभक्षणे क्षत्रियादीनां ह्रासदर्शनात्। तथा पराशरः।

---

वर्णा इत्युपसंहारादित्यर्थः। ननु रोगिणोऽज्ञानात् पैष्टीपाने तप्तकृच्छ्रातिकृच्छ्र-पूर्वकसंस्कारः पूर्वमुक्तः अत्र तु संस्कारमात्रमित्याशङ्क्याह एतदिति अतएव यम-वचने प्राश्य मूत्रपुरीषयोरित्यभ्यासविषयं मन्तव्यं प्रायश्चित्तगौरवात्॥ ५६॥

ननु तथापि पूर्वमतिकृच्छ्रोऽधिक उक्त इति विरोधमाशङ्क्याह चान्द्रायणा-द्यन्वितम् इति सुराभेदात् प्रायश्चित्तभेद इत्यर्थः तेन रोगिब्राह्मणस्य अज्ञानात् गौड़ीपाने तप्तकृच्छ्रपूर्वकः संस्कारः माध्वीपाने पराकपूर्वकः पैष्टीपाने चान्द्रा-यणपूर्वक इति एतेन तप्तकृच्छ्रातिकृच्छ्रयोश्चान्द्रायणस्य च तुल्यत्वात् न प्रागुक्त-विरोध इत्यर्थः। अतएव भविष्यवचने तप्तकृच्छ्रेण तप्तकृच्छ्रातिकृच्छ्रान्विते-नेत्यर्थः सम्पन्नः एवं वृहस्पतिवचनेऽपि पुनः संस्कार उन्नेयः। ननु देवलादि-

तड़ागस्यैव दुष्टस्य पीतं स्यादुदकं यदि।
प्रायश्चित्तं भवेत् पुंसः क्रमेणैतेन सर्वशः॥
विप्रः शुध्येत् त्रिरात्रेण क्षत्रियस्तु दिनद्वयात्।
एकाहेनैव वैश्यस्तु शूद्रो नक्तेन शुध्यति॥

दुष्टस्य नरमांसादिना तथा च विष्णुः। मृतपञ्च नखात् कूपात् तथा अत्यन्तोपहताद्वा उदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेत्। द्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तम्। सर्वे चान्ते व्रतस्य पञ्चगव्यं पिबेयुः। विष्णुवचनञ्चात्र दृश्यते।

विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यते॥

एतत् संहितायामदृष्टत्वात् पूर्वोक्तवचनद्वय मूलमेव लिखितं इति जिकनः।

परिषद्या ब्राह्मणानां राज्ञां सा द्विगुणा स्मृता।

इति देवलवचनं ब्रह्मबध एव द्वैगुण्यादिकं बोधयति॥ ५७॥

---

वचने ब्राह्मणपदात् सामान्यविशेषन्यायात् सुरां पीत्वा द्विज इति मनुवचने द्विजपदं ब्राह्मणपरमस्त्वित्याशङ्क्याह क्षत्रियवैश्ययोरिति दुर्बलदेवलस्मृत्यनुरोधात् बलवत्त्वान्मनुस्मृतेः सङ्कोचस्यान्याय्यत्वाच्च ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति मनुवचनात् तुल्यमेव त्रैवर्णिकस्य निषेधोक्तेर्महापातकमुद्दिश्य तत्रैव तुल्यमेव प्रायश्चित्तोपदेशाच्च। तर्हि विप्रे तु सकलं देयमित्यादिना विष्णूक्तपादह्रानिविरोध इत्यत आह प्राणान्तिके चेति व्रतविषयमेव विष्णुवचनमित्यर्थः। न च मरणवैकल्पिकचतुर्विंशतिवार्षिकव्रते पादपादह्रानिरस्त्विति वाच्यं मरणप्रायश्चित्ताधिकारिण एव चतुर्विंशतिवार्षिकव्रतेऽधिकारात् मरणे च भागह्राराभावात्तदनुकल्पे कथं भागह्रार इति। ब्रह्मवधे इत्युपलक्षणम् उत्कृष्टजातिवधे इत्यर्थः तेन क्षत्रियादिवधेऽधमस्य द्वैगुण्यादिकं वक्ष्यते॥ ५७॥

औपचारिकपितृत्वादिना तद्वधे प्रायश्चित्तातिरिक्तस्य युक्तत्वात्। राजन्यादीनान्तु गौडीमाध्वीप्रभृतिसकल-मद्यपाने न दोष इत्याह वृहन्मनुः

कामतोऽपि हि राजन्यो वैश्यो वापि समाहितः।
मद्यं पीत्वा सुरासञ्ज्ञं न किञ्चिद्दोषमर्हति॥

पानसादिमद्यपाने तु कामनाकृते अनेकसमयाभ्यस्ते प्राणान्तिकमुक्तमेव ब्राह्मणस्य कामनया सकृत्कृते पराशरः।

अगम्यागमने चैव मद्यगोमांसभक्षणे।
शुद्धेर चान्द्रायणं कुर्य्यान्नदीं गत्वा समुद्रगाम्॥
चान्द्रायणे ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्॥

अकामतः सकृत्पाने। विष्णुः

पीत्वा प्रमादतो मद्यमतिकृच्छ्रं चरेद्द्विजः।
कारयेत् पुनः संस्कारं भक्त्या विप्रांश्च भोजयेत्॥

---

औपचारिक इति ब्राह्मणं दशवर्षञ्च शतवर्षञ्च भूमिपम्। पितापुत्रौ विजानीयात् ब्राह्मणस्तु तयोः पिता इति मनुवचनात् पितृत्वमौपचारिकमित्यर्थः। आदिशब्दात् गुरुत्वादिना। विष्णुपुराणम्। वर्णानां ब्राह्मणो गुरुः। मनुः सर्वस्यैव हि वर्णस्य धर्मतो ब्राह्मणः प्रभुः। मद्यं पीत्वा सुरासंज्ञमित्यत्राकारप्रश्लेषो मन्तव्यः। तथा मद्यमसुरां पीत्वा न दोषं प्रतिपद्यते इति प्रागुक्तं वृहद्याज्ञवल्क्यवचनम्। पराशर इति चान्द्रायणान्ते भूयः संस्कारोऽत्र ज्ञेयः। मत्तानां मद्यानां बाहुल्यतरस्य प्राशने चान्द्रायणमित्यभिधाय सर्वेष्वेषु प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यादिति वक्ष्यमाणविष्णुवचनात्। पीत्वा प्रमादत इति मद्यं पानसादि द्विजो विप्रः अतिकृच्छ्रं धेनुत्रयम्। निर्गुणविषयेत्वाह कारयेदिति संस्कारे धेनुचतुष्टयं न चैतत् समुदितमिति वाच्यं पानसा-

कामतोऽकामतश्चाभ्यासे व्रतावृत्तिमाह यमः,

गोघ्नवद्विहितः कल्पश्चान्द्रायणमथापि वा।
अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात्॥

अपर्य्युषितपानसाद्येकादशविधमद्यपाने त्रिरात्रं पानसं द्राक्षमाधूकमित्याद्यभिधायाह पुलस्त्यः

द्राक्षे क्षुटाङ्कखर्जूरपनसादेश्च यो रसः।
सद्योजातन्तु तं पीत्वा त्र्यहाच्छुध्येद्द्विजोत्तमः॥

अज्ञानतः सुरासंसृष्टद्रव्यभक्षणे तु पुनरुपनयनमाह मनुः॥ ५८॥

अज्ञानात् प्राश्य विण्मूत्रं सुरासंसृष्टमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥

तथा, वपनं मेखलादण्डो भैक्ष्यचर्य्या व्रतानि च।
निवर्त्तन्ते द्विजातीनां पुनः संस्कारकर्मणि॥

एतदतीव सुरासम्पर्कविषयम्। अत्रानुपनीतब्राह्मणकुमारानूढ़ब्राह्मणकुमारिकयोः सुरापाने दोषाभावः। सुरां पीत्वा द्विजो मोहादित्यादि प्रायश्चित्ते द्विजग्रहणादिति कल्पतरुस्तन्न तस्माद् ब्राह्मण राजन्यौ इति मनुवचनात्।

---

दिती गर्हितयोर्गौड़ीमाध्व्योरकामतः सकृत्पाने संस्कारमात्रस्य प्रागुक्तत्वात् अत्र तदधिकप्रायश्चित्तस्यायुक्तत्वात् कामत इति यद्यपि पानप्रकरणोक्तं गोघ्नवदिति वचनं प्रागुक्तवचनैकवाक्यतया कामविषयमेव तथापि कामाभ्यासे प्रायश्चित्तावृत्तिकथनात् अकामाभ्यासेऽपि तथेत्यतोऽकामतश्चेत्युक्तं तयोः प्रकृतिविकृतिभूतयोः गोवधमद्यपानयोरभ्यासे भूयः प्रायश्चित्तं कुर्य्यादित्यर्थः॥ ५८॥

अज्ञानादिति ज्ञाने तु ज्ञानतो विण्मूत्रभक्षणे यत् प्रायश्चित्तं तदेव

सुरापाननिषेधोऽयं जात्याश्रय इति स्थितिः।
न पिबेद् ब्राह्मणो मद्यं निषिद्धमपि चापरम्॥

इति कुमारवचनाच्च द्विजग्रहणस्य जात्युपलक्षणार्थत्वाच्च। यच्च कुमारवचनम्।

जातमात्रः शिशुस्तावद् यावदष्टौ समा वयः।
सहि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः॥
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते।
अस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते॥

तन्मद्येतरविषयं अष्टवर्षग्रहणमनुपनीतस्यापि परस्ताद्दोषार्थम् उपनयनपदं पञ्चवर्षादुपनीतस्याष्टवर्षेभ्य प्रागपि दोषज्ञापनार्थम्। यत्तु,

मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन।
दोषस्तु वत्सरान् पञ्च ऊर्द्धं पित्रोः सुहृद् गुरोः॥

इति मद्ये दोषाभाववचनं तत् क्षत्रियवैश्यविषयः। मद्यपदं चात्र सुरापरं तदितरमद्यस्य बालप्रवृद्धयोरपि अनिषेधात् इति जिकनः। ऊर्द्धं पित्रोः सुहृद् गुरोः। इति पञ्चवर्षत ऊर्द्धं पित्रादीनां स दोषः प्रतिकार्य्यो भवतीत्यर्थः॥ ५८॥

---

द्रष्टव्यम्। निवर्त्तन्ते पुनरावर्त्तन्ते इत्यर्थः। अत्रेति कल्पतरुरित्यन्वयः। स्त्रिया विवाहसंस्कारे सत्येव द्विजत्वम् अतोऽनूढ़ाया द्विजातित्वाभावः। समा वर्षाणि। तदिति मद्येतरं लशुनादि। एतेनानुपनीतानूढ़योरपि उपनीततुल्यं द्वादशविधमद्यपानप्रायश्चित्तम्। एतेन यद्भवदेवेन जातिमात्राश्रयम् एको निषेधः अपरश्च द्विजात्याश्रय इत्युक्ता तत्र स्वमिति कल्पितं प्रायश्चित्तं पृथगुक्तं तन्निरस्तम्। यत्त्विति एतच्च जिकनमतं तयोः क्षत्रियवैश्ययोरित्यर्थः प्रागुक्तं मन्वादिवचनात् क्षत्रियवैश्ययोरपि जात्याश्रयनिषेधात् व्याख्यानमिदमसङ्गतम् इति

तत्रापि प्रयोजकादीनां पादपादहानिर्द्रष्टव्या इति जिकनः। एष संक्षेपः। ज्ञानतो ब्राह्मणक्षत्रियवैश्यानां सुरापाने मरणान्तिकम्। चतुर्विंशतिवार्षिकं वा। अज्ञानतो द्वादशवार्षिकं ब्राह्मणस्य तदशक्तावशीत्युत्तरपयस्विधेनुशतं देयं तदशक्तौ धेनुसङ्कलनरीत्या चत्वारिंशत्पुराणाधिकचूर्णीपञ्चशतानि देयानि। क्षत्रियवैश्ययोस्तु पादपादहानिरुक्ता विष्णुवचनात्। बालवृद्धस्त्रीणामर्द्धादिकम्। दक्षिणा च ब्रह्मवधप्रायश्चित्तोक्तरीत्या ऊहनीया। पूर्वजन्मकृतयोः सुवर्णापहारसुरापानपापयोर्नरकोपभोगक्षीणयोरपि। सुवर्णचौरः कौनख्यं सुरापः श्यावदन्ततामित्यनुमितयोः किञ्चित् सावशिष्टत्वात् अल्पप्रायश्चित्तमाह वशिष्ठः। कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरित्वोद्धरेयातां तद्दन्तनखाविति अतएवामीषां श्राद्धादिषु परिहारः। एवं दुश्चर्मादिषु अप्यूह्यमिति॥ ६०॥

इति प्रायश्चित्तविवेके सुरापानप्रायश्चित्तं समाप्तम्।

---

ग्रन्थकृतो हृदयं स्वमतन्तु वचनमिदं ब्राह्मणविषयं मद्यपदञ्च विविधसुरेतरपानसादिमद्यपरमिति स्पष्टमिति नोक्तम्॥ ५९॥

तत्रापीति अत्र सुरापानेऽपीत्यर्थः। अयमत्रास्वरसः तस्माद् ब्राह्मणराजन्याविति वचने साक्षात् कर्त्तुरेव निषेधोपदेशात् परस्पराश्रयणे प्रमाणाभावात् अति प्रसङ्गाच्च वध इव विशेषवचनाभावाच्च न प्रयोजकादीनां निषेधविषयत्वमिति ध्येयम्। तदशक्ताविति इदन्तु धेनुसङ्कलने विवेचयिष्ये चूर्णी देशान्तरप्रसिद्धा पुराणैकमूल्यताम्रनिर्मितमुद्राविशेषः। नरकेति नरकोपभोगात् क्षीणयोः केवलं कौनख्यादि चिह्नेनानुमिततज्जनकत्वस्वल्पमात्रावशेषयोरित्यर्थः कृच्छ्रमिति द्वादशरात्रसाध्यं प्राजापत्यमित्यर्थः॥ ६०॥

इति श्रीगोविन्दानन्दकविकङ्कणविरचितायां प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्यां सुरापानप्रायश्चित्तम्।

## अथ सुवर्णस्तेयप्रायश्चित्तम्।

तदर्थं सुवर्णस्तेयनिरूपणं क्रियते यद्यपि महापातको-द्देशे स्तेयं गुर्वङ्गनागम इति मनुना सामान्येन स्तेयमात्र-मुपदिष्टं तथापि सुवर्णस्तेयपरं तत् मनुनैव सुवर्णस्तेयकृद्विप्र इत्यनेन प्रायश्चित्तेषु सुवर्णविषयत्वोपसंहारात्। तथा देवलः। ब्रह्महत्या सुवर्णस्तेयं गुरुतल्पगमनं सुरापानञ्चेति महापातकानि। ब्राह्मणसुवर्णहरणञ्च महापातकं यथा हारीतः। ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनं संयोगश्च तैः सह इति पञ्च महापातकानि। तथा विष्णुः। ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदाराभिगमनं संयोगश्च तैः सहेति महापातकानि क्षत्रियादिसुवर्णहरणन्तूपपातकम्। ननु परिमाणविशेषान्वितसुवर्णापहारो महापातकं जातिमात्रापहारो वा नाद्यः परिमाणवाचकपदाश्रवणात्। न च

पञ्चकृष्णलकोमाषस्ते सुवर्णस्तु षोड़श।

इति मनुवचने पुंलिङ्ग सुवर्णशब्दस्य परिमाणवाचित्वात् सुवर्णशब्दादेव परिमाणं लभ्यमिति वाच्यं सुवर्णस्तेयशब्दे समस्ते पुंलिङ्गनपुंसकलिङ्गसन्देहात्। वचनान्तराज्जातिमात्रपरत्वमेवास्य निर्णीयते तदाह अङ्गिराः।

गुरुतल्पः सुरापश्च रुक्मस्तेय्यथ विप्रहा।

---

इदानीं क्रमप्राप्तं सुवर्णस्तेयप्रायश्चित्तं निरूपयितुम् उपक्रमते अथेति तदर्थं प्रायश्चित्तार्थं देवलवचने सामान्यसुवर्णशब्दस्य विशेषवचनदर्शनात् विशेषपरत्वमित्याह ब्राह्मणसुवर्णहरणमिति सुवर्णशब्दः परिमाणविशेषवाचकः काञ्चनमात्रवाचकश्च तत् कस्येह ग्रहणमिति विवेचयति नन्विति नाद्य इति

महापातकिनस्त्वेते संसर्गी चैव पञ्चमः ॥

विश्वामित्रः।

ब्राह्मणो नैव हन्तव्यः सुरा पेया न च द्विजैः।
ब्राह्मणस्वर्णहरणं न कर्त्तव्यं कदाचन ॥

अत्र जातिमात्रवाचिरुक्मस्वर्णपदोपादानात् ॥ ६१ ॥

किञ्चोपक्रमोपसंहारयोरनियतद्रव्यगतपरिमाणवचनत्रसरेण्वादिमध्यस्थितस्य सुवर्णशब्दस्याप्यनियतद्रव्यगतपरिमाणवचनत्वे यत्किञ्चित् द्रव्यापहारो महापातकं स्यात्। न चोभयपरत्वं सुवर्णशब्दस्य सकृदुच्चरितस्य लिङ्गभेदानुपपत्तेः। न चान्यत्र प्रयोगवारणार्थं कनकत्वजात्युपहितपरिमाणवचनत्वमस्य पङ्कजशब्दे कमलत्ववत् पलं सुवर्णाश्चत्वार इत्यत्र

---

किन्तु जातिमात्रकाञ्चनापहार एव महापातकमिति पूर्वपक्षार्थः। यदि सन्देहस्तदा जातिमात्रवाचकत्वं कथं निर्णीतमित्याह वचनान्तरादिति ॥ ६१ ॥

दोषान्तरमाह किञ्चेति। जले सूर्य्यमरीचिस्थम् एष रेणुरजः स्मृतमित्युपक्रम्य उपसंहारेऽपि पलपरिमाणं सर्वद्रव्यसाधारणमुक्तं तन्मध्ये पतितस्य सुवर्णपरिमाणस्यापि सर्वद्रव्यसाधारणत्वम् अतः सुवर्णपरिमितयत्किञ्चिद्द्रव्यापहारी महापातकं स्यादित्यर्थः। न चेति काञ्चनजातिपरत्वं परिमाणपरत्वञ्च इत्युभयपरत्वमित्यर्थः। सकृदिति पुंलिङ्गात् परिमाणप्रतीतिर्नपुंसकाच्च जातेः सकृदुच्चरितस्य सुवर्णशब्दस्य एकदा तदसम्भवात् कथमुभयार्थप्रतीतिः अयं भावः लिङ्गभेदो हि वाच्यनिश्चायकः स चैकदा न सम्भवतीति तत् कथमुभयार्थप्रत्यायकत्वं प्रकृतेः प्रत्युत प्रकृतस्थले समस्तपदे वचनैकवाक्यतया जातिमात्रपरत्वमवगम्यते यद्वा लिङ्गं प्रातिपदिकं सकृदुच्चरितस्य सुवर्णपदस्य प्रातिपदिकभेदानुपपत्तेः अयमर्थः शब्दभेदे हि अर्थभेदस्तदभावात् कथमुभयार्थप्रतीतिः तथा चोक्तं सकृदुच्चरितः शब्दः सकृदर्थं गमयति इति व्यथां हयेषामपि मेदिनीश्वरामित्यादौ तु योगवशादेकशक्तौ वोभयार्थवाचित्वं हयविशेषणाच्च। श्लेषालङ्कारादौ वक्तृतात्पर्य्यानुमानसापेक्ष्यार्थद्वयावगमः अत्र तु मुनीनां

पलशब्दस्यापि काञ्चनत्वजात्युपहितपरिमाणवचनत्वापत्तेः तदा च द्रव्यान्तरे पलादिव्यवहारो न स्यात्।

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि।

इत्यभिधाय पलादिसंज्ञाया मनुनोक्तत्वात् पलशब्दस्य व्यवहारश्च सर्वद्रव्येष्वेव। न च रुक्मादिपदयुक्तवचनैकवाक्यतयात्र सुवर्णपदेन जातिलाभ इति वाच्यम्। स्तेयपदसमस्तस्य लिङ्गसन्देहे परिमाणवाचित्वसन्देहात्। संज्ञासार्थकत्वाय परिमाणार्थकत्वमस्येति चेन्न दण्डविधौ संज्ञाप्रयोजनसम्भवात्। तथा बृहस्पतिः।

बधार्हः सुवर्णशतं दमं दाप्यस्तु पूरुषः।
अङ्गच्छेदार्हकस्त्वर्द्धं सन्दंशार्हस्तदर्द्धकम्॥

सन्दंशो वृद्धाङ्गुलीतर्जन्योश्छेदः। अत्रोत्तममध्यमाधमदण्डविधानानुपपत्तेः परिमाणार्थत्वम्। अत्र हेत्वभावात् सन्देह एव। प्रत्युत रुक्मस्तेयसमं स्मृतमिति मनुना जातिवाचि-

---

तात्पर्यसन्देह एव प्रत्युत वचनैकवाक्यतया जातिमात्रपरत्वे तात्पर्यं निर्णीयत इति भावः। न चान्यत्र इति अन्यत्र कनकेतरस्मिन् प्रयोगवारणार्थं परिमाणार्थे सुवर्णशब्दप्रवृत्तौ कनकत्वजातिरुपाधिः कनकत्वजातिसमानाधिकरणे परिमाणप्रयोगात् यथा कुमुदादौ प्रयोगवारणार्थं पङ्कजशब्दे कमलत्वमुपाधिरित्यर्थः। ननु द्रव्यान्तरे पलव्यवहारः भाक्त एवास्तु इत्याशङ्क्याह लोक इति मनुनैव व्यवहारानुरोधेन सर्वद्रव्यगततया संज्ञाया कृतत्वादित्यर्थः। न चेति प्रागुक्तरुक्मादिपदयुक्तवचनैकवाक्यतया सामान्यविशेषन्यायादत्र स्तेयप्रकरणे परिमाणवाचिसुवर्णपदस्य काञ्चनत्वोपहितपरिमाणपरत्वमस्त्वित्यर्थः। स्तेयपदसमस्तस्य इति सुवर्णपदस्येति शेषः। परिमाणार्थनिर्णये सत्येकवचनैकवाक्यता तदभावे कथं जातिपरिमाणयोर्वैशिष्ट्यमिति भावः। संज्ञेति यद्यत्र सुवर्णपदं परिमाणवचनं न स्यात् तदा संज्ञाविधानं व्यर्थं स्यादित्यर्थः। अत्र हेत्वभावा-

पदेन निर्देशाज्जातिपरत्वमेवावगम्यते। उच्यते। अनियत-द्रव्यगतपरिमाणविशेषवाचित्वे सुवर्णशब्दस्य दण्डविधावपि प्रयोजनासम्भवात्। रजततोलकशतदण्डस्यापि सम्भवात्। माषकादिशब्दे सोपपदसुवर्णमाषकादिशब्दवत्सोपपदसुवर्ण-शब्दप्रयोगादर्शनात् निरुपपदादेव सुवर्णशब्दात् काञ्चनत्वो-पहितपरिमाणविशेषप्रतीतेस्तद्वाचित्वमेवास्य। किं च मनु-नैव सुवर्णपदसङ्केतितं कृत्वा काञ्चनत्वोपहित एव सुवर्णपदं प्रयुक्तम्। तथा,

चतुःसौवर्णिको निष्कः शतमानस्तु राजतः॥

इति। चतुःसुवर्णान् षट् निष्कानिति दण्डेऽभिहितम्। राज्ञा दाप्यः सुवर्णं स्यादिति॥ ६२॥

अतो दण्डादिव्यवहारार्थत्वात् संज्ञायास्तत्त्वोपहितपरि-

---

दिति अत्र सुवर्णस्तेयपद इत्यर्थः हेतुमाह रजतेति अत्र रजतपदं ताम्राद्यल्प-मूल्यद्रव्योपलक्षणमिति भावः। तर्हि किं भवत्वित्यत आह माषकादीति सोपपदेति काञ्चनस्य सुवर्णमित्यादिसोपपदप्रयोगाभावादित्यर्थः। निरुपपदा-देवेति न च पुंलिङ्गस्यैव परिमाणवाचित्वे हेतुत्वान्न कदापि निरुपपदात् प्रतीतिरिति वाच्यं भवतु नामलिङ्गात् परिमाणार्थप्रतीतिः विचारविषयस्य काञ्चनत्वोपहितस्य तु निरुपपदादेव सुवर्णशब्दात् प्रतीतौ को विरोध इति प्रमाणान्तरम् आह किञ्चेति चतुःसौवर्णिक इति राजते पले पृथक् संज्ञा-विधानात् ताम्रनिष्कादिप्रयोगदर्शनाच्च पलनिष्कयोः पर्य्यायत्वे सति चतुः-सौवर्णिको निष्क इति पृथगभिधानवैफल्याच्च निष्कपदं काञ्चनपदमेवाभिधत्ते तच्च सुवर्णशब्दस्य काञ्चनत्वोपहितपरिमाणवाचित्वे सत्येव घटते तथा चतुः-सौवर्णान् दद्यात् षट् निष्कान् दद्यात् इत्यादौ अनियतद्रव्यपरिमाणपरत्वे सति दण्डेऽनध्यवसायापत्तेः॥ ६२॥

उपसंहरति अत इति संज्ञायाः सुवर्णसंज्ञायाः तत्र दण्डादिव्यवहारे

माणे प्रयोगात् काञ्चनत्वोपहितपरिमाणविशेषे संज्ञा मनुना कृतेति निश्चीयते न माषकादिशब्दानां तेषां हिरण्यञ्चैव माषकमिति सोपपदस्य प्रयोगात्। पलं सुवर्णाश्चत्वार इत्यत्र सुवर्णशब्दः परिमाणविशेषेऽनुपहिते लाक्षणिकः पलशब्दस्यान्यत्रापि प्रयोगदर्शनात्। अतः शास्त्रीयसुवर्णसंज्ञाविधानं सर्वशास्त्रे सुवर्णशब्दादसति बाधके परिमितहेमग्रहणार्थम्। तदेकवाक्यतया वचनान्तरे रुक्मादिपदमपि परिमितहेमपरमेव ॥ ६३ ॥

तेन सुवर्णस्तेयपदे समस्ते सत्यपि लिङ्गसन्देहे संज्ञाविधिसार्थकत्वाय परिमितहेमधीः पुंलिङ्गधीरपि अतः परिमितहेमापहारो महापातकं न जातिमात्रापहार इति। अतएव षट्त्रिंशन्मतमिति कृत्वा पठितम्।

सुवर्णकृष्णलं ह्येकमपहृत्य नराधमः।
कुर्य्याच्चान्द्रायणं कृच्छ्रं यो यस्यापकृते तु तत् ॥
अपहृत्य सुवर्णस्य माषमात्रं नराधमः।

---

काञ्चनत्वजात्युपहितपरिमाणे इत्यर्थः तर्हि माषकादिशब्देऽपि तथास्त्वित्याह नेति न तु माषकादिशब्दानां काञ्चनत्वोपहितपरिमाणविशेषसंज्ञा तेषां माषकादिशब्दानां सोपपदप्रयोगादित्यर्थः। तर्हि पलसंज्ञायाः का गतिरित्याह पलमिति अनुपहिते काञ्चनत्वजात्यनुपहिते केवले इत्यर्थः। लक्षणायां हेतुमाह पलशब्दस्येति अन्यत्र ताम्रादौ काञ्चनस्य पलमित्यादिप्रयोगाच्चेत्यपि मन्तव्यम् अत इति बाधकन्तु माषकादिपरिमाणान्तरे नपुंसकादिलिङ्गादिकम् एवञ्च शास्त्रीयसंज्ञाबलात् निर्णीते परिमाणवाचित्वे तदेकवाक्यतया वचनान्तरस्थकेवलरुक्मादिपदमपि परिमितरुक्मपरमित्यर्थः ॥ ६३ ॥

तेनेति लिङ्गसन्देहेऽपि सुवर्णशब्दः परिमितहेम्नः पुंलिङ्गस्य च प्रत्यायक इत्यर्थः। यो यस्येति स्थाप्यं वा पतितप्राप्तं वा काञ्चनं यो हरेत् यस्य वा तत्

पदेन निर्देशाज्जातिपरत्वमेवावगम्यते। उच्यते। अनियत-द्रव्यगतपरिमाणविशेषवाचित्वे सुवर्णशब्दस्य दण्डविधावपि प्रयोजनासम्भवात्। रजततोलकशतदण्डस्यापि सम्भवात्। माषकादिशब्दे सोपपदसुवर्णमाषकादिशब्दवत्सोपपदसुवर्ण-शब्दप्रयोगादर्शनात् निरुपपदादेव सुवर्णशब्दात् काञ्चनत्वो-पहितपरिमाणविशेषप्रतीतेस्तद्वाचित्वमेवास्य। किं च मनु-नैव सुवर्णपदसङ्केतितं कृत्वा काञ्चनत्वोपहित एव सुवर्णपदं प्रयुक्तम्। तथा,

चतुःसौवर्णिको निष्कः शतमानस्तु राजतः॥

इति। चतुःसुवर्णान् षट् निष्कानिति दण्डेऽभिहितम्। राज्ञा दाप्यः सुवर्णं स्यादिति॥ ६२॥

अतो दण्डादिव्यवहारार्थत्वात् संज्ञायास्तत्त्वोपहितपरि-

---

दिति अत्र सुवर्णस्तेयपद इत्यर्थः हेतुमाह रजतेति अत्र रजतपदं ताम्राद्यल्प-मूल्यद्रव्योपलक्षणमिति भावः। तर्हि किं भवत्वित्यत आह माषकादीति सोपपदेति काञ्चनस्य सुवर्णमित्यादिसोपपदप्रयोगाभावादित्यर्थः। निरुपपदा-देवेति न च पुंलिङ्गस्यैव परिमाणवाचित्वे हेतुत्वान्न कदापि निरुपपदात् प्रतीतिरिति वाच्यं भवतु नामलिङ्गात् परिमाणार्थप्रतीतिः विचारविषयस्य काञ्चनत्वोपहितस्य तु निरुपपदादेव सुवर्णशब्दात् प्रतीतौ को विरोध इति प्रमाणान्तरम् आह किञ्चेति चतुःसौवर्णिक इति राजते पले पृथक् संज्ञा-विधानात् ताम्रनिष्कादिप्रयोगदर्शनाच्च पलनिष्कयोः पर्य्यायत्वे सति चतुः-सौवर्णिको निष्क इति पृथगभिधानवैफल्याच्च निष्कपदं काञ्चनपदमेवाभिधत्ते तच्च सुवर्णशब्दस्य काञ्चनत्वोपहितपरिमाणवाचित्वे सत्येव घटते तथा चतुः-सौवर्णान् दद्यात् षट् निष्कान् दद्यात् इत्यादौ अनियतद्रव्यपरिमाणपरत्वे सति दण्डेऽनध्यवसायापत्तेः॥ ६२॥

उपसंहरति अत इति संज्ञायाः सुवर्णसंज्ञायाः तत्र दण्डादिव्यवहारे

माणे प्रयोगात् काञ्चनत्वोपहितपरिमाणविशेषे संज्ञा मनुना कृतेति निश्चीयते न माषकादिशब्दानां तेषां हिरण्यञ्चैव माषकमिति सोपपदस्य प्रयोगात्। पलं सुवर्णाश्चत्वार इत्यत्र सुवर्णशब्दः परिमाणविशेषेऽनुपहिते लाक्षणिकः पल-शब्दस्यान्यत्रापि प्रयोगदर्शनात्। अतः शास्त्रीयसुवर्णसंज्ञा-विधानं सर्वशास्त्रे सुवर्णशब्दादसति बाधके परिमितहेम-ग्रहणार्थम्। तदेकवाक्यतया वचनान्तरे रुक्मादिपदमपि परिमितहेमपरमेव ॥ ६३ ॥

तेन सुवर्णस्तेयपदे समस्ते सत्यपि लिङ्गसन्देहे संज्ञा-विधिसार्थकत्वाय परिमितहेमधीः पुंलिङ्गधीरपि अतः परि-मितहेमापहारो महापातकं न जातिमात्रापहार इति। अतएव षट्त्रिंशन्मतमिति कृत्वा पठितम्।

सुवर्णकृष्णलं ह्येकमपहृत्य नराधमः।
कुर्य्याच्चान्द्रायणं कृच्छ्रं यो यस्यापकृते तु तत् ॥
अपहृत्य सुवर्णस्य माषमात्रं नराधमः।

---

काञ्चनत्वजात्युपहितपरिमाणे इत्यर्थः तर्हि माषकादिशब्देऽपि तथास्त्वित्याह नेति न तु माषकादिशब्दानां काञ्चनत्वोपहितपरिमाणविशेषसंज्ञा तेषां माष-कादिशब्दानां सोपपदप्रयोगादित्यर्थः। तर्हि पलसंज्ञायाः का गतिरित्याह पलमिति अनुपहिते काञ्चनत्वजात्यनुपहिते केवले इत्यर्थः। लक्षणायां हेतु-माह पलशब्दस्येति अन्यत्र ताम्रादौ काञ्चनस्य पलमित्यादिप्रयोगाच्चेत्यपि मन्तव्यम् अत इति बाधकन्तु माषकादिपरिमाणान्तरे नपुंसकादिलिङ्गादिकम् एवञ्च शास्त्रीयसंज्ञाबलात् निर्णीते परिमाणवाचित्वे तदेकवाक्यतया वचनान्तर-स्थकेवलरुक्मादिपदमपि परिमितरुक्मपरमित्यर्थः ॥ ६३ ॥

तेनेति लिङ्गसन्देहेऽपि सुवर्णशब्दः परिमितहेम्नः पुंलिङ्गस्य च प्रत्यायक इत्यर्थः। यो यस्येति स्वाप्यं वा पतितप्राप्तं वा काञ्चनं यो हरेत् यस्य वा तत्

गोमूत्रयावकाहारो मासैः शुध्यति वै त्रिभिः॥
सुवर्णादल्पहरणे वत्सरः परिकीर्त्तितः।
ऊर्द्धं प्राणान्तिकं ज्ञेयं यद्वा ब्रह्महनोव्रतम्॥

जातिमात्रापहारस्य महापातकत्वेऽल्पप्रायश्चित्तविधानानुपपत्तेः। जिकनस्तु भविष्यपुराणवचनविरुद्धमेतदेवाह।

यथा भविष्ये।

अपहृत्य सुवर्णन्तु ब्राह्मणस्य नराधिप!।
पञ्चनिष्कप्रमाणन्तु राजानं क्षत्रियो व्रजेत्॥
तस्मादौडुम्बरं शस्त्रं प्राप्यात्मानं हुनेद् गुह।
निमीलिताक्षो जठरे स्वशक्त्या मरणाच्छुचिः॥

चतुर्भिः सुवर्णैर्निष्कः। अतः पञ्चनिष्कप्रमाणसुवर्णापहारे प्राणान्तिकम्। एतदल्पापहारे स्वल्पप्रायश्चित्तं महापातकन्तु जातिमात्रापहरणमेव॥ ६४॥

तच्च सगुणनिर्गुणाभ्यां प्रायश्चित्तोत्कर्षापकर्षस्य तत्रैव दर्शितत्वात्। एतद् गायत्रीरहितनामधारकब्राह्मणविषयं पतितब्राह्मणविषयं वा। ननु किमिदं स्तेयं नाम न च।

प्रच्छन्नं वा प्रकाशं वा रात्रौ वा यदि वा दिवा।
यत् परद्रव्यहरणं स्तेयं तत् परिकीर्त्तितम्॥

---

सोऽपि दोषभाग् भवतीत्यर्थः। जिकनस्त्विति एतत् पूर्वोक्तं भविष्यपुराणविरुद्धं कृत्वा आहेत्यर्थः। औडुम्बरं ताम्रमयं महापातकन्त्विति सत्यपि महापातकत्वे कषलाद्यल्पकाञ्चनहरणे वचनादल्पप्रायश्चित्तमिति जिकनाभिप्रायः॥ ६४॥

सगुणनिर्गुणत्वाभ्यामिति तत्रैव भविष्यपुराणे सगुणनिर्गुणब्राह्मणसुवर्णहरणे प्रायश्चित्तोत्कर्षापकर्षयोर्दर्शितत्वात्। यथा महत्यपहृते पुत्र तथाल्पेऽपि हृते

इति कात्यायनवचनात् परद्रव्यहरणं स्तेयम्। तद्धि न परद्रव्यस्वीकारः शास्त्रीयार्जनमन्तरेण चौरस्य स्वत्वासम्भवात्। निह्नवोऽपलापो वा संगोपनं तदिति चेन्न समक्षग्रहणेऽपि स्तेयस्य कात्यायनोक्तत्वात् स्थानान्तरसञ्चार इति चेन्न स्वस्थानस्थनिक्षेपहरणेऽव्याप्तिः। अन्ये तु परस्वे परानुमतिमन्तरेण स्वत्वापादानं स्तेयम्। यथेष्टविनियोज्यत्वं स्वत्वं चौरस्यापि भवत्येव न। अविनियोगकाले स्वत्वाभावप्रसङ्गात्। यथेष्टविनियोगार्हत्वं तदिति चेन्न अर्हता यथेष्टविनियोज्यत्वेन शास्त्रगम्यत्वम्। न च चौर्य्यविषये शास्त्रमस्ति स्मृतिकारपरिगणितार्जनकर्मकत्वं स्वत्वं यद्युच्यते तदाप्यत्र नास्ति चौर्य्यस्य स्मृतावपरिगणनात्

---

गुरु!। हृतद्रव्याविशेषाद्दै स्वामिनस्तस्करस्य चेत्यादिना वक्ष्यते। एतदिति अपहृत्य सुवर्णं इति वचनं गायत्रीरहितनाममात्रब्राह्मणस्य पतितब्राह्मणस्य वा पञ्चनिष्कसुवर्णापहारविषयमित्यर्थः। ततश्च पञ्चनिष्कादल्पापहरणेऽल्पप्रायश्चित्तं न तु प्राणान्तिकम् इति यदुक्तं जिकनेन तदशुद्धमेवेति तदेवं सुवर्णपदार्थं निरूप्य स्तेयपदार्थं निरूपयति नन्विति न चेति परद्रव्यहरणं स्तेयमिति न चेत्यन्वयः हेतुमाह तद्धीति तद्धरणं शास्त्रीयार्जनं परस्वत्वोत्पादकं तद्विना स्वत्वाभावादित्यर्थः निह्नवोऽप्रकाशनम् अपलापो न मया गृहीतमित्यादिवाक्प्रयोगः एतदुभयरूपं सङ्गोपनं तद्धरणमिति चेदित्यर्थः। एतत् सङ्गोपनं द्रव्यस्वामिनः स्थले इति ज्ञेयम् अन्यथा स्वामीतरस्मिन् सङ्गोपनस्यापि स्तेयत्वापत्तेः कात्यायनेति प्रच्छन्नं वा प्रकाशं वा इत्यनेनोक्तत्वात् इत्यर्थः। स्थानान्तरेति अत्रापि यथेष्टविनियोगार्थमिति विवक्षणीयम् अन्यथा स्वाम्यनुमत्या स्थानान्तरसञ्चारेऽप्यतिव्याप्तेः शास्त्रगम्यत्वं शास्त्रबोध्यत्वं न तु शास्त्रजन्यज्ञानविषयत्वं ज्ञानाभावदशायां स्वत्वाभावप्रसङ्गात् न चेदं यथेष्टविनियोज्यमिति शास्त्रं नास्त्येव इत्यसम्भवदोष इति वाच्यं स्वत्वेन शास्त्रप्रतिपाद्यत्वमित्यस्य विवक्षितत्वात् तच्च क्वचित् कण्ठोक्त्या क्वचिच्च तात्पर्य्यमर्य्यादयेति न च यथेष्टविनियोज्यत्वेन यदा

पार्श्विकद्यूतचौर्य्यार्त्तिप्रतिरूपकसाहसैः।
व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम्॥

इति विष्णुधर्मोत्तरवचनमस्तीति चेन्न चौर्य्यशब्दस्यात्रा-विज्ञातपरधने गौणत्वाङ्गीकारात् पार्श्विकः पात्रतया योऽर्जयति उपार्जितं कृतमित्यर्थः। किञ्च द्रव्यमस्वामिविक्रीतं पूर्वस्वामी समाप्नुयादिति याज्ञवल्क्यवचनेऽस्वामिग्रहणादि-विरोधः स्यात्। किञ्चानेकेषामनेकाङ्गुरीयकसमुदायेषु सदृशतया स्वाङ्गुरीयकभ्रमेण परकीयाङ्गुरीयविक्रयणे स्तेयत्वं स्यात्। किञ्चाविभक्तभ्रात्रादिधनस्य विक्रये भोगे स्तेयत्वं स्यात्॥ ६५॥

---

कदाचित् ज्ञानविषयत्वमिति वाच्यं विक्रीतस्यापि स्वत्वोत्पत्तेः। अर्जनकर्मत्व-मिति पैतृकधनेऽतिव्याप्तिदोषः स्वत्वहेतुभूतव्यापारोऽर्जनम् इत्यनेनात्माश्रय-दोषोऽप्यत्र मन्तव्य इत्यस्वरसो ग्रन्थकृता यदुच्यते इत्यनेन दर्शितः चौर्य्यशब्द-स्येति अत्र वचने चौर्य्यपदे यश्चौरशब्दः सोऽविज्ञातपरधनपुरुषे गौणः द्रव्यम-स्वामिविक्रीतमिति वक्ष्यमाणवचनविरोधात्तेनाज्ञातस्वामिकपतितधने आदि-शब्दात् निधौ च स्वाम्यमस्तीत्यनेन वचनेन विधीयते न तु चौर्य्यधने इत्यर्थः। प्रतिरूपकं सादृश्यभ्रमेण विक्रयादीत्यर्थः। ननु इच्छाधीनयथेष्टविनियोज्यत्वं स्वत्वमिति वाच्यमित्यत आह किञ्चेति याज्ञवल्क्यवचन इति याज्ञवल्क्यवचन-समानार्थकवचन इत्यर्थः याज्ञवल्क्यवचनन्तु स्वं लभेतान्यविक्रीतं क्रेतुर्दोषो-ऽप्रकाशिते इति अत्रान्यपदात् चौरस्य स्वाम्यं नास्तीति स्फुटमुक्तम् एतेनास्वामि-शब्दोनिन्दितस्वामिपर इति यद्गवर्द्धनेन व्याख्यातं तन्निरस्तं यच्चान्यदुक्तं तेन यदि चौरः स्वामी न स्यात् तदा पूर्वस्वामी न स्यादित्यत्र पूर्वपदं व्यर्थं स्यादिति तदप्ययुक्तं न तूत्तरस्वामी क्रेता समाप्नुयादिति पूर्वपदाद्व्यावृत्तेरिति। स्वत्वन्तु कण्ठोक्त्या तात्पर्य्यमर्य्यादया वा इदं स्वमिति शास्त्रप्रतिपाद्यत्वमिति प्रागुक्तमेव चौर्य्यधने च स्वत्वं नास्तीत्यप्युक्तमेव दोषान्तरमाह किञ्चेति न चेष्टापत्तिरिति वाच्यं विष्णुधर्मोत्तरवचने प्रतिरूपकविरोधात्। अनेकेषा-

उच्यते। परस्वत्वेन विशेषतो ज्ञायमाने द्रव्ये परानुमतिमन्तरेण ममेदं यथेष्टविनियोज्यमिति कृत्वा व्यवहारः स्तेयं स क्वचिन्मानसः संकल्परूपः क्वचित्कायिको दानविक्रयादिरूपः। अतोऽविभक्तभ्रात्रादिधने नातिव्याप्तिः विशेषतो ज्ञानाभावात् न चात्मीयभ्रमविक्रीतपरधने परकीयत्वेन ज्ञानाभावात् अतएव प्राप्तनिधिस्वीकारे न स्तेयत्वं परस्येदं स्वमिति ज्ञानाभावात् प्रनष्टस्वामिकस्यापि सम्भवात्। अतएव याज्ञवल्क्यः।

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः।
विद्वानशेषमादद्यात् स सर्वस्य प्रभुर्यतः॥

एवं वस्त्रापहारे तदञ्चललब्धस्याविज्ञातस्य सुवर्णस्य नापहारः अज्ञातत्वात् यत्रासुवर्णस्य सुवर्णबुद्ध्या अपहारस्तत्र सुवर्णस्य नापहारः। सुवर्णस्य यथेष्टविनियोज्यत्वेन व्यवहारकर्मत्वाभावात्। यत्र सुवर्णमेव पारदरसोपलिप्तत्वेन सीसकबुद्ध्यापहरति तत्र परस्येदमिति जानत एव पुरुषस्य सुवर्णं विनियोगसंकल्पविषयः अतः स्तेयमिति किन्तु सुवर्णजात्यज्ञाना-

---

मिति वचनं ब्राह्मणक्षत्रियाद्यनेकजातीयानां प्रत्येकमनेकत्वविवक्षयेति ध्येयम्। दोषान्तरमप्याह किञ्चेति॥ ६५॥

स्वयं स्तेयलक्षणमाह उच्यत इति विशेषत इत्यनेनाविभक्तभ्रात्रादिधनस्य निधेश्च व्यावृत्तिः तदनुमतिमन्तरेण क्रयप्रतिग्रहयोर्व्यावृत्तिर्व्यवहारो व्यापारः स्तेयमित्यर्थः स मानसव्यवहारोऽपहारकाल एव भवतीति अविभक्तभ्रात्रादीति न चाविभक्तधने भ्रातुरपीदमिति ज्ञानमस्तीति वाच्यम् आत्मनोऽपि तद्धनमिति विशेषतः परकीयमात्रत्वेन ज्ञानाभावात् न च परगृहस्थद्रव्यं कस्येदमिति विशेषतो न ज्ञायत इति तत्रापि स्तेयाभावप्रसङ्ग इति वाच्यम्

दज्ञानकृतञ्च तत् अतो न तत्र प्राणान्तिकमिति वच्यते। किन्तु तत्र कियत् सुवर्णं कियाञ्च इति प्रायश्चित्तार्थमनुसरणीयं न पुनरसुवर्णांशेऽपि प्रायश्चित्तमिति। यत्तु मनुवचनम्।

वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तथैव च।
तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥

तद्दोषपरिहारार्थं न तु स्तेयनिषेधपरम्॥ ६६॥

ननु दशविधं स्तेयमुक्तम् अत्राव्याप्तिः यथा हारीतः। अदत्तादानादनभिनिसृष्टग्रहणादनिर्देशोपयोगात् भृत्येभ्यो भृत्यदानाद् याचितानिर्यातनान्न्यासापनयनाच्च छद्मव्यंसनाया अनुपायग्रहणात् प्रतिश्रुत्यादानाद्दैवताभिसन्धानाच्चेति दशविधं स्तेयम्। सत्यम् अदत्तादानप्रपञ्चार्थं न्यासापनयनादिग्रहणं भृत्यस्य भृतेरदानादौ तु गौणः स्तेयशब्दोऽन्यथा अनेकशक्तिकल्पनापत्तेरतो नाव्याप्तिः अनभिनिसृष्टग्रहणमुक्तपरिमाणादधिकग्रहणं छद्मव्यंसना कूटतुलाकरणम् अनुपायग्रहणं स्ववृत्तिसम्भवेऽन्यवृत्त्या धनार्जनम्। एतच्च सुवर्णहरणं वर्णचतुष्टयस्य महापातकम्। ननु सुवर्णस्तेयकृद्विप्र इति

---

अत्रापि परकीयमात्रत्वेन विशेषतो ज्ञानात् परस्येदं स्वमिति ज्ञानाभावे हेतुमाह प्रनष्टेति तर्हि अज्ञानतः सुवर्णापहारः कुत्रेत्यत आह यत्रेति पारदो रसः॥ ६६॥

नन्विति अदत्तस्यादानं चौर्य्यादि अनभिनिसृष्टग्रहणम् उक्तप्रमाणादधिकग्रहणम्। अनिर्देशोपयोगः स्वामिनेऽनुज्ञान्यासीकृतद्रव्यस्योपयोगः। भृत्येभ्यो भृतेरदानम्। याचितानिर्यातनं याचितानीतस्य द्रव्यस्यासमर्पणम्। न्यासापनयनं स्थाप्यापलापः। छद्मव्यंसना कूटतुलाकरणम्। अनुपायग्रहणं स्ववृत्तिसम्भवेऽन्यवृत्त्या धनार्जनम्। प्रतिश्रुत्याङ्गीकृत्यादानम्। दैवताभिसन्धानं

मनुना विप्रग्रहणाद् ब्राह्मणस्यैव तन्महापातकम् उच्यते चत्वा-दयस्त्रयोवर्णा इत्यादि प्रायश्चित्ते वक्ष्यमाणभविष्यपुराण-दर्शनात्। तथा ब्रह्महत्या सुरापानं गुरुतल्पगमनं ब्राह्मण-सुवर्णहरणं द्विजातीनां महापातकानीति च्यवनवचने द्विज-ग्रहणात् मनुवचने विप्रपदं वर्णमात्रोपलक्षणार्थम्। अथ प्रायश्चित्तं निरूप्यते। प्रायश्चित्तञ्चापहृतद्रव्यं स्वामिने दत्त्वा करणीयं यथा भविष्ये ॥ ६७ ॥

यद् यस्यापहृतं द्रव्यं तत्तस्यैव निवेदयेत्।
प्रायश्चित्तं ततः कुर्य्यादेवं शुद्धिमवाप्नुयात् ॥

अपहृतद्रव्यस्याभावे तन्मूल्यमपि देयं स्वामिसन्तोषार्थत्वेन दृष्टार्थत्वाद्वचनस्य अतएव गोबधे। पराशरः।

प्रमापणे प्राणभृतां प्रतिरूप्यन्तु दापयेत्।
तस्यानुरूपं मूल्यं वा दाप्यमित्यब्रवीन्मनुः ॥

अथ प्रायश्चित्तमाह मनुः।

सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु।
स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥

---

देवतानाम्ना परधनग्रहणमिति दशविधम्। न्यासापनयनादीत्यादिशब्दा-दनभिनिसृष्टग्रहणयाचितानिर्यातनकुशव्यंसनानां ग्रहणं भृतेरदानादावित्यत्रादि-शब्दात् अनिर्देशोपयोगानुपायग्रहणप्रतिश्रुतादानदेनाभिसन्धानानां ग्रहणमिति। च्यवनवचने द्विजातिपदं सुरापानानुरोधार्थं ब्रह्महत्यादिषु त्रिषु वर्णचतुष्टयोप-लक्षणम् ॥ ६७ ॥

यद् यस्येति द्रव्यासमर्पणे पुनः स्तेयापत्तेः। अतएव एवं शुद्धिमवाप्नु-यादित्युक्तम्। स्वामिसन्तोषेति मूल्यदानप्रतिपादकवक्ष्यमाणवचनस्येत्यर्थः द्रव्या-भावे पुनःस्तेयासम्भवात् निर्गुणस्त्विति सगुणस्य तु तप एव प्रायश्चित्तं न तु बध

गृहीत्वा मुषलं राजा सकृद्धन्यात्तु तं स्वयम् ।
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा ॥

एतद्व्याचष्टे भगवान् श्रीमहेश्वरो भविष्ये ।

निर्गुणस्तु यदा विप्रोऽपहर्त्ता क्षत्रियस्तथा ।
प्रायश्चित्तमिदं कुर्य्यात्तदा शुद्ध्यर्थमात्मनः ॥
गृहीत्वा मुषलं राजा सकृद्धन्यात्तु तं स्वयम् ।
वधेन शुध्यति स्तेनो ब्राह्मस्तपसैव वा ॥
निःशङ्केनापि चेद्राज्ञा हतो न म्रियते गुह ! ।
पूयत्येव न सन्देहो यदि जीवति स द्विजः ॥

स्तेनो वधेन शुध्यति इति क्षत्रियादिविषयं वधशब्देन विकल्पितं जीवनमपि लक्ष्यते । अतएव विप्रशब्दो वर्णचतुष्टयपरः । तथा यमः

तस्मात्तं मुषलं गृह्य यथा प्राणेन भूपतिः ।
सकृद्धन्यात् मृतो वापि जीवन्नपि विशुध्यति ॥ ६८ ॥

एतेन हतो मुक्तोऽपि शुचिरिति याज्ञवल्क्यवचने हतप्रतियोगितया मुक्तत्वमहननमवगम्यते न तु मरणप्रतियोगितया हि जीवनावगमो भवतीति जिकनव्याख्यानं निरस्तम् । भविष्ये यमवचने च मरणप्रतियोगित्वावगतेः । ब्राह्मण-

---

इति वक्ष्यते क्षत्रियादिविषयमिति निर्गुणब्राह्मणविषयमपीदं निर्गुणस्तु यदेत्युक्तभविष्यपुराणात् । अतएवेति सुवर्णस्तेयकृद्विप्र इति मनुवचने विप्रशब्द इत्यर्थः ॥ ६८ ॥

एतेनेति हननप्रतियोगितया मुक्तत्वं हननाभाव एव अतो राजा यदि न हन्यात् तथापि राजस्थानगमनादेव शुद्धिरिति जिकनमतं तन्निरस्तमित्यर्थः ।

स्तपसैव वेति ब्राह्मणस्य तप एव द्वादशवार्षिकम् एवकारात् बधनिषेधः। वाशब्दाद्धननदण्डविकल्पः। यथा भविष्ये,

तदेतद्वचनं वीर! ब्राह्मणस्तपसैव वा।
अत्रैव कारकरणाद् ब्राह्मणस्य सुराधिप!॥
तपसैवेत्यनेनेह प्रतिषेधो बधस्य च।
न दण्डप्रतिषेधोऽस्ति ब्राह्मणस्य कदाचन॥
स्वयं गमनपक्षे तु ब्राह्मणस्य नृपं प्रति॥
दण्डदानस्य चाशक्तौ विज्ञेयन्तु तपो गुरु!।
अतीव यो धनाढ्यस्तु स्तेनो वै ब्राह्मणो गुरु!॥
प्रायश्चित्तन्तु तस्योक्तं दण्डश्च सुरसत्तम!।
तपस्तस्मिन्मशक्तश्चेद्दण्डेनैव विशुध्यति॥

अन्यतरस्यान्यतराशक्तौ विधानं तुल्यवद्विकल्पार्थम् एतत् स्वयं गमनपक्षे। राज्ञा बलादानयने तु दण्डतपसोः समुच्चयमाह भविष्ये॥ ६८॥

आनीयते बलाद् यस्तु स्तेनो वै पार्थिवं प्रति।
प्रायश्चित्तन्तु तस्योक्तं दण्डश्च सुरसत्तम!॥

यच्चात्र विश्वरूपदूषणं दण्डो दमनायेत्याहुरिति। दमनार्थं दण्डः प्रायश्चित्तन्तु दुरितक्षयार्थं न च भिन्नार्थयोर्विकल्पः

---

अत्रैवेति निर्गुणेतरब्राह्मणस्येत्यर्थः। निर्गुणस्य तु बधोऽपि प्रागुक्तवचनात्। स्वयं गमनेति बलान्नयनपक्षे तु दण्डस्तपश्चेति वक्ष्यति। अन्यतरस्येति तपोऽशक्तौ दण्डविधानं दण्डाशक्तौ च तपोभिधानमित्यर्थः। तत्रापि स्वयं गमनपक्षे धनवतस्तपस्यशक्तस्य दण्ड एव दरिद्रस्य तपः शक्तस्य तप एवेति बलान्नयनपक्षे तूभयमेवेति॥ ६९॥

तदयुक्तं दण्डेनैव विशुध्यतीति दण्डस्यैव पापक्षयार्थत्वात् ।
तथा च मनुः

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

तथा दण्डप्रकरणे ।

राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥

तथा विष्णुधर्मोत्तरे ।

प्रायश्चित्तैः समं याति पापं कृतमसंशयम् ।
राजदण्डात् क्षयं याति प्रायश्चित्तमकुर्वताम् ॥
प्रायश्चित्तविहीना ये राजभिश्चाप्यदण्डिताः ।
नरकं प्रतिपद्यन्ते तिर्य्यग्योनिं तथैव च ॥

यच्चापरमुक्तम् । प्रायश्चित्तन्तु कुर्वाणाः सर्वे वर्णा यथोदितम् ।

राज्ञानाङ्क्या ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥

इति मनुवचने समुच्चयदर्शनं विरुध्येत तदसङ्गतम् । बलादानयनपक्षे समुच्चयस्य भविष्ये दर्शितत्वात् । एतेन यद्वारेश्वरेणोक्तं ब्राह्मणस्य तपो दण्डो वा क्षत्रियादीनान्तु बधो वा तपो वा दण्डो वेति तत् भविष्यानुमतम् । यथा भविष्ये

वा शब्दश्रवणाद्वीर ! तपो वा ब्राह्मणस्य तु ।
दण्डो वा कीर्त्तितस्तज्ज्ञैर्बधस्तु न कदाचन ॥
बधो वा क्षत्रियादीनां दण्डो वा तप एव वा ।
तपश्च मनुना प्रोक्तं क्षत्रादीनां निबोध मे ॥
तपसापनुनुत्सुस्तु सुवर्णस्तेयजं मलम् ।
चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महनो व्रतम् ॥

इति कामकृते क्षत्रियादीनां बधोऽकामकृते तपो वा दण्डो वेति बोद्धव्यम् । तदाह शातातपः ।

अपहृत्य सुवर्णन्तु ब्राह्मणस्य ततः स्वयम्॥
गच्छेन्मुषलमादाय राजानं स्ववधाय तु।
ततः शुद्धिमवाप्नोति राज्ञासौ मुक्त एव वा॥
कामतस्तु कृतं यत् स्यान्नान्यथा बधमर्हति॥

दण्डमाह कात्यायनः।

सुवर्णस्य शतं स्तेनो बधार्हो दण्डमर्हति।
अङ्गच्छेदार्हकस्त्वर्द्धं विवास्यः पञ्चविंशतिम्॥

बृहस्पतिः।

कार्षापणसहस्रन्तु दण्डस्तूत्तमसाहसः।
तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः॥

कार्षापणः पणः।

कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः।

इति मनुवचनात्। याज्ञवल्क्यः।

साशीति पणसाहस्रो दण्ड उत्तमसाहसः।
तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः॥

सुवर्णशतादीनां धनवत्तामालोक्य व्यवस्था। ननु महापातकिनो धनमग्राह्यमाह। मनुः।

नाददीत नृपः साधुर्महापातकिनो धनम्।
आददानस्तु तल्लोभात्तेन पापेन लिप्यते॥

न एतस्य स्वयं ग्रहणविषयत्वात् यस्मात्तदनन्तरं स एवाह

---

भविष्य इति दण्डश्चेति चकारात् तपश्चेत्यर्थः। भविष्यानुगतं भविष्यपुराणसम्मतमित्यर्थः। मुक्त एवेति प्रहारार्त्तो जीवन्नेवेत्यर्थः। दण्डमाहेति ब्राह्मणादीनामिति सुवर्णशतादीनामिति आदिपदादुत्तमसाहसादीनां ग्रहणं

अप्सु प्रवेश्य तद्दण्डं वरुणायोपपादयेत्।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्॥

एतच्च प्रायश्चित्तं षोडशमाषात्मकसुवर्णस्तेये विज्ञेयम्। यत्तु भविष्यवचनम्।

अपहृत्य सुवर्णन्तु ब्राह्मणस्य सुराधिप!।
पञ्चनिष्कप्रमाणन्तु राजानं क्षत्रियो व्रजेत्॥
तस्मादौडुम्बरं शस्त्रं प्राप्यात्मानं हनेद् गुह!।
निमीलिताक्षो जठरे स्वशक्त्या मरणाच्छुचिः॥

औडुम्बरं ताम्रमयम्। तथा,

क्षत्रादयस्त्रयो वर्णा निर्गुणा द्यूततत्पराः।
गुणाढ्यस्य च विप्रस्य पञ्चनिष्कान् हरन्ति ये।
निष्कालकादिविधिना दग्ध्वात्मानन्तु पावके॥
शुध्येयुर्मरणाद्वीर! तन्निर्य्यात्य तु तस्य तु।
तन्निर्य्यात्येति तद् द्रव्यं स्वामिने दत्त्वेत्यर्थः॥

तत् पञ्चनिष्कप्रमाणसुवर्णं ब्राह्मणस्य निर्गुणस्य हृत्वा आत्महननं नियतमरणफलं विदधाति क्षत्रियादिः एतेन मनुवचनं राजकर्तृकहननमनियतमरणफलमेतस्माल्लघु यदुक्तं तदन्यूनसुवर्णपरिमाणन्यूनपञ्चनिष्कपरिमाणसुवर्णापहारे बोद्धव्यम्। गुणाढ्यस्य तु वेदाग्नियुतस्य पञ्चनिष्कापहारे निष्कालकादिविधिना पादादारभ्यात्मदेहदहनं पूर्वस्माद् गुरुतरं युज्यत

---

सुवर्णस्तेयतदण्डाशक्तौ तपोऽशक्तौ च उत्तमसाहसादिकं ज्ञेयं स एव मनुरेवेत्यर्थः।
तत् पञ्चनिष्केति तत् अपहृत्य सुवर्णमित्यादि प्रथमवचनमित्यर्थः। निर्गुणस्येति

एव निष्कालकादिविधिश्च केशश्मश्रुलोमरहितत्वं घृताभ्यक्तञ्च गोमयाग्निना दाह इत्यादि ॥ ७० ॥

अतएव देवलः । मासोपवासिसोमपीत्यग्निहोत्रिणां सुवर्णस्तेयं महापातकतमम् । अतएव हृतद्रव्यस्य प्रभूतत्वा-प्रभूतत्वाभ्यां स्वामिनोऽपहर्त्तुश्च सगुणत्वनिर्गुणत्वादिनानु-बन्धेन प्रयोजनविशेषेण च प्रायश्चित्तोत्कर्षापकर्षभेदात्मुन्य-न्तरोक्ता व्यवस्थेयाः । तथा भविष्ये

महत्यपहृते द्रव्ये तथाल्पे च हृते गुह ! ।
हृतद्रव्यविशेषाद्धि स्वामिनस्तस्करस्य च ।
प्रयोजनविशेषात्तु विशेषाद्देशकालयोः ॥
विप्रद्रव्यविशेषाच्च प्रयोजनविशेषतः ।
अनुबन्धविशेषाच्च प्रायश्चित्तं प्रकल्पयेत् ॥

अतएव सकलपापोत्कर्षसद्भावे निर्गुणस्यापि ब्राह्मणस्य स्वर्य वधोऽभिहित एव । यथा भविष्ये

श्रेष्ठविप्रसुवर्णन्तु प्रभूतमपहृत्य च ।
सविशेषानुबन्धश्च ब्राह्मणो द्यूतवल्लभः ॥
प्रायश्चित्तमिदं कुर्य्यान्निबोध गदतो मम ।
लोमहीनो घृताभ्यक्त आत्मानं पावके हुनेत् ॥

सगुणब्राह्मणेन निर्गुणब्राह्मणस्य सुवर्णेऽपहृते सति त्रैवार्षिक-व्रतमुक्तम् । भविष्ये यथा



---

गायत्रीरहितस्य पतितब्राह्मणस्य वेत्यर्थः तथैव प्रागुक्तत्वात् तदन्यूनेति अन्यूनसुवर्ण-परिमाणस्य षोड़शमाषात्मकस्य न्यूनपञ्चनिष्कस्य पञ्चनिष्क न्यूनस्येत्यर्थः ॥ ७० ॥

देवल इति मासोपवासादीनां यत् सुवर्णं तस्य स्तेयमित्यर्थः प्रयोजन-विशेषात इति पूर्वव प्रयोजनविशेषोऽवश्यपोष्यपोषणं तत्र प्रायश्चित्तापकर्ष इह

विप्रस्य गुणवान् विप्रो निर्गुणस्यापहृत्य च।
चतुर्थकालभुञ्जानस्त्रिभिर्वर्षैर्विशुध्यति ॥ ७१ ॥

एतच्चातुर्वार्षिकप्राजापत्यसममिति वक्ष्यति। एतेन

महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः।

इत्यङ्गिरोवचनमेतद्विषयम्। क्षत्रियादिसुवर्णहरणं महापातकं न भवत्येव इत्युक्तमेव। तथापि प्रसङ्गात् प्रायश्चित्तमुच्यते। यथा भविष्ये

यदा च निर्गुणः स्वामी क्षत्रियो वैश्य एव वा।
हर्त्ता च ब्राह्मणो वीर! तदापस्तम्बभाषितम् ॥

स्तेयं कृत्वा सुरां पीत्वा गुरुतल्पञ्च गत्वा ब्रह्महत्याञ्च कृत्वा चतुर्थकालमितिभोजनाः स्युरपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरथ पापं नुदन्ते। वा शब्दात् शूद्रग्रहणम्। अतएव अथ पापं नुदन्त इति बहुवचनम्। एतच्चातुर्वार्षिकप्राजापत्यसममिति गुरुदारगमने वक्ष्यते ज्ञानविषयञ्चैतत्। ब्रह्महत्याव्रतानुवृत्तौ व्यासः।

एतदेव व्रतं स्तेनः पादन्यूनं समाचरेत्।

एतत् पादन्यूनब्राह्मणसुवर्णविषयम्। युक्तञ्चैतत्। सुवर्णापहारे यत् प्रायश्चित्तं तत् पादन्यूनसुवर्णापहारे पादहीनं

---

तु प्रयोजनविशेषो द्यूतादिव्यसनं तत्र प्रायश्चित्ताधिक्यम् अनुबन्धः प्रयत्नः इत्येदित्यार्थः ॥ ७१ ॥

चातुर्वार्षिकप्राजापत्यसममिति सुरापानप्रकरणे विवृतं गुरुदारगमने वक्ष्यति च। आपस्तम्बवचनमाह स्तेयं कृत्वेति ज्ञानविषयमिति ज्ञानतो ब्राह्मणसुवर्णहरणे ब्राह्मणस्य द्वादशवार्षिकं तत्र च षड्वार्षिकप्राजापत्यं वक्ष्यते-

क्रियते इति एवमपरापरपादहान्या प्रायश्चित्ते पादपाद ह्रासः। तथाच सुमन्तुः। सुवर्णस्तेयी सावित्र्यष्टसहस्रमाज्याहुतीर्जुहुयात्। त्रिरात्रमुपवसेत् तप्तकृच्छ्रेण वा पूतो भवति एतदति स्वल्पसुवर्णमाषाद्यपहरणे बोद्धव्यम्। यत्तु भवदेवेनोक्तं यदा कामतोऽपहृत्य सुवर्णं सञ्जातबाधकः स्वामिने समर्पयति परित्यजति वा तदा त्रैवार्षिकं एतत् परित्यागस्यापि पापक्षयहेतुत्वात् द्रव्यत्यागसमुचितस्य प्रायश्चित्तस्याल्पत्वं युज्यत एव एतेन महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिरित्येतद्विषयम्। यदि त्वज्ञानतोऽपहृत्य पश्चात् समर्पयति तदा वार्षिकं कृच्छ्रम्।

स्तेयं कृत्वा सुरां पीत्वा कृच्छ्रं संवत्सरं चरेत्।

इत्यापस्तम्बवचनात् न्यूनसुवर्णहरणे। षट्त्रिंशन्मतं

सुवर्णस्याल्पहरणे वत्सरः परिकीर्त्तितः।
ऊर्द्धं प्राणान्तिकं ज्ञेयं यद्वा ब्रह्महनो व्रतम्।

इति ॥ ७२ ॥

तेनाष्टरत्तिकाहरणे वार्षिकं षोड़शरत्तिकाहरणे द्विवार्षिकमित्याद्यूहनीयम्। तथा

स्वर्णकृष्णलिकामेकामपहृत्य द्विजातयः।

---

ऽज्ञानतस्तदर्द्धं त्रैवार्षिकप्राजापत्यम् इह तु आपस्तम्बवचने क्षत्रियादिसुवर्णापहारे ब्राह्मणस्य चातुर्वर्षप्राजापत्यसमसुक्तं तद् यद्यज्ञानविषयं स्यात् तदा अत्यन्तमसमञ्जसं स्यात् अतो ज्ञानविषयमिति भावः ॥ ७२ ॥

तेनेति अष्टरत्तिकाहरणे वार्षिकमित्याद्येव पाठः प्राचीनभवदेवपुस्तके अत न द्वादशवर्षैः सुवर्णस्य भागकल्पनया किञ्चिन्न्यूनसप्तरत्तिकाभिरेव वार्षिकं

कुर्य्युः शान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये ॥

इत्यनेन कृष्णलापहरणे शान्तपनव्रतमिति तदसङ्गतम् । सकलस्तेयसाधारणोक्तेन विष्णुवचनेन द्वादशवार्षिकस्यापि द्रव्यत्यागपूर्वकत्वात् त्रैवार्षिकवचनस्यापि सगुणनिर्गुणभेदेन भगवता महेश्वरेण व्याख्यातत्वात् । आपस्तम्बवचनेन च कृच्छ्रं संवत्सरं चरेदिति पाठस्य षट्त्रिंशन्मतवचनस्याप्यना-करत्वात् साकरत्वेऽप्युक्तव्यासवाक्यात् शास्त्रीयसुवर्णस्य पाद-पादहानितः सप्तरत्तिकाहरण एव वार्षिकं नाष्टरत्तिकाहरण इति न विरोधः । अपहृतसुवर्णस्य समर्पणे तु । विष्णुः

> दत्त्वैवापहृतं द्रव्यं धनिकस्याभ्युपायतः ।
> प्रायश्चित्तं ततः कुर्य्यात् कल्मषस्यापनुत्तये ॥

इति । अत्र जिकनेनोक्तम् अत्र समर्पणमपि पापक्षयहेतुः अन्यथा दत्त्वैवापहृतं द्रव्यमित्यनेन प्राप्तत्वादभ्युपायत इत्य-स्यानर्थक्यापत्तेः । तेन प्रायश्चित्तह्रासे कर्त्तव्ये पादहानिरेव कर्त्तुं युज्यत एव । अभ्युपायत इत्यनेनाविज्ञातचौरभाव-

---

नाष्टरत्तिकाभिरिति दोषमाकलय्याधुनिकोपाध्यायैः पाठान्तरं भवदेवकृतं यथा तेन न्यूनसुवर्णस्य पञ्चदशमाषकस्य हरणे वार्षिकप्रायश्चित्तोपदेशात् भाग-हारतः प्रतिमासिकं चतुर्विंशतिदिनव्रतं वर्ण्यते इति तदप्ययुक्तम् एतदेव व्रतं स्तेनः पादन्यूनं समाचरेत् इति प्रागुक्तव्यासवचनविरोधात् । सकलस्तेयेति दत्त्वैवापहृतमित्यादिवक्ष्यमाणविष्णुवचनेन हेतुनेत्यर्थः । तर्हि महापातकयुक्ता इत्यङ्गिरो वचनस्य का गतिरित्याशङ्क्याह त्रैवार्षिकवचनस्येति । आपस्तम्बेति व्रतं त्रैवार्षिकं चरेदिति पाठः । साकरत्वेऽपि कृच्छ्रं सांवत्सरञ्चरेदिति पाठस्य षट्त्रिंशद्वचनस्य च साकरत्वेऽपि एतदेव व्रतं स्तेनः पादन्यूनं समाचरेदित्युक्त-व्यासवचनैकवाक्यतया इत्यर्थः दत्त्वैवेति द्रव्यस्थितौ तु पुनः स्तेयापत्तेः स्वाम्यभावे

एवाप्रार्थितधनः स्वयमेव पश्चात्तापगृहीतोऽर्हणार्थं वस्त्रादिनाभ्युपायेन समर्पयतीत्यर्थः । तेन कामतः पादहानिरकामतः पादद्वयहानिरिति ॥ ७३ ॥

अथ क्षत्रादीनां विशेषतो द्वादशवार्षिकादिविधानात् न विप्रे तु सकलं देयमिति विष्णुवचनेन पादपादहानिः । अतएव क्षत्रादीनां परिषदो द्वैगुण्यात् पर्षद्वच्च व्रतमिति देवलवचनेनैव द्वैगुण्यादिकं ब्राह्मणबधमात्रे । अत्र सगुणस्य ब्राह्मणस्य तु कामतो द्वादशवार्षिकम् अकामतः षड्वार्षिकम् । तेनात्र यत्र मरणमुक्तं तत्र मरणं चतुर्विंशतिवार्षिकं वा यत्र द्वादशवार्षिकं तत्राशक्तौ धेनुसङ्कलनरीत्या साशीतिपयस्विधेनुशतं देयं तदशक्तौ चत्वारिंशत् पुराणोत्तरचूर्णीपञ्चशतं तन्मूल्यं वा काञ्चनादिकं देयम् । बालवृद्धस्त्रीणामर्द्धादिकम् उक्तरीत्या उन्नेयमिति ॥ ७४ ॥

इति प्रायश्चित्तविवेके सुवर्णस्तेयप्रायश्चित्तम् ।

---

तु ब्राह्मणाय तद्देयं जिकनोक्तमिति अकामतः पादद्वयहानिरित्यन्तं जिकनोक्तं साक्षाद्दाने यदि लज्जाभयादि स्यात् तदाप्युपायेन समर्पणविधानात् आवश्यकतया पापक्षयहेतुत्वं प्रतीयते स्वामिनोऽप्रार्थितधनः चौरभावे चौरदशायामेव प्रायश्चित्तात् पूर्वं स्वयं समर्पयेदित्यर्थः । तेनेति कामतोऽपहृत्येत्यर्थः । जिकनमतमुपेक्षितं ग्रन्थकृता यद्व यस्यापहृतमित्यादिप्रागुक्तभविष्यपुराणात् दत्त्वैवेति वचनाच्च सर्वत्र समर्पणान्तरमेव प्रायश्चित्तोपदेशात् पादहानिव्यवस्थाया निर्वासनत्वाच्च ॥ ७३ ॥

क्षत्रियादीनामिति तपश्च मनुना प्रोक्तं क्षत्रादीनां निबोध मे इत्यादि भविष्यवचनात् न पादपादहानिरित्यर्थः । ब्राह्मणबधमात्र इति अधमानान्तु वर्णानामुत्कृष्टहनने गुरु । दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः । इति ब्रह्मबधप्रकरणोक्तभविष्यवचनात् तथास्तेयप्रकरणे च औपचारिकपितृत्वादिना

## अथ गुर्वङ्गनागमनप्रायश्चित्तम्।

तदर्थं गुर्वङ्गनानिरूपणं तत्र को गुरुः का चाङ्गना तत्र कश्चित् पितैव गुरुः तथा च मनुः।

निषेकादीनि कर्म्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते॥

याज्ञवल्क्यः।

स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति।
उपनीय दद्द्वेदमाचार्य्यः स उदाहृतः॥

क्रिया निषेकादिका। आभ्यां वचनाभ्यां गर्भाधानादिक्रियाकर्त्तरि गुरुशब्दस्य सङ्केतितत्वात् पिता गुरुः अस्याङ्गना स्त्री माता तत्सपत्नी सवर्णा चोत्तमवर्णा च न हीनवर्णा तद्गमने गुरुतल्पसमानत्वस्य वक्ष्यमाणत्वात् तद्गमनं न महापातकमिति तदसङ्गतम् आचार्य्यादेरपि गुरुत्वश्रवणात् एतयोर्वचनयोरन्यनिषेधार्थत्वाभावात्। तथा च मनुरेवान्यगुरुमाह

पिता वै गार्हपत्याग्निर्माताग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयोऽग्निः साग्नित्रेता गरीयसी॥

---

ब्राह्मणवधप्रायश्चित्तातिरिकस्य युक्तत्वादित्युक्तं सगुणब्राह्मणस्येति ब्राह्मणस्तपसैवेत्यनेन विहिते द्वादशवार्षिके सतीत्यर्थः॥ ७४॥

इति श्रीगोविन्दानन्दकविकङ्कनविरचितायां प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्यां स्वर्णस्तेयप्रायश्चित्तम्।

अथ क्रमप्राप्तं गुर्वङ्गनागमनप्रायश्चित्तं वक्तुमुपक्रमते अथेति का चाङ्गनेति कीदृशी किं गुरुरूपाऽङ्गना किञ्च गुरोः सम्बन्धिनी अङ्गनेति विचारः आभ्यां मनुयाज्ञवल्क्यवचनाभ्यामित्यर्थः अत्र वचनद्वयेऽन्नदानं वेददानञ्च न गुरुत्व-

इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते॥
अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया॥

गौतमः। आचार्य्यः श्रेष्ठो गुरूणां मातेत्येके। पितरि सङ्केतितत्वादाचार्य्ये गौणं गुरुपदमिति चेन्न आचार्य्यादावपि सङ्केतदर्शनात् यथा विष्णुः। त्रयः पुरुषस्यातिगुरवो भवन्ति माता पिता आचार्य्यश्चेति। तथा देवलः

आचार्य्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः।
मातुलः श्वशुरस्त्राता मातामहपितामहौ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवो मताः।

त्राता प्राणरक्षकः। वर्णज्येष्ठः क्षत्रियादीनां ब्राह्मणः। अनेनैकादश गुरवः सङ्केतिताः। कथमनेकेषामेकगुरुशब्दवाच्यत्वम् एकस्य प्रवृत्तिनिमित्तस्याभावादिति चेन्न गुरुरनुगन्तव्य इत्यादिश्रुत्या सदा परितोषणीयत्वादिधर्मस्यैकस्य उपाधित्वात्। यद्यप्याचार्य्यस्यैव सदा परितोषणीयत्वं श्रूयते। तथाप्यन्येष्वतिदिश्यते अतोऽतिदिष्टधर्मोऽप्येकपदप्रवृत्तावुपाधिर्भवति। इष्टिपदप्रवृत्ताविव तद्धर्मसम्बन्धः। शास्त्रीयगुरुशब्दे प्रवृत्तिविषयत्वं वोपाधिर्भवतु वा विशेषा-

---

प्रयोजकं परस्परविरोधात् किन्तु प्राशस्त्यपरतया उपरञ्जकमिति भावः। कथमित्यनेनैकस्यैवेत्येव पाठः। बहुवचनस्यासाधुत्वात् यद्यपीति आचार्य्यमुपक्रम्य गुरुरनुगन्तव्यः इत्युपदिष्टम् अतोऽन्यत्रापि यत्र गुरुपदप्रयोगस्तत्रापि तद्धर्मत्वात् सदा परिचरणीयत्वमतिदिश्यत इत्यर्थः। इष्टिपदेति दर्शपौर्णमासयोः प्रकृति-

ग्रहात् अक्षादिशब्दवदनेकार्थतैव को दोषः। अथाचार्य्यपत्वे गुरुशब्दस्य कथमाचार्य्यपत्नीगमने गुरुतल्पातिदेशः। तथा च गौतमः। आचार्य्यपुत्रशिष्यभार्य्यासु चैवमिति। तथा याज्ञवल्क्यः

> मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा।
> आचार्य्याणीं स्वाञ्च सुतां गच्छंस्तु गुरुतल्पगः॥

इति नैतस्य हीनजातीयपत्न्यभिप्रायेणाप्युपपत्तेः अतिदेशस्योपदेशसापेक्षत्वात्। प्रथमावगतोपजीव्यगुरुशब्दसङ्कोचे हेत्वभावात्। न च

> पितृभार्य्यां समारुह्य मातृवर्ज्जं नराधमः।
> भगिनीञ्च निजां गत्वा निष्कृतिर्न विधीयते॥

---

भूतयोरिष्टित्वं सिद्धमेव तद्विकृतिभूतेषु दीक्षणीयादिष्वपीष्टिपदप्रयोगो दृश्यते तत्रातिदेशागतदर्शपौर्णमासधर्मसम्बन्धो यथा इष्टिपदप्रवृत्तावुपाधिरित्यर्थः। ननु वषट्कारहोमप्राधान्यम् इन्द्राग्नियागप्राधान्यं वा दर्शपौर्णमासादिषु सर्व्वत्रैव इष्टिपदप्रवृत्तावुपाधिरस्तु इह तु प्रकरणात् गुरुपदप्रवृत्तावाचार्य्यत्वमेवोपाधिः अन्यत्र तु गुरुपदं गौणं सदा परिचरणीयत्वलाभार्थम् अन्यथा गोपदस्य जाड्यादिधर्मेण वाहिके प्रवृत्तौ तस्यापि गोत्वापत्तिरित्याह शास्त्रीयेति ननु गौणेऽपि शास्त्रीयप्रयोगो दृश्यते यथा विज्ञेया विविधा सुरेति यथा वा श्रौहयोऽष्टादश स्मृता इति। अतः शास्त्रीयप्रयोगानुगमक इत्याशङ्क्याह भवतु वेति को दोष इति प्रकरणाद्यभावात् विनिगमनाभावाच्च सर्व्वेषामेव ग्रहणं भविष्यतीति भावः। एवमिति गुरुतल्पवदित्यर्थः। ननु गौतमादिवचने भार्य्यादिपदसङ्कोचे किं प्रमाणमित्यत आह अतिदेशस्येति प्रथमावगतेति उपदेशावगतेत्यर्थः तस्मादुपजीव्यबाधभिया उपजीवकभार्य्यापदे सङ्कोचोऽस्त्विति भावः। न चेति गुरुदारगमनं महापातकमित्यत्र सामान्यवाचिगुरुशब्दस्य संवर्त्तवचने पितृशब्ददर्शनात् पितृरूपगुरुविशेषपरतया सङ्कोचोऽस्त्विति न वाच्यमित्यर्थः।

इति संवर्त्तवचने पितृशब्ददर्शनात् सामान्यवाचिगुरुशब्द-सङ्कोचोऽस्त्विति वाच्यम् एतस्य प्रायश्चित्तविधिपरत्वेनाचार्य्यादिव्युदासपरत्वाभावात्। अन्यथोभयपरत्वे वाक्यभेदापत्तेः। पितृशब्दस्य च गुरोर्विशेषणरूपत्वाभावान्न सामान्यवचन-सङ्कोचकत्वम् ॥ ७५ ॥

किञ्च याज्ञवल्क्यस्वरसात् निषेकादिवेददानात्मकर्मकर्त्तुरेवाङ्गना गुर्वङ्गना तद्गमनमेव महापातकं न क्षत्रियादीनां भवेत् तेषां वेदाध्यापकत्वाभावात् किञ्चैवमवेददातुः पितुर्गुरुत्वाभावात् तदङ्गनागमनं महापातकं न स्यात्। किञ्चैवं मातृगमनस्य महापातकत्वे मातृगमनं दुहितृगमनं स्नुषागमन-मित्यतिपातकानीति विष्णुहारीतवचनविरोधः स्यात् तस्मात् मातृव्यतिरिक्तैकादशगुर्वङ्गनागमनमेव महापातकमिति युज्यते देवलवचनादिति। अत्र भवदेवेनोक्तं नात्र गुरोरङ्गना।

---

एतस्येति निषेधविधिमुपजीव्य एव प्रायश्चित्तविधिः प्रवर्त्तते अतः प्रायश्चित्तविधायकं संवर्त्तवचनम् उपजीव्यनिषेधविध्यवगतं गुरुशब्दस्याचार्य्यादिपरत्वमपनेतुं न क्षम इति भावः। अन्यथेति पितृभार्य्यैव गुर्वङ्गना मान्या तद्गमने निष्कृत्य-भावश्चेति संवर्त्तवचनस्योभयपरत्वे वाक्यभेदापत्तिरित्यर्थः। ननु संवर्त्तवचनस्थ-पितृपदं स्वीयं गुर्वङ्गनागम इति मनुवचने सामान्यवाचिगुरुपदस्य विशेषकं भवतु इत्यत आह पितृशब्दस्येति मनुयाज्ञवल्क्याभ्यां गुरुशब्दस्य पितरि सङ्केतित-त्वात् उभयोः पर्य्यायशब्दयोः वृक्षमहीरुहवद्विशेषणविशेष्यभावभावात् मुनि-द्वयस्य वचनद्वये परस्परनिराकाङ्क्षयोः पितृगुरुपदयोर्विशेषणविशेष्यभावाभावाद्वा पितृपदं सामान्यवाचिगुरुपदस्य न व्यावर्त्तकमित्यर्थः ॥ ७५ ॥

ननु पितृपदं न च विशेषणं न वा सङ्कोचकं किन्तु मनुवचनस्थगुरुपदस्य पितृमात्रपरत्वे तात्पर्य्यग्राहकं संवर्त्तवचनमित्याशङ्क्याह किञ्चेति ननु तथैवा-स्त्वित्यत आह- किञ्चेति। अथवा याज्ञवल्क्यमनुवचनयोर्वेददानं पोषणञ्च

गुर्वङ्गनेति षष्ठीसमासः तत्पुरुषसमासाश्रयणे निषादस्थपतिवत् षष्ठ्यर्थलक्षणापत्तेः। अतो गुरुश्चासावङ्गना चेति कर्मधारयः। गुरुत्वञ्च मातुरेव न मातुः सपत्न्याः। शरीरोत्पादकत्वेनोपाधिना मातापित्रोर्गुरुशब्दाभिधेयत्वात् अतएवाचार्य्यादिषु गुरुशब्दो गौणः तद्धर्मप्राप्त्यर्थः। गुरुपत्नीं न गच्छेदित्यत्रागत्या षष्ठीसमासः पत्नीशब्दस्य परिणीतावचनत्वात् गुरुश्चासौ पत्नी चेति यदपेक्षया पत्नीत्वं तदपेक्षया गुरुत्वायोगात् न कर्मधारयः इह त्वङ्गनाशब्दस्य स्त्रीमात्रवचनत्वात् युज्यत एवेत्यतोऽत्र गुरुशब्दस्य मातृपरत्वे गुरुपत्नीं न गच्छेदित्यत्रापि मातृपरत्वमेव। गुरुतल्पोऽभिभाष्येन इत्यत्र गुरुस्तल्पं कलत्रं यस्येति मातुरेव ग्रहः। अतएव मातुः सपत्नीमिति याज्ञवल्क्यवचने मातुः सपत्न्याम् आचार्य्यपत्न्याञ्च गुरुतल्पातिदेशो घटत एवेति। तदसम्मतं मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानीति विष्णुहारीताभ्यां मातृगमनस्यातिपातकत्वाभिधानात् ॥ ७६ ॥

न चात्र मातृसपत्नीपरत्वं मातृशब्दस्य मुख्यार्थत्यागापत्तेः तस्य जननीवचनत्वात् न च षष्ठीसमासे लक्षणायामपि

---

परस्परविरोधात् उत्कर्षख्यापकमात्रं किन्तु निषेककारित्वमेव गुरुत्वप्रयोजकमित्यत्र आह किञ्चेति। तस्मादिति विष्णुहारीतविरोधात् देवलवचनादित्यर्थः। निषादस्थपतिवदिति अनयैव ऋचा निषादस्थपतिं याजयेदित्यत्र निषादस्य स्थपतिरित्यर्थे षष्ठ्यर्थलक्षणाभिया कर्मधारय एव सत्यप्युत्तरकालीननिषादयाजनदोषाभावकल्पना गौरवे स्वीकृत इत्यर्थः। स्थपतिरीश्वरः। गुरुतल्प इति तल्पं शय्याट्टदारेष्वित्यमरकोषः ॥ ७६ ॥

न चेति यद्यपि मातृगमनपदे गुर्वङ्गनापदेऽप्यविशिष्टा लक्षणा तथापि षष्ठ्यर्थ-

मुख्यार्थत्यागः। किञ्च कर्मधारयसमासेऽङ्गनापदवैयर्थ्या-पत्तिश्च गुरुगमनमित्येतावतैवार्थसिद्धेः दुहितुः पितृगमन-मतिपातकमेव। किञ्च गुरुपत्नीं न गच्छेदित्यादिषु बहुषु वचनेषु गुरुपत्नीगुरुतल्पगुरुभार्य्यादिपदस्थपत्न्यादिपदा-नामनर्थकता स्यात् गुरुपदेनैव मातुः प्राप्तेः। किञ्च निःसन्दिग्धार्थं मातृपदमेव प्रयोक्तुमुचितं मुनीनां न तु गुरुपत्न्यादिपदं सन्दिग्धार्थम् ॥ ७७ ॥

एवं गौरवातिशयोऽपि लभ्यते। अतएव सहस्रेण पितु-र्माता गौरवेणातिरिच्यते इति। जिकनन्तु आचार्य्यपितृ-महीपतीनामत्र गुरुशब्देनोपादानं यथा देवलः। उपाध्याय-

---

लक्षणायां गुर्वङ्गनापदयोर्न मुख्यार्थत्यागः गुरुसम्बन्धाश्रयस्य लक्ष्यत्वात् मातृ-गमनमित्यत्र तु मातृपदे मुख्यार्थत्याग एव सपत्नीत्वाक्रान्तस्यैव लक्ष्यत्वात्। वस्तुतो या मातुः सपत्नी सैव सपत्नीत्वाक्रान्तप्रकारेणोच्यते यथा गङ्गायां घोष इत्यत्र तीरत्वाक्रान्ते लक्षणा वस्तुतो यद्गङ्गातीरं तदेव तीरत्वप्रकारेणोच्यते। ननु षष्ठ्यर्थलक्षणायामपि तथेति वाच्यं तस्यानिरूढत्वेन शक्तितुल्यत्वादाति-देशिकमुख्यार्थोऽस्त्येवेति। किञ्च उभयत्राविशिष्टैव षष्ठ्यर्थलक्षणा किन्तु मातृपदे लक्षणान्तरमधिकमित्यपि गौरवं मन्तव्यम् अतो मातृपदे न लक्षणा अतएव जननीं वाप्य विज्ञाय नाम्रतः शुद्धिमाप्नुयादिति षट्त्रिंशन्मतवचने जननीगमनस्यातिपातकत्वादज्ञानेऽपि मरणमुक्तम्। ननु गुरुगमनमित्युक्ते दुहितुरपि पिता गुरुस्तद्गमनं महापातकं स्यादतस्तद्व्यावर्त्तनायाङ्गनापदमित्या-शङ्क्याह दुहितुरिति दुहितृगमनस्यातिपातकत्वान्न महापातकत्वम् अतोऽव्या-वर्त्तकत्वादङ्गनापदं व्यर्थमेवेत्यर्थः। न च दुहितृगमनं पुंस एवातिपातकमतो दुहितुर्महापातकवारणायाङ्गनापदं सार्थकमिति वाच्यं पुंसः स्त्रियागमनेन यत् पातकं स्त्रिया अपि तदेव यथा पुत्रगमनं मातुरतिपातकं ततश्च दुहितुरपि पितृगमनमतिपातकमेवेति ॥ ७७ ॥

एवमिति देवलवचने गुरुतल्पे कष्टतमानीत्यत्र गुरुतल्पमध्ये गुरुगमन-

राजपितृभार्य्यागमनानि गुरुतल्पगमने कष्टतमानि। पापातिशययुक्तानीत्यर्थः। उपाध्यायोऽत्राचार्य्यं तथा बौधायनः।

पितुर्गुरोर्नरेन्द्रस्य भार्य्यां गत्वा प्रमादतः।
गुरुतल्पी भवेत्तेन पूर्वोक्ता तत्र निष्कृतिः॥

तप्तलौहशय्याशयनादिः। गुरुरत्राचार्य्यः। नरेन्द्रग्रहणाद्राजा अत्राभिषिक्तः क्षत्रियः। अतएव राज्ञी प्रव्रजिता धात्रीत्यादिषु राज्ञीपदं वैश्यनृपतिपत्नीपरम् आचार्य्याणीं स्वाञ्च सुतामित्यत्राचार्य्याणीपदं हीनवर्णाचार्य्यपत्नीपरमिति तत् चिन्त्यम्॥ ७८॥

उच्यते यद्यपि देवलवचनेनैव एकादशगुरवो दर्शितास्तथाप्यत्र पितैव गुरुर्ग्राह्यो नाचार्य्यादिः तत्पत्नीगमनस्य गुरुतल्पगमनसमत्वानुपपत्तेः अनुपातकत्वं गतेश्च। यथा विष्णुः पितृपितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमन

---

मित्युक्ते गुरुपदात् स्फुटमेव गौरवातिशयप्रतीतेर्महापातकं युज्यत एवेत्यर्थः। अतएवेति राज्ञी प्रव्रजिता धात्रीत्यादौ गुरुतल्पातिदेशादित्यर्थः। तच्चिन्त्यमिति देवलवचने गुरुतल्पे कष्टतमानीत्यत्र गुरुतल्पमध्ये इति निर्धारणसप्तम्याऽन्येषामपि गुरुतल्पत्वमायातं यदि च गुरुतल्पपदं गुरुतल्पातिदिष्टमित्युच्यते तदा स्पष्टमेव राजाचार्य्यभार्य्यागमनं न महापातकमिति। एवञ्च पितृभार्य्यापदं हीनवर्णविषयमेवेति चिन्त्यपदस्यार्थः॥ ७८॥

स्वसिद्धान्तमाह उच्यत इति नानार्थत्वे गौरवात् मनु याज्ञवल्क्यवचनाभ्यां देवलवचनैकवाक्यतया निषेककर्तृत्वोपाधिना पितरि मुख्यं गुरुपदम् आचार्य्यादौ तु गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरेत्यादिवदौपचारिकं देवलोक्तगुरुपदम् अतएव याज्ञवल्क्ये स गुरुरित्यनेन निषेककर्त्तरि पितरि गुरुपदं सङ्केत्य उपनीयेत्यनेन वेददातरि आचार्य्यसंज्ञाविधानात् आचार्य्ये मुख्यं गुरुत्वं नास्तीति स्फुटमुक्तं तथा पितृभार्य्यास्तु विज्ञाय सवर्णां योऽधि-

समं पितृस्वसृमातृस्वसृगमनञ्च श्रोत्रियर्त्विगुपाध्यायमित्र-
पत्न्यभिगमनञ्चेत्यभिधाय।

अनुपातकिनस्त्वेते महापातकिनो यथा।
अश्वमेधेन शुध्यन्ति तीर्थानुसरणे न वा॥ ७९॥

न चात्राचार्य्यादिपत्नीनां हीनवर्णानां ग्रहणं नृपस्य क्षत्रियेतरस्य पत्न्या इति युज्यते आचार्य्यभार्य्यादेर्विशेषत्वात् गुर्वङ्गनाशब्दस्य सामान्यार्थत्वात् सामान्यविशेषन्यायेन गुर्वङ्गनाशब्द एव सङ्कोचस्य युक्तत्वात् पितृपत्न्यास्तु हीनवर्णाया ग्रहणं युक्तमेव मातृगमनस्यातिपातकत्वात् सपत्नीमातृगमनस्य गुर्वङ्गनागमनत्वेन महापातकत्वात् अर्थादनुपातके लघुनि हीनवर्णायाः पितृपत्न्या ग्रहणम्। तथा च याज्ञवल्क्यः।

---

गच्छति। जननीं वाप्यविज्ञाय नामतः शुद्धिमाप्नुयादिति षट्त्रिंशन्मतवचने पितृभार्य्यापदात् गुर्वङ्गनागमनमित्यत्र गुरुपदं पितृतात्पर्य्यकम् एवञ्चाचार्य्यादि-पत्नीगमनं न महापातकम् अतएवाचार्य्याण्यादिगमने गुरुतल्पातिदेशो मुनीनां सङ्कुचत इत्याह तत्पत्नीगमनस्येति अनुपातकत्वश्रुतेश्चेति महापातकतुल्यानि पापान्युक्तानि यानि च। तानि पातकसंज्ञानि तदूनमुपपातकमितिवचनात् महापातकतुल्यस्यैवानुपातकत्वादित्यर्थः॥ ७९॥

न चात्रेति क्षत्रियेतरस्य नृपस्य पत्न्याश्च ग्रहणं न चात्र युज्यत इत्यर्थः। हेतुमाह आचार्य्यादेरिति देवलवचनात् गुरुपदादेवैकादशानामेवोपस्थितेस्तस्य सामान्यत्वम् आचार्य्यपदात्तु गुरुविशेषस्येति तस्य विशेषत्वं ततश्च गुर्वङ्गनागमो महापातकमिति सामान्यशास्त्रस्य आचार्य्यभार्य्यागमनमनुपातकमिति विशेष-दर्शनात् पदाहवनीयन्यायेन तदितरपरत्वं न च। आचार्य्यभार्य्यापदे हीनवर्णा भार्य्या सङ्कोचोयुक्तः गुर्वङ्गनापदे गुरुपदस्याचार्य्यपरत्वे निर्णीते तदनुरोधादेव भार्य्यापदे सङ्कोचो वाच्यः अत्र च प्रथमतः सामान्यविशेषन्यायात् गुर्वङ्गनाशब्दस्या-

मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ।
आचार्य्याणीं स्वाञ्च सुतां गच्छंस्तु गुरुतल्पगः ॥

गुरुतल्पगः गुरुतल्पगवदित्यर्थः । भगिन्यादिषु गुरुतल्पगत्वानुपपत्तेः । स्वसुता असवर्णा ग्राह्या सवर्णसुतागमनस्यातिपातकत्वात् संवर्त्तः ।

पितृव्यदारगमने भ्रातृभार्य्यागमे तथा ।
गुरुतल्पव्रतं कुर्य्यान्नान्या निष्कृतिरुच्यते ॥

अत्र गुरुतल्पव्रतातिदेशात् पितृव्यादिभार्य्यागमनं गुरुतल्पगमनसममित्येव गम्यते । अतएव विष्णुवचने नृपाचार्य्यादिपत्नीगमनस्यानुपातकत्वश्रुतेः । पितुर्गुरोर्नरेन्द्रस्येति बौधायनवचने गुरुतल्पपदं गौणम् अत्रापि पितृभार्य्या हीनवर्णा ग्राह्या विष्णुवचनैकवाक्यत्वात् । अतः पितैव गुरुर्मनुवचनात् तत्पत्न्येव गुर्वङ्गना सा तु न माता हारीतविष्णुवचने चातिपातकत्वश्रुतेः किन्तु सपत्नी माता सा च समानवर्णा उत्तमवर्णा च न तु हीनवर्णा विष्णुवचने अनुपातकत्वश्रुतेः । एतेनैकादशानामेव गुरूणां मुख्यपत्नीगमनं महापातकं विष्णु-

---

चार्य्यादिभार्य्येतरपरत्वे सति कुतो भार्य्यापदेन सङ्कोच इति भावः । तर्हि विष्णुवचने पितृदारपदे कुतोहीनवर्णाग्रहणमित्यत आह पितृपत्न्यास्त्विति सपत्नीमातृगमनस्येति मनुयाज्ञवल्क्यवचनात् षट्त्रिंशन्मतवचनाच्च प्रागुक्तयुक्त्यापि पितरि गुरुपदस्य मुख्यत्वे निर्णीते सपत्नीमातृगमनस्य महापातकत्वं निर्णीतमेव ततश्च तदनुरोधात् विष्णुवचने पितृदारपदं हीनवर्णपरमेव इत्यर्थः । गुरुतल्पवदित्यर्थे हेतुमाह भगिन्यादिष्विति अत्रेति विष्णुवचने पितृव्यपितामहमातामहमातुलश्वशुरनृपाचार्य्योत्तमवर्णानां संवर्त्तवचने च ज्येष्ठभ्रातुरिति नराणां देवलोक्तगुरूणां सपत्नीगमनस्य गुरुतल्पसमत्वाभिधानात् बाधकत्वेनैवं गौणगुरुत्वप्रसिद्धेर्मनुयाज्ञवल्क्यवचनाच्च पितृगमन एव महापातकं न तु पितृव्यादीना-

वचने च पत्नीपदम् अमुख्यस्त्रीपरमिति कल्पतरूक्तं निरस्तम्। यद्यपि पञ्चानां पितृत्वं श्रूयते। तथा

जनकश्चोपनेता च यश्च विद्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः॥

इति। अत्रापि जनकव्यतिरिक्ते तन्नीणां लोके जनक एवाभिधानात्। एकस्य प्रवृत्तिनिमित्तस्याभावात्। ननु जनकस्यापि संस्कारकर्त्तुरेव मनुना गुरुत्वमुक्तं याज्ञवल्क्येन च वेददातृत्वेनेति कथं संस्कारकर्त्तुः पितुरवेददातॄणां क्षत्रियादीनाञ्च गुरुत्वमिति न देवलादिवचनेन पितृत्वमात्रेण गुरुत्वावगतेः संस्कारकर्त्तृत्वं वेददातृत्वञ्चातिशयार्थम्। इति गुर्वङ्गनानिरूपणम्॥ ८०॥

अथ प्रायश्चित्तानि। तत्र मनुः।

गुरुतल्पोऽभिभाष्यैनस्तप्ते सुप्यादयोमये।
शूर्मीं ज्वलन्तीं वाश्लिष्य मृत्युना स विशुध्यति॥

---

मित्यर्थः। अतः एवेति विष्णुवचनैकवाक्यतया बौधायनवचने गौण गुरुतल्पपदमित्यर्थः। अत्रापि बौधायनवचनेऽपीत्यर्थः उपसंहरति एकस्येति एकस्य प्रवृत्तिनिमित्तस्याभावात् नानार्थकल्पनायाञ्च गौरवात् लोके जनक एव प्रसिद्धेश्च तत्रैव मुख्यं पितृपदमिति भावः। पितृत्वमात्रेणेति न च मनुवचने विशेषदर्शनात् सामान्यदेवलवचनस्य विशेषपरत्वमेव न्याय्यं न तु विशेषस्य सामान्यपरत्वमिति वाच्यं मनुयाज्ञवल्क्यवचनयोः परस्परविरोधात् गौरवाच्च पोषणवेददानयोरुत्कर्षव्यापकत्वमेव निषेकादिसंस्काराणान्तु प्रत्येकेन नानार्थतापत्तिः समुदाये न च क्षत्रियादिपितुरुपनयनादिसंस्कारकर्त्तृत्वाभावात् गुरुत्वाभावे तदङ्गनागमनं महापातकं न स्यात् तथा द्विजसंस्कारकारिब्राह्मणस्यापीति तथाच प्रथमोपस्थितनिषेककारित्वोपाधिना देवलवचनैकवाक्यतया पितर्य्येव गुरुपदं शक्तमित्यर्थः॥ ८०॥

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैरृतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥

मातृगमनस्यातिपातकत्वेन गुरुस्तल्पं यस्येति समासासम्भवात् गुरोस्तल्पं तल्पं यस्येति व्यधिकरणबहुव्रीहिः। शूर्म्मी लौहप्रतिमा हारीतेन मृण्मयीप्रतिमा दर्शिता। यथा गुरुतल्पगो मृण्मयीं स्त्रीप्रकृतिम् अग्निवर्णां कृत्वेत्यादि। तेनानयोर्विकल्पः। वाशब्दात्तप्तलौहशय्याशयनज्वलच्छूर्म्मीसमालिङ्गनयोर्विकल्पः। याज्ञवल्क्येन च समुच्चयो दर्शितः। यथा तप्तायः शयने सार्द्धमा यस्या योषिता स्वपेदिति। तदुत्तमवर्णगुरुतल्पविषयम्। स्वयं वेति उत्कर्त्तनमपि क्षुरेण। क्षुरेण वा शिश्नवृषणावुत्कृत्येत्यादि शङ्खलिखितवचनादेतत् प्रायश्चित्तत्रयं मरणान्तिकम्। अङ्गिराः

गुरुतल्पी शिलां तप्तामायसीं वा स्वयं विशेत्।
उत्कृत्य वृषणौ वापि धारयेदञ्जलौ स्वयम् ॥
मरणायाथवा पङ्गां प्रव्रजेद्दिशमुत्तराम्।
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् ॥
महाव्रतं चरेद्वापि दद्यात् सर्वस्वमेव वा ।
गुर्वर्थं वा हतो युद्धे मुच्यते गुरुतल्पगः ॥

अत्र मरणान्तिकं ज्ञानकृते मातृव्यतिरिक्तसवर्णोत्तमवर्णगुरु-

---

प्रायश्चित्तमाह यथेति तदुत्तमवर्णेति क्षत्रियादिजातिपुत्राणां सपत्नीमातृ-ब्राह्मणीगमनविषयमित्यर्थः प्रायश्चित्तत्रयमिति तप्तलौहशय्याशयनं ज्वलच्छूर्मी-समालिङ्गनं शिश्नवृषणच्छेदनञ्च त्रयं समुच्चयस्तूभयात्मकत्वात्न पृथगुक्तः गुरुतल्पीति आयसीं प्रतिमाम् इत्यर्थः। चतुर्विंशतिवार्षिकमिति एतच्च प्राणान्तिकस्थाने बोद्धव्यम्। कामतो द्विगुणमिति द्वादशवार्षिकसमप्रागुक्तत्रैवार्षिकमहाव्रतस्य

दारगमने बोद्धव्यम्। महाव्रतञ्चरेदिति चतुर्विंशतिवार्षिकं बोद्धव्यम्। यथा प्राणायामशताचरणगायत्रीजपसहित-त्रैवार्षिकब्रह्महत्याव्रतानुवृत्तौ व्यासः।

गत्वैतदेव कुर्वीत गुरुतल्पमकामतः।
कामतो द्विगुणं प्रोक्तं पूर्वेषु च यदुच्यते॥

इति पूर्वेषु महापातकेषु॥ ८१॥

अत्र कामत इत्युपादानात् अकामकृते त्रैवार्षिकं महाव्रतं सर्वस्वदानं वा करणीयमिति कर्त्तव्यताबाहुल्यात् त्रैवार्षिक-मपि द्वादशवार्षिकसमानमिदमिति ब्रह्मवधप्रायश्चित्ते दर्शित-मेव। यत्तु आपस्तम्बेन स्तेयं कृत्वा सुरां पीत्वा गुरुतल्पञ्च गत्वा ब्रह्महत्याञ्च कृत्वा चतुर्थकालामितभोजनाः स्युरपो-ऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरन्त एते त्रिभि-र्वर्षैरथ पापं नुदन्त इति त्रैवार्षिकं दर्शितम्। तच्चतुर्थ-कालाहारत्वेन सार्द्धवर्षोपवासात् सार्द्धवत्सरनक्तेन च चातु-र्वार्षिकप्राजापत्यसमम् एतत् सगुणाभिगन्तृविषयं सुवर्णस्तेये श्रीमहादेवपादैः सगुणविषयत्वेन व्यवस्थितत्वात्। रेतः-सेकात् पूर्वमित्यन्ये। यत्तु मनुवचनम्।

---

द्विगुणं षाड्वार्षिकं महाव्रतमित्यर्थः पूर्वेषु महापातकेषु यद्द्वादशवार्षिकं व्रत-मुच्यते तदपि कामतो द्विगुणमित्यर्थः॥ ८१॥

अत्रेति अत्र वचने कामतो द्विगुणाभिधानात् पूर्वेषु सुरापानादिषु महा-पातकेष्वपि कामतस्त्रैवार्षिकं महाव्रतं मन्तव्यं प्रागुक्ताङ्गिरोवचनोक्तसर्वस्वदानं वा करणीयमित्यर्थः। इतिकर्त्तव्यतामाह व्यासः। ब्रह्महाब्दत्रयं विप्रो गायत्रीमभ्यसेत् सदा। प्राणायामशतं कुर्य्यात् प्रत्यहं नियतः शुचिः॥ भिक्षाशी निवसेन्नित्यमरण्ये संयतेन्द्रियः। षोडश ब्राह्मणान् विप्रो भोजयित्वा समाहितः॥

खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने ।
प्राजापत्यं चरेत् कृच्छ्रमब्दमेकं समाहितः ॥

इति तदज्ञानतो व्यभिचारिगुरुपत्नीगमनविषयम् । अन्यानि लघुप्रायश्चित्तानि अत्यन्ताभ्यस्तव्यभिचारि गुरुपत्न्यां बोद्धव्यानि तदत्र ज्ञानतो गुरुतल्पगमने यथोक्तं मरणं चतुर्विंशतिवार्षिकं वा अज्ञानतो द्वादशवार्षिकं तदशक्तौ धेनुसङ्कलनरीत्या अशीत्युत्तरपयस्विधेनुशतं देयम् । तदशक्तौ चत्वारिंशत्पुराणोत्तरचूर्णीपञ्चशतं तन्मूल्यं वा काञ्चनादिकं देयं बालवृद्धस्त्रीणां पूर्वोक्तरीत्या अर्द्धादिकमूहनीयम् । एतच्चातुर्वर्ण्यविषयं सर्वेषामेव गौरवाविशेषात् पारिषद्वचनस्य ब्रह्मवधविषयत्वात् । विप्रे तु सकलं देयमिति विष्णुवचनस्याभक्ष्यभक्षणप्रकरणाम्नानादिति दिक् ॥ ८२ ॥

इति प्रायश्चित्तविवेके गुर्वङ्गनागमनप्रायश्चित्तम् ।

## अथ पतितसंसर्गप्रायश्चित्तम् ।

तदर्थं संसर्गनिरूपणम् । तत्र महापातकिसंसर्गस्य पातकहेतुत्वमाह मनुः ।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।

---

प्रयच्छेत् वस्त्रयुग्मानि हिरण्यञ्चापि शक्तितः ॥ एतदिति अज्ञानतः सगुणाभिगन्तृविषयमित्यर्थः । रेतःसेकादिति भविष्ये सगुणविषयत्वे नास्य वचनस्य व्यवस्थितत्वात्तदितरकल्पनायां प्रमाणाभाव इत्यस्वरसः । खट्वाङ्गी त्रिशूली । वाशब्दश्चार्थे तदशक्ताविति वक्ष्यमाणधेनुसङ्कलनरीत्येत्यर्थः । सर्वेषामिति सर्वेषां वर्णानां गुरुत्वाविशेषादित्यर्थः ॥ ८२ ॥

इति तत्त्वार्थकौमुद्यां गुर्वङ्गनागमनप्रायश्चित्तम् ।

महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥

ननु तैः सहेति निर्देशान्महापातकिसंसर्गस्यैव पातकहेतुत्वं लभ्यते न पातकान्तरसंसर्गस्य प्रायश्चित्तमपि महापातकिसंसर्ग एव मनुना दर्शितम् । यथा मनुः ।

एषा पापकृता मुक्ता चतुर्णामपि निष्कृतिः ।
पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः ॥
यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्य्यात्तत्संसर्गविशुद्धये ॥

इति । अत्र चतुर्णामित्यनेन ब्रह्महत्यादिमहापातकचतुष्टयमुपसंहृत्य यो येन पतितेनेत्युक्तं महापातकपरमेव । उच्यते ।

प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा ।
न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥
एनस्विभिरनिर्णिक्तैर्नार्थं कञ्चित् समाचरेत् ।
कृतनिर्णेजकांश्चैव न जुगुप्सेत कर्हिचित् ॥

इति मनुना सामान्यतः पापिष्ठसंसर्गस्य निषिद्धत्वात् । निषिद्धाचरणात् पापोत्पत्तिः पापिष्ठसंसर्ग एव दर्शिता । प्रायश्चित्तमपि सामान्येन दर्शितम् । यो येन पतितेनेति सामान्यनिर्देशात् चतुर्णामिति हिंसाभक्ष्यभक्षणस्तेयागम्यागमनाख्य-

---

इदानीं संसर्गप्रायश्चित्तं विवेक्तुमुपक्रमते अथेति । अत्र संसर्गमध्ये इत्यर्थः । प्रायश्चित्तीयतामिति दैवात् प्रमादात् एतच्छरीरकृतदुष्कृतत्वेन पूर्वकृतेन क्षयरोगादिसूचितेन प्रायश्चित्तीयतां प्रायश्चित्तार्हतां प्राप्येत्यर्थः अनिर्णिक्तैरकृतप्रायश्चित्तैः । ननु ब्रह्महत्यादीनां चतुर्णामित्युपक्रम्याभिधानात् कथं सामान्य-

प्रकारचतुष्टयपरं न तु ब्रह्महत्यादिविशेषार्थं लघीयसामपि हिंसाभक्ष्यभक्षणस्तेयागम्यागमनादीनां मनुना पूर्वमुक्तत्वात्। अपि च संसर्गपापश्रुत्या श्रुतिः कल्प्यमाना पापिष्ठसंसर्गी पापी भवतीति सामान्यश्रुतिरेव कल्पनीया लाघवात् ॥ ८३ ॥

होलाकाधिकरणन्याय एवात्र जागर्त्ति। विष्णुनापि सामान्येनैव स्मृतम् । यश्च येन पापात्मना सह संसृजेत् स तस्यैव प्रायश्चित्तं कुर्य्यात्। गोतमोऽप्याह ब्रह्महसुरापगुरुतल्पगपितृमातृयोनिसम्बन्धागस्तेनाभक्ष्यभक्षकनास्तिकनिन्दि-

---

निर्देश इत्याशङ्क्याह चतुर्णामिति । ननु तथापि संशयः किंवा हिंसादिसामान्यानां किंवा ब्रह्महत्यादिविशेषाणां चतुर्णामित्यनेनोपसंग्रह इत्यत्राह अपि चेति ॥ ८३ ॥

होलाकेति प्राच्यैर्होलाकाख्यवसन्तोत्सवः क्रियते तदाचारात् अनुमीयमाना प्राच्यैर्होलाका कर्त्तव्या इति विशेषश्रुतिर्न कल्प्यते किन्तु देशधर्मः कर्त्तव्य इति सामान्यत एव अन्यथा देशान्तरे आचारान्तरात् श्रुत्यन्तरकल्पनागौरवं स्यादिति होलाकाधिकरणन्यायः। अतएव मरीचिः येषु देशेषु यच्छौचं धर्माचारश्च यादृशः। तत्र तं नावमन्येत धर्मस्तत्रैव तादृशः॥ देवलोऽपि देशधर्मश्च कर्त्तव्यः कुलधर्मश्च शाश्वतः। तद्वदत्रापि पापिष्ठसंसर्गी पापी भवतीति सामान्यश्रुतिरेव कल्पनीया वक्ष्यमाणगौतमवचने महापातकीतरसंसर्गिणोऽपि पातित्योक्तेः श्रुत्यन्तरकल्पनागौरवं प्रसज्येत। अत्र दायभागकारः प्राच्यानामाचारात् होलाका कर्त्तव्येति सामान्यश्रुतिरेव कल्प्यते लाघवात् तावतैव तदाचारप्रामाण्योपपत्तेः न तु प्राच्यैर्होलाका कर्त्तव्या इति विशेषश्रुतिः कल्प्या गौरवादित्याह तदशोभनं कल्प्य श्रुतेर्देशमात्रे तात्पर्य्यम् उत देशविशेषे आद्ये प्राच्येतरदेशेऽपि होलाकानुष्ठानप्रसङ्गो दुर्निवारः द्वितीये तु गौरवं तदवस्थमेव किन्त्वर्थगौरवमधिकम्। किञ्च यत्रैव तात्पर्य्यं तादृशविशेषपदवत्येव श्रुतिः कल्पयितुं न्याय्या प्रामाणिकगौरवन्तु गुण एव अन्यथातिप्रसङ्गः। विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्। वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यत इति वचनात् प्रकरणात् अभक्ष्यभक्षण-

तकर्माभ्यासिपतितात्याग्यपतितत्यागिनश्च पतिताः पातक-
संयोजकाश्च तैश्चाब्दं समाचरन्। अत्र पतितात्यागीति
सामान्येनैव निर्दिशति। तैश्चाब्दं समाचरन्निति द्वितीय-
संसर्गिणोऽपि पतितत्वमुक्तम्। नन्वेकग्रामनिवासादिना
संसर्गेन पतितत्वं स्यात् न संसर्गविशेषाणां निषेधात् निषिद्ध-
पतितसंसर्गात् पततीति श्रुतिः कल्प्या। के ते संसर्गप्रकारा
इत्यत्राह बृहस्पतिः।

> एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्।
> याजनाध्यापनं योनिस्तथा च सह भोजनम्॥
> नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह
> उत्तमैरुत्तमैः सार्द्धं कर्त्तव्यस्तु समे न वा॥

---

विषयैव श्रुतिः कल्प्येति न तु सामान्यतः अन्यथा गुर्वङ्गनागमनादिष्वपि यथावर्षं
पादपादहानिप्रसङ्गः तथा सुवर्णस्तेयकृद्विप्रो राज्ञे मुषलमर्पयेत्। स्वकर्म ख्यापयं-
स्तेनोहतो मुक्तोऽपि वा शुचिरिति याज्ञवल्क्यवचनात् स्तेयिगोचरतयैव श्रुतिः
कल्प्यते न तु महापातकिसामान्यगोचर इति। अथ स्मृतौ विशेषदर्शनात्तथेति
चेत् प्रकृतेऽपि प्राच्यदेशाचारदर्शनात् विशेषश्रुतिरेव कल्पयितुं न्याय्या तस्मात्
प्रमाणान्तरविशेषश्रुतिरेव कल्प्या गौरवन्तु तत्र प्रमाणसिद्धं भूषणमेव न तु
दूषणम् अतएव संसर्गविशेषाणां निषेधात् निषिद्धपतितसंसर्गी पततीति श्रुतिः
कल्प्येति ग्रन्थकृता निषिद्धपदवती विशेषश्रुतिः कल्पयिष्यते अन्यथा तदप्यनुपपन्न-
मिति तस्मादुक्तव्याख्या होलाकाधिकरणस्य युक्तेति। उक्तमेवार्थं प्रमाणयन्नाह
विष्णुनापीति तैश्चाब्दमित्यत्र तत्पदेन ब्रह्महादिपतितप्रयोजकान्तानां ग्रहणात्
तन्मध्यगतेन पतितात्यागिना प्रथमसंसर्गिणा सहाब्दाचरणे द्वितीयसंसर्गिणोऽपि
पतितत्वमुक्तम् अतः पापिमात्रसंसर्गस्यैव पापहेतुत्वमुक्तमित्यर्थः। नेति विशेषस्थले
निषेधश्रवणात् निषिद्धपदवती विशेषश्रुतिः कल्प्येत्यर्थः। पञ्चेति एषां चिरकाले-
नैव पापितुल्यतापादकत्वस्य वक्ष्यमाणत्वात् लघुत्वम्। तथेति पतितायाः
कन्यायाः परिणयनमित्यर्थः ननु परिणयनं विवाहः स च न योनिसम्बन्धः तद-

एकशय्याशयनैकपीठाद्युपवेशनैकपङ्क्तिभोजनपक्वान्नादिसम्बन्धिभाण्डमिश्रणपक्वान्नमिश्रणाख्याः पञ्चलघुसंसर्गाः।

तथा याजनं पतितेन ऋत्विजा यजमानस्य याजनम्। पतितयजमानार्त्विज्यकरणम् ऋत्विजोऽध्यापनं पतितमानवकवेदाध्यापनमाचार्य्यस्य पतितादाचार्य्याद्वा वेदाध्ययनं मानवकस्य। योनिर्योनिसम्बन्धः स च पतितपुरुषसम्भोगः स्त्रियाः पतितस्त्रीसम्भोगो वा पुरुषस्य तथा पतितकन्यापरिणयनं वरस्य पतितवरपरिणयनं वा कन्यायाः। तथाच मनुः

नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेत् ब्राह्मणः सह॥

जिकनकल्पतरुकारादयस्तु पतिताय वराय कन्यादानं दातुः पतिताद्दातुरादानं कन्याया वरस्य सर्वत्र व्यवहितयोनिसम्बन्धः। योनिसम्बन्धस्य स्त्रीपुरुषमात्रनिष्पाद्यत्वात् नात्र दातृवरयोः साक्षाद् योनिसम्बन्धः। दान प्रतिग्रहणलक्षणोऽप्येवं सम्बन्धो दातृसम्प्रदानयोर्योन्यन्तर्भावात् यौन इत्युच्यते प्रायश्चित्तगौरवार्थः किन्त्वयमनार्षः प्रायश्चित्तविशेषाश्रवणात् अनुपादेयश्च पतितजाता कन्या पतितैवेति कल्प्यते। तत्

---

नन्तरसम्भोगस्यैव योनिसम्बन्धत्वात् सत्यम् अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति परिणयनमन्त्रात् कन्यावरयोः शरीरैकीकरणत्वात् वाचनिको योनिसम्बन्धो अस्त्येवेति ज्ञेयम्। अन्ये तु योनिप्रयुक्तस्त्रीपुंससम्बन्धात् योनिसम्बन्धरूपव्यपदेश इति वदन्ति तद्विचार्य्यमाणं न किमपीति। सर्वत्रेति दातरि वरे च व्यवहितयोनिसम्बन्धोऽत्र योनिसम्बन्धः। व्यवधानं विवृणोति योनिसम्बन्धस्येति। तर्हि कथं यौन इत्युच्यते आह दानेति योनिसम्बन्धहेतुत्वात् यौन इत्युच्यते इत्यर्थः। दूषयति किन्त्वयमिति अयं पक्षोऽनार्षः पतितकन्यापरिग्रहे पतित-

परिणयनं पतितकन्यापरिणयनमेव नात्र व्यवहितयौन-सम्बन्धः। सहभोजनं स्वस्यान्नस्य परस्य वा एकपात्रे एकदा भोजनम् ॥ ८४ ॥

नोच्छिष्टभोजनम् उच्छिष्टेन सह उच्छिष्टभोजनात्तस्य लघुत्वात्। एते चत्वारो गुरुसंसर्गा भवन्ति। एवं मिलित्वा नवसंसर्गाः। नन्वेकयानालापमात्रस्पर्शनिःश्वाससहाध्ययनादिकमपि संसर्गान्तरमस्ति तत् कथं नवविधत्वम्। यथा पराशरः

आसनाच्छयनात् यानात् भाषणात् सह भोजनात्।
संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि ॥

भाषणमन्योन्यसंकथनम्। सहभोजनमेकपङ्क्तिभोजनं लघु-संसर्गसाहचर्य्यात्। यथा देवलः

संलापस्पर्शनिःश्वाससहशय्यासनाशनात्।
याजनाध्यापनाद् यौनात् पापं संक्रमते नृणाम् ॥

सहाशनमेकपङ्क्तिभोजनम्। तथा छागलेयः

आलापाद्गात्रसंस्पर्शात् निःश्वासात् सहभोजनात्।

---

प्रतिग्रहाधिकप्रायश्चित्ताश्रवणात् पतितसम्प्रदानकदाने दातुः प्रायश्चित्ताश्रवणाच्च एकदा मुख्यगौणाख्यद्वयाभिधानस्यायुक्तत्वाच्च लक्षणायां प्रमाणाभावाच्चेति। अतएवानुपादेयश्चेत्यर्थः व्यवहिते योनिसम्बन्ध इति यदुक्तं तद्दूषयति पतितजातेति ॥ ८४ ॥

नोच्छिष्टभोजनमिति पतितोच्छिष्टमात्रभोजनं न सह भोजनं किन्तु मिलित्वा एकपात्रे भोजनमेवेति तत्र हेतुः उच्छिष्टेन पतितेन सहैकपात्रभोजनेऽन्योन्योच्छिष्टान्नस्य भोजनात् तस्य केवलपतितोच्छिष्टपात्रभोजनस्य लघुत्वात्। चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे। द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण

सहशय्यासनाध्यायात् पापं संक्रमते नृणाम् ॥

सहाध्यायः पतितेन ब्रह्मचारिणा सहैकस्मात् गुरोरध्ययनम् ॥ ८५ ॥

सत्यं नवधेत्यत्र प्रकारवाचिना धाप्रत्ययेन प्रकारान्तरं सूचितम् अन्यथा नवेति ब्रूयात् । तेन तद्भोजनतत्संसृष्टान्नतत्संसृष्टपाकान्नभोजनतत्प्रतिग्रहादीनामप्युपसंग्रहः । नन्वनेकवचनेषु पापसंक्रान्तिः श्रूयते पूर्वदेशत्यागेन देशान्तरसम्बन्धे संक्रान्तिशब्दस्य मुख्यत्वात् मूलपापकर्त्तुः पापविच्छेदे भूते किमर्थं प्रायश्चित्तानुष्ठानमिति । तथा च हारीतः ।

हन्यादशुद्धः शुद्धन्तु शुद्धोऽशुद्धन्तु शोधयेत् ।
अशुद्धश्च तमोभूतः शुद्धवासेन शुध्यति ॥

तथा च मनुः ।

अन्नादे भ्रुणहामार्ष्टि पत्यौ भार्य्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥

मार्ष्टीति प्रोञ्छयति संक्रामयतीत्यर्थः । तथा यमः

---

शुध्यतीत्यङ्गिरोवचने प्रायश्चित्ताल्पत्वस्य वक्ष्यमाणत्वात् । एते चत्वार इति सद्यः पातहेतुत्वात् एतेषां गुरुत्वमिति भावः ॥ ८५ ॥

सत्यमिति नवेत्युक्ते संख्यया संख्यान्तरव्यवच्छेदोऽवगम्यते प्रकारवाचिनि धाप्रत्यये सति प्रकारस्य सादृश्यमूलत्वात् प्रकारान्तरप्रामाण्यसम्भवे संख्यायाः स्वायोगव्यवच्छेदकतैव प्रतीयते । विज्ञेया त्रिविधा सुरेत्यादौ तु प्रकारान्तरप्रामाण्याभावात् तन्मात्रप्रतीतिरेवेति भावः । अन्ये त्वन्यथा प्रलपन्ति । हन्यादिति अशुद्धः पापी शुद्धमपापिनम् उपहतं पापभागिनं कुर्य्यादित्यर्थः । तमसा रागौत्कट्येन भूतो अभिभूतो तमोमोहं भूतः प्राप्त इति वा अशुद्धः पापीयान् शुद्धवासेन कृतपुण्यपुरुषसम्बन्धेन शुध्यतीति स्वयं पूतो भवतीत्यर्थः ।

दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति।
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्बिषम्।

तस्य किल्बिषमश्नातीत्यनेनापि पापाभावोऽवगम्यते। उच्यते न पूर्वपापव्यक्तेराश्रयत्यागेन आश्रयान्तरसम्बन्धः सम्भवति॥ ८६॥

गुणस्य तद्रूपादर्शनेनायोग्यत्वात् किन्तु तत्तुल्यव्यक्तिसम्बन्धे गौणोऽयं संक्रान्त्यादिशब्दः। तथाच देवलः।

बान्धवोऽपि पृथग् भूत्वा तत् पापं नाप्नुयात् क्वचित्।
पृथग्जनोऽपि संयोगात् भजते तुल्यदोषताम्॥

तत् पापं तज्जातीयपापमित्यर्थः। तुल्यदोषतां तत् समानपापतामित्यर्थः। शुद्धोऽशुद्धन्तु शोधयेदिति यत्र ब्राह्मणादिसम्पर्क एव पापक्षयहेतुस्तत्र बोद्धव्यम्। यथा उशनाः। कृतलक्षणैर्दर्शनस्पर्शनसम्भाषणानि वर्जयेदित्युक्त्वा सम्भाषणे ब्राह्मणसम्भाषणमित्यादि। कृतलक्षणो राज्ञा कृतपापचिह्नः॥८७॥

किञ्च यदि पापिष्ठस्यान्यस्य संसर्गः पापक्षयहेतुः तदेतरप्रायश्चित्तवदयमपि केनापि मुनिना प्रायश्चित्तरूपतया पठितः स्यात् प्रत्युत निषेध एव श्रूयते। तथा मनुः

---

अपचारिणी व्यभिचारिणी। याज्यस्य गुरौ ऋत्विजीत्यर्थः। स तस्य किल्बिषमश्नाति नाशयतीत्यर्थः॥ ८६॥

गुणस्येति गुणस्य तद्रूपादर्शनेन स्वाश्रयत्यागपूर्वकाश्रयान्तरसम्बन्धादर्शनेन पापव्यक्तेराश्रयान्तरसम्बन्धस्यायोग्यत्वात् अयं भावः पापं दुरदृष्टं तावदात्मगुणः गुणस्य द्रव्यं समवायिकारणं तद्विहाय तत् कार्य्यस्य गुणस्य कथं द्रव्यान्तरसम्बन्धः समवायिकारणं विहाय कार्य्यं पृथक्स्थितेरसम्भवात्। किन्त्विति तत् पापतुल्यपापान्तरसम्बन्धादित्यर्थः। पृथग्जनोऽसम्बन्धिजनः॥ ८७॥

प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा।
न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः॥

इति किञ्च मिश्रितस्तेन सोऽब्दान्ते स्वयञ्च पतितो भवेदिति देवलवचनेन च अब्दान्मूलपापकर्त्तुरपि पापस्थितिरवगम्यते मूलपापकर्त्ता तावत् पतितः स्वयमपि पततीत्यर्थः। इदानीं कियता कालेन कतमस्य संसर्गस्य पतितसाम्यापादानमिति निरूप्यते। तत्र देवलः

पतितेन सहोषित्वा जानन् संवत्सरं नरः।
मिश्रितस्तेन सोऽब्दान्ते स्वयञ्च पतितो भवेत्॥
याजनं योनिसम्बन्धं स्वाध्यायः सहभोजनम्।
कृत्वा सद्यः पतन्त्येते पतितेन न संशयः॥

यानादिभिर्लघुसंसर्गैः ज्ञानकृतैः संवत्सरेण पततीति याजनादिभिर्गुरुभिः सद्यः पततीत्यर्थः। तथा बौधायनः

संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनात् यौनात् सद्यो न शयनाशनात्॥

शयनासनादिना सद्यः पातनिषेधात् साकाङ्क्षस्य संवत्सरेण पततीत्यस्य शयनादिसम्बन्धः याजनादिपदं सहभोजनमप्युपलक्षयति। विष्णुः।

आसंवत्सरात् पतति पतितेन सहाचरन्।

---

ननु संसर्गिणः पापान्तरं जायतां पापिनः पापक्षये को विरोध इत्याशङ्क्याह किञ्चेति देवल इति सहोषित्वेत्यनेन एकगृहवासेऽपि पापप्रशक्तावाह मिश्रित इति संलापस्पर्शनिःश्वासेत्यादिप्रागुक्ततदीयवचनोपात्तसंसर्गेण मिश्रित इत्यर्थः। याजनादिपदमिति याजनं योनिसम्बन्धमिति प्रागुक्त-

सहयानासनाभ्यां यौनात् स्रौवात् मौखात् सम्बन्धात् सद्यः एव। यानासनाभ्यामिति लघुसंसर्गोपलक्षणं यौनादित्यादिना सहभोजनोपलक्षणम्॥ ८८॥

कूर्मपुराणे व्यासः,

ब्रह्महा मद्यपस्तेनो गुरुतल्पग एव वा।
महापातकिनस्त्वेते यश्च तैः सह संवसेत्॥
संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः।
यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत्॥

एतैर्वचनैर्याजनादिना सद्यःपातो यानादिना संवत्सरेणेत्यभिधीयते। ननु याजनादिना संवत्सरेण पतति न यानादिनेत्याह। मनुर्विष्णुश्च,

संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनाद् यौनात् न च यानासनाशनात्॥

यानाशनासनादुत्पन्नसंयोगमाचरन्नित्यर्थः। यथा पैठीनसिः

संवत्सरेण पतति प्रतितेन सहाचरन्।
याजनाध्यापनात् यौनान्नत्वेवं शयनाशनात्॥

अत्र भवदेवकल्पतरुकारादयः। देवल बौधायनादिवचनैर्याजनादीनां सद्यः पातहेतुत्वावगतेर्मनुविष्णुपैठीनसिवचनेषु न त्विति मध्यपठितस्य पूर्वेण याजनादिना सम्बन्धो न तु

---

देवलवचने सहभोजनस्यापि सद्यः पातहेतुत्वकथनात्। स्रौवः स्रुवसम्बन्धो याजनम्। मौखो मुखसम्बन्धोऽध्ययनमध्यापनञ्च॥ ८८॥

सह संवसेत् सहव्यवहरेदित्यर्थः उत्तरवचन इति तथा वत्सरसंयोग इत्यादिवचन इत्यर्थः। अत्र एकत्रासनशय्यादिभिरिति पाठं कृत्वा भवदेवभट्टो

षरेण यानादिना। याजनाध्यापनाद् यौनात् न तु संवत्सरेण पतति किन्तु यानादिभिरित्यर्थः। तदसङ्गतं सुमन्तुवचनविरोधात् यथा पतितानभिधायाह सुमन्तुः। यश्चैतैर्यौनमौखस्रौवाणां सम्बन्धानामन्यतमेन सह संवत्सरं सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यात्। इयात् कुर्य्यात् एतदेवेति द्वादशवार्षिकमित्यर्थः। अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते। तथा हारीतः

संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनात् यौनादेकशय्यैकभोजनात्॥

एकभोजनमेकपात्रे कालभेदेन भोजनं जलपानञ्च तथा वृहस्पतिः,

षाण्मासिके तु संसर्गे याजनाध्यापनादिना।
एकत्राशनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्॥

तथा, संवत्सरेण संसर्गे योनियुक्ते विशेषतः।
पूर्व्वोक्तेन विधानेन पतितव्रतमाचरेत्॥

अनेन याजनादिना षाण्मासिकसंसर्गे प्रायश्चित्तार्द्धं वदता संवत्सरेण सम्पूर्णप्रायश्चित्तमर्थादुक्तम् उत्तरवचने पुनः स्फुटीकृतं योनियुक्तपदेन याजनादीनामप्युपसंग्रहः॥ ८८॥

एकत्राशनशय्यादिरिति पाठोऽनाकरः राज्ञा अलिखित-

---

व्याचष्टे एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्। याजनाध्यापनं योनिस्तथा च सहभोजनमिति वृहस्पतिवचने याजनाध्यापनयोरादिपठितेन एकशय्यासनादिना षण्मासं योगे सतीत्यर्थः॥ ८८॥

त्वात्। जिकनादयस्तु यदि प्रत्येकं विभक्तिनिर्देशात् याजनं कृत्वा पतति योनिसम्बन्धं कृत्वा पततीत्येवं सम्बन्धोऽभिधीयते। तदा कृत्वा पततीति पदयोरन्वयावृत्तितात्पर्य्यावृत्तिभ्यां वाक्यभेदश्चत्वारि वाक्यानि स्युः। अतः कृत्वेतिपदेन तन्त्रेण याजनादिकर्मचतुष्टयमुपादाय पततीति सम्बन्धे बोधिते नैव वाक्यभेदः स्वस्वपदेन पृथगुपनीतानामपि कृत्वेतिपदेन तन्त्रेणोपनयनात् ॥ ९० ॥

दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्राग्नेयादियागषट्कानामिव। अतएव वाक्यानुरोधात् याजनादीनां तन्त्रेण समुच्चितोपनीतानां पततीत्यनेन न सम्बन्धे बोधिते याजनादीनां समुच्चितानां सद्यः पातहेतुत्वं पूर्वोक्तसुमन्त्वादिवचनादेकैकेषां संवत्सरेण। अत्रैव संसर्गत्रये चतुर्भिर्मासैः संसर्गद्वयेऽष्टभिर्मासैर्भागहारेण पातहेतुत्वमूहनीयम् ॥ ९१ ॥

तन्न कृत्वेतिपदस्य याजनादिकर्त्तृत्वेऽशक्तत्वात् किन्त्व-

---

तयोः कामादिपठित इत्याकाङ्क्षायामाह एकत्राशनशय्यादिरिति तद्दूषयति पाठोऽनाकर इति एकत्रासनशय्यादिनेत्यनेनैव सिद्धेर्याजनाध्यापनादिनेत्यस्य वैयर्थ्यमपीति दोषान्तरं मन्तव्यं तदेति न च प्रत्येकैककर्मसापेक्षत्वात् कृत्वेति पदस्यैवावृत्तिः कथं कृत्वा पततीति पदद्वयोरिति वाच्यं कृत्वेत्यस्यानन्तर्य्यबोधकतया पततीति विनान्वयानुपपत्तेस्तदावृत्तौ पततीत्यस्यावृत्तेरावश्यकत्वात्। तात्पर्य्येति यदि कर्मान्तरान्वये तात्पर्य्यमस्ति तत्रैव शब्दावृत्तिरतस्तात्पर्य्यावृत्तिरपीति भावः। तन्त्रेणेति एकदैव कर्मचतुष्टयमुपादाय कर्मचतुष्टयेन सह सम्बन्धेत्यर्थः ॥ ९० ॥

दर्शपौर्णमासाभ्यामिति यथा स्वस्वपदेन पृथगुपदिष्टानामाग्नेयादियागषट्कानां दर्शपौर्णमासपदाभ्यां तदात्मकत्वात् युगपदुपादानान्न वाक्यभेद इत्यर्थः। पूर्वोक्तेति अत्र एकैकस्येत्येव पाठः बहुवचनस्यासाधुत्वात् ॥ ९१ ॥

न्विताभिधानलभ्यं तत् तदा च निरपेक्षाणामेवान्विताभिधानप्राप्तत्वादनुषङ्गाधिकरणन्यायात् न तन्त्रता सत्यपि वा तन्त्राभिधाने न समुच्चयः॥ ८२॥

सर्वेभ्यो दर्शपौर्णमासावित्यत्रैव समुच्चये बाधकस्य द्वन्द्वसमासादेरभावात्। न वा तन्त्रतायां समुच्चयो नियतः गर्गा भोज्यन्तां सप्तदशप्राजापत्यान् पशूनालभेदित्यत्र व्यभिचारात् पततीति पाठस्य राज्ञा अलिखितत्वात् पतन्त्येत इति तेन लिखितत्वात् कथं पततीति पदावृत्तिः। न च सुमन्तुवचने याजनादीनामन्यतमेन वत्सरेण पातावगमादर्थान्मिलितैः सद्यः पात इति कल्पनीयं निरपेक्षश्रुतिविरो-

---

तन्त्रेति कृत्येतिपदस्य याजनादिकर्मवाचिकत्वात् कथं तस्मात्तन्त्रेणोपनयनमित्यर्थः। तर्हि कथं तेषां प्रतीतिरित्यत आह किन्त्विति तदा चेति पदार्थोपस्थित्यनुरोधेन वाक्यार्थोपस्थितिः ततश्च परस्परनिरपेक्षाणां याजनादिकर्मणां क्रमेणैवान्विताभिधानत्वप्राप्तत्वादेकान्वयेति पुनराकाङ्क्षासुत्थाप्यान्वये आवश्यकत्वात् कथं तन्त्रतेति युगपदुपस्थितिरेव तन्त्रता आवृत्तौ हि अनुषङ्ग एव न तु तन्त्रतेति भावः। ननु बुद्धौ युगपदुपस्थितानां याजनादिकर्मणां कृत्वेत्यनेन युगपदन्वये कथं न तन्त्रता इत्यत आह सत्यपीति समुच्चयः साहित्यं सोऽत्र नास्ति तन्त्रता समुच्चययोर्भिन्नपदार्थत्वात्॥ ८२॥

तर्हि सर्वेभ्यो दर्शपौर्णमासावित्यादौ कथं समुच्चयः इत्यत आह सर्वेति सर्वेभ्यो दर्शपौर्णमासावित्यत्र यथा साहित्यबोधकद्वन्द्वसमासात् समुच्चितयोर्दर्शपौर्णमासयोः सर्वकामफलतानैकैकस्य न तथात्र द्वन्द्वसमासाभावात् समुच्चयावगमः। उक्तं हि साहित्ये द्विवचनबहुवचने द्वन्द्वसमासो वेति। ननु द्वन्द्वसमासादिरुपलक्षणं व्यञ्जकत्वात् यत्र युगपदुपनयनं तत्र समुच्चयः तच्च तन्त्रतायामप्यस्तीति अत आह न वेति युगपदुक्त्यपेक्षयापि तन्त्रतायाः सम्भवात् यथा गर्गा भोज्यन्तां सप्तदशप्राजापत्यान् पशूनालभेत् इत्यत्र सत्यामपि तन्त्रतायां साहित्यबोधकबहुवचनसद्भावेऽपि भोजनालभनयोः प्रत्येकविश्रान्तत्वात्

धात्। वक्ष्यमाणप्रकारेण च वचनद्वयसामञ्जस्य सम्भवात्। उच्यते गुरुलघुभेदेन द्विविधं याजनादिकं भवति तत्र गुरुणा ज्ञानकृतेन याजनादिना एकैकेन सद्यः पातः तेनैवाज्ञानकृतेन वारद्वयाभ्यासात्। लघुनि याजनादावज्ञानकृते वत्सरेण पातः। एतस्मिन्नेव ज्ञानकृते वत्सरार्द्धेनेति व्यवस्था यथा हि याजनं योनिसम्बन्धमित्यत्र देवलवचने पतितेन सहोषित्वा जानन्निति पूर्ववचनस्थजानन्निति पदसम्बन्धात् ज्ञानकृतत्वं दर्शितम्। गुरुत्वञ्च देवलेनैव याजनाध्यापनपदयोर्गुरुयाजनाध्यापनयोरुपसंहाराद्दर्शितम्। यथा देवलः। आचार्य्याद् व्रतनियमशुश्रूषादिभिस्त्रयीविद्योपादानमध्ययनं तस्याचारान्वयोपक्रमसामर्थ्यभक्तिशीलशुश्रूषोपनताय शिष्याय प्रदानमध्यापनं पशुक्षीराज्यपुरोडाशसोमौषधिचरुप्रभृतिभिर्हविर्भिः खदिरपलाशाश्वत्थन्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोदूखलमुषलकुठारखनित्रयूपदारुचर्मदर्भग्रावपवित्रभाजनादिभिर्द्रव्योपकरणैरुद्गातृहोत्रध्वर्य्युब्रह्मादिभिरर्त्विग्भिः काम्यनैमित्तिकानां पक्षादिपूर्वकानां यथोक्तदक्षिणानां यज्ञानां समापनं यजनम् एतेन याजनं व्याख्यातम्। उपक्रमः

---

न साहित्यं किन्तु उक्त्यपेक्षया तन्त्रतैवेति प्रकृते तु याजनादीनां प्रत्येकविश्रान्तत्वात् उक्त्यपेक्षया तन्त्रतायाः सम्भवान्न साहित्यकल्पनेति वाक्यचतुष्टयापत्तिकल्पनागौरवं परिहरति पततीति निरपेक्षेति पूर्वोक्तबौधायनविष्णुवचनयोः पृथक् पृथगेव सद्यः पातश्रुतिविरोधादित्यर्थः। अनन्यथा गतिकत्वात्तथैति चेदाह वक्ष्यमाणेति देवलेति तस्य वेदस्य प्रदानमित्यन्वयः। आचारः स्वधर्मः अन्वयो वंशः। उपक्रम उद्योगः सामर्थ्यं धारणाशक्तिः। अत इति आचार्य्यादिति देवलवचनादुपनयपूर्वकत्वलाभः। तस्मादाचार्य्यादिति देवलेन

उद्यमः अत उपनयनपूर्वकमध्यापनं ज्योतिष्टोमादियज्ञानां याजनं गुरु । तत् साहचर्य्याद् यौनं परिणयनरूपं गुरु मन्त्रहोमादिसाध्यत्वात् ॥ ९३ ॥

स्तेयादिना पतितान्यब्राह्मण्या गमनं वा ब्राह्मणस्य तदपेक्षया पतितस्वब्राह्मणीगमनपतितशूद्रागमनयोर्लघुत्वात् सहभोजनं पतितान्नस्य पतितेन सहैकपात्रे भोजनं गुरु उपनयनं विना वेदाध्ययनम्, अष्टकादियज्ञयाजनं पतितस्वब्राह्मणीगमनं पतितशूद्रागमनम् अपतितान्नस्य पतितेन सहैकपात्रभोजनं पतितोच्छिष्टभोजनं वा पूर्वोक्तयाजनाद्यपेक्षया लघु देवलवचने ज्ञानतो गुरुणा याजनादिना सद्यः

---

याजनाध्यापनवत् यौनसम्बन्धसहभोजनयोर्गुरुत्वं नोक्तं किन्तु तयोः साहचर्य्यात् याजनं योनिसम्बन्धमित्यनेकवचनोपात्तत्वात् यौनसहभोजनयोरपि गुरुत्वमप्यन्वेष्यं तत्र परिणयनं यौनं गुरु । अस्थिभिरस्थीनि मांसैर्मांसं त्वचा त्वचमित्यादि मन्त्रलिङ्गेन शरीरैकीकरणज्ञापनादित्यर्थः ॥ ९३ ॥

स्तेयादिनेति पतितायाः परकीयब्राह्मण्या देशान्तरादपहारस्तेयम् आदिशब्दाद्बलात्कारहरणं गृह्यते तस्याः पतितब्राह्मण्या गमनञ्च गुरु तत्र हेतुस्तदपेक्षयेति अपहाराद्यभावेन पतितत्वमात्रदोषात् स्वपत्न्याः शूद्रायास्तु अवरजातित्वेन लघुत्वादित्यर्थः । सहभोजनमिति पतितान्नत्वात् गुरुत्वम् उपनयनं विनेति अन्येनोपनीताय पतितशिष्याय वेदाध्यापनं लघु देवलेनाचार्य्यादित्यनेन स्वोपनीताय वेदाध्ययनस्य गुरुत्वोक्तेः देवलोक्तयागादष्टकादियागानां लघुत्वं तद् याजनं लघु इत्यर्थः पतितोच्छिष्टभोजनं वेति पतितोच्छिष्टभोजनं न सहभोजनमिति यत् प्रागुक्तं तदुच्छिष्टमात्रभोजनमेवेति इह तु एकपात्रे पृथगवस्थितस्यान्नस्य पतितसम्पर्कात् उच्छिष्टस्य भोजनं सहभोजनमेवेति न विरोध इति ध्येयम् अर्थादिति ज्ञानतो गुरुयाजनादीनां सद्यःपातहेतुत्वे निर्णीते वत्सरात् पातित्यप्रतिपादकं मन्वादिवचनम् अर्थाल्लघुयाजनादिविषयं तत्राज्ञानत एव ज्ञानतस्तु तदर्द्धेन षण्मासेनैव वक्ष्यमाणसंवर्त्तकूर्मवचनद्वया-

पतनेऽर्थान्मन्वादिवचनेनाज्ञाते लघुना याजनादिना संवत्सरेण पतनमिति गम्यते। ज्ञानतः सकृत्कृतेन येन पतनं तेनाज्ञानतो वारद्वयाभ्यासेन। अज्ञानतो वत्सरेण येन पतनं तेन ज्ञानतः षड्भिर्मासैरिति वचनद्वयसामञ्जस्यं तथाच लघुयाजनादिविषये। संवर्त्तः

एभिः संसर्गमायाति यः कश्चित् काममोहितः।
षण्मासानब्दमेकं वा ब्रह्महत्याव्रतं चरेत्॥ ९४

कल्पतरुरत्नाकरस्य एष स्वरसः। अतएव कूर्मपुराणं

याजनं योनिसम्बन्धं तथैवाध्यापनं द्विजः।
कृत्वा सद्यः पतेज्ज्ञानन् सहभोजनमेव च॥
अज्ञानादथवा मोहात् कुर्य्यादध्यापनं द्विजः।
संवत्सरेण पतति सहाध्ययनमेव च॥

अत्र पूर्ववचनं गुरुयाजनादिपरं द्वितीयवचनं लघुयाजनाद्यर्थं न च ज्ञानाज्ञानाभ्यामेव सद्यो वचनसंवत्सरवचनयोः सामञ्जस्यं भविष्यति किं गुरुलघुव्याख्यानेनेति वाच्यं ज्ञानकृतादज्ञानकृतस्यार्द्धमज्ञानकृताच्च ज्ञानकृतस्य द्वैगुण्यमेव युक्तं यतः

---

दित्यर्थः। ज्ञानत इति ज्ञानविहितप्रायश्चित्तार्द्धस्याज्ञाने विहितत्वात् ज्ञानकृतपापजनककालतोऽज्ञानकृतपापजनककालद्वैगुण्यौचित्यादिति भावः। लघुयाजनविषय इति अज्ञानादथवा मोहादिति वक्ष्यमाणकूर्मपुराणैकवाक्यतया संवर्त्तवचनस्य लघुयाजनादिविषयत्वमित्यर्थः ज्ञानतः षण्मासाः त्वज्ञाने एकोऽब्द इत्यर्थः॥ ९४॥

कल्पतरुकारस्येति यद्यपि मनुवचनव्याख्यानं कल्पतरोरन्यथोक्तं तथाप्यत्र लघुगुरुयाजनादीनां भेदोपन्यासे कल्पतरुस्वरसो दर्शित इति न विरोधः

स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके।

इति वचनात् अत्यन्तविप्रकर्षस्यादृष्टत्वाच्च देवलवचनेन याजनादिपदस्य गुरुयाजनादावुपसंहृतत्वान्मनुवचनेनैवार्थाल्लघुयाजनमवगम्यते तस्मादुक्तैव व्याख्या। गुरुसंसर्गकालं निरूप्याधुना लघुसंसर्गकालो निरूप्यते। तत्र भवदेवेनोक्तं याजनादिभ्यो लघूनां यानासनशयनैकपङ्क्तिभोजनानाञ्चतुर्णां तल्लघूनाञ्चालापस्पर्शनिःश्वासानां त्रयाणां मिलित्वा सप्तानां ज्ञानतो वत्सरेण पातहेतुत्वम् अज्ञानतो वत्सरद्वयेनेति। तदेतत् प्रमाणशून्यं सप्तानां द्वन्द्वनिर्देशादेरभावात्। जिकनस्तु

आसंवत्सरात् पतति पतितेन सहाचरन्।

सहयानासनाभ्यामिति विष्णुवचने द्वयोर्द्वन्द्वनिर्देशाद्यानादीनां चतुर्णां मध्याद्द्वयेन केनचित् संसर्गद्वयेन संवत्सरेण पातः। एकैकशस्तु संवत्सरद्वयेन। एभ्योऽपि संलापादेर्लघुत्वात् सहयानादेर्द्विगुणकालेन साम्यापादकत्वम् एतच्च ज्ञानतः जानन् संवत्सरम् इति वचनात्। अज्ञानादेतद्द्विगुणकालेनेति तत्र त्रयाणामपि द्वन्द्वनिर्देशात् ॥ ९५ ॥

यथा मनुः।

संवत्सरेण पतति पतितेन सहाचरन्।

---

। अज्ञानादिति अत्र मोक्षो भ्रमः। अत्यन्तेति सद्यो वत्सरयोरत्यन्तकालविप्रकर्षः स चैकस्मिन् विषये ज्ञानाज्ञानाभ्यां क्वापि न दृष्ट इत्यर्थः। उपसंहरति देवलेनेति तल्लघूनामिति तेभ्यो याजनादिभ्यो लघूनामित्यर्थः द्विगुणकालेनेति आलापादिभिस्त्रिभिर्मिलितैः संवत्सरद्वयेन एकैकशः संवत्सरचतुष्टयेनेत्यर्थः ॥९५॥

याजनाध्यापनाद्यौनान्न तु यानाशनासनात् ॥

यथा याजनादिना प्रत्येकमज्ञानादब्दत्सरेण पातस्तथा न यानादिभिः। एभिस्तु मिलितैर्ज्ञानादित्यर्थः। तथा च कूर्मपुराणम्।

ब्रह्महा मद्यपस्तेनो गुरुतल्पग एव च।
महापातकिनस्त्वेते यश्च तैः सह संवसेत् ॥
संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः।
यानशय्याशनैर्नित्यं जानन् वै पतितो भवेत् ॥

तथा बृहस्पतिः।

षाण्मासिके तु संयोगे याजनाध्यापनादिना।
एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत् ॥

अत्रासनशय्याशब्देन लघुसंसर्गान्तरं लक्ष्यते। अन्यथा बहुवचनानुपपत्तेः। यथा प्रोद्गातॄणां भक्ष्यः फलमस इत्यत्र प्रोद्गातृशब्दस्य प्रोद्गातृप्रोद्गातृपरत्वमुक्तम्। यदा त्वेकत्रासनशय्यादिरिति पाठः तदादिशब्दात् संसर्गान्तरलाभः अयन्त्वपपाठो राज्ञा अलिखितत्वात्। उच्यते। यानादीनां लघुसंसर्गाणां समुच्चितानां पातहेतुत्वं द्वन्द्वनिर्द्देशात्। त्रयाणाञ्च द्वन्द्वनिर्द्देशो बहुषु वचनेषु अवगम्यते ॥ ८६ ॥

---

मनुवचनं व्याचष्टे यथेति तथा यानादिभिरेकयानासनपङ्क्तिभोजनैर्न प्रत्येकमज्ञानात् संवत्सरेण पातः किन्तु द्वन्द्वसमासात् मिलितैरेव तैर्ज्ञानादेव वत्सरेण पात इत्यर्थः बृहस्पतिरिति एकत्रासनशय्यादिभिरपि मिलितैः षाण्मासिकसंयोगे प्रायश्चित्तार्द्धमाचरेदित्यर्थः प्रोद्गाता सामवेदी ऋत्विक् फलचमसशब्देन सफलवटशुङ्गारस उच्यते सोमं प्राश्नता ऋत्विजां प्रथमं वट-

अत्र यानादीनाम् अनियतश्रवणाल्लाघवात्त्रिभिर्लघुभिः संसर्गैर्वत्सरेण पततीत्येकत्वश्रुतिः कल्पनीया । सहयानासनाभ्यामित्यत्र सहशब्दादेककालत्वमवगम्यते एककाले त्वेकपीठाद्युपवेशनं स्पर्शनिःश्वासालापलघुतरसंसर्गत्रयनियतम् अतस्तदप्यर्थादवगम्यते । एभिश्च त्रिभिर्लघुतरसंसर्गैरेको लघुसंसर्गः समानः । अतस्तत्रापि लघुसंसर्गत्रयमेव । मन्वादिवचनेषु सहशब्दाभावात् कालभेदेन सततपतितोपभुक्तासनाद्युपवेशनं ग्राह्यम् । अतस्त्रिभिर्लघुसंसर्गैर्वत्सरेण साम्यम् एतच्च ज्ञानतः जानन् संवत्सरम् इति देवलवचनात् । अज्ञानतो वत्सरद्वयेन एकैकशो ज्ञानात् वत्सरत्रयेण अज्ञानात् वत्सरषट्केन । संलापादीनां त्रयाणामेकैकयानादिसमानत्वात् ज्ञानतो वत्सरत्रयेण पातः । अज्ञानतो वत्सरषट्केन ज्ञानादेकैकशो वत्सरनवकेन अज्ञानात् एकैकशोऽष्टादशभिर्वत्सरैरित्यर्थः । ननु संलापादीनां कथं यानादिभ्यो लघुत्वम् उच्यते लघुप्रायश्चित्तश्रवणात् यथोशनाः कृतलक्षणैर्दर्शनस्पर्शनसम्भाषणानि वर्जयेत् दर्शने ज्योतिषां दर्शनं स्पर्शने हृदयालम्भनं सम्भाषणे ब्राह्मणसम्भाषणं पुनरुपस्पर्शनञ्चेति । कृतलक्षणैः पतितैः श्वपदादिचिह्नितैः दर्शनञ्च न संसर्गः संसर्गप्रकरणेऽपाठात् । पतितस्पर्शनमत्र परम्परया ग्राह्यं साक्षात् स्पर्शने स्नानश्रवणात् तथा च मनुः ।

---

यज्ञारसौ मत्त्यसत् पश्चात् सोम इत्यर्थः अत्र यथा बहुवचनात् ऋत्विक्साम्यपरत्वमित्यर्थः ॥ ८६ ॥

अनियतश्रवणादिति मनुवचने यानासनाशनश्रवणं कूर्मपुराणे यानशय्यासनश्रवणमित्यनियतम् । अत इति तत्रापि सह यानासनाभ्यामित्यत्रापीत्यर्थः ।

दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति ॥

पतितान्नभोजनपतितद्रव्यप्रतिग्रहयोश्च प्रत्येकं ज्ञानतः षड्भिर्मासैरज्ञानाद्वत्सरेण पतितत्वापादकत्वम्। यथा पतितानभिधायाह संवर्त्तः।

एभिः संसर्गमायाति यः कश्चित् काममोहितः।
षाण्मासानब्दमेकं वा ब्रह्महत्याव्रतञ्चरेत् ॥

न चास्य ज्ञानाज्ञानकृतयौनसंसर्गविषयत्वम् अविशेषश्रुतेः। यौनतुल्यत्वादेतयोः। तथा च पतितान्नभोजनस्य वत्सरेण पातहेतुत्वमाह देवलः।

संवत्सरेण पतति पतितेन सहाचरन्।
भोजनासनशय्यादि कुर्वाणः सार्वकालिकम् ॥

भोजनं तदन्नभोजनं सार्वकालिकमविच्छिन्नं भोजने तथा

---

संलापादीनामिति त्रयाणां मिलितानामित्यर्थः। उपस्पर्शनमाचमनम् अविशेषश्रुतेरिति लघुयौनादिसंसर्गे ज्ञानाज्ञानकृते संवर्त्तवचनं तथा पतितान्नभोजनप्रतिग्रहसंसर्गेऽपि अविशेषश्रवणात्। ननु कथमसद्दृशानामेकवचनविषयत्वमित्यत आह यौनतुल्यत्वादिति एतयोः पतितान्नभोजनपतितप्रतिग्रहयोर्लघुयौनादितुल्यत्वादित्यर्थः। तुल्यत्वमुपपादयति तथा चेति देवल इति किंवा आचरणं कथं वा आचरन्नित्यत्राह भोजनासनेति भोजनादिकं सार्वकालिकमविच्छेदेन प्रत्यहं कुर्वाणो वत्सरेण पततीति अत्र भोजनं पतितान्नभोजनमेव न त्वेकपङ्क्तिभोजनं तस्यादिपदेन ग्रहणात् तदा च प्रत्यहं पतितान्नभोजने वत्सरेण पातः आसनशय्यादिपङ्क्तिभोजनैर्मन्वाद्युक्तैस्त्रिभिर्मिलितैरपि तथा मन्वादिवचनानुरोधादिति भावः। ज्ञानाभ्यास इति ज्ञानतो वारद्वयभक्षण इत्यर्थः। न च पतितान्नभक्षणे संवर्त्तदेवलवचनात् षण्मासैः पातित्यस्य प्रागुक्त-

दर्शनात् पतितप्रतिग्रहेऽपि तथात्वमूहनीयं तयोः समान-
त्वात्। यथा वृहस्पतिः।

पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा॥

मासोपवासो ज्ञानाभ्यासे। तत्र च पञ्चदशधेनवः। चान्द्रा-
यणमज्ञानाभ्यासे तेन सार्द्धसप्तधेनवः॥ ८७॥

गृहंगत्वेत्यनेन संवत्सरेणेति। यथा मनुः।

चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति॥

तथा रजकादीनभिधायाह यमः।

भुक्त्वा चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च।

---

त्वात् तस्य भागहारेण ज्ञानाभ्यासेऽप्यल्पमेव स्यात् न तु पञ्चदशधेनुदानसमो मासोपवास इति वाच्यं वचनाद् युक्तेर्लघीयस्त्वात् यच्च पतितान्नन्तु[1] यो भुङ्क्ते इति प्रचेतोवचने सकृदज्ञाने धेनुद्वयं वक्ष्यते तत् सगुणविषयं सर्वत्र सगुणस्य प्रायश्चित्तह्रासदर्शनात् अतएव पतितप्रतिग्रहप्रकरणे वृहस्पतिवचनव्याख्याने सकृदज्ञाने चान्द्रायणार्द्धं सकृज्ज्ञाने चान्द्रायणमिति सगुणेतरविषये वक्ष्यते॥८७॥

गृहं गत्वा इत्यनेनेति पतितगृहगमनात् वत्सरेणैव ज्ञानाज्ञानाभ्यां मासोपवासश्चान्द्रायणञ्च अस्यातिलघुत्वादित्यर्थः। मनुवचनादपि भोजनप्रतिग्रहयोः साम्यमुपपादयति यथेति अन्त्याः अन्त्यावसायिनः नान्त्यजाः तेषामल्पप्रायश्चित्तस्य वक्ष्यमाणत्वात्। ते चाङ्गिरसोक्ताः यथा। चण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा। मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः॥ सकृदेव चण्डालस्त्रीगमनेऽज्ञानात् पातित्यं ज्ञानात्तु साम्यं पातित्यं कृतप्रायश्चित्तस्याप्यव्यवहार्यता चेत्यर्थः। भोजनप्रतिग्रहयोस्तु अष्टाचत्वारिंशद्वारैरज्ञानात् पातः ज्ञानादष्टाचत्वारिंशद्वारैः साम्यं ज्ञानाच्चतुर्विंशतिवारैः पात इति वक्ष्यते।

कृच्छ्रमब्दं चरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥

पतितान्नभक्षणप्रायश्चित्तात् पतितस्पृष्टान्नभक्षणप्रायश्चित्तस्य अर्द्धेन ह्रासदर्शनात् अर्द्धहानिः। तेन ज्ञानतः पतितस्पृष्टान्नभक्षणे वत्सरेण साम्यम् अज्ञानतो वत्सरद्वयेनेति ॥ ९८ ॥

यथा प्रचेताः

पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्।
पानीयपानतश्चैव कुशवारि पिबेत्त्र्यहम् ॥

सप्ताहोदकवासे धेनुद्वयं वक्ष्यते। एतत् सकृज्ज्ञानविषयम्। सकृदज्ञानकृतपतितस्पृष्टान्नभक्षणे शङ्खः। अमेध्यपतितचाण्डालपुक्कशरजस्वलावधूतकुणिकुष्ठिकुनखिस्पृष्टान्नानि भुक्त्वा कृच्छ्रमाचरेत् पातकिस्पृष्टपाकान्नभोजने तु संसर्गस्य किञ्चिद्व्यवधानात् पादहानिः। तेनात्र ज्ञानतः सार्द्धवत्सरद्वयेन साम्यम्। पातकिपाकसङ्कीर्णपाकान्नभोजने तु ततोऽपि व्यवहितत्वादपरपादहानिः। तेनात्र ज्ञानतः सार्द्धवत्सरेण

---

अत एवास्यैव भागह्राराच्चाण्डालपतितयोः समत्वेन बृहस्पतिवचने ज्ञानाभ्यासे पञ्चदश धेनवः अज्ञानाभ्यासे सार्द्धसप्तधेनव इत्युक्तम्। भुक्त्वा चैषामिति अन्त्यजस्त्रीगमने बुद्धिपूर्वकं द्विरभ्यासे कृच्छ्राब्दम् अज्ञानात् द्विरभ्यासे चान्द्रायणद्वयम् अन्त्यजान्नभोजनप्रतिग्रहयोस्तु अष्टधा ज्ञानाभ्यासे कृच्छ्राब्दम् अज्ञाने चान्द्रायणद्वयमिति वक्ष्यते। एतेन भोजनप्रतिग्रहयोः साम्यं दर्शितम् अर्द्धहानिरिति पापस्येत्यर्थः ॥ ९८ ॥

पतितान्नभक्षणप्रायश्चित्तात् पतितस्पृष्टान्नभक्षणप्रायश्चित्तस्य ह्रासे प्रचेतःशङ्खवचनाभ्यां प्रमाणमाह यथेति एतत् सगुणविषयमिति प्रागुक्तम् अत्र शङ्ख इत्यनन्तरं भुक्तोच्छिष्ट इति आपस्तम्बवचनं क्वचित् पुस्तके दृश्यते तदनाकरं प्रकृतानुपयोगात् अतएव उच्छिष्टस्य चाण्डालादिस्पर्शप्रकरणे आपस्तम्बवचन-

अज्ञानतो वत्सरत्रयेण साम्यम्। पतितामान्नभक्षणे पतितसिद्धान्नभक्षणाच्चतुर्थभागः। एवं पतितपानीयपानेऽपि चाण्डालान्नभक्षणे तथा दर्शनात्। यथा विष्णुः। चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराक इति। अत्रान्नम् आमान्नम् उत्तरत्र सिद्धान्नदर्शनात्। पराके च द्वादशोपवासाः॥ ९९॥

तथा प्रचेताः

पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्।
पानीयपानतश्चैव कुशवारि पिबेत्त्र्यहम्॥

त्रिरात्रोपवासे चतुर्विंशतिपणलभ्यं काञ्चनं देयम्। एतदेव कुशवारिपाने किञ्चिदूनं देयम्। पतितोच्छिष्टभक्षणे तु पतितान्नभोजनात् द्वैगुण्येन पापाधिक्यम्। यथाङ्गिराः,

चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे।
द्विजः शुध्येत्पराकेण शूद्रः कृच्छ्रेण शुध्यति॥

---

मिदं वक्ष्यते कृच्छ्रमाचरेदिति कृच्छ्रं प्राजापत्यम् अत्रैका धेनुः। पातकीति उपपातकिस्पृष्टपाकपात्रे सिद्धान्नभोजन इत्यर्थः। पतितस्पृष्टान्नभोजने यत् पापं तस्य पादहानिरित्यर्थः। पातकिपाकेति पातकिपाकपात्रसंस्पृष्टे निजपाकपात्रान्नभोजन इत्यर्थः। चतुर्भाग इति पतितसिद्धान्नभक्षणे यत् पापं तच्चतुर्भाग इत्यर्थः॥ ९९॥

आमान्नभक्षणवत् पानीयपानेऽपि पादमात्रे प्रमाणमाह तथा प्रचेता इति सप्ताहोदकवासे धेनुद्वयमुक्तं तच्चतुर्भागो धेन्वर्द्धं भवति तदेव त्र्यहकुशवारिपाने धेनुसङ्कलनया दर्शयति त्रिरात्रोपवास इति अत्र किञ्चिदूनत्वानपेक्षया तच्चतुर्थभागो मन्तव्यः। धेनुद्वयमिति धेनुपञ्चकार्द्धस्य धेनुद्वयादधिकत्वेऽपि अल्पानपेक्षया द्वैगुण्याभिधानमिति भावः। एतच्च सगुणविषयं प्रचेतोवचनस्य सगुणविषयत्वात् प्रपञ्चार्थं प्रकृतोपयोगितया उपसंहरति तेनेति

एतत् सकृज्ज्ञानविषयम्। पराके पञ्च धेनवः। सकृदज्ञानकृतपतितान्नभोजने धेनुद्वयं प्रचेतो वचने व्याख्यातम्। तेन ज्ञानत उच्छिष्टान्नभक्षणे मासत्रयेण पतितसाम्यम् अज्ञानतो मासषट्केन। उच्छिष्टान्नभक्षणवदुच्छिष्टप्रोञ्छनेऽपि व्यवस्था।

उच्छिष्टभक्षणञ्चैव तथा तस्य च मार्जनम्।

इति देवलवचने साहचर्य्यदर्शनात्। अत्र च कृतानेकपातकपुरुषसंसर्गादेकैव पापव्यक्तिरुत्पद्यते न भिन्ना कल्पनागौरवापत्तेः पुरुषापराधस्य च संसर्गलक्षणस्य निमित्तकारणस्य तद्विशिष्टात्ममनोयोगस्याप्यसमवायिकारणस्यैकत्वात् प्रायश्चित्तन्तु गुरुसंसर्गस्यैव करणीयं गुरुणा प्रायश्चित्तेन लघुनः पापस्य क्षयाभिधानात्। तथानेकमहापातकिपुरुषसंसर्गजनितपापव्यक्तिभेदेऽपि देशकालकर्त्रैक्ये तन्त्रताया उक्तत्वात् तन्त्रेणैव प्रायश्चित्तम्॥ १००॥

---

पापद्वैगुण्यात् कालस्याद्धत्वमित्यर्थः। एवञ्च पतितान्नभोजनपतितप्रतिग्रहयोर्ज्ञानतः षड्भिर्मासैरज्ञानतो संवत्सरेणेत्युक्तं युक्तमेवेति अत्र चेति कृतं ब्रह्महत्यादिभेदेन महापातकजातीयं महापातकोपपातकादिभेदात् विजातीयं वा अनेकं येन तादृशपुरुषसंसर्गादित्यर्थः। ननु कारणस्यानेकत्वात् कार्य्यस्याप्यनेकत्वं दुर्निवारं ततश्च कल्पनागौरवं न दोषाय इत्यत आह पुरुषापराधस्येति तद्विषयकस्य संसर्गविषयकस्यात्ममनोयोगस्य तन्निष्ठेति पाठेऽप्ययमेवार्थः। अतो निमित्तकारणमप्येकम् असमवायिकारणमप्येकं कथं कार्य्यस्यानेकत्वमित्यर्थः। ननु यत्र महापातकिसंसर्ग उपपातकिसंसर्गश्च कालभेदेन कृतस्तत्र पापद्वयोत्पत्तेरवश्यम्भवात् किमेकमेव प्रायश्चित्तं किंवा पृथगिति सन्देहे आह प्रायश्चित्तन्त्विति प्रसङ्गात् लघुपापक्षयात् एकमेव गुरुप्रायश्चित्तमित्यर्थः। तथेति कालभेदेन महापातकिनामनेकसंसर्गे अनेकमहापातकिनां वा संसर्गे पापव्यक्तिभेदेऽपि तन्त्रेणैकं प्रायश्चित्तमित्यर्थः॥ १००॥

जिकनन्तु युगपदनेकब्राह्मणवधवद् युगपदनेकमहापातकिसंसर्ग एव तन्त्रता। क्रमकृते तु ब्रह्मवधवदावृत्तिरेव प्रायश्चित्तस्येति तन्न ब्राह्मणवधेऽपि क्रमकृते प्रायश्चित्ततन्त्रताया उक्तत्वात् युगपदनेकब्रह्मवध एव ज्ञानाज्ञानाभ्यां विशिष्टमरणयावज्जीवव्रतलक्षणप्रायश्चित्तभेदेन तन्त्रताभावस्य श्रीमहादेवपादैर्दर्शितत्वात् इह तु तद्वत् प्रायश्चित्तवैशिष्ट्ये प्रमाणं नास्ति। तथा शुद्रस्येव महापातकिनोऽपि पातक्यन्तरसंसर्गे पापमुत्पद्यत एव आवृत्तब्रह्मवध इव हेतोः समत्वात्। अन्यथा पातकिनश्चाण्डालान्नभक्षणेऽप्यदोषः स्यात् तथा प्रतिक्षणं पूर्वपूर्वोत्पन्नपापव्यक्तिसहकृतोत्तरोत्तरसंसर्गादन्या अन्या एव पापव्यक्तयो महत्य उत्पद्यन्ते पूर्वापूर्वाचोत्पाद्येव

---

जिकन इति एकव्यापारनिष्पन्नत्वेन वधस्य युगपत्त्वमिति उक्तमतद्वयं हेतुद्वयेन दूषयति ब्रह्मवधेऽपीति ज्ञानतो विशिष्टमरणं निष्कालकादिविधिनाग्निप्रवेशान्मरणम् अज्ञानतो यावज्जीवव्रताचरणं भविष्यपुराणोक्तं ब्रह्मवधप्रकरणे दर्शितम् अतः क्रमकृते तन्त्रतैव नावृत्तिः युगपदनेकसंसर्गे तु प्रमाणाभावात् नापि प्रायश्चित्तवैशिष्ट्यं नापि तन्त्रता प्रागुक्तयुक्त्या एकपापव्यक्तेरेव जातत्वादित्यत आह इह त्विति यथा क्रमकृते संसर्गे तन्त्रता तथा शुद्रस्येव महापातकिनोऽपि पातक्यन्तरसंसर्गे पातकान्तरोत्पत्तेस्तन्त्रता वा प्रसङ्गो नेत्यर्थः। हेतोः समत्वादिति यथा ब्रह्मघ्नस्य ब्रह्मवधावृत्तिः पापान्तरोत्पत्तौ हेतुस्तद्वत् महापातकिनः पातकिसंसर्गः पातकान्तरोत्पत्तौ हेतुरित्यर्थः। अन्यथेति यदि पातकिनः पातकान्तरं न स्यात् तदा तस्य चाण्डालान्नभक्षणेऽपि दोषाभावः स्यात् तत्र दोषोत्पत्तिः सर्वलोकप्रसिद्धैव ब्रह्मघ्नस्यापि ब्रह्मवधावृत्तौ पापान्तरोत्पत्तौ भविष्यवचने प्राग्दर्शितत्वाच्चेति भावः। तर्हि संसर्गस्यानेकत्वात् प्रतिक्षणं भिन्नभिन्ना एव पापव्यक्तयो जायन्ते तत्रापि तन्त्रताप्रसङ्ग इत्यत आह तथेति महत्यः पूर्वोत्पन्नादित्यर्थः। मूलपापकर्तृसमानासम्पूर्णेत्यर्थः। कियद्दिनसंसर्गे किं स्यादित्यत आह वत्सराभ्यन्तर इति अतएवेति अतएव दुरितापूर्वस्यैकत्वा-

विनश्यति वत्सरेण तु मूलपापकर्त्तृपापव्यक्तिक्षमाना दुरिता-पूर्वव्यक्तिरुत्पद्यते सा च सम्पूर्णनरकफला। वत्सराभ्यन्तरेऽल्पाल्पनरकफलिका अत एव प्रायश्चित्तवाक्यमप्येकं न तु भिन्नभिन्नाः समानाः पापव्यक्तयः समुदायात् सम्पूर्ण-नरकफलं सम्पूर्णनरकस्य ब्रह्मवधादावेकपापव्यक्तिफलत्व-दर्शनादिति॥ १०१॥

संसर्गं निरूप्य इदानीं प्रायश्चित्तं निरूप्यते। तत्र मनुः।

यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्य्यात्तत् संसर्गविशुद्धये॥

पतितशब्दोऽत्र पापमात्रान्वितपुरुषपर इति पूर्वमेव व्याख्या-तम्। तथा च जावालः।

संसर्गी येन संसर्गं कुर्य्यात्तद्व्रतमाचरेत्।

तेन नवविधपापान्वितानां मध्यात् यो येन पापीयसा संसृष्टः स तस्य व्रतं कुर्य्यात् यद्यपि व्रतपदं नियतसंकल्पविशेषवाचकं

---

देव प्रायश्चित्तसङ्कल्पवाक्यमप्येकमेव संसर्गजनितपापचयकामो नववार्षिक-व्रतमहं करिष्ये इत्येकमेववाक्यं न तु संसर्गाणां बहुत्वात् भिन्नभिन्नं वाक्यं यद्वा यदि भिन्नभिन्नाः पापव्यक्तयः स्युः तदा पृथक् पृथगेव प्रायश्चित्तविधानं मुनिभिरुच्यते किन्तु यो येन पतितेनेत्यादिना एकस्मिन्नेव संसर्गे एकमेव प्रायश्चित्तं विधीयत इति भावः। उपसंहरति न त्विति न तु बहवः पापव्यक्तयः न च तासां समुदितानां सम्पूर्णनरकं फलं ब्रह्मवधादावेकस्मादेव पापात् सम्पूर्णनरकफलं यतो दृश्यते ततश्च संवत्सरसंसर्गे पापव्यक्तेरेकत्वात् कथं तन्नतेति प्रघट्टार्थः व्याख्यातमिति इति संसर्गनिरूपणम्॥ १०१॥

एतत् प्रकरणादौ वचनमिदं पापिमात्रविषयतयोपसंहृतमस्तीत्यर्थः। नियतसङ्कल्पेति नियतत्वं शास्त्रविहितत्वं विशेषत्वं प्रतिनिधिसंभाव्यमानफल-

मरणेऽपि मनुना प्रयुक्तं यैर्यैर्व्रतैरपोहेतेत्युक्ता मरणस्यापि तेनोक्तत्वात्तथापि ब्रह्मबधादिसंसर्गे तन्न मरणपरं तत्र पाद-न्यूनत्वादेरयोग्यत्वात् किन्तु द्वादशवार्षिकादिपरमेव। यथा विकृतौ भागव्यवस्थादर्शनात् प्रकृतौ शास्त्रार्थनिश्चयः। तथा च व्यासः

> यो येन संपिबेद्वर्षं सोऽपि तत् समतामियात्।
> पादन्यूनं चरेत् सोऽपि तस्य तस्य व्रतं द्विजः॥

यद्यपि स तस्यैव व्रतं कुर्य्यादित्यत्र व्रतशब्दात् सम्पूर्णव्रतमव-गम्यते तथापि व्यासवचनात्तस्य पादन्यूनव्रतपरत्वम्। ननु मनुजावालादिवचनेषु तद्व्रतातिदेशस्थव्रतशब्दस्य सम्पूर्णव्रत-

---

कत्वं यथा चान्द्रायणादिव्रते धेनुदानादिप्रतिनिधिस्तथा मरणस्यापि चतुर्विंशति-वार्षिकव्रतादेः प्रतिनिधित्वसम्भवात् व्रतत्वमिति भावः। तथापीति तद्व्रतपदं न मरणपरं मरणेतरपरमित्यर्थः संसर्गे मूलपापिव्रतस्य पादन्यूनादिकं वक्ष्यते आदिपदात् लघुसंसर्गे वक्ष्यमाणशतांशादिकं गृह्यते तस्य च पादन्यूनत्वादे-र्मरणेऽयोग्यत्वादसम्भवादित्यर्थः। अतएव मरणवैकल्पिकस्यैव चतुर्विंशति-वार्षिकस्य पादोनत्वं वक्ष्यते न तु मरणस्येति किन्त्विति अत्र द्वादशवार्षिकपदं वक्ष्यमाणव्यासवचनात् पादन्यूनतया विशेषणीयम्। यथेति यथा विकृतावग्नि-ष्टोमे दक्षिणाविभागदर्शनात् प्रकृतौ दर्शपौर्णमासदक्षिणाविभागनिर्णयः तद्व-दत्रापि विकृतौ संसर्गे पादन्यूनत्वादिदर्शनात् प्रकृतौ ब्रह्मबधादौ विहितस्य द्वादशवार्षिकादेरेवातिदेशत्वं न मरणस्य पादन्यूनत्वासम्भवात् यद्वा विशेषदर्श-नात् विशेषलाभे दृष्टान्तः यथा विकृतौ विशेषदर्शनात् प्रकृतौ विशेषलाभ-स्तद्वदत्रापि व्यासवचने विशेषदर्शनात् मनुवचने विशेषलाभ इत्यर्थः व्यास इति संपिबेत् व्यवहरेदित्यर्थः यद्यपीति ननु एतद्वचने पादन्यूनत्वदर्शनात्। द्वादश-वार्षिकादिव्रतपरमस्तु मनुवचनन्तु कामकृत महापातकिसंसर्गे पादन्यूनत्वास-म्भवात् मरणस्यातिदेशकमस्तु नैवं यदि मनुवचनस्य कामकृतमहापातकिसंसर्गे

वचनात् व्यासवचने पादन्यूनपदं द्वितीयसंसर्गिविषयमस्तु न वधप्रयोजकादिसंसर्गिविषये व्रतशब्दस्य पादन्यूनादिपरत्व-स्यावश्यकत्वात्। तथा रोधादिना गोवधे व्रतपादादेरुक्त-त्वात् तस्य संसर्गे पादार्द्धादिपरत्वमेव ॥ १०२ ॥

तथा बालस्त्रीवृद्धविषये न्यूनव्रतविधानार्थत्वमस्य। किञ्च यानादिलघुसंसर्गे दिनैकद्विकक्रते व्रतशतांशाद्यति-देशाच्च। किञ्च यो येनेत्यादि मन्वादिवाक्यानां प्रथम-संसर्गिणि सम्पूर्णव्रताभिधाने मरणातिदेशोऽपि किं न स्यात्। किञ्च सङ्करिणो मूलपापकर्तृत्वेन भुक्तं यैस्तत्र पक्वान्नमित्याप-स्तम्बेन प्रथमसंसर्गिण्येव न्यूनप्रायश्चित्तविधानात् कथमत्र प्रथमसंसर्गिणि सम्पूर्णव्रतविधिः। किञ्च यो येनेति व्यास-वचनस्य मन्वादिवाक्यवन्मूलपापकर्त्रनुक्त्वा पठितत्वात् यो

---

मरणातिदेशकत्वं तदितरपापिसंसर्गे पादन्यूनव्रतातिदेशकत्वात् तदा श्रुति-द्वयकल्पनापत्तिर्विधिवैषम्यापत्तिश्च स्यात्। नन्विति तद्व्रतातिदेशस्यास्य पापि-व्रतातिदेशकविधिस्थस्य व्रतशब्दस्येत्यर्थः द्वितीयसंसर्गिविषयं मनुवचनन्तु प्रथम-संसर्गे तुल्यप्रायश्चित्तातिदेशकमस्तु। आवश्यकत्वादिति प्रयोजकादीनाम् अति-व्यवहिततया संसर्गिणस्तत्तुल्यप्रायश्चित्तानौचित्यात् तन्न्यूनप्रायश्चित्तावश्यंवाच्यत्वात् कथं प्रथमसंसर्गिणि मूलपापिव्रततुल्यव्रतविधिरित्यर्थः अत्यन्तानौचित्यं दर्शयति तथेति पादमेकं चरेद्रोध इत्यादिवचनात् मूलपापिनः प्राजापत्यव्रतपादादेरल्प-स्योक्तत्वात् तत्संसर्गिणि तत्तुल्यस्यात्यन्तानौचित्यात् व्रतशब्दस्य पादार्द्धादिपरत्वमेव युक्तमित्यर्थः ॥ १०२ ॥

ननु वचनात्तथेति किमनौचित्यगणनयेत्यत आह तथेति अशक्तबालादि-विषयेऽवश्यमेव न्यूनव्रतविधायकत्वमस्य वचनस्य वाच्यमित्यर्थः। ननु अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः। प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव चेति विष्ण्वादिवचनात् बालादीनां प्रायश्चित्तह्रासोऽस्त्येव नास्य न्यूनव्रतविधायकत्व-मित्यत आह किञ्चेति अथ लघुसंसर्गे दिनैकद्विकक्रते संवत्सरस्य भागहारात्

येनेत्यत्र पापकर्त्तृसंसर्गावगतेः स तस्यैवेत्यनेन प्रकृतवाचिना तदभिधानात् कथं न प्रथमसंसर्गिणि पादोनत्वं व्यासवाक्ये साम्योक्तिस्तु प्रायश्चित्तलाघवेनाप्युपपद्यते अनुपातकस्य महापातकसाम्यवत् महापातकसंज्ञा च संसर्गस्य लघुत्वेऽप्युपपन्ना द्रुमच्छेदादीनामुपपातकत्वात्। ननु द्वितीयतृतीयसंसर्गिणि पापोत्पत्तौ प्रमाणं नास्ति। अतएव वृद्धशातातपः।

अशुचिं संस्पृशेत् यस्तु एक एव स दूष्यति।
तत्स्पृष्टोऽन्यो न दूष्येत सर्वद्रव्येष्वयं विधिः॥

तथा, संहतानान्तु पात्राणां यद्येकमुपहन्यते।
तस्यैव शोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि॥

इति कथं वा तन्महापातकं संसर्गश्चापि तैः सहेत्यत्र मनुवचने तच्छब्दान्मूलपापकर्त्तॄणामवगतेः कथञ्चन चतुर्थसंसर्गिणि पापमिति उच्यते यश्च येन पापात्मनेति यो येन संपिबेदिति संसर्गी येन संसर्गमिति॥ १०३॥

---

तथेत्यत आह किञ्चेति इष्टापत्तिरित्यत आह किञ्चेति सङ्करिणः चण्डालेन सहाज्ञानादेकगृहवासिन इत्यर्थः। चान्द्रायणं पराको वा द्विजातीनां विशेषं इत्यनेन सङ्करिणश्चान्द्रायणमभिधाय आपस्तम्बेन तत्संसर्गिणि भुक्तं येस्तत्र पक्वान्नं कृच्छ्रं तेषां विनिर्दिशेत् इत्यनेन कृच्छ्रमात्रप्रायश्चित्तविधानादित्यर्थः। वचनात्र तथेत्यत आह किञ्चेति ननु पादन्यूनत्वं यदि तदा सोऽपि तत्समतामियादिति साम्योक्तिः कथं प्रायश्चित्ततुल्यत्वे हि साम्योक्तिर्घटते इत्यत आह साम्योक्तिरिति अनुपातकप्रायश्चित्तवदिति षष्ठ्यर्थे वतिः अनुपातकप्रायश्चित्तस्य लाघवेनापि यथा अनुपातकस्य महापातकसाम्योक्तिरित्यर्थः। तर्हि महापातकसंज्ञा कुतः ब्रह्मवधादिचतुर्भ्यो न्यूनत्वादित्याह महापातकेति कथं वेति तद्द्वितीयतृतीयसंसर्गजं पापमित्यर्थः॥ १०३॥

विष्णुव्यासजाबालवचनैः सामान्येन पापिष्ठसंसर्गी पापी भवतीति प्रतिपादनात् संसर्गपापिष्ठस्यापि संसर्गी पापयुक्तो भवतीति एभिरेव प्रतिपादितं तथा च गौतमः तैश्चाब्दं समाचरन्निति अत्र तच्छब्देन पूर्वोक्तपतितात्यागिनोऽपि ग्रहणम्। एवञ्च मनुवचने संसर्गस्यापि परामर्शः सिद्धः स्पर्शे तु लघुतर-संसर्गे न तथा वचनात् एव चतुःसंसर्गिणोऽपि पापं स्यादिति चेन्न व्यासादिवचने तृतीयसंसर्गिपर्य्यन्तं प्रायश्चित्त-दर्शनात्॥ १०४॥

यथा चाण्डालादिसङ्करे व्यासः

> ये तदन्नाशिनो विप्राः कृच्छ्रं तेषां विधीयते।
> तद्भोजिनोऽर्द्धकृच्छ्रेण तदन्नादाश्च पादतः॥

---

विष्णुव्यासेति यश्च येन पापिना सह संसृज्येति प्रागुक्तं विष्णुसूत्रं यो येन संपिबेदिति व्यासवचनन्तु विष्णुजाबालवचनयो रुपोद्वलकमात्रं न तु प्रकृतोपयोगि-मनुवचनवन्मूलपापकर्त्तृनुक्त्वा पठितत्वादिति प्रागुक्तत्वेन द्वितीयसंसर्गिविषयकत्वा-भावात्। एभिरिति विष्ण्वादिभिरेवेत्यर्थः। अत्रेति पतितात्याग्यपतितत्यागिनश्च पतिताः पतितसंयोजकाश्च तैश्चाब्दं समाचरन्निति विष्णुसूत्रे पूर्वोक्तपतितात्यागिनः प्रथमसंसर्गिणस्तच्छब्देन ग्रहणात् द्वितीयसंसर्गिणोऽपि पतितत्वमुक्तमिति भावः। द्वितीयसंसर्गस्य महापातकसंज्ञामुपपादयति एवञ्चेति एवं महापातकिद्वितीय-संसर्गस्यापि पातित्यहेतुत्वे सिद्धे सतीत्यर्थः। प्रक्रंस्यमानेति संसर्गश्चापि तैः सहेत्यत्र तत्पदेन प्रागुक्तब्रह्महत्यादीनां न ग्रहणं सहसंसर्गानन्वयात् किन्तु महा-पातकिनामेव ग्रहणं महापातकित्वञ्च संसर्गिणोऽपि अतः प्रक्रान्तचतुर्णां ब्रह्मघ्ना-दीनां प्रक्रंस्यमानस्य संसर्गिणश्च महापातकिपरामर्शकतत्पदेन ग्रहणात् द्वितीय-संसर्गस्यापि महापातकसंज्ञेति भावः प्रक्रंस्यमानसंसर्गस्येति अर्श आद्यच्प्रत्ययात् प्रक्रंस्यमानसंसर्गवत इत्यर्थः स्पर्शे त्विति न तथा न द्वितीयसंसर्गस्य पापहेतुत्वं प्रागुक्तशातातपवचनादित्यर्थः॥ १०४॥

यथेति चाण्डालसङ्करे इति चण्डालेन सहाज्ञानादेकगृहवास इत्यर्थः।

तथापस्तम्बः ।

> भुक्तं यैस्तत्र पक्वान्नं कृच्छ्रं तेषां विनिर्दिशेत् ।
> तेषामपि च यैर्भुक्तमर्द्धं तेषां विधीयते ॥
> तेषामपि च यैर्भुक्तं तेषां पादो विधीयते ।

अतो यो येनेति मनुवचनं संसर्गित्रितयपरं प्रायश्चित्तन्त् एतेष्वेव अन्यत्र प्रायश्चित्ताश्रवणात् । ननु यत्र ज्ञानतो ब्रह्मबधादौ मरणान्तिकं तत्र न संसर्गिणि मरणातिदेशः पादन्यूनत्वासम्भवात् न च द्वादशवार्षिकव्रतातिदेशः तस्य मूलपापकर्त्तर्य्यनभिहितत्वात् यत्र वा गुरुबधादौ यावज्जीवमहाव्रतमुक्तं तत्र तत्संसर्गिणि कथं पादन्यूनत्वम् अनिर्णीतकालत्वादायुषः उच्यते। मरणातिदेशासम्भवात् तद्वैकल्पिकचतुर्विंशतिवार्षिकस्यैवातिदेशः तदेव पादन्यूनं कर्त्तव्यावज्जीवमहाव्रते च यद्यायुर्गणनेनायुर्ज्ञानं सम्भवति तदा पादन्यूनत्वं सुकरमेव। असम्भवे यावज्जीवमहाव्रतस्य द्विगुणद्वादशवार्षिकमहाव्रतसमानत्वात् तस्यैवातिदेशः तदेव पादोनं कर्त्तव्यम्। एवं यत्र मूलपापकर्त्तुश्चान्द्रायणादिकं विहितं तस्य पादन्यूनत्वासम्भवात् तत्र तत्समानदेयधेनूनां पादन्यूनत्वं यत्र मूलपापकर्त्तरि प्राजापत्यं विहितं तत्संसर्गिणि तस्य पादन्यूनत्वासम्भवात् धेन्वोश्च प्रादन्यूनत्वासम्भवात्

---

व्यास इति तदन्नाशिनश्चाण्डालगृहवाससहैकवसितामन्नाशिन इत्यर्थः । आपस्त इति अन्त्यजातिरविज्ञातो निवसेत् यस्य वेश्मनीत्यधिकारे वचनमिदं चाण्डालसंवासिनां पक्वान्नं तत्र चाण्डालेन सह वासगृहे यैर्भुक्तमित्यर्थः । प्रायश्चित्तन्त्वि संसर्गित्रितये एतदेव मनुव्यासाद्युक्तं पादन्यूनमेव द्वितीयतृतीयसंसर्गिभ्योऽन्य प्रायश्चित्ताश्रवणात् न च भुक्तं यैस्तत्र पक्वान्नम् इति वचने चण्डालसङ्करेऽज्ञ

तन्मूल्यकाञ्चनस्य तद्बोद्धव्यम्। एवञ्च मूलपापकर्त्तुर्ज्ञाना-ज्ञानाभ्याम् अनुबन्धादिना च पापस्य गुरुलाघवं निरूप्य यत् प्रायश्चित्तं तदेव संसर्गिणा पादोनं कर्त्तव्यं संसर्गिणि यद-ज्ञानत उक्तं तज्ज्ञानतो द्विगुणं यच्च ज्ञानतः तस्याज्ञानाद-र्द्धम्। यत्तु

ज्ञात्वा करोति तत् सङ्गं निष्कृतिर्न विधीयते।
प्रायश्चित्तमकामानां कामावाप्तौ न विद्यते॥

इति छागलेयवचनं तदज्ञानोक्तनिष्कृत्यभावपरम्।

अकामानां प्रायश्चित्तं कामावाप्तौ न विद्यते।

इत्यभिधानात् अन्यथा तदनर्थकं स्यात् देवलादिभिर्ज्ञानकृते-ऽपि संसर्गे प्रायश्चित्ताभिधानात् स्त्रीत्ववार्द्धकबाल्यैस्ततोऽपि ह्रासः कर्त्तव्यः। अत्र वर्णक्रमेणापि ह्रासः कार्य्यः पाद-ह्रान्यान्य वर्णत इति सामान्येनाभिधानादिति जिकनः। तन्न मनुना संसर्गं याति मानवः। देवलेन जानन् संवत्सरं नर इति सामान्येनाभिधानात् सर्ववर्णावगतेः पादह्रान्यान्यवर्णत इति प्रकरणान्तरीयत्वात्। अतः संसर्गिणि ब्राह्मणे शूद्रे च न प्रायश्चित्ते विशेषः। तथा निरन्तरसंवत्सरसंसर्गे यत्

---

ईहानिदर्शनादन्यत्रापि तदेव कल्पनीयमिति वाच्यं व्यासादिवचने सामान्यतः पादन्यूनस्योक्तत्वात् दृष्टपरिकल्पनया तत्संङ्कोचस्यान्याय्यत्वादिति। मूलपाप-कर्त्तरीति कामकृतब्रह्मवधादिकर्त्तरीत्यर्थः अतो मरणे यावज्जीवव्रते च संसर्गिणि का व्यवस्थेति पूर्वपक्षार्थः। द्विगुणद्वादशवार्षिक इति यद्यपि यावज्जीवव्रतस्य द्विगुणद्वादशवार्षिकोपलक्षकत्वमेव प्रागुक्तं न तु तत् साम्यं तथाप्युभयोर्मरण-तुल्यत्वात् यावज्जीवस्य चतुर्विंशतिवार्षिकोपलक्षकत्वात् साम्योक्तिरिति ध्येयम्। तद्बोद्धव्यमिति तत् पादन्यूनत्वमित्यर्थः। संसर्गिणीति यत्र संसर्गविशेषे-

प्रायश्चित्तमुक्तं तस्य च संवत्सरासम्पूर्त्तौ भागह्रारः कार्य्यः। तथा च वृहस्पतिः।

षाण्मासिके तु संयोगे याजनाध्यापनादिना।
एकत्राशनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्॥

अतो निरन्तरमासत्रयसंयोगे प्रायश्चित्तपादो निरन्तरमासनवकसंयोगे पादत्रयमित्याद्यूहनीयम्॥ १०५॥

सद्यः पातहेतुषु संसर्गेषु प्रायश्चित्तविशेषमाह वशिष्ठः। पतितसंयोगे ब्राह्मेण वा स्रौवेण वा यौनेन वा यास्तेभ्यः सकाशान्मात्रा उपलब्धास्तासां परित्यागः तैश्च न संवसेत् उदीचीं दिशं गत्वा अनश्नन् संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते। अस्यार्थः अध्यापनादिसंसर्गे या मात्रादि धनं लब्धं तस्य त्यागं कृत्वा पतितैः सह सम्भाषं त्यक्त्वा भोजनमकुर्वाणः संहिताध्ययनरूपं प्रायश्चित्तं कुर्य्यात्। अनेन।

जपन् वान्यतमं वेदं योजनानां शतं व्रजेत्।
ब्रह्महत्यापनोदाय मितभुक् नियतेन्द्रियः॥

इति मनुनोक्तं ब्रह्मवधप्रायश्चित्तमत्र दर्शितम्। अध्वगमनस्थाने अभोजनमत्रोक्तम्। अतश्च द्वादशवार्षिकमहाव्रतात्

---

ऽज्ञानकृते मुनिभिर्यत्प्रायश्चित्तमुक्तं तत्र ज्ञानकृते तद्द्विगुणम्। यत्र च ज्ञानकृते यदुक्तं तत्राज्ञानकृते तदर्द्धं बोद्धव्यम्। तद्वचनादर्द्धमित्यर्थः। प्रकरणान्तरीयत्वादिति अभक्ष्यभक्षणविषयकत्वमिति भावः॥ १०५॥

इदानीं प्रायश्चित्तमाह सद्य इति तत्रेति वार्षिकप्राजापत्ये त्रिंशद्धेनवः द्विवार्षिकमहाव्रतेऽपि त्रिंशद्धेनवः अतः समानमित्यर्थः। न चात्र व्यास-

किञ्चिदूनम्। तथाच पैठीनसिः। सहचर्य्यया संवत्सरं प्राजापत्यं चरेत्। एतच्छयनादिना एकैकेन यत्राज्ञानतः षड्भिर्वर्षैः साम्यमुक्तं तत्र वार्षिकसंसर्गे वार्षिकप्राजापत्यं द्विवार्षिक-महाव्रतसमानमुक्तम् अज्ञानतो मासद्वययाजनादिष्वपि एत-द्वार्षिकप्राजापत्यमूहनीयम्। यच्च शङ्खेनोक्तं पतितसंसृष्टो ह्यात्मानमुद्धरेत् संवत्सरं तप्तकृच्छ्रं कुर्य्यात् एतत् तप्तकृच्छ्रं द्वादशाहसाध्यम्। त्र्यहमुष्णाः पिबेदपि इत्यादिना क्लेशा-धिक्यात् प्राजापत्यद्विगुणीकृतम्। याजनादिना एकैकेना-ज्ञानतश्चातुर्मासिकसंसर्गे बोध्यम्। यत् पुनर्विष्णुनोक्तं स्तोकसंसर्गेषु यानादिवर्जितेषु विशोधनं तप्तकृच्छ्रं चरित्वा शिशुचान्द्रायणं चरेदिति ॥ १०६ ॥

तत्तु स्तोकसंसर्गाणां यानादिवर्जितानाम् आलापस्पर्श-निश्वासानां त्रयाणाम् एकैकेन यानादिना समानत्वात् याना-दिना चैकैकेन मासद्वयेनाज्ञानतः पञ्चधेनवो भवन्ति आला-पादिभिस्त्रिभिरपि मिलितैर्मासद्वयेन ता एव धेनवो भव-न्तीति विष्णुनोच्यते। तप्तकृच्छ्रं चतुरहसाध्यं याज्ञवल्क्योक्तं

---

वचनात् पादोनं संवत्सरप्राजापत्यमिति वाच्यं यत्र मूलपापकर्त्तुर्व्रतातिदेश-स्तत्रैव पादोनत्वम् अत्र तु पैठीनसिना संसर्ग एव विशिष्य संवत्सरप्राजापत्यं विहितमिति न तु पादोनत्वमिति। याजनादिनेति एकैकेन याजनादिनेति एकैकेन याजनादिना संवत्सरेण साम्यमुक्तं तत्त्रिभागमासचतुष्टयसंसर्गे प्राजापत्य-द्विगुणीभूततप्तकृच्छ्रस्य चतुर्वार्षिकमहाव्रततुल्यस्यौचित्यमिति भावः ॥ १०६ ॥

तत्त्विति तदालापादित्रयाणामेकैकयानादीनां समत्वात् मासद्वयसंसर्ग-विषयमित्यध्याहारेण योजनीयम्। आलापादिभिरिति आलापादिभिर्मिलितै-र्वत्सरेण विंशद्दिनूनासुक्तत्वात् तत् षष्ठभागेन मासद्वयेन पञ्चधेनवो भव-

तत्र धेनुरेका शिशुचान्द्रायणे धेनुचतुष्टयं मिलित्वा पञ्चधेनवः तथा पयोभक्ष्यानुवृत्तौ स्तोकसंसर्गमभिधायाह शातातपः,

पतितसंव्यवहारी मासैकेन विशुध्यति।

मासैकेन पयोभक्षणे च पञ्चधेनवः प्रयासलाघवेन मासोपवासव्रताङ्गागद्वयापकर्षान्मासोपवासे च पञ्चदशधेनवः अत इदं विष्णूक्तविषये लघुसंसर्गे बोद्धव्यं पतितोत्पन्नत्वमपि संसर्गविशेषः। तत्र प्रायश्चित्तमाह वशिष्ठः। पतितोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः सा हि परगामिनी तामनृक्थामुपेयात्। अत्र पुंस एव पतितत्वं प्रतीयते न कन्यायाः तथा पतितानुवृत्तौ याज्ञवल्क्यः

कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम्।

इति। यथा हारीतः। पतितस्य कुमारीं विवस्त्रामाप्लाव्यामहोरात्रोपोषितां प्रातःशुक्लेन वाससा आच्छाद्य नाहमेतेषां ममैवैते इति त्रिरुच्चैरभिदधानां तीर्थेषु गृहेषु वा उद्वहेरन्। स्त्रिया अपि पतितत्वं प्रायश्चित्तञ्चाह बौधायनः। अशुचिशुक्रोत्पन्नानां तेषां शुद्धिमिच्छतां प्रायश्चित्तं पतनीयानां तृतीयोऽंशः स्त्रीणामंशात्तृतीयः। पतनीयानामिति नरके पतन्तीति पतनीयाः कर्त्तर्यनीयः कृत्यजुटो बहुलमिति पाणिनिस्मरणात् कर्मप्रवचनीयवत्॥ १०७॥

---

न्तीति भावः। विष्णूक्तविषय इति द्वैमासिकालापादि वयसंसर्गे इत्यर्थः। संसर्गविशेष इति संसर्गः सम्बन्धः स चात्र जन्यजनकरूप एव तथा चात्र प्रायश्चित्तमपि श्रूयते अतएव धाप्रत्ययान्नवभ्योऽप्यधिकमस्तीत्युक्तम्। पूर्वोक्तविरुद्धं दर्शयन् व्यवस्थायामनैयत्यमुपपादयति स्त्रिया अपीति पतनीयानामिति

तेन पतितोत्पन्नानां शुद्धिमिच्छतां पतितानां प्रायश्चित्तस्य तृतीयभागः तत् प्रायश्चित्तं ज्ञेयं युक्तञ्चेदं ज्ञानपूर्वके संसर्गे महापराधेऽपि पादन्यूनत्वविधानात् सर्वथा ज्ञानानर्हे अपराधशून्ये पतिताज्जन्मनि तृतीयपादाभिधानमुपपन्नमेव स्त्री च पतितोत्पन्ना तृतीयभागस्य तृतीयभागं कुर्य्यात्। अत्र जिकनेनोक्तं यदा विशुद्धवीजोत्पन्नः पतितस्त्रीजातः तदा पादन्यूनं तृतीयभागं कुर्य्यात्।

तयोरपि पिता श्रेयान् वीजप्राधान्यदर्शनात्।

इति मनुवचनात्। नन्वेवं याज्ञवल्क्यहारीताभ्यां बौधायनवचनस्य विरोधः। याज्ञवल्क्यहारीतयोः पापक्षयार्थमुपवासश्रवणात् बौधायनेन पतितप्रायश्चित्ततृतीयांश तृतीयांश विधानात्। उच्यते। वचनद्वयैकवाक्यतया सोपवासं पातकप्रायश्चित्ततृतीयभाग तृतीयभागं कारयित्वा विवाहये

---

अर्थाज्जनकानामित्यर्थः अर्थात् पूर्वोक्ततृतीयांशात् तृतीयो जनकस्य नवमोऽंशः इत्यर्थः। अंशात्तृतीयादिति पाठे सुव्यक्त एवायमर्थः ॥ १०७ ॥

तेनेति पतितानां प्रायश्चित्तस्य यस्तृतीयो भागस्तत् पतितोत्पन्नानां प्रायश्चित्तमित्यर्थः। महापराधेऽत्यन्ताकर्त्तव्येऽपीत्यर्थः। ज्ञानानर्हे ज्ञानाविषये अत एवापराधशून्ये जन्मनि जन्मलाभ इत्यर्थः। जिकनेनोक्तमिति पतितपुरुषाज्जातस्तृतीयभागं कुर्य्यात् यदा तु पतिता स्त्री शुद्धः पुमान् तदा स्त्रियाः पुरुषादपकृष्टतया पादन्यूनं तृतीयभागं पतितस्त्रीजातः कुर्य्यात् तयोरपि पिता श्रेयानिति मनुना स्त्रिया अपकृष्टत्वकथनादिति जिकनमतं ग्रन्थकृतोपेक्षितम् अयमत्राशयः। अशुचिशुक्रोत्पन्नानामिति बौधायनोक्तेः तदभाव एवोक्तव्यवस्थायां प्रमाणं यदुच्यते तदा प्रायश्चित्ताभाव एव स्यात्। न तु ह्रासः अशुचिशुक्रोत्पन्नत्वाभावात् अथ पतितोत्पन्न इति वशिष्ठवचनैकवाक्यतया पतितोत्पन्नत्वोपलक्षकत्वं वशिष्ठवचनस्येति चेत् कथं तर्हि प्रकृतस्थले प्रायश्चित्त-

दित्यर्थः। उपवासविधानञ्च देहशुद्ध्यर्थम् प्रायश्चित्तेतिकर्त्तव्यतारूपं वा अतो न विरोधः। जिकनस्तु सोपवासामित्युदरगता किञ्चनार्थं अकिञ्चनामिति वाह्यगता किञ्चनपरं न तु पापक्षयार्थमित्यतोऽनन्यथासिद्धबौधायनवचनात् स्त्रिया अपि पतितत्वप्रतीतेरन्यत्र स्त्रिया इति वशिष्ठवचनमन्यथा व्याख्यातं यादृशं पतितत्वं पुंसस्तादृशं पतितत्वं न स्त्रियाः॥ १०८॥

इति प्रायश्चित्तविवेके संसर्गप्रायश्चित्तं समाप्तम्।

अथानुपातकप्रायश्चित्तम्।

तत्र महापातकतुल्यं पापमनुपातकं वक्ष्यमाणमनुवचनात् अनुपातकसंज्ञा अन्वर्थबलाच्च अतोऽनुसादृश्ये वर्त्तते तेन महापातकसदृशं पापमनुपातकमित्यर्थः। तत्र महापातकसमं पापमाह। मनुः

---

ह्रासः स्यादिति। पातकप्रायश्चित्तेति पातकं मूलपातकं तत्सम्बन्धि यत् प्रायश्चित्तं तस्य नवमभागमित्यर्थः। ननु सामान्यविशेषभावात् परस्परनिराकाङ्क्षत्वाच्च कथं द्वयोर्वचनयोरैकवाक्यतेत्यत आह उपवासविधानञ्चेति असत्यामेकवाक्यतायां देहशुद्धिरूपप्रयोजनान्तरार्थमेवोपवासविधानमित्यर्थः। परस्परसाकाङ्क्षतामुपपादयन्नेकवाक्यताप्यस्तीति दर्शयति प्रायश्चित्तेति कर्त्तव्यतारूपं वेति। जिकनस्त्विति अत्रायमस्वरसः तदन्नेन देहशुद्धिरेव जातास्ति किमर्थमुदरगता किञ्चनार्थमुपवासः किञ्च यत्र कश्चित् कालं शुद्धस्यान्नं भुक्तं तत्रोपवासाप्रसङ्गः स्यादिति तस्माद्देहशुद्ध्यर्थमेव युक्तमिति भावः उपसंहरति अत इति॥ १०८॥

इति श्रीगोविन्दानन्दविरचितायां प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्यां संसर्गप्रायश्चित्तम्।

अनृतञ्च समुत्कर्षे राजगामि च पैशुनम्।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया॥
ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः।
गर्हितान्नाद्ययोर्जग्धिः सुरापान समानि षट्॥
निःक्षेपस्यापहरणं नराश्च रजतस्य च।
भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम्॥
रेतः सेकः स्वयोन्यासु कुमारीष्वन्त्यजासु च।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः॥

अनृतञ्च समुत्कर्ष इति समुत्कर्षनिमित्तं वाचा क्रियया वा अन्यथा प्रतिपादनं यथा शूद्रस्य ब्राह्मणोऽहमिति वचनं यज्ञोपवीतधारणञ्च अथवा परस्य सम्यग्जातिविद्यासमुत्कर्षे सति नायं ब्राह्मणो न च किञ्चिदप्ययं जानीत इत्यनृतवचनं ब्रह्महत्या समं समत्वेन द्वादशवार्षिकप्रायश्चित्तनिमित्तं एतच्च ज्ञानात्यन्ताभ्यासतः॥ १०९॥

एवमुत्तरवचनद्वयेऽपि राजनि च निर्दोषस्य दोषाख्यापनं गुरोश्च जन्मदातुर्दोषाभियोगः। ब्रह्मोज्झतेति असच्छास्त्राभियोगेनाधीत वेदविस्मरणम्। वेदनिन्दा अर्थतो ग्रन्थतश्च। सुहृद्वधो ब्राह्मणव्यतिरिक्तमित्रबधः। गर्हितान्नम्

---

इदानीमनुपातकप्रायश्चित्तं वक्तुमुपक्रमते अथेति वक्ष्यमाणेति यागस्थस्य इत्याद्यभिधाय अन्तेऽनुपातकिनस्त्वेते महापातकिनो यथेति विष्णुसूत्रं वक्ष्यते अत इति सप्तम्यर्थेतसिः अन्तेत्यर्थः एतच्चेति अनृतञ्च समुत्कर्षे इत्यादिषु लघुष्वनुपातकेषु तद्द्वादशवार्षिकव्रतं ज्ञानात्यन्ताभ्यास इत्यर्थः॥ १०९॥

एवमिति उत्तरवचनद्वयोक्तेषु लघुष्वनुपातकेषु एवमत्यन्ताभ्यासत इत्यर्थः। रेतः सेक इत्यादिचतुर्थवचनोक्तेष्वगम्यागमनरूपेषु गुरुष्वनुपातकेषु सकृदज्ञानतो

अन्त्यजान्नं गर्हिताद्यं छत्रकादितयोर्ज्ञानपूर्वकमभ्यासेन भक्षणं सुरापानसमं ब्रह्मोज्झित्वमिति वा पाठः। कल्पतरौ तु गर्हितानाद्ययोरिति पाठं कृत्वा व्याख्यातं गर्हितं शास्त्राप्रतिसिद्धमपि लोकेऽत्यन्तनिन्दितम्। अनाद्यं लशुनादि। निःक्षेपस्य ब्राह्मणसम्बन्धिनो नरादेरपहारो ब्राह्मणसुवर्णस्तेयसमः। स्वयोन्यासु सपिण्डासु मातृपितृयोनिसम्बन्धासु कुमारीषु ब्राह्मणकन्यासु अन्त्यजासु चाण्डालादिस्त्रीषु सख्युः सवर्णमित्रस्त्रीषु पुत्रस्त्रीषु असवर्णपाणिगृहीतासु औरसेतरपुत्रस्त्रीषु वा रेतोविसर्गो यस्तं गुरुतल्पसमं जानीयुः॥ ११०॥

एतन्मध्याद् यदुपपातकेषु दृश्यते तदज्ञानादिना लघुविषयञ्चेत्यादि व्यवस्थेयम्। यच्च वशिष्ठवचनं ब्रह्मोज्झः कृच्छ्रं

---

द्वादशवार्षिकं ज्ञाने तु मरणं वक्ष्यते। राजनीति येन दोषेणापमानो वृत्तिच्छेदो वा भवतीत्यर्थः। जन्मदातुर्गुरोश्चेति चकारादाचार्य्यादेश्चेत्यर्थः। निर्बन्धः पुनः पुनरभियोगः। ब्रह्मोज्झतेति कर्मण्यनि तस्मात्तलः। असच्छास्त्रेति न तदुपलक्षणं व्यसनादिनापीत्यर्थः। तेनाधीतवेदविस्मरणमुपपातकमिति यद्वक्ष्यते तदितरशास्त्राभियोगेनालस्येन त्विति मन्तव्यम्। अन्यत इति अब्दत इत्यर्थः कौटसाक्ष्यं साक्ष्ये मृषाभिधानं गर्हितान्नमिति गर्हितयोरन्नाद्ययोरिति मनुवचने कर्मधारय समासः तत्रान्नस्य गर्हितत्वम् अन्त्यजान्नमित्यनेन विवृतं गर्हितस्य लशुनादेरन्नाद्यस्य पुरीषादेर्भक्षणम् इति कुल्लूकभट्टः। इदं मया न भोक्तव्यमिति सङ्कल्पितमनाद्यमिति मेधातिथिः। ब्राह्मणसम्बन्धिन इति सुवर्णव्यतिरिक्तस्येत्यर्थः। वज्रं हीरकम् एतदज्ञानात्यन्ताभ्यासत इत्युक्तम्। पितृमातृयोनिसम्बन्धा पितृष्वसा मातृष्वसा चेत्यर्थः। असवर्णेति सवर्णस्नुषागमनस्यातिपातकत्वादिति भावः। औरसेति तस्य भाक्तपुत्रत्वात् अतएव नारदः आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादशपुत्राश्च पुत्रिकौरसयोर्विना॥ ११०॥

एतन्मध्यादिति एतच्चोपपातकप्रकरणे विष्णुवचने स्वयमेव विवेचयिष्यते।

द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्य्यात्। विष्णुः समुत्कर्षानृते गुरोश्चालीकनिर्बन्धे तदाचरणे च मासं पयसा वर्त्तेत। अचारणं परदारगमनाभिशापः। वशिष्ठः। गुरोश्चालीकनिर्बन्धे सचेलस्नातो गुरुं प्रसादयेत् प्रसादात् पूतो भवेदेतानि प्रमादादिकृते बोद्धव्यानि। प्रायश्चित्तमाह मनुः

हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्।
राजन्यवैश्यौ चेज्यानावात्रेयीमेव च स्त्रियम्॥
उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा।
अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम्॥

अनिर्णीतपुंस्त्वादिस्वरूपं ब्राह्मणगर्भं विनाश्य ब्रह्मवधोक्तमेव व्रतं कुर्य्यात् न तु ब्राह्मणीवधप्रायश्चित्तम्। अविज्ञाता हि गर्भाः पुमांसो भवन्तीति वशिष्ठवचनात्। यत्तु केश्चिदप्यस्मिन् विषये प्राणान्तिकमुक्तं तत् क्षत्रियादिजातिविषयं तथा क्षत्रियं वैश्यं यज्ञस्थम् आत्रेयीं ब्राह्मणीं हत्वैतदेव व्रतम्। तथा यमः।

हत्वा सवनगं वैश्यं राजानमपि दीक्षितम्।

---

यच्चेति कृच्छ्रं तप्तकृच्छ्रम् एतानीति यच्च वशिष्ठवचनं यच्च विष्णुराह यच्च वशिष्ठ आह एतानि सर्वाणि इत्यर्थः। प्रमादादीति आदिपदात् परप्रेरणादिनेत्यर्थः मनुरिति एतदेव पूर्वोपक्रान्तद्वादशवार्षिकव्रतमित्यर्थः एतच्च ज्ञानतः अज्ञानतस्तदर्द्धमिति गर्भवधप्रकरणे वक्ष्यते। क्षत्रियादीति क्षत्रियादिहन्तृविषमित्यर्थः राजन्यं क्षत्रियं पूर्वपदस्थमिति पूर्वार्द्धस्थं जन्मप्रभृति संस्कृतो गर्भिणीविशेषणं न तु पृथक् स्वतन्त्रम् अयमर्थः जन्मप्रभृतिसंस्कृता यातथ ताद्दृश्येव या गर्भिणी वाशब्द एवार्थे तामात्रेयीं विनिर्दिशेत् पृथक्त्वे हि तथाप व्यर्थं स्यादिति पन्थकृतोऽभिप्रायः। वस्तुतस्तु या द्वया द्वाशब्दाच्च पृथगेव संज्ञ द्वयं या ब्राह्मणवदुपनयनं विना अन्यसंस्कारसंस्कृता या वा केवलगर्भि

हत्वा तु ब्रह्महत्यैव तथात्रेयीञ्च ब्राह्मणीम् ॥
जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मवच्च या।
गर्भिणी वा तथा यास्यात्तामात्रेयीं विनिर्दिशेत् ॥

पूर्वपदस्थं गर्भिणीविशेषणं न पृथक् ब्रह्मवत् ब्राह्मणवदित्यर्थः ॥ १११ ॥

वशिष्ठः रजस्वला मृतुस्नातामात्रेयीमाहुरत्र ह्येतदपत्यं भवति। तथा विष्णुः यागस्थस्य क्षत्रियस्य वैश्यस्य रजस्वलायाश्चान्तर्वत्नाश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य घातनं ब्रह्महत्यासमानानीति। तेन त्रिविधात्रेयी अत्रिगोत्रा रजस्वला गर्भिणी चोक्ता इति। सुवर्णादिविषये साक्ष्ये त्वनृतमभिधाय गुरुं मृषाभिदोषेणाभियोज्य सुवर्णव्यतिरिक्तन्यासद्रव्यमपहृत्य स्त्रियाः स्वयोन्यादिकाया उपगमनरूपसौहृदीकरणेन बधमव्यवहार्य्यस्वरूपं कृत्वा एतदेव व्रतं कुर्य्यात्। स्त्रीशब्दोऽत्र आत्रेयीव्यतिरिक्त गुणवच्चातुर्वर्ण्यस्त्रीपर इति कल्पतरुः। तथा विष्णुरपि अनुपातकसंज्ञा प्रायश्चित्तश्चाह यागस्थस्य क्षत्रियस्य वैश्यस्य रजस्वलायाश्चान्तर्वत्नाश्चात्रिगोत्रायाश्चाविज्ञातगर्भस्य शरणागतस्य घातनं ब्रह्महत्या

---

अत्रिगोत्रा। तामुभयीम् आत्रेयीं विनिर्दिशेत् अन्यथा या इय वाशब्द तथा शब्दानां वैयर्थ्यं स्यात् अतएव विष्णुवचनेऽन्तर्वत्ना इत्यनेन गर्भिणीमात्रपरिग्रहो वक्ष्यते। ततश्च जन्मप्रभृतिसंस्कृता केवला गर्भिणीषोड़शदिनावधि ऋतुमती अत्रिगोत्रा च चतुर्विधा आत्रेयी ॥ ११ ॥

वशिष्ठ इति रजस्वलामृतुस्नाताञ्चेत्यर्थः एतच्च गर्भग्रहणयोग्योपलक्षणम् अत्रह्यपत्यं भवतीति हेतुवन्निगदाङ्गवदेवेन तु आत्रेयी माहुरित्यनन्तरम् आत्रेयी दशाहानीति पठ्यते तदा सुव्यक्त एवायमर्थः। विष्णुरिति रजस्वला चात्र ऋतु-

समानानि कौटसाक्ष्यः सुहृद्वध इत्येतौ सुरापानसमौ ब्राह्मण-भूमिहरणं निक्षेपहरणं सुवर्णस्तेयसमं पितृपितृव्यमातामह-मातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमं पितृस्वसृमातृ-स्वसृगमनञ्च श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं स्वसृ-सख्याः सगोत्रायाः उत्तमवर्णाया अन्त्यजायाः कुमार्य्या रज-स्वलायाः शरणागतायाः प्रव्रजिताया निक्षिप्तायाश्च।

अनुपातकिनस्त्वेते महापातकिनो यथा।
अश्वमेधेन शुद्ध्येयुस्तीर्थानुसरणेन वा॥

पितृपत्नी न माता तस्यागमनस्यातिपातकत्वात्। न मातुः-सपत्नीसवर्णोत्तमवर्णा वा तद्गमनस्य महापातकत्वात् किन्तु गन्तारमपेक्ष्य हीनवर्णा ग्राह्या उपाध्याय आचार्य्य उत्तम-वर्णाः क्षत्रियादेर्ब्राह्मणी न शूद्रस्य महापातकत्वात् अन्त्यजा चाण्डाली कुमारी ब्राह्मणकन्या व्यक्तमपरं अश्वमेधेन शुध्येयु-रिति गुरुतल्पव्रतोपलक्षणम्। यथा मनुः

गुरुतल्पव्रतं कुर्य्यात् रेतः सिक्त्वा स्वयोनिषु।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च॥११२॥

---

न्त्यभिप्रेता वशिष्ठवचनैकवाक्यत्वात्। सुवर्णादीति न त्वल्पविषय इत्यर्थः प्रतिरोधपदार्थं विवृणोति स्तेयेति सुवर्णव्यतिरिक्तेति सुवर्णहरणस्य महा-पातकत्वात् स्त्रिया इति सौहृदेति भावप्रधानो निर्देशः स्वयोन्याम् अभि-गमनरूपेण सौहृदेन बधमव्यवहार्य्यतारूपं कृत्वेत्यर्थः। स्त्रीमात्रबधस्योप-पातकत्वेन वक्ष्यमाणत्वात्। गुणवदिति गुणवच्चतुर्वर्णस्त्रीणां बध इत्यर्थः। शूद्रा-बधेऽपि ब्रह्मबधातिदिष्टत्वात् द्वादशवार्षिकव्रतप्रसङ्ग इत्यस्वरसः। सगोत्रायाः सपिण्डायाः पूर्वत्र रजस्वलापदं त्रिरात्रमध्यवर्त्तिनीपरं परत्र तु ऋतुस्नाना-नन्तरं गर्भग्रहणयोग्यापरम् इत्यपुनरुक्तिः। महापातकिनो यथा महापातकि-सदृशा इत्यर्थः। प्रायश्चित्तमाह अश्वमेधेनेति॥ ११२॥

सखिभार्य्यां समारुह्य स्वस्रीयां श्यालिमेव च।
अहोरात्रोषितो भूत्वा तप्तकृच्छ्रं समाचरेत्॥
पितृभार्य्यां समारुह्य मातृवर्जं नराधमः।
भगिनीं मातुराप्तां तु स्वसारं चान्यमातृजाम्॥
एतास्तिस्रः स्त्रियो गत्वा तप्तकृच्छ्रं समाचरेत्।
कुमारीगमने चैव व्रतमेतद्विनिर्दिशेत्॥

एतानि स्वल्पातिस्वल्पप्रायश्चित्तानि मुन्यन्तरोक्तानि अज्ञानादारोहणमात्रे सम्बन्धविप्रकर्षे वा सकृदभ्यासव्यभिचारिण्यां वा विषयभेदेन व्याख्येयानि। शङ्खलिखितौ गुरुतल्पगस्तप्तमायसं शयनमभिसंविशेत् क्षुरेण वा शिश्नवृषणावुत्कृत्याञ्जलावाधाय नैरृतीं दिशमवेक्षमाणो व्रजेत् आशरीरनिपातात् पूतो भवति। एवं मातुलानीमातृष्वसृपितृष्वसृस्नुषादुहितृगमने आचार्य्यदुहितरि वेति॥ ११४॥

गौतमः। सखिस्वयोनिसगोत्राशिष्यभार्य्यास्नुषासु गवि चैवं गुरुतल्पसमः। स्नुषा अनौरसपुत्रस्य भार्य्या औरसस्यासवर्णा वा। शिष्य उपनयनपूर्वकसाङ्गकृत्स्नवेदमध्यापितः स्वयोनिः सोदरभगिनी सगोत्राः पितृव्यादिस्त्रियः। भ्रातृभार्य्यागमनेऽपि गुरुतल्पव्रतमाह। संवर्त्तः,

---

विषयकत्वात्। पञ्चपुरुषाधिकेति बन्धकीगमने प्रायश्चित्तह्रासस्य वक्ष्यमाणत्वात् इति भावः। पितृभार्य्यामिति मातुर्भगिनीं मातृष्वसारम् आप्तां सोदरामित्यर्थः॥ ११४॥

गौतम इति सख्यादिषु स्वसरि च गत्वा एवं द्वादशवार्षिकं गुरुतल्पसमः गुरुतल्पगतुल्यपुरुषः कुर्य्यादित्यर्थः। अनियुक्त इति अपुत्रां गुर्वनुज्ञातो देवरः

पितृव्यदारगमने भ्रातृभार्य्यागमे तथा।
गुरुतल्पव्रतं कुर्य्यात् नान्या निष्कृतिरुच्यते॥

यत्तु, याज्ञवल्क्यवचनम्।

अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत्।

इति। तदसवर्णव्यभिचारिभ्रातृजायाविषयम्। तदेतेष्व-गम्यागमनरूपेष्वनुपातकेषु ज्ञानतः प्राणान्तिकं प्रायश्चित्तं चतुर्वर्णानां वधदण्डरूपं क्षत्रियादीनां त्रयाणाम् अज्ञानतो द्वादशवार्षिकं व्रतम्। सम्बन्धविप्रकर्षे व्यभिचारिणीविषये वा लघुप्रायश्चित्तं चान्द्रायणादिकमूहनीयम्। ये तु मन्यन्ते यमादिवचनेषु मातृगमनसपत्नीमातृगमनमातृष्वस्रादिगम-नानां गुरुतमगुरुतरगुरूणां पापानां यथाक्रमसुपादानं कृत्वा प्राणान्तिकप्रायश्चित्ताभिधानं ज्ञानादिना व्यवस्थेयं तद्यथा ज्ञानाज्ञानाभ्यां मात्रादिगमने। ज्ञानत एव सपत्नीमातृगमने मरणान्तिकं तेनाज्ञानतः सपत्नीमातृगमने द्वादशवार्षिकं ज्ञानतः सकृन्मातृष्वस्रादिगमने द्वादशवार्षिकम् अज्ञानतश्चा-भ्यासात्तदेव अज्ञानकृतसकृद्गमने षाड्वार्षिकव्रतम्॥ ११५॥

एतच्च मातृस्वस्रादिगमनस्य गुरुतल्पसमत्वश्रवणेन न्यून-

---

पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्तऋतावियात् इति विधान-बलान्नियोगे दोषाभाव एव तद्व्यतिरिक्तस्थले तु संवर्त्तोक्तं गुरुतल्पव्रतं तत्र-स्थानियोगे यदल्पप्रायश्चित्ताभिधानं तदसवर्णा व्यभिचरिता च या भ्रातृजाया तद्विषयमित्यर्थः। यथाक्रममिति यथाक्रमेणोपादानं निर्देशं कृत्वेत्यर्थः। तदे-वेति द्वादशवार्षिकमेवेत्यर्थः॥ २१५॥

ईदृशव्यवस्थायां युक्तिमाह एतच्चेति पितृपितृव्यमातुलेत्यादि विष्णुवचने सखी स्वयोनीत्यादि गौतमवचनेऽपि पितृव्यदारगमने इत्यादि संवर्त्तवचनेन

चाण्डालः श्वपचः चत्ता सूतो वैदेहिकस्तथा।
मागधायोगवी चैव सप्तैतेऽन्त्यावसायिनः॥

चाण्डालान्त्यस्त्रियो गत्वा तदन्नमष्टचत्वारिंशदभ्यासतो भुक्त्वा तद्द्रव्यमपि तावदभ्यासतः प्रतिगृह्य चाज्ञानतः पतति द्वादश-वार्षिकव्रताधिकारी भवति ज्ञानात्तु चाण्डालसमत्वमाप्नोति। विप्रग्रहणात् प्रतिग्रहसमभिव्याहाराच्च ब्राह्मणविषयमित्येके तन्न अस्पृश्यत्वनिमित्तत्वात्तस्य सर्ववर्णापेक्षयैवाविशिष्टत्वात्। विप्रब्राह्मणपदमिह वर्णमात्रोपलक्षणम्। अतएव विष्णुना चाण्डालीगमने तत्साम्यमाप्नुयादिति सामान्येनैवोक्तं समत्वो-पन्यासस्तु चाण्डालीगमने ज्ञानतः प्राप्तद्विगुणद्वादशवार्षिक-व्रतनिषेधार्थो न तु मरणनिषेधार्थस्तस्य विहितत्वात्। तथा यमः,

रेतः सिक्त्वा कुमारीषु चाण्डालीषु सुतासु च।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते॥ ११८॥

चाण्डालजातेरपि शुद्धिकारणत्वेन मरणस्योक्तत्वात्। यथा मनुः

---

योनयोऽनुपातकिनां पञ्चियोनय उपपातकिनां जलजयोनयश्चेति अन्त्यजासु चण्डालीष्विति रजकव्याधशैलूषवेणुचर्मोपजीविनां कामतस्तु यदा गच्छेत् चरेच्चान्द्रायणद्वयमिति संवर्त्तवचनविरोधादन्त्यजापदमत्र चाण्डालश्वपचाद्यन्त्या-वसायिजातिपरमिति ध्येयम्। चाण्डालेति भोजनप्रतिग्रहयोर्ज्ञानेऽष्टचत्वा-रिंशद्वारेण साम्यमित्यर्थः। एक इति अन्य इत्यर्थः। समत्वोपन्यासस्त्विति। स्वात्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वक इति वचनात् अज्ञानप्राप्तद्वादशवार्षिक-व्रतस्य द्विगुणप्राप्तौ ज्ञानात् साम्यं तज्जातिरेव भवति न तु तस्य प्रायश्चित्तमस्तीति निषेधार्थ एव न तु मरणरूपप्रायश्चित्तनिषेधार्थं इत्यर्थः॥ ११८॥

गवार्थे ब्राह्मणार्थे वा प्राणत्यागोनुपस्कृतः।
स्त्रीबालाभ्युपपत्तौ च वाह्यानां शुद्धिकारणम्॥

ये तु मन्यन्ते चाण्डालसमत्वोपन्यासः सर्वप्रायश्चित्ताभावार्थः न हि चाण्डालत्वादिजातिः प्रायश्चित्तेनापगच्छति इति ते परास्ताः यममनुवचनविरोधात्। किञ्च यदि समशब्देन तज्जातिप्राप्तिरुक्ता तदा तस्याः कर्मणा जातत्वात् कथं कर्मणा न तदपगमः विश्वामित्र क्षत्रियत्ववत्। वस्तुतस्तु चाण्डाल-

---

ननु यदि तस्य तज्जातिता तदा कथं प्रायश्चित्तविधानं सर्वधर्मवहिष्कृतत्वेन प्रायश्चित्तानधिकारादित्यत आह चाण्डालजातेरपीति अनुपस्कृतः अविकृतः न तु परप्रेरणेनेत्यर्थः। अभ्युपपत्तौ रक्षानिमित्तमित्यर्थः। वाह्यानाम्। चाण्डालादीनां सर्वप्रायश्चित्ताभाव इति यदुक्तं तत्राह यममनुवचनविरोधात् इतः सिद्धेत्यादि यमवचनं गवार्थं इत्यादिमनुवचनमित्यर्थः। न हीत्यादि यदुक्तं तद्दूषयति किञ्चेति तदा तस्या जातेरगम्यागमनरूपकर्मणा जातत्वात् कथं प्रायश्चित्तकर्मणा नापगमः। यथा विश्वामित्रस्य क्षत्रियत्वजातेस्तपःकर्मणाऽपगम इत्यर्थः एतच्च प्रतिबन्धिमात्रं न तु सिद्धान्त इत्याह वस्तुतस्त्विति पृथगवस्थिताया जातेरिति समवायसम्बन्धेनैव जातिर्द्रव्ये वर्त्तते समवायस्तु पृथगवस्थितयोश्चाण्डालत्वपातकिशरीरयोर्न सम्भवति अयुतसिद्धानामाधार्य्याधारभूतानामिह प्रत्ययहेतुभूतसम्बन्धस्य समवायत्वात् विश्वामित्रस्य तु ब्रह्मवरदानात् जात्यन्तरोत्पत्तौ पूर्वदेहात् देहान्तरोत्पत्तिर्दुग्धात् दधिवत् स्यात् अतएव त्रिशङ्कोर्वशिष्ठपुत्रशापात् चाण्डालत्वोत्पत्तौ सद्य एव रूपाकारविपर्य्ययः श्रूयते यथा आदिकाण्डे रामायणे। ऋषिपुत्राश्च तत्श्रुत्वा घोराक्षरपदं वचः। शेपुस्तं नृपतिं क्रुद्धाश्चाण्डालः श्वो भविष्यति। अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव सः। चण्डालदर्शनो राम सद्य एव दुराकृतिः। अधो नीलाम्बरधरो रक्ताम्बरकृतोत्तरः। रूक्षोऽतिताम्रघोराक्षः करालो हरिपिङ्गलः। इत्यादि अतस्तत्रापि समवायसम्बन्धोऽस्त्येवेति। अन्ये तु ब्राह्मणचरुजातत्वात् विश्वामित्रः पूर्वमेव ब्राह्मणः क्षत्रियत्वं तस्य क्षत्रियाजातत्वात् व्यवहारमात्रमित्याहुः। तदयुक्तं यदि सर्वकालमेव विश्वामित्रस्य ब्राह्मण्यं तदा राजत्वकाले जातानां

दारोहणे द्वादशरात्रः पराकाख्यः पराके पञ्चधेनवः । एव-
मन्यान्यपि स्वल्पप्रायश्चित्तानि बोध्यानि ॥ १२१ ॥

इत्यनुपातकप्रायश्चित्तम् ।

अथोपपातकप्रायश्चित्तानि ।

तदर्थमुपपातकं निरूप्यते । तत्र मनुः

गोवधोऽयाज्यसंयाज्यं पारदार्य्यात्मविक्रिया ।
पितृमातृगुरुत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥
परिवित्तितानुजेन परिवेदनमेव च ।
तयोर्दानञ्च कन्यायास्तयोरेव च याजनम् ॥
कन्याया दूषणञ्चैव वार्द्धुषित्वं व्रतच्युतिः ।
तड़ागारामदाराणामपत्यस्य च विक्रयः ॥
व्रात्यता बान्धवत्यागो भृतकाध्यापनं तथा ।
भृतादध्ययनादानमपण्यानाञ्च विक्रयः ॥
सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् ।
हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च ॥

---

प्रायश्चित्तव्यवस्था न स्यात् इत्याकाङ्क्षायामाह निन्दार्थौ वेति अभ्यस्त इति चतु-
र्विंशतिश्चान्द्रायणानीत्यर्थः द्वादशरात्रः द्वादशरात्रोपवास इत्यर्थः ॥ १२१ ॥

इति श्रीगोविन्दानन्दकृतायां प्रायश्चित्तविवेकटीकायां तत्त्वार्थ-
कौमुद्यामनुपातकप्रायश्चित्तम् ।

इदानीमुपपातकप्रायश्चित्तं विवेक्तुमुपक्रमतेऽथेति । उपपातकप्रायश्चित्ता-
नीति निरूप्यन्त इति शेषः अयाज्यसंयाज्यमिति अयाज्या विलोमजाताः न
पातकिनः तदयाजनादौ तत्संसर्गप्रायश्चित्तस्योक्तत्वात् विलोमजाता अपि
चण्डालादन्त्यावसायिव्यतिरिक्ताश्चाण्डालान्त्यस्त्रियो गत्वा इत्यादि वचनैरन्त्याव-
सायिनां प्रायश्चित्तभेदकथनात् तेषां याज्यं याजनं भावे ष्यञ् उपलक्षयति
प्रतिग्रहाध्यापनयोर्याजनतुल्यतया संसर्गे निरूपितत्वात् पारदार्य्यम् अतिपातक-

इन्धनार्थमशुष्काणां द्रुमाणामपपातनम्।
आत्मार्थञ्च क्रियारम्भो निन्दितान्नादनं तथा॥

अनाहिताग्नितास्तेयमृणानाञ्चानपक्रिया।
असच्छास्त्राभिगमनं कौशीलव्यस्य च क्रिया॥

धान्यकूप्यपशुस्तेयं मद्यपस्त्री निषेवनम्।
स्त्रीशूद्रविट्चत्रवधो नास्तिक्यं चोपपातकम्॥

अस्यार्थः अयाज्यसंयाज्यमिति प्रतिग्रहाध्यापनमप्युपलक्षयति। त्यागो योगक्षेमाकरणमनिमित्तम्। स्वाध्यायत्यागोऽधीतवेदविस्मरणम्। अग्नित्यागः आलस्यादिना। सुतत्यागः पोषणविनयाधानाद्यकरणेन। चकाराद्भार्य्यात्यागोऽपि। परिवित्तिता। कनिष्ठस्य भ्रातुर्दाराग्निहोत्रसंयोगे सति ज्येष्ठस्य भ्रातुर्दाराग्निहोत्रसंयोगप्रागभावः। कनिष्ठस्य परिवेदनम्। चकारात् कन्याया अपि तथाभूतायाः परिवेदनीयत्वम्। परिवित्ति परिवेदकयोर्वरत्वेन कन्यादानम्। तयोरेव विवाहादौ ऋत्विक्कार्य्यमिति। कन्याया दूषणमकन्या इत्युक्तिः

---

महापातकानुपातकेतरच्च परदारगमनम् आत्मविक्रय इति भावार्थः अधीतवेदविस्मरणम् आलस्यादिनेति प्रागुक्तं सर्वदा ब्रह्मयज्ञत्याग इति कुल्लूकभट्टः अग्निराहिताग्निः आदिशब्दात् राजसेवादीनां ग्रहणं तथाभूताया इति आदौ परिणीतायाः कनिष्ठाया ज्येष्ठायाश्च परिणेतारावुपपातकिनावित्यर्थः। यथा वशिष्ठः अग्रे दिधिषु पतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विंशेत् दिधिषु पतिः कृच्छ्रातिकृच्छ्रौ चरित्वा पुनर्निर्विंशेत्। तयोर्लक्षणमाह देवलः ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा। सा चाग्रे दिधिषुर्ज्ञेया पूर्वा तु दिधिषुः मता। वरत्वेनेति न तु पोष्टृत्वेनेत्यर्थः यथा मनुः परिवेत्ता परिवित्तिश्च यया च परिविद्यते। सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥ कन्याया इति न तु

अङ्गुल्या योनिविदारणं वा। वार्द्धुषित्वं ब्राह्मणक्षत्रिययोः व्रतानुव्रतिरवकीर्णित्वम् । दाराणामपरिणीतानामपि विक्रयः ॥१॥

अपत्यस्यानेकविधस्य व्रात्यता यथा कालमनुपनयनमसोमयाजित्वञ्च । बान्धवत्यागो बान्धवस्य सपिण्डादेरनिमित्तं त्यागः । भृतकाध्यापनं मूल्येन वेतनादिना विद्यार्पणम् । भृताच्च वेतनगृहीताद्वेदादिविद्याग्रहणम् । अपण्यानां लाक्षादीनां सकृत्, गोरसादीनामसकृत् ब्राह्मणेन विक्रयः । सर्वाकरेषु रत्नाद्युत्पत्तिस्थानेषु विनियोगः । तैलादियन्त्रस्य शस्त्रतेजनायन्त्रस्य च प्रवर्त्तनम् ॥ २ ॥

धान्यादीनां यथाकथञ्चिन्नाशनम् । स्त्रर्जितधनाज्जीवनम् । परहिंसार्थं जपहोमादिकर्ममूलकर्म वशीकरणादिक्रिया । इन्धनार्थमार्द्रद्रुमाणां बहूनां छेदनम् । आत्मार्थं पाकक्रिया न वैश्वदेवार्थम् । गणादेरन्नं तस्कराद्यन्नभक्षणम् ।

---

कन्यागमनं तस्यानुपातकत्वात् । ब्राह्मणक्षत्रिययोरिति वैश्यादीनां विहितत्वादित्यर्थः । दाराणामित्यपरिणीतानां वाग्दत्तानां परिणीतानाञ्चेत्यर्थः ॥ १ ॥

अनेकविधस्येति कन्यायाः पुत्रस्य च द्वादशविधस्येत्यर्थः । न पतति वंशो येन तदपत्यमिति व्युत्पत्तिः । असोमेति एतच्च साग्नीनामेव । भृतकाध्यापनमिति वेतनं प्रतिदिनं प्रतिमासं नियतद्रव्यग्रहणम् आदिपदादेतावद्ग्रन्थस्य एतावद्धननियमस्य संग्रहः । एतेन वेतनादिना मूल्येन वेदादिविद्याध्यापनमित्यर्थः । अपण्यानामिति सद्यः पतति लौहेन लाक्षया लवणेन च । त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयादिति वचनात् । सर्वाकरेष्विति अत्र आकरोत्पन्नद्रव्याणां स्तेयस्यावश्यम्भावात् यत्र तु स्तेयं नास्ति तत्र दोषो नास्तीति भावः ॥ २ ॥

धान्यादीनामिति फलपाकान्तानां धान्यादीनाम् अपक्वदशायां नाश इत्यर्थः । स्त्रर्जितेति भार्य्यादीनां वेश्यात्वं कृत्वा तद्धनाज्जीवनमिति कुल्लूकभट्टः ।

सामर्थ्येऽपि श्रौतस्मार्त्ताग्न्यपरिग्रहः। स्तेयं हेमनराश्वरजतभूमिनिक्षेपेतरद्रव्यहरणम्। देवर्षिपितृसम्बन्धिऋणापरिशोधनम्। असच्छास्त्राभिगमनं पाषण्डशास्त्राभ्यासः। कुशीलवस्य कर्म तौर्य्यत्रिकं तस्य सततानुष्ठानम्। कुप्यस्य परद्रव्यस्य ताम्रकांस्यादेस्तेयम्। मद्यपस्य स्त्रिया मद्यपायाश्च स्त्रिया निषेवनं ब्राह्मणेन ॥ ३ ॥

स्त्रियाश्च शूद्रवैश्यक्षत्रियब्राह्मणजातीयाया अदुष्टायाः शूद्रवैश्यक्षत्रियाणाञ्च वधः। नास्तिक्यं नास्ति परलोक इति व्यवस्थितः। उपपातकमेकैकम् एकैकमुपपातकमिति याज्ञवल्क्यवचनात्। एवञ्च गोवधादिनास्तिक्यान्तान्यूनपञ्चाशत् उपपातकानि विष्णुनानृतवचनमुत्कर्षे राजगामि च पैशुनम्। गुरोश्चालीकनिर्बन्धो वेदनिन्दाधीत्य चाग्रहोऽन्यानि च मनू-

---

अभिचार इति अपराधाभावे सतीति बोद्धव्यं मूलकर्मेति वशीकरणसाधनकर्म आदिपदादुच्चाटनादिसाधनकर्मग्रहणम्। गणेति यद्बहुभिर्मिलित्वा परिक्रियते परिवेश्यते वा तदन्नम्। हेमेति हेमहरणस्य महापातकत्वात् नरादिहरणस्यानुपातकत्वादित्यर्थः। देवर्षीति यज्ञाकरणं देवर्णम्। पुत्रानुत्पादनं पितृर्णम्। वेदवेदाङ्गानामनध्ययनम् ऋष्यृणं यथा मनुः ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्। धान्यकुप्यपशूनामित्यधिकमूल्यद्रव्योपलक्षणं तेषां स्तेयं सकृच्चौर्य्यमित्यर्थः। प्रागुक्तस्तेयमत्यन्ताभ्यासेऽल्पद्रव्यविषयं ज्ञेयम्। मद्यपायाश्चेति चकारोऽत्र विकल्पार्थः ॥ ३ ॥

स्त्रिया इति चातुर्वर्ण्यस्त्रिया मात्रादिव्यतिरिक्ताया इत्यर्थः। न चात्र शूद्रविट्क्षत्रियग्रहणेन तदीयस्त्रीप्राप्तौ स्त्रीशब्दोपादानं ब्राह्मणीमात्रपरिग्रहार्थमिति वाच्यं क्षत्रियवत् ब्राह्मणीषु वैश्यवत् क्षत्रियासु शूद्रवत् वैश्यास्विति हारीतवचनैकवाक्यतयाऽल्पप्रायश्चित्तार्थं पृथगुपादानात् प्रायश्चित्ताल्पत्वेऽपि पृथगुप-

त्नानि इत्युक्ता उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नरा इत्युपपातके दर्शितम्। अत्र नृपादिसभासु परापकारव्यतिरेकेण आत्मन उत्कर्षख्यापनम्। तथा राज्ञः पुरतः परापकारव्यतिरेकेण दोषकीर्त्तनम्। तथा श्रुतमात्रोपकारकगुरोर्मिथ्याभिशंसनम्। तथा परिहासादिना वेदनिन्दा तथा असच्छास्त्राद्यभियोगेनाधीतवेदविस्मरणञ्च यत्तत्तु तदुपपातकं गुरूणां पुनरेतेषां मनुनानुपातके दर्शितत्वात्। अन्यानि चोपपातकानि स्मृत्यन्तरेऽनुसन्धेयानि॥ ४॥

एवं निरूपिते उपपातके प्रथमं साक्षाद्गोवधप्रायश्चित्तं निरूप्यते। तत्र मनुः,

उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्।<br>
कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः॥<br>
चतुर्थकालमश्नीयादक्षारलवणं मितम्।<br>
गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः॥<br>
दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्द्धं रजः पिबेत्।

---

न्यासस्य लोके निन्दातिशयार्थतयोपपत्तेश्चेति अदुष्टाया इति व्यभिचरितावधे गोपपातकम्। अतएव तद्वधेऽल्पप्रायश्चित्तं वक्ष्यते। समुत्कर्षानृतादीनामनुपातकत्वं प्रागुक्तं तेषाञ्च उपपातकत्वं विष्णूक्तं विरुद्धमाशङ्क्य व्यवस्थापयति विष्णुनेति अत्रेति अत्र वचने इदं व्याख्यानं ज्ञेयमिति शेषः। श्रुतमात्रं यत्किञ्चित् अल्पाध्ययनं तदुपकारकस्य जन्मदातुराचार्य्यादेश्चानुपपातकत्वमित्यर्थः॥४॥

इति श्रीगोविन्दानन्दकृतायां प्रायश्चित्तटीकायां तत्त्वार्थकौमुद्याम्

उपपातकनिरूपणम्।

अथ गोवधप्रायश्चित्तम्। एवमिति मनुवचनक्रमानुरोधादित्यर्थः। व्यापादितायाः इति तच्चर्माभावेऽन्यगवीचर्मणापीत्यर्थः। रजो गोधूलिमित्यर्थः।

शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत्॥
तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्।
आसीनासु तथासीनो नियतो वीतमत्सरः॥
आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः।
पतितां पङ्कलग्नां वा सर्वप्राणैर्विमोचयेत्॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम्।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः॥
आत्मनो यदि वान्येषां गृहे चेत्रे तथा खले।
भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम्॥
अनेन विधिना यस्तु गोघ्नो गामनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति॥
वृषभैकादशा गाश्च दद्यात् सुचरितव्रतः।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्॥

उपपातकसंयुक्तो गोघ्नो न तु यागादिविहितगोवधकर्त्ता। कृतसशिखमुण्डनो व्यापादिताया गोश्चर्मणाकृतपरिधानो-त्तरावगुण्ठनो मासमेकं गोमूत्रेण यवागूकृतान् यवान् पिबेत्। गोमूत्रेण यवागूकृतानिति व्यासवचनात् एवं सन् गोष्ठे वसेत्। अपरमासद्वये उपोष्य अपरदिने सायं स्वल्पं भुञ्जीत। वीरासनं निराश्रयमुपवेशनं तथा विष्णुधर्मोत्तरे,

---

उत्थितस्त्विति यद्यपि दिवोत्थाननिशोपवेशनयोर्मिलितयोरेव वीरासनत्वं तथाप्यत्र रात्रावित्युपादानात् निशोपवेशनस्यैव ग्रहणम् आसीनासु तथासीन इत्युपादानाच्च। उष्णे रौद्रातिशये। वर्षति मेघे सतीत्यर्थः। भक्षयन्तीमिति शस्यादिकमिति शेषः। यद्यप्येतद्द्वयं सर्वसाधारणं तथापि गोघ्नस्याति-

उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ।
एतद्वीरासनं नाम महापातकनाशनम् ॥

अभिशस्तामाक्रान्तां भयैर्भयनिमित्तैः । सर्वप्राणैर्यथाशक्ति । गां न कथयेत् निवारणाभिप्रायेण पिबन्तं स्तन्यमिति शेषः । सुचरितव्रतः सम्यक् चीर्णव्रतः वृषभसहिता दशगा दद्यात् । गवामभावे गोमूल्यं देयं

गवामभावे दातव्यं गोमूल्यञ्च न संशयः ।

इति संवर्त्तवचनात् तदभावे स्वल्पमपि सर्वस्वं दद्यात् ॥ ५ ॥

तदत्र त्रैमासिकव्रते मासैकवीरासनगवानुगमनेतिकर्त्तव्यतायुक्तयावकयवागूपानेन प्राजापत्यद्वयं मासद्वयचतुर्थकालभोजने त्रिंशदुपवासास्त्रिंशच्च नक्तभोजनानि भवन्ति । त्रिंशता च निरन्तरोपवासैः पञ्चदशप्राजापत्यान्युक्तानि मासोपवासधेनुसंकलने । अत्रैकान्तरितत्वात् अर्द्धक्लेशेनाष्टौ प्राजापत्यानि संपद्यन्ते । उपवासस्य नक्तत्रयेण संकलितत्वात् त्रिंशता नक्तैर्दशोपवासा भवन्ति । तैश्च वीरासनादिबहुक्लेश-

---

शयेन मन्तव्यम् । वृषभैकादशागा इति वृषभ एकादशो यासां दशगवीनामित्यर्थः । अविद्यमान इत्यस्यार्थं व्याचष्टे तदभाव इति पूर्वोक्तदक्षिणाशक्तावित्यर्थः ॥ ५ ॥

मासैकव्रतमासद्वयव्रतयोरुभयोरेव दिवानुगच्छेदित्यादिना इतिकर्त्तव्यता दर्शिता इत्यभिप्रायेणाह मासैकवीरासनेति । मासोपवासधेनुसङ्कलन इति मासोपवासव्रते त्रिंशता निरन्तरोपवासैः पञ्चदशप्राजापत्यान्युक्तानि विद्वद्भिरिति शेषः । अत्र तु चतुर्थकालव्रते निरन्तरोपवासाभावात् तदर्द्धमष्टौ प्राजापत्यानीत्यर्थः । तैश्चेति तैर्दशोपवासैर्वीरासनादिक्लेशतुल्यैर्नोपवासद्वयेन सह द्वादशोपवासैः प्राजापत्यद्वयं प्रागुक्तञ्च मासयावकव्रतेन प्राजापत्यद्वयं तेन

युक्तैः प्राजापत्यद्वयम्। तेन मिलित्वा द्वादशप्राजापत्यानि भवन्ति। तदशक्तौ पयस्विधेनु द्वादशकं देयम्। तत्राप्यशक्तौ तन्मूल्यं षट्त्रिंशत्पुराणलभ्यं काञ्चनादि देयम्। दक्षिणा च वृषभैकसमेतगोदशकम्। तन्मूल्यं पुराणपञ्चदशलभ्यं काञ्चनादि देयम्॥ ६॥

अथवा क्लेशातिशययुक्तत्रिंशदुपवासैः कृच्छ्रदशकं संकलय्य त्रिंशता नक्ताशनैरपि तथाभूतैः कृच्छ्रपञ्चकं संकलय्य सप्तदशधेनवो भवन्ति एषा व्यवस्था बहुसम्मतेति। एतच्च ब्राह्मणसम्बन्धिन्या बुद्धिपूर्वके शस्त्रघातादिना बधे वेदितव्यं क्षत्रियादिसम्बन्धिगोवधे लघुप्रायश्चित्तान्तरश्रवणात्। ब्राह्मणसम्बन्धेन च गोर्गुरुत्वमुक्तं मनुना गोषु ब्राह्मणसंस्थास्विति दण्डप्रकरणे। बृहस्पतिः,

> शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत्।
> रोधादिना त्वाङ्गिरसमापस्तम्बोक्तमेव वा॥

---

मिलित्वेत्यर्थः। षट्त्रिंशदिति पयस्विधेनुमूल्यं पुराणत्रयं तैर्द्वादशभिः षट्त्रिंशदिति। पञ्चदशकेति गोदशमूल्यं पुराणदशकं वृषमूल्यं पुराणपञ्चकं मिलित्वा पञ्चदशेत्यर्थः। अयन्तु द्वादशप्राजापत्यसङ्कलनपक्षः॥ ६॥

केषाञ्चिदेव स चायुक्तः इत्याकलय्य स्वमतमाह। अथवेति वीरासनादिक्लेशातिशययुक्त इत्यर्थः। पूर्वं त्रिंशतोपवासैः प्राजापत्याष्टकमुक्तं वीरासनादिक्लेशैः किञ्चिन्नोक्तमित्ययुक्तता इह तैः क्लेशैः प्राजापत्यद्वयमधिकं युक्तमेवेति तथाभूतैः पूर्वदिनोपवासक्लेशातिशयसंवलितैस्त्रिंशन्नक्ताशनैरष्टादशोपवासतुल्यैः कृच्छ्रत्रयं तत्सहचरितैश्च वीरासनादिक्लेशैः कृच्छ्रद्वयम् अतः कृच्छ्रपञ्चकमेव युक्तम् एतेन त्रिंशता नक्तैर्दशोपवासा भवन्तीति यदुक्तं तदयुक्तमेवेति

आदिशब्दात् मुष्टिलोष्टलगुड़विषाग्नीनां प्रायिकमृत्युफलकानां ग्रहणम्। रोधादिनेति यथाकथञ्चिन्निमित्तमात्रस्य बन्धनादेः। यत्तु यमेनाङ्गिरसा च एतदेव त्रैमासिकव्रतं षष्ठकालभोजनयुक्तमभिहितं तद्गुरुत्वाद् गुणवद्ब्राह्मणसम्बन्धिगोवधविषयम्। अज्ञानकृततथाविधब्राह्मणमात्रसम्बन्धिगोवधे तु। संवर्त्तः,

गोघ्नस्याथ प्रवक्ष्यामि निष्कृतिं तत्त्वतः शुभाम्।
गोघ्नः कुर्वीत संस्थानं गोष्ठे गोरूपसन्निधौ॥
तत्रैव शयनं चास्य मासार्द्धं क्षितिशायिनः।
शक्तुयावकभैक्ष्याशी पयो दधि सरः शकृत्॥

---

भावः। अत्रापि पक्षे प्रागुक्तैव दक्षिणा इति। लघुप्रायश्चित्तेति इतो लघुप्रायश्चित्तान्तरस्य लघुपाप एव युक्तत्वादिदं गुरुप्रायश्चित्तं पापगौरवे सत्येव उपपद्यते तच्च गौरवं ब्राह्मणसम्बन्धादीति भावः। मानवं मनूक्तम्। मुष्टीति तथापस्तम्बः पाषाणैर्लगुड़ैर्वापि शस्त्रेणान्येन वा बलात्। मुष्टिचपटकिलाद्यैस्तथा शृङ्गादिमोटनैः। निपातयन्ति ये गास्तु तेषां सर्वं विधीयते। आद्यशब्दाद्विषाग्निदाहादीनां ग्रहणम्। रोधादिनेति आदिशब्दादुद्बन्धनादेर्ग्रहणमित्यर्थः। तद्गुरुत्वादिति चतुर्थकालभोजनेति कर्त्तव्यतायुक्तत्रिंशदुपवासैर्दशधेनव उक्ताः षष्ठकालभोजने तु मासद्वयेन चत्वारिंशदुपवासा भवन्ति तत्र च निरन्तरद्विद्विरुपवासैर्वीरासनादिसहितैः क्लेशातिशयात् प्रागुक्तदशधेनुद्विगुणा विंशतिधेनवः उपवासद्वयानन्तरं विंशत्या नक्तभोजनैर्वीरासनादिसहितैः प्रागुक्ता एव पञ्चधेनवः मासैकयावकाहारेण च धेनुद्वयं प्रागुक्तं मिलित्वा सप्तविंशतिधेनवो ज्ञेया इति अत्रापि दक्षिणा प्रागुक्तैव। अज्ञानकृते त्विति तथाविधः शस्त्रादिकृतो यो गोवधः तद्विषय इत्यर्थः। संवर्त्त इति गोरूपाणां गोव्यक्तीनां सन्निधौ संस्थानं स्थितिं कुर्वीतेत्यर्थः। तत्रैव गोष्ठे सार्द्धमासं शयनं तन्मध्येऽर्द्धमासं क्षितिशायित्वमस्येत्यर्थः। प्रथमं दिनत्रयं क्रमेण शक्तुयावकभक्ष्याशी सन् परेषु द्विचत्वारिंशद्दिनेषु सकृदेकवारं यथाक्रमं पयो दधि सरं चतुर्दशाहत्या

एतानि क्रमशोऽश्नीयाद्व्रतस्तत्पापमोचकः।
अध्येत सार्द्धमासेन नखरोमविवर्जितः॥
स्नानं त्रिसवनं तस्य स भवेत् संयतेन्द्रियः।
एतत् समाहितः कुर्य्यात् स नरो वीतमत्सरः॥
गायत्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः।
पूर्णे च सार्द्धमासे तु स विप्रान् भोजयेद्द्विजः॥
भुक्तवत्सु च विप्रेषु गां वै दद्याद्विचक्षणः।
गवामभावे दातव्यं गोमूल्यं तु न संशयः।
अनेनैव विधानेन गोघ्नो मुच्येत किल्विषात्॥

सरो दध्न उपरिभागः। अत्र च सार्द्धमासैकव्रते द्वादशधेनु-संकलितत्रैमासिकव्रतार्द्धानुसारेण षड्धेनवो भवन्ति। एक-वचनस्य श्रुतत्वात् गौरेका तन्मूल्यं वा दक्षिणा। सार्द्धाष्टौ धेनवो वा एतद्व्रतं गोस्वामिने गोमूल्यं दत्त्वा कर्त्तव्यम्। यथा ब्रह्मपुराणे

---

अश्नीयादित्यर्थः। शक्नदिति तालव्यादिपाठे तु प्रथमदिने शक्तुयावकभैक्ष्याशी सन् परेषु चतुश्चत्वारिंशद्दिवसेषु एकादशावृत्त्या पयोदधिसरगोमयं द्रव्य-चतुष्टयं यथाक्रमेणाश्नीयादित्यर्थः। सर्वत्र परिभाषामाह गवामभाव इति। अत्र चेति यद्यपि पूर्वं सप्तदशधेनव उक्ताः तथाप्यत्र प्रत्यहभोजनाद्वीरासनादि-क्लेशाभावाच्च तदर्द्धकाले द्वादशधेनूनामर्द्धस्यौचित्यमिति भावः। श्रुतत्वादिति अस्मिन् पक्षे एकैव गौर्दक्षिणा न तु वृषभैकादशगाः एतद्वचनोपात्तत्वादित्यर्थः। इदानीं गोष्ठे क्षितिशायित्वत्रिसन्ध्यास्नानसततगायत्रीजपबहुब्राह्मणभोजनेति-कर्त्तव्यताभिर्बहुक्लेशमाकलय्य प्रागुक्तस्वमततुल्यतामापादयन्नाह सार्द्धाष्टौ धेनव इति। गोव्रत इति गोसेवापर इत्यर्थः। अत्रेति मासयवाम्बाहारेण धेनुद्वयं वक्ष्यते ततश्च षण्मासे द्वादशधेनवः स्युरित्यर्थः। अत्र दक्षिणाभावात् प्रागुक्ताल्प-ज्ञया पक्षिविषयत्वमुक्तम् इति भावः। कल्पतरुकारादीनामपि मतमेतत्।

आदौ गोपतये दत्त्वा गोमूल्यं साधुकल्पितम्।
यथोत्पन्नेन तस्यास्तु चर्मणा छन्नविग्रहः॥

यथोत्पन्नेनाकृतसंस्कारेण। क्षत्रियसम्बन्धिन्या वधे तु देवलः।
षण्मासांस्तच्चर्मणा परिवृतो गोग्रासाहारो गोव्रती यवाशी
गोभिरेव सञ्चरन् विप्रो मुच्यते। गोग्रासाहारो गोग्रासा-
हर्त्ता कर्मण्यण् इति साधुः। अत्र षाण्मासयवाहारेण
द्वादशप्राजापत्यानि तदशक्तौ द्वादशधेनवः। तदशक्तौ षट्-
त्रिंशत् कार्षापणा देया इति चत्वारः कल्पाः। सवृषगोदश-
दक्षिणा शून्याभवन्त्यश्रुतत्वात्। एतज्ज्ञानतः अज्ञानतो-
ऽर्द्धम्। वैश्यसम्बन्धिन्या वधे तु याज्ञवल्क्यः,

पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः।
गोष्ठे वसेद्गोनुगामी गोप्रदानेन शुध्यति॥

---

सवृषेति अत्र विशेषदक्षिणैव नास्ति यत्किञ्चित् काञ्चनमूल्यादिकन्त्ववश्यं देयं कर्माङ्गत्वात् एवमुत्तरत्रापि। भवदेवस्तु गां चेद्धन्यात्तस्याश्चर्मणावेष्टितः षण्मासान् कृच्छ्रमनुतिष्ठेत् वृषभवेहतौ दद्याताभिति वशिष्ठवचनोक्तं षोड़शधेनुदानं क्षत्रियसम्बन्धि गोवधविषयमित्युक्तवान् तत्र षण्मासप्राजापत्ये पञ्चदशधेनवः तथा दद्याताभिति कर्तृद्वयनिर्देशात् वृषभहन्ता वृषभं स्त्रीगवीहन्ता वेहतं गर्भपातनशीलां गां दद्यादिति षोड़शेति तदयुक्तं वशिष्ठवचनस्य सन्दिग्धमूलत्वात् समूलत्वेऽपि किञ्चिद्गुणहीनब्राह्मणसम्बन्धिविषयत्वं तस्येति ध्येयम्। पञ्चधेनव इति न च गोमात्रदानस्य उक्तत्वात्. कथं पञ्चधेनव इति वाच्यं प्रदानपदात् दानप्रकर्षलभ्यालङ्कारसाहित्येन दानावगमात् तस्य धेनुदानतुल्यत्वात्। अत्र भवदेवः दद्याच्चिरात्रं वोपोष्य वृषभैकादशास्तु गा इति याज्ञवल्क्योक्तं द्वादश-धेनुदानं वैश्यसम्बन्धिगोवधविषयमित्युक्तवान् तत्र त्रिरात्रेण धेनुरेका वृषभ-सहितदशधेनुदानञ्चेति द्वादशेति। तदयुक्तं वृषमूल्यं पुराणपञ्चकं गोमूल्यं पुराणैकं धेनुमूल्यं पुराणत्रयम् इति वक्ष्यते। ततः सवृषगोदशकस्य मूल्यं पञ्चदशपुराणानि तेन पञ्चधेनवः त्रिरात्रोपवासे चार्द्धधेनुरिति सार्द्धपञ्चधेनवः

शातातपः, पञ्चगव्येन गोघाती मासैकेन विशुध्यति।

गोमतीञ्च जपेद्विद्यां गवां गोष्ठे च संवसेत्॥

मासैकपञ्चगव्यपाने धेनुचतुष्टयं दक्षिणागोदानेन पञ्चधेनवः। एतदबुद्धिकृते बुद्धिकृते त्वेतदेव द्विगुणम्॥ ७॥

शूद्रसम्बन्धिन्या वधे तु विश्वामित्रः।

कृच्छ्रांस्तु चतुरः कुर्य्याद्गोवधे बुद्धिपूर्वके।

अमत्या तु द्वयं कार्य्यं तदर्द्धं बालवृद्धयोः॥

स्त्रीशूद्रयोरेवमेतद्वधे चैव न संशयः।

अत्र ज्ञाने चत्वारि प्राजापत्यानि तदशक्तौ धेनुचतुष्टयम्। तन्मूल्यं द्वादशकार्षापणा वा अज्ञाने धेनुद्वयम्। अत्र स्त्रीणामर्द्धं प्रदातव्यमित्यादि लघुहारीतविष्णादिवचनैः प्राप्तं स्त्रीणामर्द्धं प्रायश्चित्तं पुनरुच्यमानं बालवृद्धस्त्रीशूद्रव्यतिरिक्तानां प्रायश्चित्ततुल्यत्वं दर्शयति॥ ८॥

---

एवेति। अतो याज्ञवल्क्यवचनं सत्शूद्रसम्बन्धिगोवधविषयम्। अज्ञानकृत-वैश्यसम्बन्धिविषयं वेति मन्तव्यम्॥ ७॥

स्त्रीशूद्रयोरिति एतद्वधे गोवधे स्त्रीशूद्रयोरेवमर्द्धमित्यर्थः। अत्र स्त्रीणामर्द्ध-मिति विष्णुवचनैः सामान्यतः परिभाषितत्वात् गोवधे विशिष्य पुनरभिधीय-मानं स्त्रीशूद्रबालवृद्धातुरव्यतिरिक्तानां ब्राह्मणक्षत्रियविशां तुल्यमेव प्रायश्चित्तं गोवधे ज्ञापयति न तु परिषद्ब्राह्मणानां या राज्ञां सा द्विगुणा स्मृता। वैश्यानां त्रिगुणा प्रोक्ता शूद्राणान्तु चतुर्गुणा इति वचनाज्जातिभेदेन वधप्रकरणोक्तं द्वैगुण्यादिकमिति। वस्तुतस्तु न हि विष्ण्वादिवचनैः परिभाषितमिति कृत्वा विश्वामित्रवचनं पुनरुक्तं भवति मुनीनां परस्परनिरपेक्षत्वात् अन्यथातिप्रसङ्गः स्यात् किन्तु हीनवर्णस्य उत्कृष्टवधे गुरुत्वात् पापाधिक्यं यौक्तिकमिति भविष्यपुराणादौ विहतम्। ततोऽन्यत्र पशुवधादौ सर्वेषां तुल्यमेव प्रायश्चित्तं विशेषाश्रवणात् न तु भवद्देवोक्तपादपादह्रासव्यवस्था वर्णक्रमेण युक्ता तद्वचनस्य

तेन गोवधे ब्राह्मणक्षत्रियविशां तुल्यप्रायश्चित्तम्। शूद्र-बालवृद्धस्त्रीणामर्द्धमिति। विशेषमाह बृहस्पतिः,

> गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रताम्।
> रोधादिना घातयित्वा द्विगुणं गोव्रतं चरेत्॥
>
> अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम्।
> हत्वा पूर्वविधानेन चरेदर्द्धव्रतं द्विजः॥

पूर्वविधानेन मन्वाद्युक्तविधिना एतेन यत् सम्पूर्णव्रतमुक्तं तत् पुष्टितारुण्यादियुक्तायां गवि बोद्धव्यम्। गर्भिणीत्वादिगुणेन गोर्गुरुत्वाद्द्वैगुण्यं दर्शितम्। तथा प्रचेताः। स्त्रीगर्भिणी गोगर्भिणी बालवधी च भ्रूणहा भवति। यत्तु गोतमेन वैश्यं हत्वा त्रैवार्षिकं व्रतं चरेत्। वृषभैकशतानि च गा दद्यात् इत्यभिधाय गाञ्च वैश्यवदिति गोवधे त्रैवार्षिकं प्रायश्चित्त-मुक्तं तदग्निहोत्रिणो वेदपारगस्य होमधेनोः कपिलाया गर्भिण्याश्च पुण्ये देशे काले च बुद्धिपूर्वकवधे वेदितव्यम्।

> समद्विगुणसाहस्रमानन्त्यञ्च यथाक्रमम्।
> दाने फलविशेषः स्याद्धिंसायां तद्वदेव हि॥

---

प्रकरणादभक्ष्यभक्षणविषयत्वादिति। अतिवृद्धां जरयात्यन्ताशक्ताम् अतिबालां प्रथमवर्षमतिक्रम्य द्विवर्षवयस्काम् अतिशब्दात् होमधेनुवत्सां वा॥ ८॥

तेनेति वृद्धबालादिष्वल्पप्रायश्चित्ताभिधानेनेत्यर्थः। गोर्गुणाधिक्येन प्राय-श्चित्तविशेषमाह प्रचेता इत्यर्थः। तथेति भ्रूणहा ब्रह्महा तदुक्तं द्वादश-वार्षिकमित्यर्थः। निन्दार्थवादोऽयं प्रायश्चित्तद्वैगुण्योपदेशार्थमित्यर्थः। स्त्री गर्भिणी आत्रेयी ब्राह्मणी गोगर्भिणी बृहस्पत्युक्तगुणत्रयसम्पन्ना कपिलाहोम-धेनुः गर्भिणी ईदृश्या वधे द्वादशवार्षिकम् अतैव ग्रोतमोक्तमिती न्यूनं वृष-भैकशतदानत्रैवार्षिकव्रतप्रायश्चित्तं गुणद्वयविशिष्टाया कपिलगर्भिण्या वधे वक्ष्यते

इति दक्षवचनात्। यथा द्रव्यदेशकालाश्रमपात्रगुणेन दाने फलविशेषः तथा हिंसायामपीत्यर्थः। एवं मुन्यन्तरोक्तानि लघूनि यानि प्रायश्चित्तानि तानि गोरेवात्यन्तनिर्गुणतया व्याख्येयानि। प्रयोजकानुग्राहकानुमन्तृनिमित्तविषयाणि वा॥ ९॥

विशेषमाह संवर्त्तः,

> व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा।
> भिषङ् मिथ्योपचारैश्च द्विगुणं गोव्रतं चरेत्॥

एकप्रयत्ननिष्पन्ने बहूनां गवां बधे ब्रह्मबध इव प्रायश्चित्त-गौरवमुक्तं न तन्त्रता अपिशब्दात् गृहदाहादिना। क्रमकृते तु प्रायश्चित्तावृत्तिः स्यादेव। यथा यमः,

> गोघ्नवद्विहितः कल्पः चान्द्रायणमथापि वा।
> अभ्यासे तु तयोर्भूयस्ततः शुद्धिमवाप्नुयात्॥

तथा संवर्त्तः,

> एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत्।
> पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक्॥

---

बालवधो ज्ञानतो ब्राह्मणबालवधीत्यर्थः। पुण्य इति पुण्यदेशो गङ्गातीरादिः पुण्यकालो विषुवसंक्रान्त्यादिः॥ ९॥

बहूनामिति वत्सादीनां द्वैगुण्यं वाचनिकमेव द्वयोस्तु द्वैगुण्यं न्यायसिद्धमेवेति भावः। गृहदाहादिनेत्यादिशब्दाज्जलप्रवेशादीनां ग्रहणम्। यम इति त्रिविध-सुरेतरमद्यपाने गोघ्नवत् प्रायश्चित्तमित्यर्थः। अयञ्च चान्द्रायणवैकल्पिकत्वात् संवर्त्तोक्तगोबधप्रायश्चित्तातिदेशस्तयोः प्रकृतिविकृतिभूतयोर्गोबधत्रिविधसुरेतर-मद्यपानयोरभ्यासे भूयः पुनः प्रायश्चित्तान्तरं कुर्यात् न तु तुल्यन्यायप्राप्ता तन्त्रता वचनादित्यर्थः। एकेति सर्वेषां तुल्यमेव विहितव्रतप्राप्तौ तदपवादोऽयं

हत्यायास्त्रैमासिकव्रतस्येत्यर्थः। एतद्गोबधमात्रविषयम्। मनुष्य-बधे तु एकं घ्नतां बहूनाञ्च यथोक्तद्विगुणो दम इति दण्ड-द्वैगुण्यश्रवणात् प्रायश्चित्तेऽपि द्वैगुण्यमेव। अथैकहायन-द्विहायनत्रिहायणचतुर्हायणगोबधप्रायश्चित्तं तत्र प्रचेताः,

> एकवर्षे गवि हते कृच्छ्रपादो विधीयते।
> अबुद्धिपूर्वं पुंसः स्याद्द्विपादस्तु द्विहायने।
> त्रिहायणे त्रिपादः स्यात् प्राजापत्यमतःपरम्॥ १०॥

इदमपि प्रायश्चित्तलाघवेन बुद्धिपूर्वकाधमशूद्रस्वामिकगोबध-विषयम् अतःपरं चतुर्हायणे इत्यर्थः बुद्धिपूर्वके एतदेव द्विगुण-मित्यर्थः॥ ११॥

---

वचनं तत्र बहुभिस्त्रिचतुरादिभिर्हनने विहितस्य पादपादविधानं वाचनिकं यथा पञ्चादीनां पादपादो वाचनिकस्तथा त्रयाणामपि पादपादो वाचनिक एव द्वाभ्यान्तु कृते पृथगेव तुल्यं विहितव्रतमाचरणीयं बहुभिरित्युपादानात् अपवाद-कल्पाभावादिति ध्येयम्। अन्ये तु वचनार्थमनाकलय्य द्वयोरप्यर्द्धमर्द्धं वदन्ति। त्रैमासिकव्रतस्येति हत्याया भागासम्भवात् तद्व्रतलक्षणेत्यर्थः। एतदुपलक्षणं यत् यत्र विहितमधिकं न्यूनं वा तस्य पादं पादमित्यर्थः। मनुष्यवधे त्विति अन्यत्र पृथगेव तुल्यं विहितव्रतं सर्वेषामित्यर्थः॥ १०॥

इदमपीति इदन्त्वित्यर्थः। अधमशूद्रोऽसच्छूद्रः तद्द्रव्यस्यातिनिकृष्टत्वात् अत्यल्पप्रायश्चित्तस्य न्याय्यत्वात्। अतः परमिति चतुर्हायणादावित्यर्थः। एतच्च न्याय्यमेव अज्ञानतः शूद्रमात्रस्वामिकगवीवधे प्राजापत्यद्वयस्योक्तत्वात् असच्छूद्र-सम्बन्धेन तदर्द्धस्य युक्तत्वादिति भावः। ब्राह्मणादिस्वामिकबालगवीवधे तु। अति-वृद्धामतिकृशामतिबालाञ्च रोगिणीम्। हत्वा पूर्वविधानेन चरेदर्द्धव्रतं द्विजः। इति बृहस्पतिवचनेऽतिशब्दाद्द्विहायनपर्य्यन्तं मन्वादिविहितव्रतार्द्धं त्रिहायण-पर्य्यन्तं पादोनम्। अतःपरं सम्पूर्णमित्युक्तम्। प्रचेतोवचने चतुर्हायणपर्य्यन्तं क्रमेण वृद्धिदर्शनादिति भावः। अन्ये त्वन्यथा प्रलपन्ति॥ ११॥

अथ रोधादिनिमित्तकगोवधप्रायश्चित्तम्। तत्र अङ्गिराः,

रोधने बन्धने चैव योजने च गवां रुजः।
उत्पाद्य मरणं वापि निमित्ती तत्र लिप्यते॥
पादं चरेद्रोधवधे द्वौ पादौ बन्धने चरेत्।
योजने पादहीनं स्याच्चरेत् सर्वं निपातने॥

निमित्ती तत्र लिप्यत इति यथाकथञ्चिन्निमित्तभावात् पापैर्विलिप्यत इत्यर्थः। यदि क्षीणा गौः वाटादिनिरुद्धत्वात् पलायनाद्यसमर्था आहाराद्यभावेन म्रियते तदा रोधस्य व्यवहितस्य मरणनिमित्तत्वात् प्रायश्चित्तपादः। बन्धनस्य चासन्नत्वात् द्वौ पादौ हलादियोजने चातिवाहात् पादोनम्। निपातने दण्डनिपातनेऽत्यन्तासन्नत्वात् सम्पूर्णप्रायश्चित्तम्। न तु स्वम्भादिनिपातने कृच्छ्रमज्ञानताड़ने इति बृहस्पतिवचनात् दण्डोऽत्र हस्तप्रमाणो ग्राह्यः तदधिके द्विगुणप्रायश्चित्तविधानात्। यथा अङ्गिराः,

---

अथ रोधादीति। रुजः पीड़ा उत्पाद्य पापेन लिप्यत इत्यर्थः। अत्र चात्यन्ताल्पप्रायश्चित्तं न प्रकृतोपयोगीत्युपेक्षितम्। यथाकथञ्चिदिति यथाकथञ्चिद्व्यवहितस्याव्यवहितस्य च मरणनिमित्तस्य सद्भावादित्यर्थः। वाटेति मार्गो वाटः पथः पथीति त्रिकाण्डशेषः। आदिशब्दात् गृहद्वारादीनां ग्रहणम्। व्यवहितस्येति रोधाद्गमनाशक्तिः तस्मात् अनाहारता तस्मान्मरणमिति व्यवधानम्। बन्धनादिन्द्रियनिग्रहोऽतो मरणमित्यासन्नता। प्रायश्चित्तपाद इति प्रायश्चित्तपदं प्राजापत्यपरं बृहस्पतिपराशरवचनैकवाक्यतया तस्यैव वक्ष्यमाणत्वात्। सम्पूर्णेति च सम्पूर्णं प्राजापत्यमित्यर्थः। दण्डोऽत्रेति दण्डोऽयं रक्षार्थं शास्त्रविहितस्तेन रक्षार्थदण्डेन ताड़नान्मरणे सम्पूर्णं प्राजापत्यं विहितप्रमाणादधिकेन तु रक्षार्थदण्डेन ताड़नान्मरणे द्विगुणं प्रायश्चित्तं प्राजा-

अङ्गुष्ठमात्रस्थौल्येन बाहुमात्रप्रमाणतः ।
सार्द्रश्च सपलाशश्च दण्ड इत्यभिधीयते ॥
अस्मादूर्द्धप्रहारेण यदि गां विनिपातयेत् ।
द्विगुणन्तु भवेत्तत्र प्रायश्चित्तमिति स्थितिः ॥

एतच्च रात्रौ रक्षणार्थं रोधबन्धनातिरिक्तविषयम् ॥ १२ ॥

सायं संयमनार्थं तु न दुष्येद्रोधबन्धयोः ।

इत्यङ्गिरोवचनात् । पादादिकञ्च प्राजापत्यस्यैव बृहस्पति-पराशरवचनैकवाक्यत्वात् । तथा च बृहस्पतिः,

पादञ्चरेद्रोधवधे कृच्छ्रार्द्धं बन्धघातने ।
अतिवाहे च पादोनं कृच्छ्रमज्ञानताड़ने ॥

तथा पराशरः,

रोधने तु चरेत् पादं बन्धने चार्द्धमेव च ।
योजने पादहीनं स्यात् प्राजापत्यं निपातने ॥

अत्र कृच्छ्रपदप्राजापत्यपदश्रवणात् तस्यैव पादादिकमव-गम्यते न च यादृशे गोवधे यत् प्रायश्चित्तं तस्येति । एतद-

---

पत्यद्वयमित्यर्थः । रक्षार्थे ताड़ने लगुड़संज्ञकेन दण्डेन तु क्रोधादिना ताड़ना-न्मरणे मन्वाद्युक्तं यथायथं त्रैमासिकं व्रतं प्रागुक्तमिति भावः ॥ १२ ॥

सायमिति यदि तु आशङ्कितमरणे देशे गमनवारणाय अकालेऽपि रोधो बन्धो वा कृतस्तदा तस्यापि विहितत्वान्न दोष इति भावः । स्वमतं व्यवस्थाप्य भवदेवादिमतमाक्षिपति न च यादृशेति । अतियुक्तास्तु पादमेकं चरेद्रोधे इत्यङ्गिरोवचने प्रकृतगोवधप्रायश्चित्तावगमात् ब्राह्मणादिसम्बन्धिगवीवधे यथा-यथं मन्वाद्युक्तप्रायश्चित्तस्यैव पादादिकं बृहस्पतिपराशरवचनन्तु रोधादिना-शूद्रस्वामिकगवीवधे प्राजापत्यपादार्द्धादिविधायकमिति भिन्नविषयत्वान्नैक-वाक्यता अविहितदण्डताड़नात् द्वैगुण्यविधायकन्तु वचनं बृहस्पतिवचनविषये

ज्ञानश्रुतेरबुद्धिपूर्वकवधविषयम् अज्ञानञ्च चीणाया अचीणा त्वभ्रमः॥ १३॥

चैण्यज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादादिकम्। यथा हारीतः,

नासाच्छेदनदाहेषु कर्णच्छेदनबन्धने।
अतिदोहातिवाहाभ्यां कृच्छ्रं चान्द्रायणं चरेत्॥

धर्मप्रदीपव्याख्यानमपीदृशमेव।

अथापालननिमित्तगोवधप्रायश्चित्तम्।

अत्र पराशरः।

शीतानिलहता चैव उद्बन्धनमृतापि वा।
शून्यागाराद्युपेचायां प्राजापत्यं विनिर्दिशेत्॥
अपालनात् प्रणश्येत्तु गौश्चरन्ती कथञ्चन।
जलौघपल्वले मग्ना नागविद्युद्धतापि वा॥
श्वभ्रे वा पतिता कस्मात् श्वापदैर्वापि भक्षिता।
प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्॥

---

मन्तव्यमिति भवदेवमतं वर्णयन्ति तदपि न चारु वक्ष्यमाणचान्द्रायणविधायकहारीतवचनविरोधादिति एतदिति। कृच्छ्रमज्ञानताड़न इति वचनेऽज्ञानपदश्रवणादित्यर्थः॥ १३॥

चैण्यज्ञाने त्विति प्रागुक्तवचनेषु प्राजापत्यविभागदर्शनात् रोधादीनां निमित्तानामतुल्यतयाऽत्रापि तेषु रोधादिषु विभक्तचान्द्रायणं मन्तव्यमिति हृदयम्। यदा तु मरणाभिसन्धानं विना रोधबन्धनादिना पुष्टाया गोर्मरणं स्यात्तदापि हारीतोक्तमेव चान्द्रायणपादादिकं यतो यथा चैण्यज्ञाने विषयगौरवाद्धारीतवचनं तथा पुष्टगवीवधेऽपि विषयगौरवात्तद्वचनमिति। यदा

सशिखं वपनं कार्य्यं त्रिसन्ध्यमवगाहनम्।
शृङ्गैर्वापि खुरैर्युक्तं लाङ्गूलश्रवणादिभिः॥
आर्द्रमेव हि तच्चर्म परिधाय स गां व्रजेत्।
तासां मध्ये वसेद्रात्रौ दिवा ताभिः समं व्रजेत्॥
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः।
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्॥
अनडुत् सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्।

ब्राह्मणस्य विशेषेणेति ब्राह्मणगवानुगमनं मुख्यमित्युक्तम्। एतेन अपालनादिकृतगोबधे प्राजापत्यं करणीयम् अशक्तौ धेनुरेका देया वृषभसहिता गौर्दक्षिणा देया॥ १४॥

यदि तु सत्येव पालके श्वभ्रादिपाताद्गोर्मरणं स्यात्तत्र प्रायश्चित्तमाह विष्णुः,

---

तु मरणाभिसन्धानेन रोधादिना, गोर्मरणं तदा मन्वाद्युक्तं सम्पूर्णव्रतमेवेति ध्येयम्। अन्ये तु रोधादिना पुष्टगवीवधेऽज्ञानकृते साक्षात् बधप्रायश्चित्तं सार्द्धमासादिकं वदन्ति। तन्मन्दं साक्षाद्वधरोधादिनिमित्तबधयोरतुल्यत्वात् चतुर्षु रोधादिनिमित्तेषु प्रायश्चित्तभेदानुपपत्तेश्च तस्मादुक्तैव व्यवस्था। उद्बन्धन-हतापि वेति अपालनेन स्वयं लतादिना बन्धनहतेत्यर्थः। पुरुषकृतबन्धने तु प्रागुक्तमेवेति भावः। शून्यागारादीति आदिशब्दात् आहारप्रचारदेशादीनां ग्रहणम्। गोस्वामीति एतच्च पालकाभावे मन्तव्यं सति तु पालके स एवेति। यत्तु दिवावक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे इति मनुवचनं तद्रात्रिपाला-भावपरं सति तु रात्रिपाले तस्यैव दोषो मन्तव्यः॥ १४॥

यदीति अपालने तु कृच्छ्रं स्यादित्युत्तरवचने पालनपदं नन्व्यादिषु प्रत्ययात्, पालकार्थं पालकाभावे कृच्छ्रं स्यादित्यर्थः। शून्यागाराद्युपेक्षायामिति पराशर-वचनसमानार्थं ततश्च तदपेक्षया पूर्ववचनं विद्यमानपालकविषयम् एवञ्च

पल्वलौघवृकव्याघ्रश्वापदादिनिपातने।
श्वभ्रोद्बन्धनसर्पाद्यैर्मृते पादोनमाचरेत्॥
अपालने तु कृच्छ्रं स्यात् शून्यागारादुपप्लवे।

तत्र पादोनं प्राजापत्यस्यैव उत्तरवचने कृच्छ्रश्रवणात्। तथा पादश्चाप्राप्तके देयो वत्से स्वामिन्यरक्षिते। अप्राप्तकोऽप्राप्तदम्यावस्थः तस्मिन्। श्वभ्रपातादिना मृते वत्से स्वामिना प्राजापत्यपादः करणीय इत्यर्थः॥ १५॥

अथ गोवधापवादः। तत्र पराशरः

धूर्य्येषु वह्यमानेषु दण्डेनाभिहतेषु च।
काष्ठेन लेष्टुना वापि पाषाणेन तु ताड़ितः॥
मूर्च्छितः पतितश्चापि मृतो वा सद्य एव वा।
एवं गतानां धूर्य्याणां प्रवक्ष्यामि यथाविधि॥

---

सत्येव पालने विद्यमान एव पालके तस्यानवधानात् श्वभ्रनिपातादिनिमित्तैर्यदि गोर्मरणं स्यात्तदा पादोनं कृच्छ्रमित्यर्थः। न तु सत्येव पालन इति ऋज्वर्थः समादरणीयः पुरुषदोषाभावादवधानुपपत्तेः। वृकस्तरक्षुः व्याघ्रभेदः श्वापदः श्वविशेषः एवमन्यान्यपि पादोनविधायकादिवचनान्येतद्विषयकाण्येव यथा यमः। अतिवाहातिदोहाभ्यां नासिकाभेदनेन च। नदीपर्वतसंरोधान्मृते पादोनमाचरेत्॥ तथा दीर्घरज्जुकृते चैव प्रग्रहे युग्मयोजिते। हलयुग्ममृते चैव द्विपादं तत्र निर्दिशेत्॥ घण्टाभरणदोषेण गवां यत्र विपद्भवेत्। चरेदर्द्धव्रतं तत्र भूषणार्थं हि तत् कृतम्। अत्र पादोनादिकं प्राजापत्यस्येत्यर्थः तथेति अप्राप्तके अप्राप्तदम्यावस्थे बाल इत्यर्थः। तस्मिन्नरक्षितेऽपालिते मृते तत् स्वामिनि प्राजापत्यपादो देय इत्यर्थः। बालगवीवधेऽर्द्धव्रतविधानन्तु साक्षाद्बधविषयकं प्रागुक्तमेव॥ १५॥

अथ गोवधापवाद इति पराशरः धूर्य्येषु वह्यमानेषु मध्ये यः काष्ठादिना ताड़ितो मूर्च्छितः सन् पतितः अनन्तरञ्च उत्थाय ग्रासादिकं कृत्वा सद्य एव

उत्थितस्तु पदं गच्छेत् पञ्च सप्तदशापि वा।
ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम्॥
पूर्व्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते।

यदि व्याधिप्रयुक्तानां वृषाणां हलयोजनमात्रे स्वल्पतर-दण्डाभिघाते वा मूर्च्छया पतनं भवति अनन्तरं गमन-ग्रासादिकृते मरणं भवति तदा गमनग्रासग्रहणतोयपानेन कारणेन तदानीन्तनमरणहेत्वभावं विनिश्चित्य पूर्व्वव्याधि-विनष्टत्वं ज्ञायते इति प्रायश्चित्ताभावः। यदि च पूर्व्वव्याधि-रहित एव प्रहारजनितव्याधिना गमनग्रासादिकं कृत्वा पश्चान्म्रियते तदा प्रायश्चित्तमस्त्येव। संवर्त्तः,

यन्त्रणे गोचिकित्सार्थे मूढ़गर्भविमोचने।
यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते॥
औषधं स्नेहमाहारं ददत् गोब्राह्मणेषु च।
प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तं न विद्यते॥
दाहच्छेदशिराभेदप्रयत्नैरुपकुर्व्वताम्।
द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते॥

द्विजानां गवाञ्च हितार्थमित्यर्थः। मूढ़गर्भोऽन्तर्मृतगर्भः। एतच्च यथावदुपचारे वेदितव्यं न पुनः सन्निपाताभिभूतस्यो-

---

मृतः वाशब्दस्यार्थे प्रवक्ष्यामि विशेषमिति शेषः। तमाह उत्थितस्त्विति यद्यत्र दण्डादिप्रहारानन्तरमेव ग्रासादिमकृत्वा मृतः तदापि प्रायश्चित्तमस्तीति ध्येयम्। संवर्त्त इति यन्त्रणे दमने औषधादिकं ददद् यः स्यात् तस्य प्राणिनां प्राणरक्षार्थं चेष्टतः प्रायश्चित्तं न विद्यत इत्यर्थः। एतच्च इति यथावदुपचारे सम्यगुपचारे

दकपानादिना अतएव चिकित्सताञ्च सर्वेषां मिथ्याप्रचरतां दमः इति मनूक्तम् अतएव काश्यपोऽत्र प्रायश्चित्तमाह ॥१६॥

यथा दोग्ध्रीदमनातिदोहान्नासापाशदामघण्टाभरण-योजनात् तैलपानौषधिविनियोगाद्यापन्नानां प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य सशिखवपनं कारयित्वा प्राजापत्यं कृच्छ्रमाचरेच्चीर्णान्ते गां ब्राह्मणाय दद्यात् धेनुं तिलधेनुं वा अत्र गोदानस्वरूपधेनुदानतिलधेनुदानानां शक्त्यपेक्षया विकल्पः। एतच्च गोः शक्तिमनपेक्ष्यैव दमनादितो मरणे ज्ञेयम्। यत्तु व्यासेन,

घण्टाभरणदोषेण विपत्तिर्यदि गोर्भवेत्।
कृच्छ्रार्द्धं हि भवेत्तत्र भूषणार्थं कृतं हि तत्॥
विरेकवमनाभ्यां वा संघाते वापि योजने।
लतासंकुलपाशेन मृते पादोनमाचरेत्॥

तद्गोररण्यप्रवेशेन लतादिबद्धघण्टादिदोषेण मरणे बोध्यम्। पुनर्व्यासः,

---

इत्यर्थः। नासायां छेदो मांसादिच्छेदः भेदः वेधनं द्विजानां हितार्थं गोहितार्थं वा उपकुर्वतां जनानां दैवाद्गोद्विजमरणे न विद्यते इत्यर्थः॥ १६॥

यथेति पाशयोजनाद्धलादौ दामयोजनाच्च व्यापन्ना मृता चेत् तदा प्रायश्चित्तं भवति तदाह ब्राह्मणेभ्य इति निवेद्य पापमिति शेषः चीर्णान्ते प्रायश्चित्तचरणान्ते इत्यर्थः एतच्चेति शक्तिं ज्ञात्वा यथोचितदमनादौ कृते यदि विपत्तिः स्यात्तदा न दोष इति हृदयम्। विरेकेति विरेकवमनाभ्यामनन्तरं सङ्घातमध्ये योजनानन्तरं वा नस्येन नासासम्बन्धिना सङ्कुलपाशेन हेतुना मृते मरणे सति पादोनं प्राजापत्यमाचरेदित्यर्थः लतासङ्कुलपाशेनेति पाठे लतया सङ्कुलपाशेन दीर्घपाशेन चाकर्षेण इत्यर्थः। काश्यपवचनं गोरत्यन्त-

औषधं लवणञ्चैव स्नेहं पिण्याकमेव च।
अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत्॥
अतिरिक्ते विपन्नानां कृच्छ्रपादो विधीयते।
औषधे न तु दोषोऽस्ति स्वेच्छया पिबते यदि॥
अन्यथा दीयमाने तु प्रायश्चित्ती न संशयः।

अङ्गिराः,

शृङ्गभङ्गेऽस्थिभङ्गे वा चर्मनिर्मोचनेऽपि वा।
दशरात्रं चरेद्वज्रं सुस्था सा यदि गौर्भवेत्॥
अन्यत्राङ्कणलक्षभ्यां वाहनिर्मोचनेऽपि वा।
सायं संयमनार्थं तु न दुष्येद्रोधबन्धयोः॥
गोमूत्रेण समायुक्तं यावकञ्चोपयोजयेत्।
एकाहेनैव कृच्छ्रोऽयमुक्तश्चाङ्गिरसा स्वयम्॥
सर्वपापहरो दिव्यो नाम्ना वज्र इति स्मृतः।

वृषार्थमङ्कणकरणे चिह्नकरणे च वाहनादिना चर्ममोचने च सायं रक्षार्थं रोधबन्धनाभ्याञ्च शृङ्गभङ्गादौ न दोषः॥ १७॥

---

शक्त्यनपेक्षविषयम् अरण्यप्रवेश इति काश्यपवचनन्तु गोर्घण्टावहनशक्तिमनपेक्ष्य घण्टादानविषयम्। व्यास इति काले रोगादिकाले इत्यर्थः। औषधेऽतिरिक्तेऽपि अन्यथा बलात्कारेण अङ्गिरा इति शृङ्गभङ्गादौ कृते वज्रं गोमूत्रयावकं दशरात्रं पिबेत् सा गौः यदि सुस्था स्यात् तस्यास्तत्कृतमरणे सम्पूर्णमेव प्रायश्चित्तमिति भावः। अत्रैव विशेषमाह अन्यत्रेति अङ्कणं वृषाङ्कणं लक्षणपरिचयार्थं यच्च चिह्नकरणं ताभ्यामन्यत्र तत्र शृङ्गभङ्गादौ न दोष इत्यर्थः। तथा वाहेन यच्चर्मनिर्मोचनं तत्र सायं संयमनार्थं रोधबन्धहेतुना मरणे च न दुष्येत्॥ १७॥

यदि तूक्तप्रयोजननिरपेक्ष्य बन्धनादिकारितस्तात्का-
लिको मृत्युर्भवति तदा दोषो भवत्येव दशरात्रवज्रव्रते च
पूर्ववत् त्रिंशद्दिवसे धेनुद्वयं व्यवस्थितं तदभिप्रायेण किञ्चिन्न्यूनं
धेनुमूल्यं देयमिति धेनुद्वादशसंकलितमासगोमूत्रयावकव्रत-
तृतीयभागत्वाद्धेनुचतुष्टयं देयम् ॥ १८ ॥

इति गोवधप्रायश्चित्तम् ।

अथ क्षत्रियादिवधप्रायश्चित्तम् ।

तत्र मनुः,

तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः ॥
अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
वृषभैकसहस्रा गा दद्यात्सुद्धार्थमात्मनः ॥

---

उक्तप्रयोजनेति उक्तप्रयोजनं सायं संयमनं तन्निरपेक्षो यो बन्धनादिस्तेन कारितो मृत्युर्यदि स्यादित्यर्थः । गोमूत्रेण समापन्नं गोमूत्रेण निष्पादितं यावकं केवलगोमूत्रक्वाथः अयमेव वज्राख्यः न तु गोमूत्रसिद्धयावकस्तत्र मासैके धेनुद्वयस्योक्तत्वात् वज्रव्रते तु मासैके द्वादशधेनवो वक्ष्यन्ते । दशरात्रेति पञ्च-दशधेनुसङ्कलितमासोपवासव्रतात् पञ्चमभागापकर्षात् मासैकव्रते द्वादशधेनव इति शूद्रोच्छिष्टाशनप्रकरणे वक्ष्यते तत्त्रिभागे दशदिनवज्रव्रते धेनुचतुष्टयमित्यर्थः अतएवापेयक्षीरपानप्रकरणशेषे दशरात्रं पिबेद्वज्रमापत्कल्पे त्र्यहं पिबेदिति अङ्गिरोवचनव्याख्यानावसरे अत्र द्वादशधेनुसङ्कलितगोमूत्रयावकस्य तृतीय-भागत्वात् दशरात्रे धेनुचतुष्टयमिति स्वयमेव वक्ष्यते । एतेन यत् केनचिदिद-माकरपाठं व्याख्यातुमशक्तेनापपाठमित्युक्त्वा पाठान्तरं कल्पयित्वान्यथा प्रलपितं तदुपहासास्पदमेव ॥ १८ ॥

इति गोवधप्रायश्चित्तम् ।

अथ क्षत्रियादिवधेति । मनुरिति ब्रह्महत्याया ब्रह्महत्याव्रतस्येत्यर्थः । वैश्ये हते इत्यर्थः षण्मासानेतदेव ब्रह्महत्याव्रतं कृच्छ्रं प्रायश्चित्तं चरेदित्यर्थः

वत्सरं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् ।
वसन् दूरतरे ग्रामाद् वृक्षमूले निकेतनः ॥
एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ।
प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम् ॥
एतदेव व्रतं कृच्छ्रं षण्मासान् शूद्रहा चरेत् ।
वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥

एकशतम् एकाधिकशतमित्यर्थः । ब्रह्महत्याप्रायश्चित्तस्य शव-शिरोध्वजधारणादिसर्वाङ्गोपेतस्य द्वादशवार्षिकस्य यच्चतुर्थोऽंशस्त्रीणि वर्षाणि प्रायश्चित्तं तत् वृत्तस्थक्षत्रियवधे कामकृते कार्य्यम् एवं वृत्तस्थवैश्यवधे सार्द्धवार्षिकं वृत्तस्थशूद्र-वधे नवमासिकम् । अकामतो वृत्तस्थक्षत्रियवधे वृषभाधिकगोसहस्रदानं त्रैवार्षिकब्रह्महत्याव्रतं वा । ननु त्रैवार्षिक-व्रते पञ्चचत्वारिंशद्धेनवः अतः कथं विषमशिष्टयोरिच्छावि-

---

एकाधिकं शतमिति एकाधिकं शतं वृषाधिकं शतमित्यर्थः । आपस्तम्बवचने वृषभाधिकगोशतस्य वक्ष्यमाणत्वादत्रापि प्राक् परतश्च तथाभिधानाच्चेति ब्रह्मक्षत्रविषयेति प्रकरणादिति भावः मनुवचने वृत्तस्थपदं निर्गुणेतरपरं सामान्यक्षत्रियस्य विशेषानभिधानात् अतएव ग्रन्थकृता अत इत्यादिना सामान्यक्षत्रियादिविषयतयेदमुपसंहरिष्यते । भवदेवेनापि सामान्यक्षत्रिय-वधे त्रैवार्षिकमुक्तं तथाप्यत्यन्तवैषम्यादिति पञ्चचत्वारिंशतस्त्रैगुण्ये गवां पञ्च-त्रिंशदधिकशतं भवति तथापि गोसहस्रेण सहात्यन्तवैषम्यमिति भावः धेनुं दद्यादिति यद्यप्येतच्छूद्रवध एव याज्ञवल्क्येनोक्तं न तु क्षत्रियवधे यथा याज्ञ-वल्क्यः वृषभैका सहस्रा गा दद्यात् क्षत्रवधे पुमान् । ब्रह्महत्याव्रतं वापि वत्सरत्रितयञ्चरेत् । वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम् । षण्मासान् शूद्रहाप्येतत् दद्याद्धेनूर्दशाथवा तथापि क्षत्रियवधवत् शूद्रवधेऽपि सार्द्धसप्तधेनु-[illegible]दानयोर्वैषम्यं प्रदर्शितमिदं एवं वैश्यवधेऽपि वैषम्यमूह्यम्

कल्पः। न च गोमूल्याद्धेनुमूल्यं त्रिगुणेनाधिकं तथाप्यत्यन्तवैषम्याद्धेनुर्दद्यात् दशाथवा इति याज्ञवल्क्यवचनाच्च कथञ्च कामतस्त्रैवार्षिकोक्ते अकामतोऽपि त्रैवार्षिकं तदर्द्धस्यैव युक्तत्वात् सत्यं व्यवस्थितविकल्पोऽयम् अतिविपुलधनस्य गोसहस्रदानं निर्धनस्य त्रैवार्षिकम्॥ १॥

अतएव भविष्ये ब्रह्मबधे महादेवपादैरुक्तम्

द्रव्यतश्च विशेषेण शक्तिं वीक्ष्य महामते!।
द्रव्यतश्च यदा शक्तस्तदा तस्य तपो भवेत्॥
वेदाभ्यासविहीनो वै धनवानग्निवर्जितः।
प्रायश्चित्तं तदा कुर्य्यादिदं पापविशुद्धये॥
धनं वा जीवनायालं गृहं वा सपरिच्छदम्।

इति अतएव आत्ममितसुवर्णदानं द्वादशवार्षिकवैकल्पिकमुक्तं ब्रह्मबधे याज्ञवल्क्येन यथा

आत्मतुल्यं सुवर्णं वा दद्याद्विप्राय तुष्टिकृत्।

इति अतएव व्रतान्ते दक्षिणायां गोसहस्रदानं विपुलधनविषयमेव। यथा शङ्खलिखितौ। अमतिपूर्वकं चतुर्षु वर्णेषु प्रमाप्य द्वादशवत्सरान् षट् त्रीण्येकं व्रतान्यादिशेत्तेषामन्ते गोसहस्रं ततोऽर्द्धं तस्यार्द्धमस्यार्द्धञ्च दद्यात् सर्वेषामानुपूर्व्येण

---

एवमकामकृते गोसहस्रत्रैवार्षिकव्रतयोर्विरोधमाशङ्क्य कामकृतेनापि विरोधमाशङ्कते कथञ्चेति अकामकृते गोसहस्रं कामकृते तु त्रैवार्षिकमित्यत्यन्तविरुद्धमित्यप्याशङ्कनीयम्॥ १॥

अतएवेति भविष्यादिष्वत्यन्तधनवतोऽधिकदानस्य उक्तत्वादिति भावः। अमतिपूर्वकमिति चतुर्षु वर्णेषु एकैकं प्रमाप्य यथाक्रमं द्वादशवत्सरादीन् व्रतं कुर्य्यात् अत्यन्तसगुणेति मनुना वृत्तस्वाध्यायादिविषये त्रैवार्षिकादीना-

षट् त्रीण्येकश्चेति अत्यन्तसगुणक्षत्रियादिविषयम्। कामतस्तु क्षत्रियवधे शवशिरोध्वजादिसर्वाङ्गोपेतं त्रैवार्षिकव्रतम्। अकामतस्तु जटिलग्रामदूरनिवासित्ववृक्षमूलनिकेतनत्वव्यतिरिक्तशवशिरोध्वजधारणादिसर्वाङ्गरहितं त्रैवार्षिकव्रतं कुर्य्यात्॥ २॥

पुनर्जटिलादिनिर्द्देशेनेतराङ्गव्यवच्छेदात् आज्यभागौ जुहोतीतिवत् अतो महाक्लेशसाध्यबहुतराङ्गनिवृत्तेः कामकृतत्रैवार्षिकव्रतादर्द्धप्रायश्चित्तमिदं त्रैवार्षिकव्रतं वचनात् कर्त्तव्यम्। अथवा वैरनिर्यातनार्थिना गोसहस्रदानं कार्य्यम्। यथापस्तम्बः। क्षत्रियं हत्वा गवां सहस्रं वैरनिर्यातनार्थं दद्यात् शतं वैश्यं दश शूद्रमिति वृषभश्चात्राधिकः अत्र कपर्दिभाष्यं वैरनिर्यातनार्थमिति यो येन हन्यते स तमवश्यं हन्यतः प्रायश्चित्तं कुर्य्यात् तथा नासौ तेन हन्यते इति। तन्निर्यातनं भवतीति॥ ३॥

---

सुतत्वादिति भावः। ज्ञानतस्तु द्वादशवार्षिकम् एवमकामकृते विरोधं परिहृत्य कामकृते विरोधं परिहरति कामतस्त्विति॥ २॥

पुनर्जटिलादीति ब्रह्महणोव्रतम् इत्यनेनैव सिद्धे पुनर्जटिलादिविशेषनिर्देश इतराङ्गव्यवच्छेदार्थं इत्यर्थः। आघाराज्यभागाविति सामान्यतोऽग्निसंस्कारे आघाराज्यभागौ च प्राप्तौ ततश्च यद्दयागविशेषे अथाज्यभागौ जुहोतीति विशेषाभिधानं तदाघारयोर्व्यवच्छेदार्थं यथेत्यर्थः। वचनादिति यद्यपि सार्द्धत्रैवार्षिकव्रतात् किञ्चिदङ्गहीनत्रैवार्षिकव्रतस्याल्पन्यूनप्रायश्चित्तता तथापि वचनादिदं कर्त्तव्यमित्यर्थः। एवं कामकृते महाधनवतो गोसहस्रादधिकदानमुन्नेयम्। पक्षान्तरमाह अथ वेति यथेति दशशूद्रमित्यत्र दशधेनुरित्यर्थः। दद्याद्धेनूर्दशाथवा इति याज्ञवल्क्योक्तवाक्यत्वात् एवं मनुवचनेऽपि अन्यथा षाण्मासिकव्रतादाधिक्याभावात् वैरनिर्यातनार्थत्वं न घटते। वैरनिर्यातनपदार्थं विवृणोति। यद्वेति जन्मान्तरेऽसौ तमवश्यं हन्ति [illegible]स्मादप्रायश्चित्तकृते तु असौ हन्ता जन्मान्तरे न हन्यते अतो वैरनिर्यातन[illegible]॥ ३॥

विशेषमाह याज्ञवल्क्यः,

याग्स्थक्षत्रविड्घाते चरेत् ब्रह्महणो व्रतम्।
गर्भहा च यथावर्णं तथात्रेयीनिसूदनः॥

यमः, हत्वा सवनगं वैश्यं राजन्यमपि दीक्षितम्।
हत्वा तु ब्रह्महस्येव तथात्रेयीञ्च ब्राह्मणीम्॥

एतेन यज्ञस्थक्षत्रियवैश्ययोः सम्पूर्णप्रायश्चित्तं व्यवस्थितं तदेव द्विगुणं नृपतिक्षत्रियबधे। यथा विष्णुः। नृपतिबधे व्रतमेव द्विगुणं कुर्य्यात् यथा ब्रह्मपुराणे।

यज्ञसंस्थौ तु पितरौ राजानञ्चाप्यनागसम्।
हत्वा चरेद्व्रतं तत्तु चतुर्विंशतिवत्सरान्॥

यज्ञसंस्थौ क्षत्रियवैश्यौ पितरौ च। ब्रह्महत्याव्रतानुवृत्तौ वशिष्ठः। एवं राजन्यं हत्वा अष्टौ वर्षाणि चरेत्। षड्वैश्यं त्रीणि शूद्रमिति। आपस्तम्बः,

निपात्य क्षत्रियञ्चैव त्रिभिः कृच्छ्रैर्विशुद्ध्यति।
वैश्यहत्यां तु संप्राप्य कथञ्चित् काममोहितः॥

---

याग्स्थेति गर्भहा आत्रेयीघातकश्च यथा वर्णं कामाकामभेदेन यद्वर्णबधे यद्यत् प्रायश्चित्तं तत् कुर्य्यादित्यर्थः। एतच्च गर्भबधेऽनिर्णीतपुंस्त्वादिब्राह्मणीगर्भबधे तु मनूक्तं द्वादशवार्षिकं ज्ञानतः अज्ञानतस्तदर्द्धमिति वक्ष्यते एतदेवेति एतद्ब्रह्महत्याव्रतं द्विगुणं चतुर्विंशतिवार्षिकं राज्याभिषिक्तक्षत्रियबधे इत्यर्थः यज्ञसंस्थाविति एतच्च त्रैवर्णिकपितृमात्राभिप्रायं तेषामेव यज्ञाधिकारादिति तद्व्रतं ब्रह्महत्याव्रतमित्यर्थः यज्ञसंस्थौ क्षत्रियवैश्यौ पितरौ चेति न केवलं ब्राह्मणौ यज्ञसंस्थपितरौ हत्वा किन्तु यज्ञस्थपितरौ क्षत्रियवैश्यौ च हत्वा चतुर्विंशतिवार्षिकव्रतमित्यर्थः न तु यज्ञसंस्थौ क्षत्रियवैश्यौ हत्वा पितरौ च हत्वा इति पृथगिति

कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरः संयतेन्द्रियः।
कुर्य्याच्छूद्रवधं प्राप्य तप्तकृच्छ्रं समाहितः॥

शातातपः,

राजन्यवैश्यशूद्राणां षट् त्रीण्येकं चरेद्वधे।
वर्षाणि ब्रह्मचर्य्यञ्च विशुद्ध्यर्थं क्रमेण तु॥

एवमादीन्यन्यान्युत्कर्षापकर्षप्रतिपादकवचनानि ब्राह्मणादि-जातत्ववृत्तस्थत्वावृत्तस्थत्ववेदाग्न्यादि-युक्तत्वायुक्तत्व-कामाकाम-कृतत्वव्यवस्थया व्याख्येयानि एतच्च सवर्णोत्तमवर्णकृतक्षत्रि-यादिवधविषयम्। अधमवर्णकृते तु

अधमानान्तु वर्णानामुत्कृष्ट हनने गुह!।
दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः॥

इति भविष्यपुराणवचनात् उत्तमोत्तमक्रमेणाधमाधमानां द्वैगुण्यादिकमूहनीयं विप्रे तु सकलं देयं इति न प्रवर्त्तते अभक्ष्यभक्षणविषयत्वात् अतः कामकृते क्षत्रियवधे त्रैवार्षिकं

---

व्याख्यानं युक्तं प्रागुक्तयाज्ञवल्क्यायमवचनविरोधात् तथा हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्। राजन्यवैश्यौ चेज्यानावात्रेयीमेव च स्त्रियमिति मनुरपि द्वादश-वार्षिकमेवाह वशिष्ठवचनमत्यन्तसगुणक्षत्रियादिविषयम्। आपस्तम्बवचने कृच्छ्रै-स्त्रिभिरित्यर्थः। अतएव वैश्यशूद्रवधे कृच्छ्रातिकृच्छ्राद्यभिधानं संगच्छते वचनमिदं ज्ञानतोऽत्यन्तनिर्गुणक्षत्रियादिविषयम्। शातातपवचनं सगुणक्षत्रियादिविषयम्। प्रागुक्तशङ्खलिखितवचने तु अज्ञानतः षाड्वार्षिकं ज्ञानतो द्वादशवार्षिकादिकं यदुक्तं तद्ब्राह्मणजात्यात्यन्तसगुणवृत्तस्थक्षत्रियादिविषयमिति भावः। द्वैगुण्या-दिकमिति अकामतो ब्रह्मवधे क्षत्रियस्य ब्रह्मवधोक्तव्रतद्वैगुण्यं वैश्यस्य त्रैगुण्यं शूद्रस्य चातुर्गुण्यम्। क्षत्रियवधे वैश्यस्य क्षत्रियवधोक्तव्रतद्वैगुण्यं शूद्रस्य त्रैगुण्यं

महाव्रतं तदशक्तौ पञ्चचत्वारिंशद्धेनवो देयाः। तथा क्षते वैश्यवधे सार्द्धवार्षिकं तदशक्तौ त्रयोविंशतिधेनवः तथा शूद्र-वधे नवमासिकं तदशक्तौ द्वादशधेनवो देयाः तन्मूल्यं वा। बालवृद्धस्त्रीणामर्द्धं देयमिति ॥ ४ ॥

अथ प्रतिलोमजातादिवधप्रायश्चित्तं तत्र याज्ञवल्क्यः,

चान्द्रायणं चरेत् सर्वानपकृष्टान्निहत्य तु।
शूद्रोऽधिकारहीनोऽपि मासेनानेन शुध्यति ॥

अपकृष्टाः प्रतिलोमजाः। मागधायोगवादयः। एतच्च ज्ञानतः सर्वेषामन्योन्यापकृष्टवधे बुद्धिपूर्वके चान्द्रायणमिति शङ्खलिखितवचनात्। अमतिपूर्वके वधे। त्वङ्गिराः,

---

वैश्यवधे शूद्रस्य वैश्यवधोक्तद्वैगुण्यमित्यर्थः। उपसंहरति अत इति निर्गुणेतर-विषयमिदं प्रागुक्तम् ॥ ४ ॥

अथ प्रतिलोमजातादीति। अत्रादिपदात् प्रतिलोमजतुल्यम्लेच्छादि-ग्रहणम्। शूद्रोऽधिकारहीनोऽपीति। आर्द्रवासाश्चरेत् कृच्छ्रं स्नात्वा वस्त्रं न पीडयेत्। अङ्गुल्यग्रस्थितं ग्रासं गायत्र्या चाभिमन्त्रयेत्। प्राशयित्वा उपस्पृश्य पुनरेवाभिमन्त्रयेत्। इति यमवचनात् साङ्गचान्द्रायणे शूद्रस्य गायत्र्याऽभिमन्त्रणा-भावात् यद्यपि अधिकारो नास्ति तथापि तद्विना माससाध्येनानेन चान्द्रायणेन तस्य शुद्धिर्वचनादित्यर्थः मासोऽत्र दर्शान्तः पौर्णमास्यन्तो वा इति वक्ष्यते। सर्वेषामिति रजकाद्यन्त्यजेभ्यो निकृष्टाः कापालिकादयस्तेभ्यो निकृष्टाश्चाण्डालाद्या अन्त्यावसायिनस्तेषां सर्वेषामुत्कृष्टापकृष्टानां समानजातीयानाञ्च प्रतिलोम-जानामन्योन्यापकृष्टवधे परस्परं प्रतिलोमजवधे तुल्यमेव चान्द्रायणं न त्वयान्तर-निकृष्टावकृष्टजातिकृतः प्रायश्चित्तभेदः प्रतिलोमजानामित्यर्थः एवञ्च यदा प्रतिलोमजानां ज्ञानकृतः प्रतिलोमजवधे चान्द्रायणं तदा सुतरां ज्ञानतस्तद्वधे ब्राह्मणादीनां चान्द्रायणमिति भावः न च प्रतिलोमजानां कर्मानधिकारात्

सर्वान्त्यजानां गमने भोजने संप्रमापणे।
पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम्॥

एतच्च सर्ववर्णसाधारणम् अतएव

शूद्रोऽधिकारहीनोऽपि मासेनानेन शुद्ध्यति।

इत्युक्तम् अन्त्यजाश्च रजकनटादयो मनूक्ताः अन्त्यजागमने च रेतःसेकात् पूर्वं ज्ञेयं भोजने च सकृज्ज्ञानतः इति प्रसङ्गागतमिदम्॥ ५॥

प्रायश्चित्तानधिकार इति वाच्यं प्रायश्चित्ते सर्वेषामधिकारात् तथा च पापोत्पत्तिकारणसिद्धान्तशेषे अकुर्वन् विहितं कर्मनिन्दितञ्च समाचरन्। प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नर इत्यनेन ब्राह्मणादिचाण्डालान्तानां प्रायश्चित्ताधिकारप्रतिपादनात् पापं प्रायश्चित्तञ्च दर्शयति अतो वेदार्थव्यवहारिणामेव प्रायश्चित्तं न चाण्डालादीनामिति प्रत्युक्तं ग्रन्थकृता स्वयमुक्तं तथा च मनुः गवार्थे ब्राह्मणार्थे वा प्राणत्यागोऽनुपस्कृतः। स्त्रीबालाद्युपपत्तौ च बाह्यानां शुद्धिकारणमिति अन्यथा अन्त्यजादीनां गोवधप्रायश्चित्तं स्नानादिशुद्धिश्च न स्यात् यत्त्वनुपातकप्रकरणे चाण्डालवत् कर्मानधिकारित्वमस्योक्तमिति लिखितं तदयथार्थत्वेनैव स्वयमेव प्रत्युक्तं ग्रन्थकृतेति एतेन शङ्खलिखितवचनेऽन्योन्येति पाठोऽपाठ इति यत् केनचिदुक्तं तद्धेयमेव एवञ्च सति ब्राह्मणादीनां चाण्डालान्तानां अतिनिकृष्टम्लेच्छादिवधेऽपि ज्ञानतश्चान्द्रायणमेव विशेषाश्रवणादिति मन्तव्यम्। अमतिपूर्वकेति प्रागुक्तचान्द्रायणादल्पत्वादाङ्गिरोवचनमज्ञानविषयं पराकश्चात्र वाचनिकः न तु चान्द्रायणार्द्धमिति भावः यद्यप्यत्रान्त्यजानां नटादीनां वधे पराक उक्तस्तथापि तुल्यन्यायात् कापालिकादिप्रतिलोमजवधेऽपि पराको मन्तव्यः। एतच्चेति न चात्र वर्णभेदकृतविशेषोऽस्तीति भावः। रेतःसेकादिति अज्ञानतः सकृदन्त्यजागमने चान्द्रायणस्य वक्ष्यमाणत्वादिति भावः। भोजने चेति अज्ञानतः सकृदन्त्यजान्नभक्षणे चान्द्रायणार्द्धस्य वक्ष्यमाणत्वात् पराकोऽयं निर्गुणविषयः॥ ५॥

## अथ स्त्रीवधप्रायश्चित्तम्।

तत्र ब्रह्महत्याव्रतानुवृत्तौ हारीतः। षड्वर्षाणि राजन्ये त्रीणि वैश्ये एकं शूद्रे क्षत्रियवत् ब्राह्मणीषु वैश्यवत् क्षत्रियासु शूद्रवदितरासु तेन ब्राह्मणीवधे षड्वार्षिकं महाव्रतं क्षत्रियावधे त्रैवार्षिकं वैश्यावधे शूद्रावधे च वार्षिकम्। न च ब्राह्मणो न च हन्तव्य इति अत्र निमित्तविशेषणस्य लिङ्गस्याविवक्षितत्वात् ब्राह्मणीवधोऽपि महापातकमेव न च

स्त्रीशूद्रविट्क्षत्रबधो नास्तिक्यञ्चोपपातकम्।

इति मनुवचने क्षत्रियविट्शूद्रग्रहणेन तदीयस्त्रीप्राप्तौ स्त्रीशब्दोपादानं ब्राह्मणीपरिग्रहार्थमिति वाच्यं पुंवधात् स्त्रीवधनिन्दातिशयार्थं पुनरुपादानं भविष्यति अत्रैव सामान्यस्तेयप्राप्ते ध्यानादिस्तेयवत् उच्यते ब्राह्मणीवधस्य महापातकत्वे आत्रेयीब्राह्मणीवधे ब्रह्मवधप्रायश्चित्तातिदेशानुपपत्तेः। यथा यमः,

---

अथ स्त्रीवधेति हारीतः। इति षड्वर्षादिकं गुणवत्क्षत्रियादिवधविषयं प्रागुक्तशातातपवचनसमानार्थं इतरासु वैश्यासु शूद्रासु चेत्यर्थः। इतरपदोपादानात् वैश्याशूद्रयोस्तुल्यत्वं वार्षिकमतश्च षड्वर्षादिकं ज्ञानतः सामान्यब्राह्मण्यादिवधे वक्ष्यमाणवशिष्ठोक्ताष्टवर्षादिस्तु गुणवद्ब्राह्मण्यादिवधविषयम्। निमित्तविशेषणस्येति अन्यथा निमित्तसङ्कोचापत्तेरिति भावः। पुंवधादिति क्षत्रियाद्युपादानेनैव तदीयस्त्रीणामप्युपपातकत्वप्राप्तौ यत् पुनरुपादानं तत्तेषां स्त्रीवधे लोके निन्दातिशयार्थं न तु ब्राह्मणीपरिग्रहार्थं यथा तत्रैवोपपातकमध्येऽनाहिताग्नितास्तेयसामान्यस्योपपातकत्वप्राप्तौ धान्यकुप्यपशुस्तेयानिति विशेषाभिधानं लोके निन्दातिशयार्थं तद्वदित्यर्थः। प्रायश्चित्तातिदेशानुपपत्तेरिति निमित्तैक्यात् पुंवत् ब्राह्मणीवधेऽपि तत् प्रायश्चित्तस्य स्वतः सिद्धत्वे। तत्र तत्प्रायश्चित्तातिदेशवैयर्थ्यात् आत्रेयीति विशेषणवैयर्थ्याच्चेति न च क्षत्रियवैश्ययो-

हत्वा सवनगं वैश्यं राजन्यं वापि दीक्षितम्।
हत्वा तु ब्रह्महत्यैव तथात्रेयीं च ब्राह्मणीम् ॥ १ ॥

किञ्च हत्वा गर्भमविज्ञातमित्यत्र मनुवचनेऽविज्ञातग्रहण-मनर्थकं स्यात् स्त्रीवधेऽपि तद्वधस्य महापातकत्वात् कथं प्रायश्चित्तातिदेशः द्विधैव महापातकत्वात्। अपि च उक्त-हारीतवचने क्षत्रियादिवधप्रायश्चित्तोपदेशो नोपपद्यते। तथा वशिष्ठः। अनात्रेयीं राजन्यहिंसायां राजन्यां वैश्य-हिंसायां वैश्यां शूद्रहिंसायां शूद्रां हत्वा संवत्सरम्। अना-त्रेयीं ब्राह्मणीं हत्वा राजन्यहिंसायां यद्व्रतमुक्तमित्यर्थः। एवमन्यत्रापि योज्यम् अत्र च वशिष्ठोक्तमेवाष्टवार्षिकादिकं ग्राह्यं तदुक्तत्वात् एतच्चोत्तमश्रोत्रियादीनां गुणवत्सवर्णधर्म-चारिण्याः पत्न्याः कामतो वधे। आहिताग्निपत्न्यां ब्राह्मण्यां तथात्रेय्याञ्च ब्राह्मण्यां संपूर्णमेव ब्रह्महत्याप्रायश्चित्त-माह अङ्गिराः,

रात्रेयीं ब्राह्मणीञ्च हत्वेति यमवचनाथा भावष्यतोात वाच्यं तथा सति ब्राह्मण्या अतिदेशवैयर्थ्यात् ॥ १ ॥

पक्षान्तरमाह किञ्चेति आनर्थक्येति हेतुमाह स्त्रीवधेऽपीति तद्वधस्य गर्भवधस्य द्विधैव स्त्रीगर्भत्वेन पुंगर्भत्वेन चेत्यर्थः। दोषान्तरमाह अपि चेति क्षत्रियवधस्योप-पातकत्वात् तत्प्रायश्चित्तातिदेशो गुरुणि महापातके नोपपद्यत इति भावः। अन्यत्रापि वैश्यहिंसायामित्यादावित्यर्थः। अत्र चेति एवं राजन्यं हत्वाऽष्ट-वर्षाणि चरेत् षड् वैश्यं त्रीणि शूद्रमिति प्रागुक्तवशिष्ठवचनोक्तमेवाष्टवर्षादिकमत्र-वचने ब्राह्मण्यादिवधे ग्राह्यं अनेनैव वशिष्ठेनाष्टवर्षादिकस्य स्वयमुक्तत्वात् एतच्चेति सामान्यब्राह्मण्यादिवधे षड्वर्षादीनां हारीतेनोक्तत्वादिति भावः अनिन्दिताम् अव्यभिचारिणीं व्यभिचरितायाः प्रायश्चित्ताल्पत्वात् गर्भिणी चेति चकारात् सकल-

आहिताग्निर्द्विजाग्रस्य हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैव च ॥

आत्रेयी चात्रिगोत्रा ऋतुस्नाता गर्भिणी चोच्यते इति प्रागेवोक्तम् । यत्र यद्वर्णात्रेयी तत्र तद्वर्णवधोक्तं प्रायश्चित्तं कार्य्यमित्याह । याज्ञवल्क्यः,

यागस्थक्षत्रविड्घाते चरेद् ब्रह्महणो व्रतम् ।
गर्भहा च यथावर्णं तथात्रेयीनिसूदनः ॥ २ ॥

एतेन ब्राह्मणीवधे षाड्वार्षिकं व्रतं तदशक्तौ धेनूनां नवतिर्देयाः क्षत्रियावधे तु त्रैवार्षिकम् अशक्तौ पञ्चचत्वारिंशद्धेनवो देयाः । वैश्यशूद्रावधे वार्षिकम् अशक्तौ पञ्चदशधेनवः तन्मूल्यं वा एतच्च कामतोऽकामतस्तदर्द्धम् एतच्चोत्तमवर्णेन समवर्णेन च करणीयम् । अधमेन तु उत्तमवर्णाया द्विगुणादिकं कार्य्यम् । स्त्रीबालवृद्धानामर्द्धम् । कामतो गुणहीनब्राह्मणपत्नीमात्रवधे शूद्रे संवत्सरं वृषभैकादशा गाश्च दद्यादित्यभिधायाह गोतमः । अनात्रेय्याञ्चैवमिति ॥ ३ ॥

---

संस्कार संस्कृताया ग्रहणम् । तेन चतुर्विधात्रेयीति प्रागुक्तं याज्ञवल्क्य इति आत्रेयीनिसूदकस्तथा यथा वर्णं कुर्य्यादित्यर्थः । तेनात्रेयीक्षत्रियावधे सगुणक्षत्रियावधोक्तं षड्वार्षिकम् आत्रेयीवैश्यावधे सगुणवैश्योक्तं त्रैवार्षिकम् आत्रेयीशूद्रावधे सच्छूद्रवधोक्तवार्षिकमित्यर्थः सामान्यब्राह्मण्यादिवधे व्यवस्थामुपहरति एतेनेति ॥ २ ॥

एतच्चेति क्षत्रियवैश्ययोर्निकृष्टवर्णावधे च ब्राह्मणतुल्यैव व्यवस्था सामान्यतो विधानात् विशेषाश्रवणाच्चेत्यर्थः । द्विगुणमिति द्विगुणादिकमित्यर्थः । तेन ब्राह्मणस्य ब्राह्मणीवधे यत् प्रायश्चित्तं तत् क्षत्रियस्य द्विगुणं वैश्यस्य त्रिगुणं शूद्रस्य चतुर्गुणं ब्राह्मणस्य क्षत्रियावधे यत् तत् वैश्यस्य द्विगुणं ब्राह्मणस्य वैश्यावधे यत् तत् शूद्रस्य द्विगुणमित्यर्थः शूद्रे संवत्सरमिति एतच्चात्यन्तापकृष्टशूद्रवधविषयं शङ्खलिखितसमानार्थं गोतम इति अनात्रेय्यां ब्राह्मण्यामेवं संवत्सरव्रतं वृषभैकादशगवीदानमित्यर्थः ॥ ३ ॥

अत्र गोदानमुत्कृष्टधेनुरूपं वेदितव्यं वृषभदानञ्च गोदानाधिकफलमित्यन्यत्र दर्शितम्। एतद्विषय एव अकामत आह शातातपः। स्त्रीघाती कृच्छ्रं षण्मासम्। यानि चान्यानि एतद्विषये मुन्यन्तरोक्तानि गुरुलघुप्रायश्चित्तानि सगुणनिर्गुणयोः पत्यनुकूलसुशीलधर्मचारिब्राह्मण्यादिविषये सकृदभ्यासे व्यभिचारिदुःशीलब्राह्मण्यादिविषये यथायोग्यं व्यवस्थेयानि ॥ ४ ॥

अथ व्यभिचरितस्त्रीवधप्रायश्चित्तम्।

तत्र याज्ञवल्क्यः,

अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्।

इति प्रकर्षेण दुष्टाप्रदुष्टा या न भवति असावप्रदुष्टा सकृत् सवर्णव्यभिचरितेत्यर्थः। नतु अदुष्टा तत्र बहुतरप्रायश्चित्तस्योक्तत्वात्। यत् पुनर्वृहस्पतिनोक्तं

अदुष्टाञ्च स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्।

---

उत्कृष्टधेनुरूपमिति विषयगौरवादित्यर्थः उत्कृष्टधेनुः पयस्विनीधेनुः अधिकफलमन्यत्र मुन्यन्तर वचने दर्शितं यथादिपुराणे दशधेनुसमोऽनड्वानेकश्चैव धुरन्धर इति शातातप इति षण्मासकृच्छ्रे पञ्चदशधेनवः एतच्च गौतमवचनोक्ताङ्गात् किञ्चिदधिकार्थं वाचनिकमकामविषयं सगुणनिर्गुणयोरिति सगुणब्राह्मणस्य पत्यनुकूलब्राह्मणीवधे गुरुप्रायश्चित्तानि निर्गुणब्राह्मणस्य दुःशीलादिपत्नीवधे लघुप्रायश्चित्तानीत्यर्थः ॥ ४ ॥

अथ व्यभिचरितेति तद्वधमिति अधमस्य जातिमात्रब्राह्मणस्य शुद्धपत्नीवधविषयमित्यर्थः। षाण्मासिकमिति व्यभिचारदोषेणाधमशूद्रवधोक्तस्यैव युक्तत्वादत एव भूयो व्यभिचरितावधेऽत्यन्ताल्पप्रायश्चित्तं वक्ष्यते क्षत्रियादिस्त्रीणामिति सकृत् सवर्णव्यभिचरितानामिति शेषः अयमाशयः आनुलोम्येन विहितं कृच्छ्रं

इति तदधमब्राह्मणीवधविषयमिति। ततः सकृत् सवर्ण-व्यभिचरितब्राह्मणीवधे शूद्रहत्याव्रतं षाण्मासिकं कार्य्यं क्षत्रियादिस्त्रीणां वधे तु एतदेव पादहानिं कुर्य्यात् एतच्चाकामतः कामतो वार्षिकादिः ॥ ५ ॥

भूयो व्यभिचरितायाः अधमवर्णव्यभिचरितायाश्च वधे मनुः,

जीनकार्मुकवस्तावीन् पृथग्दद्याद्विशुद्धये।
चतुर्णामपि वर्णानां नारीं हत्वाऽनवस्थिताम् ॥

तथा याज्ञवल्क्यः,

दुर्वृत्तब्रह्मक्षत्रविट् शूद्रयोषाः प्रमाप्य तु।
दृतिं धनुर्वस्तमविं क्रमाद्दद्याद्विशुद्धये ॥

अनवस्थिता दुर्वृत्ता दुश्चारिणीवधे छागमविं जीनं सकार्मुकमिति जाबालवचनात्

जीनं चर्मपुटं दृतिरपि कार्मुकं धनुः।

---

पादावरोपितमिति प्रचेतोवचनादानुलोम्येन स्त्रीगमने पादपादहानिर्वक्ष्यते। अत्रापि दृष्टपरिकल्पनया व्यभिचरितस्त्रीणामानुलोम्येन वधे पादपादहानिः इति वार्षिकादीत्यादिपदात् पादपादहानिग्रहणम् ॥ ५ ॥

अधमवर्णेति ज्ञानतः सकृदध[illegible]र्णव्यभिचरितायाश्च वध इत्यर्थः अधमवर्णाश्चात्र शूद्रान्ताः अन्त्यजव्यभिचरि[illegible]वध[illegible] प्रायश्चित्तभावस्य वक्ष्यमाणत्वात् याज्ञवल्क्यवचने दुर्वृत्तेति योष[illegible]णां हत्यादिकं यथाक्रमं विप्रादिवर्णचतुष्टयस्त्रीवधे देयम्। क्षत्रियचर्मपुटकः [illegible] वैश्यवत् सामान्यवैश्यवधोक्तं सार्द्ध-वार्षिकमित्यर्थः। द्विगुणं त्रैवार्ष[illegible]त्यर्थः। एतच्चेति उत्तम उत्कृष्टगुणो यः सवर्णो ब्राह्मणः तेन सकृद[illegible]च[illegible]वधविषयमित्यर्थः प्रागुक्तषाण्मासिक-

वस्तः छागः अविर्मेषः। एतदकामतः कामतस्त्वेतदेव द्विगुणं तथा व्यासः,

अकामतः स्त्रियं हत्वा ब्राह्मणीं वैश्यवच्चरेत्।
कामतो द्विगुणं प्रोक्तं प्रदुष्टायां न किञ्चन ॥

एतच्चोत्तमवर्णव्यभिचरिताविषयं प्रदुष्टायां चण्डालादि-दुष्टायामित्यर्थः। अतः सकृत् सवनव्यभिचरितब्राह्मणीबधे ब्राह्मणस्याकामतः षाण्मासिकं व्रतं तदशक्तौ अष्टौ धेनवः तन्मूल्यं वा। बालवृद्धादीनामर्द्धादिकम्। प्रयोजकादीनां पादपादहानिः ॥ ६ ॥

---

## अथ गर्भवधप्रायश्चित्तम्।

तत्र पुंस्त्वेन ज्ञाते पुरुषवधप्रायश्चित्तं स्त्रीत्वेन ज्ञाते स्त्रीवधप्रायश्चित्तम् अविज्ञाते तु पुंवधप्रायश्चित्तमाह मनुः,

हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्।
राजन्यवैश्यौ चेज्यानावात्रेयीमेव च स्त्रियम् ॥

---

एतत्तु सामान्यसवर्णव्यभिचरिताविषयम्। अस्मिन्नेव विषये क्षत्रियादिस्त्रीणां बधे एतदेव पादपादहान्या द्रष्टव्यम्। एवमुत्तमवर्णव्यभिचरितानामपीति ध्येयम्। चाण्डालादीत्यादिशब्दात् अन्त्यजादीनां ग्रहणम्। एवं प्रतिलोम-वर्णव्यभिचरिताबधे न किञ्चनेति ध्येयम्। प्रकृतमुपसंहरति अत इति कामतस्तु द्विगुणमित्यर्थः। बालवृद्धादीत्यादिपदात् क्षत्रियादीनां ग्रहणम्। अर्द्धादीत्यादिशब्दात् द्वैगुण्यादिकमित्यर्थः। तेन बालवृद्धस्त्रीणामर्द्धं क्षत्रियादीनां द्वैगुण्यादिकमित्यर्थः ॥ ६ ॥

अथ गर्भवधेति। तत्रेति गर्भपातानन्तरमेव पुंस्त्वेन स्त्रीत्वेन वा विशेष ज्ञाने न तु जननकाले गर्भस्थत्वात् ततश्च ज्ञानकृतमेव तत्र प्रायश्चित्तं यत्र गर्भपाते

एतदेवेति ब्रह्महत्याव्रतमित्यर्थः ब्राह्मणगर्भविषयमिदं तस्यैव प्रकृतत्वात्। क्षत्रियादिगर्भवधे तु यद्वर्णगर्भस्तद्वधप्रायश्चित्तं कार्य्यम्। यथा याज्ञवल्क्यः,

> यागस्थक्षत्रविड्घाते चरेद् ब्रह्महणो व्रतम्।
> गर्भहा च यथा वर्णं तथात्रेयीनिसूदकः॥

व्रतपदोपादानात् ज्ञानत इदम् अज्ञानतस्तदर्द्धं तेन ज्ञानकृते ब्राह्मणगर्भवधे द्वादशवार्षिकं क्षत्रियगर्भवधे त्रैवार्षिकं वैश्यगर्भवधे सार्द्धवार्षिकं शूद्रगर्भवधे नवममासिकं धेनुसंकलनमप्यूहनीयम्॥ १॥

---

## अथ गजाश्वादिवधप्रायश्चित्तम्।

यद्यपि गजाश्वादिवधः सङ्करीकरणपापमिदं तथापि हिंसासाजात्यादुपपातकप्रकरणे एतत् प्रायश्चित्तं निरूप्यते तत्र सामान्यतः पशुघाते प्राजापत्यमाह हारीतः। वृथा पशुघाते प्राजापत्यं वृथेति ग्रहणात् यागाद्यर्थे प्रायश्चित्ताभावः हिंसायां दानस्य मुख्यप्रायश्चित्तत्वात्। दाने विशेषमाह मनुः,

---

स्त्रीपुंव्यञ्जनविशेषाभिव्यक्तिर्नास्ति तत्राविज्ञातगर्भवधे मनुवचनेन पुंगर्भवधोक्तं द्वादशवार्षिकं व्रतमतिदिश्यते इति भावः। इज्यानौ यजमानावित्यर्थः। स्त्रियं ब्राह्मणीम्। व्रतपदोपादानादिति• यद्वर्णो गर्भस्तद्वधप्रायश्चित्तमिति प्रागुक्तेनान्वयः। अयमाशयः यदि यथावर्णं वर्णानुक्रमेण द्विगुणादिकं ब्रह्महत्याव्रतमित्यर्थः स्यात् तदा ब्रह्महा भवेदित्येव ब्रूयात् न तु पृथग्विभक्तिनिर्द्देशेन व्रतपदं तस्माद्व्रतपदोपादानात् यथावर्णवधोक्तं व्रतमित्यर्थः सिद्धः॥ १॥

अथ गजाश्वादीति। सामान्येति यत्र मन्वादिवचने हयादिविशेषपशुवधे प्रायश्चित्तविशेष उक्तस्तदितरत्र शशकादौ प्राजापत्यमित्यर्थः। यागाद्यर्थ इति

वासो दद्यात् हयं हत्वा पञ्चनीलान् वृषान् गजम् ।
अजमेषावनड्वाहं खरं हत्वैकहायनम् ॥

अजमेषखरान् हत्वा एकहायनं वृषं दद्यादित्यर्थः । यत्तु हारीतवचनं,

वाजिरासभवधे कृच्छ्रं चान्द्रायणं चरेदिति ।

तदत्यन्तोत्तमवाजिरासभवधविषयम् । एतज्ज्ञानतोऽज्ञानतस्तदर्द्धम् ।

हयच्छागाविकोष्ट्रेषु गर्दभेषु च मारणात् ।
प्राजापत्यार्द्धमेवेह प्रायश्चित्तं विधीयते ॥

इति प्रमादादित्यनुवृत्तौ लघुविष्णुवचनात् अभ्यासे तु मासैकपयोभक्षणानुवृत्तौ शातातपः । हस्त्यश्वरासभवधे मृगमहिषादिवधेषु च । विशेषमाह काश्यपः । मृगमहिषवराहकुञ्जरगण्डकतरक्षुऋक्षवानरसिंहव्याघ्रपृषतचमररुरुकादीनामन्येषाञ्च वधेऽहोरात्रोपोषितश्चीर्णान्ते घृतं दद्यात् । एतच्चाज्ञानतः सकृद्विषयमिति । धर्मप्रदीपः । घृतपरि-

---

आदिशब्दग्रहणात् श्राद्धदेवताबलिदानग्रहणम् अयम्भावः । मा हिंस्यात् सर्वा भूतानि रागप्राप्तहिंसैव निषिध्यते न तु वैधहिंसा विधिबाधप्रसङ्गात् निषेधविषये च प्रायश्चित्तमिति । मुख्येति हिंसात्मकानां सर्वेषां कीर्त्तितानां मनीषिभिः । प्रायश्चित्तकदम्बानां दानं प्रथममुच्यते इति भविष्यपुराणात् । एतदिति अज्ञानतो लघुविष्णूक्तप्राजापत्यार्द्धादधिकं मनूक्तप्राजापत्यसमैकहायनवृषवासोदानयोः प्रायश्चित्तत्वमर्थात् ज्ञानविषयमिति भावः । अभ्यासे त्विति अभ्यासोऽत्र भूयोऽभ्यासः । मासैकपयोव्रते सपादधेनुत्रयम् एतज्ज्ञानतः । काश्यप इति मृगी

माणञ्च वराहसाहचर्य्यात् घृतकुम्भं वराहे त्विति बधप्रकरण एव मनूक्तं ग्राह्यम् ॥ १ ॥

न चात्र कुम्भशब्दः परिमाणविशेषवाची कोले घृतघटो देय इति याज्ञवल्क्यदर्शनात्। गजबधे पञ्चनीलवृषदानञ्च वृषदानस्य महाफलत्वात् ज्ञानतो राजसम्बन्ध्युत्तमगजविषयम्। तदितरविषयञ्चेदम्। वानरे तु ज्ञानतो वक्ष्यमाणगोदानमात्रस्योपवाससध्रीचीनघृतकुम्भदानेन सह विकल्पः। अस्मिन्नेव विषये संवर्त्तः,

सर्वासामेकजातीनां मृगाणां वनचारिणाम्।
अहोरात्रोषितस्तिष्ठेत् जपन् वै जातवेदसम् ॥

जातवेदसमग्निप्रकाशकमन्त्रम्। ज्ञाने तु संवर्त्तः,

हस्तिनं तुरगं हत्वा महिषोष्ट्रं कपिं तथा।
एतत् सर्वेषु कुर्वीत सप्तरात्रमभोजनम् ॥

अत्र च षडुपवाससंकलितप्राजापत्यात् किञ्चिदाधिक्यात् ॥२॥

---

हरिणः। तरक्षुः क्षुद्रव्याघ्रभेदः। ऋक्षो भल्लुकः। पृषतश्चित्रमृगः। अन्येषां शृगालादीनाम् ॥ १ ॥

न चात्रेति कुम्भस्तु द्रोणविंशतिरिति कात्यायनसङ्केतितकुम्भो नात्रेत्यर्थः। तदितरेति इदं सोपवासघृतकुम्भदानमज्ञानतः सामान्यगजवधविषयं ज्ञाने तु द्विगुणमित्यर्थः। वानरे त्विति वानरं श्येनभासौ च स्पर्शयेत् ब्राह्मणाय गामिति विशेषपक्षिबधप्रकरणे वक्ष्यमाणमनुवचनोक्तगोदानमात्रस्य काश्यपोक्तसोपवासघृतदानेन सह ज्ञानाज्ञानकृतौ व्यवस्थितविकल्प इत्यर्थः। अस्मिन् विषये काश्यपोक्तविषय इत्यर्थः। एकजातीनां वनचारिमृगजातीनामित्यर्थः। ज्ञाने तु स एव संवर्त्त एव इत्यर्थः ॥ २ ॥

सपादधेनुः एतत्सकृत्। तथा विशेषमाह जाबालः।

हस्तिनं तुरगं हत्वा हरिणं गां तथैव च।
महासान्तपनं कुर्य्यात् गोभूकन्यानृतेषु च॥

महासान्तपनं सप्ताहसाध्यमत्र धेनुद्वयम् एतच्चाभ्यासविषयं मनूक्तविषयं वा। वानरादिवधेऽपि कामत आह सुमन्तुः। वानरसिंहमार्जारमण्डूकवधे प्राजापत्यं मार्जारादिष्वभ्यासतः। यथोशनाः। दंष्ट्रिणां वधे प्राजापत्यं दंष्ट्रिणो वराहभल्लुकादयः। हिंसाप्रायश्चित्तेषु दानस्य मुख्यत्वाद्विशेषमाह। मनुः,

क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीम्।
अक्रव्यादान् वत्सतरीमुष्ट्रं हत्वा च कृष्णलम्॥

एतच्चाज्ञानतः सकृद्विषयम्। क्रव्यादा व्याघ्रादयः। कृष्णलं कृष्णलपरिमितस्वर्णमित्यर्थः। कृष्णलदानञ्चेदमत्यन्तापकृष्टोष्ट्रविषयम्॥ २॥

---

## अथ अजाव्यादिवधप्रायश्चित्तम्।

तत्र काश्यपः। अजाविकवधे त्रिरात्रं चीर्णे हिरण्यं दद्यात् वस्त्रं वा। एतदज्ञानतः अत्यन्तधार्मिकब्राह्मण-

---

सपादधेनुरिति एतच्च निर्गुणहन्तृविषयं वक्ष्यमाणप्राजापत्यं सामान्यहन्तृविषयं मनूक्तगोमात्रदानं सगुणविषयमिति व्यवस्था। जाबाल इति गोवधे त्वपालनकृतेऽभ्यासतो धेनुद्वयमित्यर्थः। मनूक्तविषयस्येति यद्यपि मनूक्तपञ्चनीलवृषदानं राजसम्बन्ध्युत्तमगजवधविषयमिति प्रागुक्तं तथाप्यत्र ततोऽल्पप्रायश्चित्तत्वात् उत्तमगजमात्रविषयं मन्तव्यमिति भावः। सुमन्तुरिति कामतः सकृत् वानरसिंहवधे इदं मार्जारमण्डूकवधे तु कामाभ्यासे वक्ष्यमाणवशिष्ठवचनोक्ततुल्यमिति॥ २॥

कर्त्तृके सकृद्वधे वेदितव्यमिति धर्मदीपः। ज्ञानतस्तु च्यवनः। ग्राम्यपशुवधे प्राजापत्यं चरेत् हिरण्यं दक्षिणा मृगवधे प्राजापत्यार्द्धं तिलद्रोणञ्च दद्यात्। एतद्दानं शक्तस्य। हिंसायां दानमेव मुख्यं प्रायश्चित्तमित्युक्तत्वात् अशक्तस्य तु मनुना अजमेषावनड्वाहं खरं हत्वा एकहायनम् इत्येकहायनवृषदानमुक्तम्। तथा दद्यादित्यनुवृत्तौ शङ्खलिखितौ। अजाविकवधे धेनुमिति तदेतयोर्विकल्पः दानाशक्तस्याभ्यासात्यन्ताभ्यासयोस्तु ग्राम्यारण्यानां पशूनां हिंसासंकीर्णकरणमित्युक्त्वा विष्णुः,

संकीर्णकरणं कृत्वा मासमश्नीत यावकम्।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं तु कारयेत्॥

ग्राम्यारण्यपशुविवेके पैठीनसिः। ग्राम्यारण्याश्चतुर्दश: गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः। महिषवानरऋक्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः गोमनुष्यहिंसाया उपपातकत्वात् तदितरपशुहिंसायामेतत् द्रष्टव्यम् अश्वायां गर्दभेन जातोऽश्वतरः॥ १॥

---

अथाजाव्यादीति अत्यन्तधार्मिकेति धार्मिकस्य वधानौचित्यात् हिरण्यदानमधिकं तदितरस्य तु विरावमात्रं प्रागुक्तलघुविष्णुसमानम्। च्यवन इति ग्राम्यपशुरजाव्यादिः। एतदपि धार्मिकविषयं तदितरत्र तु प्राजापत्यमात्रम्। मृगा हरिणादयः। शक्तस्य दानशक्तस्य। एकहायनवृषदानं प्राजापत्यस्थाने धार्मिकेतरविषयम्। अतएव शङ्खलिखिताभ्यां प्राजापत्यानुकल्पिकं धेनुदानमुक्तम् एतयोरेकहायनवृषधेनुदानयोः। विष्णुरित्यभ्यासे मासयावकं तत्र धेनुद्वयम्। अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रौ तत्र धेनुचतुष्टयम्। तत्रेति मनुष्यपशवोऽत्रान्त्यजादयः तत्र च प्रतिलोमजवधोक्तं चान्द्रायणमप्युक्तम् अतस्तदितरविषयमिति भावः॥ १॥

## अथ मार्जारादिवधप्रायश्चित्तम् ।

तत्र याज्ञवल्क्यः,

मार्जारगोधानकुलमण्डूकश्वपतत्त्रिणः ।
हत्वा त्र्यहं पिवेत् क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥

पादिककृच्छ्रस्य चतुरहसाध्यत्वेनोपवासद्वयपर्य्यवसानात्तत्तुल्य-तया त्र्यहक्षीरपानस्याप्युपवासद्वयेन संकलनात् पुराणैकं देयम् अतएव सार्द्धैकदिने क्षीरपानेनैकोपवाससंकलनम् एतत् सकृदज्ञानविषयम् । तथा लघुविष्णुः,

मार्जारसर्पनकुलश्वसृगालमृगेष्वपि ।
प्रमादाद्धनने कार्य्यः कृच्छ्रपादो विशुद्धये ॥

मार्जारादिवधानुवृत्तौ । यमः

पयः पिवेत्त्रिरात्रं तु योजनं वाध्वनो व्रजेत् ।
उपस्पृशेत् स्रवन्त्यां वा सूक्तं वाग्दैवतं जपेत् ॥

अस्यार्थः आहारस्थाने त्र्यहं क्षीरं वा पिवेत् । रोगादिना तत्पाने चासमर्थस्त्रिरात्रमेकं वा योजनमध्वनो गच्छेत् तत्राप्यशक्तौ त्रिरात्रं नद्यां स्नायात् तत्राप्यशक्तस्त्रिरात्रमापो-हिष्ठेत्येतत् सूक्तं जपेत् । एतच्चैकवधे वेदितव्यं प्रायश्चित्त-लाघवात् तथात्र विष्णुरप्याह हत्वा मूषिकमार्जारनकुल-

अथ मार्जारादीति अत एवेति द्व्यहक्षीरपानस्य पादिककृच्छ्रसाम्याभिधानात् सार्द्धैकदिनक्षीरपानेन एकोपवाससङ्कलनं सर्वत्र मन्तव्यमित्यर्थः । त्रिरात्र-मापोहिष्ठामन्त्रजपश्च व्रतसञ्ज्ञः अनुपवीति भोजनप्रकरणेऽनिर्दिष्टे व्रतमिति वक्ष्यमाणवचनात् । भोजयित्वा विप्रानिति शेषः दक्षिणार्थे दक्षिणार्थमित्यर्थः ।

मण्डूकडुण्डुभाजगराणामन्यतममुपोषितः कृषरान् भोजयित्वा लौहदण्डञ्च दक्षिणायै दद्यात्। अत्रैव विषये पराशरः,

हत्वा मूषिकमार्जारसर्पाजगरडुण्डुभान्।
कृषरान् भोजयेद्विप्रान् लौहदण्डञ्च दक्षिणा॥

उपवासस्त्वार्थात् कामतो द्वैगुण्यम्। कामाभ्यासे तु वशिष्ठः मार्जारमण्डूकनकुलसर्पदहरमूषिकं हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किञ्चित् दद्यात्। दहरो मूषिकविशेषः। छुछुन्दुः इत्येके व्यक्तमपरम्।

दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्।
एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये॥

इति मनुवचनादस्य मुख्यत्वाभिधानात् सर्पषण्डयोर्विशेष-माह। स एव

अभ्रीं कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः।
पलालभारकं षण्डं सैसकञ्चैव माषकम्॥

एतज्ज्ञानतः तीक्ष्णप्रान्ता कीलिका अभ्री कार्ष्णायसी लौहमयी। एतत् कृष्णसर्पवधे पैठीनसिः। वराहे घृतकुम्भं दद्यात् कृष्णसर्पे लौहदण्डमिति। षण्डश्च पश्वादिसमभि-व्याहारात्तज्जातीय एव स च स्त्रीव्यञ्जनः पुंव्यञ्जनो वा नपुंसकम्॥ १॥

---

अर्थादिति उक्तविष्णुवचनादित्यर्थः। वशिष्ठ इति सर्पोऽत्र कृष्णसर्पेतरो डुण्डु-भादिः कृष्णसर्पे दानस्य मुख्यत्वात्। दाने विशेषमाह दानेनेति अस्य दानस्य मुख्यत्वादित्यर्थः। कीलिका वृक्षमूलाद्युत्पाटनसमर्थः खनित्रविशेषः। एतच्च प्राजापत्यसमम्। पुंव्यञ्जनो वेति वाशब्दश्चार्थे॥ १॥

स्त्रीलिङ्गस्तु भवेत् षण्ढः संस्कारानर्हकः पुमान्।

इति तल्लक्षणात्। अत्र त्रिरात्रमुपोष्य एतद्द्वयं देयम्। यथा हारीतः त्रिरात्रोपोषितः षण्ढबधे पलालभारकम् सीसकमाषकञ्च ब्राह्मणाय दद्यात्। यत् पुनर्याज्ञवल्क्यवचनम्।

उरगेष्वायसो दण्डः षण्ढके त्रिपुमाषकम्।

इति केवलत्रिपुमाषकमेवाह तत् स्त्रीपुंव्यञ्जनहीनषण्ढबधे। अतएव देवलः,

षण्ढको हीनलिङ्गः स्यात् संस्कारानर्हकश्च सः।

इति अत्र च मार्जारादिबधे शूद्रहत्याव्रतं मनुरतिदिष्टवान् तद्यथा,

मार्जारनकुलौ हत्वा चासं मण्डूकमेव च।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्॥

---

स्त्रीलिङ्गस्त्विति पुमान् पुरुषः। स्त्रीलिङ्गः स्त्रीत्वव्यञ्जनः सन्तानोऽश्मश्रुर्वात षण्डाख्यः संस्कारहीनः स्यादित्यर्थः। एतद्द्वयं पलालभारः सैसकमाषकश्चेत्यर्थः। मार्जारादिवधे मनूक्तशूद्रहत्याव्रतमत्यन्तासम्भवमाशङ्क्य मनुवचनमन्यथा व्याकरोति। अत्रेति उपपातके चेति गोवधव्रतमुक्त्वा उक्तेन। एतदेवेति वचनेनोपपातकगोवधव्रतमतिदिष्टम्। ततश्च त्रैवर्णिकस्य तुल्यं शूद्रस्यार्द्धं प्रायश्चित्तमिति गोवधप्रकरणोक्ता व्यवस्था मार्जारादिवधेऽपि न तु वस्तुतः शूद्रहत्याव्रतातिदेशः। अयम्भावः शूद्रहत्याव्रतेनोपपातकव्रतं लक्ष्यते तच्च मनूक्तं गोवधव्रतमेव तेन गोवधव्रतोक्ता व्यवस्था पुनर्लक्ष्यते इति लक्षितलक्षणा। अथवा शूद्रहत्याव्रतेन उपपातकव्रतं लक्ष्यते तच्च गोवधव्रतमेव व्रतपदेन च तद्व्यवस्था लक्ष्यत' इति अनन्यगत्याऽनेकलक्षणादुष्टपक्षोऽपि स्वीकृतः। इति ग्रन्थकृता प्राचीनमतानुरोधादुक्तम्। वस्तुतस्तु शूद्रवधे मनूक्तं षाण्मासिकं चान्द्रायणतुल्यमत्यन्तचिरकालकृतयुगपदनेकमार्जारादिवधविषयम्। विष्णुयमवचनसमानार्थं मनु-

शूद्रहत्यायाश्च स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यञ्चोपपातकम् इति मनुनैवोपपातकत्वम् उक्तम् उपपातके च गोवधव्रतमुक्त्वा

एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः।

इत्यनेन मनुनैव गोवधव्रतमतिदिष्टम् अत्र त्रैवर्णिकस्य तुल्यं प्रायश्चित्तं शूद्रस्य त्वर्द्धमित्युक्तं गोवधप्रायश्चित्तेऽतोऽत्रापि तथैव व्यवस्थेयमिति॥ २॥

---

अथ पक्षिवधप्रायश्चित्तम्।

तत्र सामान्यतः पक्षिवधे हारीतः। पक्षिवधे नक्तं रूप्यमाषकं वा दद्यात्। रूप्यमाषकमाह। मनुः,

द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः।

इति याज्ञवल्क्येन पतत्त्रिवधे त्र्यहं क्षीरपानमुक्तं तद्गृहपक्षिविषयम्। यत्तु नानामुनिवचनेषु पशुपक्षिवधे शूद्रहत्याव्रतं श्रूयते तत् कामतोऽत्यन्ताभ्यस्तविषयम्। अन्यानि च सामान्यविशेषोक्तानि गुरुलघुप्रायश्चित्तानि ज्ञन्यमान-

---

नातिदिष्टम्। यथा विष्णुः। उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नरा इति। तथा यमः। कोकिलशुककपोतकपिञ्जलटिट्टिभखञ्जरीटानां पुरुषभारवधे शूद्रवध एतच्च सास्थ्यनस्थिवधप्रकरणे वक्ष्यते अतएवोत्तरस्मिन् प्रकरणे पशुपक्षिवधे शूद्रहत्याव्रतं कामतोऽत्यन्ताभ्यासविषयमिति स्वयमेव वक्ष्यते॥ २॥

अथ पक्षिवधेति। हारीतवचनमज्ञानविषयं ज्ञाने तु द्विगुणम्। एतच्च सामान्यपक्षिवधविषयं वक्ष्यमाणप्रकरणे तु संवर्त्तादिवचने टिट्टिभादिपक्षिषु अज्ञानत एकाहोपवासस्य वक्ष्यमाणत्वात् गृहपक्षिणश्चटकपारावताद्याः। यस्त्विति। यथा मनुः। मार्जारनकुलं हत्वा चासं मण्डूकमेव च। श्वगोधोलूककाकांश्च शूद्रहत्याव्रतञ्चरेत्। अत्यन्ताभ्यासेति वक्ष्यमाणयमवचनोक्तपुरुष-

विशेषसकृदभ्यासकामाकामापेक्षया योज्यानि । अङ्गिरसा च ग्राम्यारण्यान् पशून् पक्षिणश्चाधिकृत्य गुरुगोवधव्रतमतिदिष्टं गोवधे तु ब्राह्मणक्षत्रियविशां तुल्यं प्रायश्चित्तं शूद्रस्य त्वर्द्ध-मित्युक्तम् अतः सैव तस्य व्यवस्थात्रापि । तद्यथा,

> गजे वाजिनि सिंहे वा खड्गे शशमृगैड़के ।
> व्याघ्रे शुनि वराहे च मयूरे तित्तिरे तथा ॥
>
> काके भासे च गृध्रे च टिट्टिभे खञ्जरीटके ।
> यथा गवि तथा हत्यां भगवान् मनुरब्रवीत् ॥

भासो वनकुक्कुटः ॥ १ ॥

---

## अथ विशेषपक्षिवधप्रायश्चित्तम् ।

तत्र संवर्त्तः,

> टिट्टिभान् जालपादांश्च मद्गुं कुक्कुटमेव च ।
> एतान् हत्वा द्विजः कुर्य्याद्दिनमेकमभोजनम् ॥

जाबालः,

> हंसं हत्वा बलाकांश्च शुकं टिट्टिभसारकम् ।
> तित्तिरिं श्येनगोमायू क्रौञ्चमाटीमहः स्मृतम् ॥

---

भारप्रमाणबधविषयमित्यर्थः । एतेन प्रागुक्तानेकलक्षणादुष्टपक्षः प्राचीनमतानु-सारेण लिखितोऽधुना स्वयमेव परिहृत इति भावः । अङ्गिरसा चेति काम-तोऽत्यन्ताभ्यासविषये गोबधव्रतमतिदिष्टमङ्गिरसा ततश्चात्रातिदेशाच्चैवर्णिकानां तुल्यं शूद्रस्य त्वर्द्धं प्रायश्चित्तमित्यपि गोबधधर्मः सिद्ध इत्यर्थः । यथा ब्रवीति यथा हत्यां कृत्वा प्रायश्चित्तं कुर्य्यादिति शेषः ॥ १ ॥

अथ विशेषपक्षिबधेति । आटीसरारिः शरारिराटिराड़िशेत्यमरः । क्रौञ्चो बकविशेषः । संवर्त्त इति ज्ञाने दिनत्रयविधानाज्जाबालाद्युक्तदिनैकमज्ञान-

काश्यपः । काकबलाकाहंससारसकारण्डवचक्रवाककुररगृध्र-श्येनखञ्जरीटटिट्टिभोलूकशुक-शारिकातित्तिरिमयूरकाककालञ्जकमद्गुकलविङ्ककपोतपारावतादीनां वधे प्रायश्चित्तमहोरात्रोषितः सर्ववीजानि च दद्यात् । एतान्यज्ञानविषयाणि । ज्ञाने तु संवर्त्तः

> मत्वा हंसबलाकाञ्च श्वाविक्कुटवर्हिणः ।
> वानरं श्येनभासौ च हत्वा त्र्यहं क्षिपेद्द्विजः ॥

एतत् सकृत्वधे । तथा

> कृमिकीटवयो हत्या मद्यानुगतभोजनम् ।
> फलैधकुसुमस्तेयमधैर्य्यञ्च मलावहम् ॥

इत्यनेन मनुना पक्षिवधस्य मलिनीकरणीयत्वमुक्त्वा मलिनीकरणीये च तप्तः स्यात् यावकस्त्र्यहमित्युक्तम् ॥ १ ॥

एतच्चोक्तेतरपक्षिणां कामतः सकृद्वधे वेदितव्यम् । तत्र चैकपुराणं देयम् । वयांसि पक्षिणः । एतच्च व्रतं दानाशक्तस्य ज्ञेयम् । यथा भविष्यपुराणम्,

> हिंसात्मकानां सर्वेषां कीर्त्तितानां मनीषिभिः ।
> प्रायश्चित्तकदम्बानां दानं प्रथममुच्यते ॥

अशक्तस्य तु विशेषमाह मनुः

> हत्वा हंसं बलाकाञ्च वकं वर्हिणमेव च ।

---

विषयमिति भावः । तथेति मद्यानुगतभोजनं मद्यपानसमये यत्समीपे स्थापितं फलमूलादि तद्भोजनमित्यर्थः ॥ १ ॥

एतच्चेति एतत्त्र्यहतप्तयावकभक्षणं प्रागुक्तहंसादीतरपक्षिणामपि कामतो वधे ज्ञेयमित्यर्थः । अत्रेति यद्यपि मासैकयावके धेनुद्वयानुसारात् त्र्यहयावके पुराणैकं न भवति तथाप्यत्र तत्कयावकाभिधानात् तथेत्यर्थः अशक्तस्य दानाशक्तस्य ।

वानरं श्येनभासौ च स्पर्शयेत् ब्राह्मणाय गाम् ॥

अत्र केचित् । गोर्महत्त्वान्मिलितवधे गोदानमाहुः तदसत् हारीतविष्णुभ्यां विरोधात् । तत्र हारीतः मर्कटश्येनभासजालपादबर्हिणामेकतमवधे ब्राह्मणाय गां दद्यात् । विष्णुः । हंसबलाकामद्गुश्येनभासचक्रवाकशाखामृगाणामन्यतमं हत्वा ब्राह्मणाय गां दद्यात् । तथा मनुः

घृतकुम्भं वराहन्तु तिलद्रोणं तु तित्तिरिम् ।
शुकं द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणम् ॥

तथा शङ्खलिखितौ । क्रौञ्चशुकचक्रवाकमयूरश्येनगृध्रवधे वत्सतरीं दद्यात् । अजावधे धेनुम् । एतानि च ज्ञानविषयाणि ॥ १ ॥

अथ मत्स्यादिजलचरवधप्रायश्चित्तम् ।

तत्र शङ्खः

हत्वा द्विजं तथा सर्पं जलेशय विलेशयौ ।
सप्तरात्रन्तु कुर्वीत व्रतं ब्रह्महणस्तु यत् ॥

एतदज्ञानतः सकृद्वधे । अत्र चाब्दिकवनवासव्रतोक्तपञ्चदशधेनुव्यवस्थया मासेन सपादधेनुमूल्यं पक्षेण पुराणद्वयं सप्ताहेन पुराणमेकम् । काश्यपः मण्डूकमकरमत्स्यशिशुमारादीनां वधेष्वेकरात्रं चीर्णान्ते लवणं दद्यात् । लवण-

स्पर्शयेत् दद्यादित्यर्थः । गोदानेऽपि पुराणैकं प्रागुक्तसमम् । गोर्महत्त्वात् गोर्मूल्याधिक्यादित्यर्थः ॥ १ ॥

अथ मत्स्यादीति । शङ्ख इति द्विजः पक्षी सर्पो डुण्डुभादिः । जलेशयो मत्स्य शिशुमारादिः विलेशयो मण्डूकादिः । चजलेशयवधे ज्ञानतः सप्ताह-

परिमाणञ्च घातकशक्त्यपेक्षम्। एतत् कामतः सकृत्। अभ्यासात्यन्ताभ्यासयोस्तु मलावहप्रायश्चित्ते दर्शयिष्यते॥ २॥

---

अथ साऽस्थ्यनस्थिबधप्रायश्चित्तम्।

मनुविष्णू

अस्थिमतां तु सत्वानां सहस्रस्य प्रमापणे।
पूर्णे चानस्थ्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्॥

अस्थिमतां कृकलासादीनां सहस्रमारणे अनस्थ्नां पिपीलिकादीनां शकटमितानां बधे मनूक्तशूद्रहत्याव्रतं षाण्मासिकमज्ञाने। ज्ञाने त्वाब्दिकं कार्य्यम्। साऽस्थ्यनस्थिप्रमापणे यमः,

अत ऊर्द्धं कृमिकीटपिपीलिकापतङ्गभ्रमरदंशमशकमक्षिकादीनामनोऽस्थिमतां सहस्रं हत्वा शूद्रबधः कोकिलशुकशूद्रबधः। अत्र च साऽस्थ्यनस्थिबधे मनुसमानतैव कोकिलादीनां पुरुषभारपरिमाणबधे शूद्रबधः स्यादिति विशेषः। तथा मनुः,

किञ्चिदेव तु विप्राय दद्यादस्थिमतां बधे।
अनस्थ्नाञ्चैव हिंसायां प्राणायामेन शुद्ध्यति॥

---

अतं सर्पविशेषबधे त्वज्ञानतस्तथैव प्रागुक्तत्वात् दर्शयिष्यत इति। अभ्यासे तप्तकृच्छ्रम् अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रमित्यर्थः॥ २॥

अथ साऽस्थ्यनस्थीति। कृकलासादीनां क्षुद्रप्राणिनाम्। यम इति अत ऊर्द्धं क्षुद्रसत्वबधप्रायश्चित्तं वक्ष्यत इति शेषः शूद्रहत्याव्रतानुवृत्ताविदं गौतमवचनम् अनडुद्भारे शकटपरिमितबधे इत्यर्थः। सुसन्तुरिति मत्कुणादयः कीटभेदाः। गण्डूपदः किञ्चुलुकः। मनुरिति आद्यपदात् शकुतण्डुलमुद्गादिग्रहणं रसजानां गुडमध्वादिजातानाम् अत्र बहुवचनं बहूनां बधे ज्ञातव्यमिदम्। उपवासे

एतच्च गोतमवचनादेकैकवधे बोध्यम्। तद्‌यथा अस्थिमतां सहस्रं हत्वा अनस्थिमतां अनडुद्धारे च। अपिचास्थिमतामेकैकस्मिन् किञ्चित् दद्यात्। एकैकस्मिन्नपि हते किञ्चिद्दद्यादिति सम्बन्धः चकारादनस्थिमतामपि। किञ्चित्पदं पणपरं यथा सुमन्तुः यूका मशकमक्षिकामत्कुणमृतकीसाह्वाहजलौकोगण्डूपदानामन्यतमेषाम् अनस्थिमताञ्च वधे पणो देय इति। अन्नादिजातप्राणिवधे विशेषमाह। मनुः,

अन्नाद्यजानां सत्वानां रसजानाञ्च सर्वशः।
फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनम्॥

अन्नाद्याः शक्तादयः रसा गुड़ादयः फलानि वदर्य्यादीनि पुष्पाणि मधूकादीनि एभ्यो जातानां प्राणिनामज्ञानतो वधे घृतप्राशनपूर्वकमुपवसेदित्यर्थः। अस्य च प्रायश्चित्तरूपत्वाच्छवानुगमननिमित्त इव शरीरशुद्धिहेतुरूपत्वाभावादन्नान्तरनिवृत्तिरवसीयते। एतेन चानस्थ्नाञ्चैव हिंसायां प्राणा-

---

हेतुमाह अस्य चेति कायक्लेशेन धनव्ययेन वा पापनिष्कृतेरुक्तत्वादित्यर्थः। ननु अशुचिस्पर्शे स्नानं शवानुगमने च स्नानं घृतप्राशनञ्च कथं प्रायश्चित्तमित्याह शवानुगमनेति प्रायश्चित्तं हि द्विविधं भवति शरीरशुद्धिहेतुकं पापनिवृत्तिहेतुकञ्च तत्र हिंसायां पापस्यैव ज्ञातत्वात् पापनिवृत्तिहेतुकमेवात्र घृतप्राशनम् अतोऽस्य घृतप्राशनप्रायश्चित्तस्य शवानुगमननिमित्तशरीरशुद्धिहेतुकं यद्‌घृतप्राशनं तद्रूपत्वाभावात् कायक्लेशहेतुत्वेन घृतप्राशनमेव कर्त्तव्यमिति अन्नान्तरनिवृत्तिरवसीयते अन्यथाऽस्य प्रायश्चित्ततैव न स्यादित्यर्थः। मनूक्तविरोधं परिहरति एतेनेति। एतदितरवधेऽन्नादिजातेतरानस्थिवध इत्यर्थः। विरोधान्तरं परिहरति ये पुनरिति कृमिकीटवयोहत्या इत्यादिना मलिनीकरणमुक्ता मनुना यत्तप्तकृच्छ्रयावकभक्षणं तत् ज्ञानतो मन्तव्यम्। यच्च विष्णुना कृमिकीटवयोवधे तप्तकृच्छ्रं

यामेन शुद्ध्यतीति मनूक्तमेतदितरवधे वेदितव्यम्। ये पुनर्विष्णुमनुभ्यां कृमिकीटादिघातस्य मलावहत्वमभिधाय त्र्यहयावकतप्तकृच्छ्रातिकृच्छ्रा उक्तास्ते च ज्ञानतोऽभ्यासविशेषतश्च बोध्याः। पृथगभिहितसङ्करीकरणादिपापप्रायश्चित्तमध्ये चोत्तरत्रैवावगन्तव्या इति॥ १॥

अथ वृक्षच्छेदनप्रायश्चित्तम्।

तत्र यमः वृक्षलतागुल्मच्छेदने वृद्धकृच्छ्रं फलवतां प्राजापत्यम्। वृद्धकृच्छ्रव्रतं शङ्खलिखितोक्तमष्टदिवससाध्यमत्र पुराणद्वयं प्राजापत्यं तु द्वादशाहसाध्यम्। यत्तु मनुवचनम्।

फलदानाञ्च वृक्षाणां छेदने जप्यमृक्शतम्।
तृणवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम्॥

तत्फलपरिमाणापकर्षविषयम्। अतएव यमवचने फलवतामित्यत्र मतुपातिशय उक्तः ब्रह्महत्याव्रतानुवृत्तौ। शङ्खः,

क्षत्रियस्तु रणे नष्टः प्रौढ़प्राणपरायणः।
संवत्सरं व्रतं कुर्य्यात् छित्वा वृक्षं फलप्रदम्॥

एतदत्यन्तोत्कृष्टफलदवृक्षाणामभ्यासच्छेदने। तथा

नीलं वस्त्रं परीधाय भुक्त्वा स्नानार्हकस्तथा।

---

कृच्छ्रातिकृच्छ्रव्रतञ्चोक्तं तद्भूयोऽभ्यासेऽत्यन्ताभ्यासे च मन्तव्यमित्यर्थः। कुत्र ते उक्ता इत्याह पृथगिति पृथगभिहितस्वतन्त्रोक्तसङ्करीकरणादिपापप्रायश्चित्ते उत्तरत्र ग्रन्थे एते मनुविष्णूक्तास्त्र्यहयावकादयोऽवगन्तव्या इत्यर्थः॥ १॥

अथ वृक्षच्छेदनेति। यत्त्विति ऋक्शतमिति आपोहिष्ठेति ऋचां शतजपः कार्य्यः फलस्य परिमाणापकर्षः संख्यापकर्षौ येषाम् अल्पफलधारिणां वृक्षाणां

त्रिरात्रं तु व्रतं कुर्य्यात् छित्वा गुल्मलतास्तथा ॥
व्रतं ब्रह्महत्याया एव एतत् सकृदपकृष्टविषयम् ॥ १ ॥

स्थानविशेषजातानामुपजीव्यानाञ्च छेदने दण्डद्वैगुण्य-माह याज्ञवल्क्यः,

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम्।
पूर्वस्मृतादर्द्धदण्डाः स्थानेषूक्तेषु कर्त्तने ॥
प्ररोहशाखिनां शाखा स्कन्धसर्वविदारणे।
उपजीव्यद्रुमाणाञ्च विंशतिर्द्विगुणा दमाः ॥

तदत्र दण्डवत् प्रायश्चित्तानि भवन्तीतिवचनात्तद्द्विगुणादिकं यथोक्तमेव करणीयम्। यत् पुनर्विष्णुना द्रुमगुल्मवल्लीलतौ-षधीनां हिंसा इत्यनेन एषां छेदनमुपपातकमध्ये पठितम्। उपपातके च

---

तद्विषयमित्यर्थः। भग्न इति नष्टः पलायितः प्रौढ़ः शूरः वृक्षं छित्वा संवत्सरव्रतं कुर्य्यात्। त्रिरात्रमहाव्रते षट्पणा देयाः ॥ १ ॥

याज्ञवल्क्य इति। प्ररोहशाखिनामितिवचनानन्तरं चैत्यादिवचनद्वयमिति याज्ञवल्क्यक्रमः। द्विगुणा विंशतिर्द्विगुणाः। अर्द्धदण्डाविंशतेरर्द्धदण्डा इत्यर्थः। चैत्यः प्रान्तरदेशस्थः विश्रुते ख्याते छिन्ने इत्यर्थः गुल्माः कुन्दादयः गुच्छाः शरादयः क्षुपाः शाकोटादयः। लता वासन्तिकादयः पुष्पप्रधानाः। फलप्रधानाः प्रतानाः साङ्कोटाः कुष्माण्डादयः। वीरुधः फलप्रधानाः निरङ्कोटा ज्योतिष्मत्या-दयः। ओषधयः फलपाकान्ताः धान्यादयः। प्ररोहशाखिनां वटादीनाम् उपजीव्यद्रुमाणाञ्च शाखास्कन्धसर्वविदारणे विंशतिमारभ्य द्विगुणादिका इत्यर्थः। यानुपजीव्य लोको वर्त्तते ते उपजीव्यद्रुमाः शाखाच्छेदे विंशतिपणाः। स्कन्धच्छेदे

उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः।

इत्यनेन विष्णुनैव चान्द्रायणं विहितं तदत्यन्तपरिवृतोत्कृष्ट-फलपुष्पोपभोगवृक्षादिच्छेदने ज्ञेयम्। यत्तु विष्णुपुराण-वचनम्।

छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे।
पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति॥

तन्निन्दातिशयाद्विगुणप्रायश्चित्तप्रतिपादनार्थं वीरुत्संस्थेऽमा-वस्यायामित्यर्थः अत्र प्रायश्चित्तविशेषाश्रवणात् ब्रह्महत्या-साम्यात् यमोक्तगायत्रीजपः शतावर्त्तः करणीय इत्येके। कृष्याद्यर्थच्छेदने तु न दोष इत्याह वशिष्ठः फलपुष्पोपगान् पादपान्न हन्यात् कर्षणार्थञ्चोपहन्यात् गार्हस्थाङ्गे च। अस्यार्थः लाङ्गलाद्यर्थं यज्ञपात्राद्यर्थं च वृक्षादिच्छेदने दोषा-भावः। अत्र च द्रुमवत् गुल्मलतौषधीनां हिंसेत्यनेन स्थावर-हिंसायाः विष्णुना उपपातकमध्ये पठितत्वादुपपातके च

---

तद्विगुणः। सर्वच्छेदे तत्त्रिगुण इत्यर्थः। वीरुत्संस्थ अमावस्यायाञ्चन्द्रमा वन-स्पतिमभिविशतीत्यागमः। द्विगुणप्रायश्चित्तेति यस्य छेदने यत् प्रायश्चित्तं विहितं तद्विगुणमित्यर्थः अन्येषां मतं कटाक्षयति। तत्रेति यमेन रहस्यकृतब्रह्म-वधे विशेषेण गायत्रीशतजप उक्तः अत्रापि ब्रह्महत्यासाम्यात् स एव कल्पनीय इत्यर्थः। अत्रायमस्वरसः प्रागुक्तयमवचने लतागुल्मच्छेदने कृच्छ्रं प्राजापत्यञ्चोक्तम् अमावास्यायां तच्छेदने ततोऽप्यधिकमेव प्रायश्चित्तं युज्यते कथं ततोऽत्यन्तन्यून-गायत्रीशतजपकल्पनमिति असम्बन्धोऽयं पक्षः। लाङ्गलाद्यर्थमित्यादिपदात् सकलकर्षणीयसामग्रीग्रहणम्। यज्ञपात्राद्यर्थमित्यादिपदात् गार्हस्थकर्मोचितानां गृहाद्युपकरणस्तम्भादीनां ग्रहणम्। इदानीं प्राचीनमतमनुवदति अत्र चेति अत्रापि वृक्षच्छेदन इत्यर्थः। अयमत्रास्वरसः त्रैवर्णिकस्य तुल्यं शूद्रस्यार्द्धमिति

त्रैवर्णिकस्य तुल्यमेव प्रायश्चित्तं शूद्रस्यार्द्धमुक्तम् अतोऽत्र च तथैवेति ॥ २ ॥

---

अथ मण्डपोद्यानादिदेवागारभेदनप्रायश्चित्तम्।

तत्र काश्यपः वापीकूपारामसेतुसभातड़ागयज्ञवप्रदेवतायतनभेदने प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य चतस्र आज्याहुतीर्जुहुयात्। इदं विष्णुरिति प्रथमां मानस्तोक इति द्वितीयां विष्णोः कर्माणीति तृतीयां पादोऽस्याब्ध्यामिति चतुर्थीं यां देवतामुच्छादयति तस्यै देवतायै ब्राह्मणान् भोजयेत्। अत्र वाप्यादिषु सकृदल्पोपघाते। अभ्यासे महोपघाते च प्राजापत्यादिकमूह्यम्। देवतायास्तु स्वल्पन्द्रव्यपूजितोज्झितदेवताप्रतिमाभेदने इतरदेवताभेदने तु यद्यपि नोक्तं तथापि दण्डदर्शनेन कल्पनीयम्। तत्र विष्णुः अभक्ष्यस्याविक्रेयस्य विक्रयी प्रतिमादेर्भेदकश्चोत्तमसाहसं दण्डनीयः। उत्तमसाहसश्च विष्णूक्तः एव यथा

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः॥

---

व्यवस्था गोवध एव प्रागुक्ता न तु यावदुपपातकेऽन्यथा स्त्रीचत्रियादिवधे सेय पारदार्य्यादिकेऽप्येषा व्यवस्था स्यात् प्रत्युत तत्र शूद्रस्य द्वैगुण्यादिकमुक्तम् ॥ २ ॥

अथ मण्डपेति। काश्यप इति सभा सभामण्डपः। वप्रः चैत्रादीनामुच्चसीमाप्रदेशः। देवताभेदने अयनभेदने च प्रायश्चित्तं कुर्य्यादिति शेषः तदाह ब्राह्मणेभ्य इति पापमिति शेषः। इदञ्च वाप्यादिभेदे देवताभेदने त्वाह यां देवतामिति तस्यै देवतायै जुहुयादिति शेषः। अन्ते ब्राह्मणभोजनं सर्वत्र वाप्याद्युपघाते व्यवस्थासक्ता प्रतिमाभेदव्यवस्थामाह देवतायास्त्विति एवंभूतदेवताभेदने

अत्र भग्नोद्धारमपि कुर्य्यात् इत्यत्र शङ्खलिखितौ। प्रतिमाराम कूपसंक्रमध्वजसेतुनिपातनभङ्गेषु तत्तत्समुत्थानं प्रतिमासंस्कारोऽष्टशतञ्च। निपातितानां समुत्थानं भग्नानाञ्च प्रतिक्रिया। अष्टशतपरिमाणं दण्डश्चोभयत्रापीत्यर्थः। मनुः,

संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः।
प्रतिकुर्य्याच्च तत्सर्वं पञ्च दद्यात् शतानि च॥

तथा कात्यायनः,

हरेच्छिन्द्याद्दहेद्वापि देवानां प्रतिमां यदि।
तद्गृहं चैव यो भिन्द्यात् प्राप्नुयात् पूर्वसाहसम्॥

अतो दण्डवत् प्रायश्चित्तानि भवन्तीत्यभिधानात् उत्कृष्टापकृष्टप्रतिमाभेदनानुरूपदण्डव्यवस्थया प्रायश्चित्तमूहनीयम्॥ १

---

## अथाभिचारप्रायश्चित्तम्।

अभिचारः परहिंसार्थं होमजपादिकर्म। तत्र मनुः,

व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्विशुध्यति॥

---

उक्तप्रायश्चित्तमिति शेषः। इतरे नोक्तं विशेष प्रायश्चित्तमिति शेषः/ शङ्खलिखिताविति प्रतिमाध्वजयोर्निपातने भङ्गे च अन्येषां भङ्गमात्रे। उभयत्रेति भङ्गे निपातने चेत्यर्थः। उत्कृष्टेति उत्कृष्टप्रतिमाया अत्यन्तभेदनिपातयोरतिशयत्वे उत्तमसाहसो दण्डः अल्पत्वेऽष्टशतदण्डः अपकृष्टप्रतिमाया भेदनिपातयोरतिशयत्वे पञ्चशतम् अल्पत्वे सार्द्धशतद्वयमित्यर्थः॥ १॥

अथाभिचारेति। एतच्चानपकारिविषयम् अपकारिणि तु दोषाभाव एव मनुना विहितत्वात् यथा न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्मवित्। स्ववीर्य्ये-

हीनोऽधार्मिकोऽहीनो धार्मिकः तद्विषयमित्यर्थः। त्रिभिः कृच्छ्रैः प्राजापत्यसान्तपनातिकृच्छ्रैरित्यर्थः। अत्र व्रात्यं याजयतः प्राजापत्यं तथा मूल्येन परस्यान्त्येष्टिं दहनवहनादिकं कुर्वतः सान्तपनम्। तथाभिचारतोऽतिकृच्छ्रम् इति यथासंख्यं सम्बन्धः। एतत् सकृदाचरणे अभ्यासे त्वावृत्तिः अतिकृच्छ्रे धेनुत्रितयमिति हिंसाप्रायश्चित्तम् ॥ १ ॥

---

## अथ अभक्ष्यभक्षणप्रायश्चित्तम्।

तत्र षड्विधमभक्ष्यमुक्तं भविष्यपुराणे,

> जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम्।
> संसर्गाश्रयदुष्टञ्च सहृल्लेखं स्वभावतः॥
> लशुनं गृञ्जनञ्चैव पलाण्डुं करकाणि च।
> वार्त्ताकीं नालिकाऽलावू उपेयाज्जातिदूषितम्॥
> न भक्षयेत् क्रियादुष्टं यद्दुष्टं पतितैः पृथक्।

---

णैव तान् शिष्यान् मानवानपकारिणः। श्रुतीरथर्वाङ्गिरसीः कुर्य्यादित्यविचारयन्। वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः। त्रिभिः कृच्छ्रैरिति विषयवैषम्यात् प्रायश्चित्तवैषम्यमुक्तं कुल्लूकभट्टेन तु सर्वत्रैव तुल्यमेव प्राजापत्यत्रयमुक्तम् ॥ १ ॥

इति श्रीगोविन्दानन्दकृतायां प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्याम् उपपातकवधप्रायश्चित्तम्।

---

अथाभक्ष्यनिरूपणमिति। प्रायश्चित्तार्थमिति शेषः कालमाश्रित्य संसर्गञ्चाश्रित्य यद्दुष्टत्वमित्यर्थः। गृञ्जनं पलाण्डुभेदः पश्चिमदेशप्रसिद्धः। करकं छत्राकम्

कालदुष्टं तु विज्ञेयं ह्यस्तनं चिरसंस्थितम् ॥
सुरालशुनसंस्पृष्टं पेयूषादिसमन्वितम् ॥
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत्।
शूद्रोच्छिष्टन्तु विज्ञेयं पूर्वं शूद्रे प्रदर्शितम् ॥
विचिकित्सा तु हृदये यस्मिन्नेव प्रजायते।
शकृल्लेखं तु विज्ञेयं पुरीषं तु स्वभावतः ॥
रसदुष्टं विकाराद्धि रसस्येति प्रदर्शितम्।
पायसक्षीरपूपादि तस्मिन्नेव दिने यथा ॥

उपेयाज्जानीयात्। वार्त्ताकी श्वेतवार्त्ताकी। कुविन्दां श्वेतवार्त्ताकीं कुष्माण्डञ्च न भक्षयेत् इति देवलवचनात्। नालिका श्वेतकलम्बी ह्यस्तनं गतदिवसीयम्। शूद्रप्रदर्शितं स्थालीस्थमपि। कुविन्दां घोण्टाकाम्। कुष्माण्डश्चेल्लाक इति प्रसिद्धम्।

तस्मिन्नेव दिने इति कालदूषिताद्भेदप्रदर्शनार्थम्। अङ्गिराः,

द्विविधं गर्हितं प्रोक्तं नित्यमन्नं मनीषिभिः।
जातितो गर्हितञ्चैव तथैवाश्रयगर्हितम् ॥

---

अलावूं वर्त्तुलाकाराम्। अलावूं वर्त्तुलाकारां श्वेतवार्त्ताकुमेव च। न भक्षयेत् करीरञ्च तथैव रक्तमूलकमिति वचनात्। करीरं जातमात्रो वंशकरात इति ख्यातः। पृथग्जातिदुष्टव्यतिरिक्तं पतितस्पर्शनादिना दुष्टं यदित्यर्थः। ह्यस्तनं चिरसंस्थितञ्च कालदुष्टं पर्य्युषितमित्यर्थः। यथा वर्जयेदित्यनुवृत्तौ शङ्खः। केवलानि च शुक्तानि तथा पर्य्युषितानि च। पेयूषमनिर्गतदशाहगवीदुग्धम् आदिपदात् तद्दध्यादीनां ग्रहणं तैः समन्वितं संसृष्टम्। शूद्रोच्छिष्टवदिति यथा शूद्रोच्छिष्टं संसर्गदूषितं तथेदमपीत्यर्थः। शूद्रोच्छिष्टं विवेचयति यद्भक्षणात् पूर्वं शूद्राय दर्शितं तन्न केवलं भोजनपात्रस्थं स्थालीस्थमपीत्यर्थः। शकृल्लेखं शकृत्तुल्यमित्यर्थः। रसस्य विकाराद्धेतोर्यत् समुद्दिष्टं तदपि भावदुष्टमित्यर्थः।

द्वैविध्यमिदं क्रियादोषादीनां पञ्चानामाश्रयदोष एवान्त-र्भावादित्यभिप्रायेण। अपरं यथा गर्हितत्वञ्चान्नादीनां स्मृत्यन्तरेऽनुसन्धेयम्। तच्च गर्हितत्वं संघातान्नगृहपर्य्युषितान्नशूद्रपतितोपनीतशूद्रवेश्मस्थक्षीरादि। परान्नभक्षण-निन्दायां मनुः,

उपासते ये गृहस्थाः परपाकमबुद्धयः।
तेन ते प्रेत्य पशुतां व्रजन्त्यन्नाद्यदायिनाम् ॥ २ ॥

तथा याज्ञवल्क्यः,

परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते।
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ॥

यथा यमः,

दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति।
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्बिषम् ॥

कालविशेषेण दोषभूयस्त्वमाह शातातपः,

वनस्पतिगते सोमे परान्नं येऽपि भुञ्जते।
तेषां मासकृतो होमो दातारमधिगच्छति ॥

वनस्पति गते सोमे इत्यमावस्यायामित्यर्थः। होम इति इष्टापूर्त्तोपलक्षकम्।

---

पूपादीत्यादिशब्दाद्व्यञ्जनादीनां ग्रहणम्। घोरटाकां शृगालकोनिरिति प्रसिद्धम्। नन्वेतत्कालदुष्टमेव किमस्य स्वभावदुष्टमध्यपाठेन इत्यत आह तस्मिन्नेव दिन इति ह्यस्तनाद्यवस्थानेन कालदोष उक्तो रसदोषस्तु सद्योऽपीति भेदः पञ्चानामिति तच्च रसदुष्टस्य पृथक्त्वाभिप्रायेणेति। उपासते नित्यमित्यर्थः। प्रेत्य परजन्मनि आद्यपदात् फलमूलशाकादीनां ग्रहणम् ॥ २ ॥

यथेति अत्यन्तलघुविषयमिति तच्च पुंसवनाद्यन्नस्त्रीच्छिष्टभक्षणादि तथैव वक्ष्यमाणत्वात् अतएव लघुविषयत्वात् कृच्छ्रपादोऽत्र प्राजापत्यपादः न तु कृच्छ्र-

## अथ सामान्याभक्ष्यभक्षणप्रायश्चित्तम्।

तत्र विष्णुः,

अभोज्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
कृच्छ्रपादं विशुद्ध्यर्थं चरेयुः क्षिप्रशोधनम्॥

अभोज्याभक्ष्ययोः पक्वापक्वरूपतया भेदः एतदत्यन्तलघु-विषयम्। कृच्छ्रपादे द्वादशपणा देयाः। संवर्त्तः,

अभोज्यभोजनं कृत्वा ब्रह्मक्षत्रविशां गणः।
गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति॥

सप्तरात्रगोमूत्रयावकाहारेण धेनुपादद्वयं बोद्धव्यम्। एतच्च गुरुविषयम्। बृहस्पतिः,

अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
रेतोमूत्रपुरीषाणां शुद्धैर चान्द्रायणं चरेत्॥

एतत् गुरुतरविषयम्। सामान्यप्रायश्चित्तमिदं विशेषप्राय-श्चित्तानिर्द्देशे बोध्यम्॥ १॥

---

पादव्रतं चतुरहसाध्यमिति भावः। संवर्त्त इति लशुनादिपाकपात्रपक्वान्न-भोजनमित्यर्थः। सप्तरात्रेणेति पञ्चदशधेनुसङ्कलितमासोपवासव्रतात् पञ्चम-भागापकर्षात् मासिकगोमूत्रयावकाहारे द्वादशधेनवो भवन्तीत्युच्छिष्टभक्षणप्राय-श्चित्ते वक्ष्यते तदनुसारेण तच्चतुर्थभागे सप्ताहगोमूत्रयावकाहारे द्वादशधेनुचतुर्थ-भागो धेनुत्रयं भवतीत्युक्तम्। अत्र च सुपक्वस्य गोमूत्रमात्रस्यावशेषो गोमूत्रयावकम् अतएव मासोपवासपञ्चमभागीनोमासयावकाहारः संगच्छते। एवञ्च गोवध-प्रायश्चित्ते गोमूत्रपक्वयावकाहारे मासैके धेनुद्वयं यदुक्तं तदपि संगच्छते। अलेह्यानामिति अलेह्यानां सुराभाण्डस्थगुड़ादीनाम् अपेयानां सुराभाण्डस्थद्रव्या-दीनाम्। अभक्ष्याणां सुराभाण्डस्थपक्वान्नादीनामित्यर्थः॥ १॥

अथ विशेषाभक्ष्यभक्षणप्रायश्चित्तम् ।

तत्र प्रथमं शूद्रान्नभक्षणप्रायश्चित्तं निरूप्यते । तत्र निन्दायां भविष्यपुराणम् ।

शूद्रान्नं शूद्रसम्पर्कः शूद्रेण च सहासनम् ।
शूद्राद्विद्यागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥

तथा हारीतः,

शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति ॥

वशिष्ठः

शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति ।
यस्यान्नं तस्य ते पुत्राः न स स्वर्गार्हको भवेत् ॥

तत्र प्रायश्चित्ते मनुः,

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः ॥

इत्यभिधायाह

भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव च ॥

तेनाज्ञानतः सकृत् शूद्रान्नभोजने त्रिरात्रमभोजनम् । तदशक्तौ चतुर्विंशतिपणलभ्यं काञ्चनादि देयम् । ज्ञानतः सकृदशने प्राजापत्यम् । यत्तु शङ्खवचनम्,

---

अथ विशेषाभक्ष्यभक्षणप्रायश्चित्तमिति । शूद्रसम्पर्कः एकपंक्तिभोजनैकशय्याध्ययनादिः । ज्वलन्तं तपोविद्यादिमन्तमपि पातयेत् अधो नयेदित्यर्थः । तदेव दर्शयति तथेति । राजान्नमिति अत्र राजपदम् उच्चास्त्रवर्त्तिनृपतिपरं चर्माण्येव कर्त्तितुं शीलं यस्य द्विजातेः एवं सुवर्णकारस्यापि । चर्मकारादि-

शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः।
चिकित्सकस्य क्रूरस्य तथा स्त्रीमृगजीविनः॥
चाण्डालान्नं भूमिपान्नमजजीविश्वजीविनाम्।
शौण्डिकान्नं सूतिकान्नं भुक्त्वा मासं व्रती भवेत्॥

व्रती यावकेन। अत्र धेनुद्वयं देयम् एतदभ्यासे।

आमान्नभक्षणे तूक्तप्रायश्चित्ततुरीयभागः। चाण्डालान्नभक्षणे तथा दर्शनात्॥ १॥

यथा विष्णुः। चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराक इति। आपदि पराशरः,

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्॥

आपद्यामान्ने दोषाभावमाह मनुः

नाद्यात् शूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः।
आददीताममेवास्मादवृत्तावेकरात्रकम्॥

---

ज्ञातेस्तु अन्त्यजत्वात्तदन्नभोजनेऽन्त्यजान्नभक्षणप्रायश्चित्ते विशेषो वक्ष्यते। तथा वक्ष्यमाणशङ्खादिवचनेष्वप्येवं मन्तव्यं रेतोविण्मूत्रमेव चेति बलाद्भोजनविषयं वक्ष्यते। स्त्रीजीविनो मृगजीविनश्चेत्यर्थः। चाण्डालान्नमिति एतच्च स्वेच्छया सकृज्ज्ञानादामान्नभक्षणविषयम्॥ १॥

विष्णुरिति द्वादशोपवासात्मकपराकस्य चतुर्थभाग उपवासत्रयं भवतीत्यर्थः। एतच्च बलाद्भोजनविषयमिति वक्ष्यते। द्रुपदामिति द्रुपदादिवेति मन्त्रं गायत्रीमित्यन्ये। अज्ञाने मनस्तापः। ज्ञाने जप इति व्यवस्थितविकल्पः। अश्राद्धिन इति निन्दितं श्राद्धभोजनं यस्य शूद्रस्येत्यर्थः। कुत्सार्थे नञ्। आददीतेति एकरात्रकमित्यनेनासकृत्प्रतिग्रहदोष इत्यर्थः। अनापदि सकृत्प्रतिग्रहेऽपि दोष इत्यर्थः। अश्राद्धिन इति हेतुगर्भविशेषणस्यार्थं विवृणोति श्राद्धभोजना-

अश्राद्धिन इति श्राद्धभोजनानर्हत्वात्। यथा ब्राह्मे

राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवाम्।
वासो भूरत्नहेमान्नं सच्छूद्रस्य गृहे तथा॥

इति अनापद्यपि तन्नादोष इत्यत्र याज्ञवल्क्यः

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्॥

गोपालो यस्यैव गां पालयति तस्यैव भोज्यान्न इति भर्त्तृयज्ञ तथा देवलः,

स्वदासो नापितो गोपः कुम्भकारः कृषीवलः।
ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः॥

तथाऽनापद्यपि भोज्यविशेषमाह सुमन्तुः

गोरसञ्चैव शक्तुञ्च तैलं पिण्याकमेव च।
अपूपान् भोजयेत् शूद्रात् यच्चान्यत् पयसा कृतम्॥

एतानि शूद्रान्नादनिवृत्तेनैव भक्ष्याणि॥ २॥

अतएव हारीतः,

कन्दुपक्वं स्नेहपक्वं पायसं दधिशक्तवः।

---

नर्हत्वादिति यतोऽयमश्राद्धी अतोऽस्य पक्वान्नं न भुञ्जीतेत्यर्थः। तथेति रा पर्वणि उत्सवे वैश्यस्य गोमङ्गलेऽश्नीयात् सच्छूद्रस्य गृहेऽनापद्यपि वस्त्रादिकं प्रति गृह्णीयादिति शेषः। असच्छूद्रस्य तु आपद्येवेति प्रागुक्तम् अत्रान्नपदम् आमा परम्। पक्वान्नन्तु उभयोरपि न कदाचिदित्यर्थः। याज्ञवल्क्य इति आमान्न विषयं वचनमिदं वक्ष्यमाणदेवलवचने गोपदस्य जातिमध्यपाठात् जातिपरत्व मेवेति भर्त्तृयज्ञमतेऽस्वरसः। अपूपानिति पयोविकारकृतानित्यर्थः यच्चान्य पयसा कृतमिति परतोऽभिधानात् पयसा कृतमन्यद्दध्यादीत्यर्थः। शूद्रान्नादि शूद्रान्नं प्रतिगृह्णीवेत्यर्थः॥ २॥

एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

निवृत्तेनापि पात्रान्तरगतं कृत्वा क्षीरादिकं ग्राह्यमित्याह अङ्गिराः,

स्वपात्रे यत्तु विन्यस्तं दुग्धं यच्छति नित्यशः।
पात्रान्तरगतं ग्राह्यं शूद्रात् स्वगृहमागतम् ॥
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम् ॥

तच्च संप्रोक्ष्य ग्राह्यमित्यत्र विष्णुपुराणं,

संप्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम् ॥ ३ ॥

---

### अथ रजकाद्यन्त्यजान्नभक्षणप्रायश्चित्तम्।

तत्र आपस्तम्बः,

रजके चैव शैलूषे वेणुचर्मोपजीविनि।
एतेषां यस्तु भुञ्जीत द्विजश्चान्द्रायणं चरेत् ॥

ज्ञानाभ्यासविषयमेतत्। अत्र कैवर्त्तादयोऽपि ग्राह्याः यथाह बौधायनः,

---

हारीत इति अशूद्रान्नभुजां शूद्रान्ननिवृत्तानां कन्दुपक्वादीन्येव भक्ष्याणि नान्यानि गोरसापूपादीनि इत्यर्थः। पायसं पयोविकारमामीक्षादीति रत्नाकरः। स्वपात्र इति स्वपात्रे शूद्रस्य पात्रे न्यस्तं दुग्धं यदन्यच्च शुचि घृतादिकं शूद्रवेश्मनि गत्वेत्यर्थः ॥ ३ ॥

---

अथ रजकाद्यन्त्यजान्नभक्षणप्रायश्चित्तमिति। रजक इति रजकादौ जाति अपीत्यध्याहारेण योजनीयम्। एकधर्माणामिति कैवर्त्तादयोऽपि अन्त्यजत्वेने-

बहूनामेकधर्म्माणामेकस्यापि यदुच्यते ।
सर्व्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः ॥

रजकादीनभिधायाह यमः,

भुक्त्वा चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च ।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥

कृच्छ्राब्दे त्रिंशद्धेनवः । एतद्रजकादीनामष्टधा भोजनाभ्यासे । अथ क्षत्रियादीनां पादपादहानिः । यथा चाभक्ष्यभक्षणानुवृत्तौ विष्णुः

विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम् ।
वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यते ॥ इति ।

यत्तु संवर्त्तवचनं,

अन्त्यजान्नं यदा भुङ्क्ते शूद्रो मोहात् कथञ्चन ।
एकरात्रोषितो भूत्वा दानं दत्त्वा विशुध्यति ॥

तदापदि सकृद्विषयम् । उच्छिष्टाशने तूशनाः,

अन्त्यानां भुक्तशेषस्तु भक्षितो यैर्द्विजातिभिः ।
चान्द्रं कृच्छ्रं तदर्द्धञ्च क्रमात्तेषां विशोधनम् ॥

कृच्छ्रं तप्तकृच्छ्रमिदं सकृज्ज्ञानविषयम् ॥ ४ ॥

---

कधर्माण इत्यर्थः । रजकादीनामिति रजकश्चर्मकारश्च नटो वरुड़ एव च । कैवर्त्तमेधभिल्लाश्च सप्तैते अन्त्यजाः स्मृता इति वचनमभिधायेत्यर्थः । अष्टधेति एतेन सकृत् ज्ञानात् पादोनधेनुचतुष्टयम् अज्ञानतो धेनुद्वयं भोजनप्रतिग्रहयोः सर्व्वत्रैव तुल्यतेति । तेषामिति ब्राह्मणादिवर्णत्रयाणामित्यर्थः । इदमिति एतद्वचनं ज्ञानविषयं क्षत्रियवैश्ययोरर्द्धार्द्धहानिस्तु वाचनिक्येव ॥ ४ ॥

## अथ कापालिकान्नभक्षणप्रायश्चित्तम्।

तत्र आपस्तम्बः,

कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा।
ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्॥

अत्रापि पूर्ववद्विवक्षा॥ ५॥

---

## अथ चाण्डालाद्यन्नभक्षणप्रायश्चित्तम्।

तत्र अङ्गिराः,

अन्त्यावसायिनामन्नमश्नीयाद् यस्तु कामतः।
स तु चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा॥
चाण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा।
मागधायो गवौ चैव सप्तैतेऽन्त्यावसायिनः॥

कामतः सकृद्भोजने चान्द्रायणं तत्राष्टौ धेनवः। अकामत-स्तप्तकृच्छ्रम् अत्र धेनुचतुष्टयम्। अत्र चान्द्रायणं चतुरभ्यासे द्विरभ्यस्ते तप्तकृच्छ्रमिति धर्मप्रदीपव्याख्यानमसङ्गतं याव-तापस्तम्बेन प्रमादत एव चान्द्रायणस्योक्तत्वात्। कृच्छ्राब्द-

---

अथ कापालिकान्नभक्षणप्रायश्चित्तमिति अत्रापि ज्ञानतोऽष्टधाभ्यासे कृच्छ्राब्दम् अज्ञानतोऽष्टधाभ्यासे चान्द्रायणद्वयमित्यर्थः। एतेन सकृज्ज्ञानतः चान्द्रायणार्द्धं पादोनधेनुचतुष्टयम् अत्यन्तहीनस्य चाण्डालस्य ज्ञानतः सकृत् अन्नभक्षणे चान्द्रायणस्य वक्ष्यमाणत्वात् ततोऽल्पप्रायश्चित्तस्य युज्यमानत्वात्। गमने तु सकृद-ज्ञानतः कृच्छ्राब्दं वक्ष्यते॥ ५॥

अथ चाण्डालाद्यन्नभक्षणप्रायश्चित्तमिति यावतेति प्रमादतः सकृदित्यर्थः

पादानुवृत्तौ वशिष्ठः। एतदेव चाण्डालपतितान्नभोजने ततः पुनरुपनयनम्। एतच्च उपनयनं चान्द्रायणसमम्। ज्ञानाभ्यासे कृच्छ्राब्दपादे सार्द्धसप्तधेनवः। तथापस्तम्बः,

चाण्डालान्नं यदा भुक्तं ब्राह्मणाद्यैः प्रमादतः।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते॥
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत्।
षड्रात्रञ्च त्रिरात्रञ्च वर्णयोरनुपूर्वशः॥

प्रमादतः सकृदित्यर्थः। एतत् क्षत्रियादीनामापद्विषयम्। चान्द्रायणे धेन्वष्टकम्। सान्तपने धेनुद्वयम्। षड्रात्रे धेनुरेका त्रिरात्रे सार्द्धपुराणम्। विष्णुः तथा। चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत्। सिद्धं भुक्त्वा पराक इति बलाद्भोजनविषयमिदम्। पराके पञ्चधेनवः। त्रिरात्रमामान्नविषयम् उत्तरत्र सिद्धान्नग्रहणात्। यत्तु मनुवचनं,

चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति॥ ६॥

---

एतच्च आपस्तम्बवचने व्यक्तं भविष्यति एतदिति। एतत् कृच्छ्राब्दपादव्रतम् चान्द्रायणतुल्यं सोपनयनं ज्ञानाभ्यासे कुर्य्यात् चान्द्रायणतुल्यतां दर्शयति कृच्छ्राब्दपाद इति अत्र सार्द्धसप्तधेनवः पुनरुपनयने धेनुचतुष्टयं मिलित्वा सार्द्धैकादशधेनवः एतच्च क्षत्रियविषयम् अङ्गिरो वचने ब्राह्मणस्य चान्द्रायणमुक्तं क्षत्रियस्य तु पादोनं क्षत्रिये मतमिति वचनात् पादोनचान्द्रायणम् अभ्यासे हि द्विगुणं ततश्च सार्द्धचान्द्रायणात् सार्द्धैकादशधेनवो युक्ता इत्यर्थः। प्रमादत इति प्रागुक्ताङ्गिरोवचनविरोधात् प्रमादपदं नाज्ञानपरं किन्तु सकृदर्थकं तदपि ज्ञानविषयमिति दर्शितम्। तर्हि क्षत्रियादीनां कथं सान्तपनादिकं भवेत् पादोनचान्द्रायणादेरेव युक्तत्वादित्याशङ्क्याह आपद्विषयमिति॥ ६॥

एतच्चाण्डालान्नस्याज्ञानादष्टचत्वारिंशद्वारभोजने द्वादशवार्षिकं विदधाति। ज्ञाने तु तत्तुल्यत्वाच्चतुर्विंशतिवार्षिकव्रतेऽपि कृतेऽव्यवहार्य्येतेत्यर्थः। प्रायश्चित्ताभावपरत्वे च तत्संसर्गिणि प्रायश्चित्तव्यवस्था न स्यात्। ततोऽत्यन्ताभ्यासे तदन्नाशनसकृत्तदीयस्त्रीगमनयोः साम्यं युज्यत इति। चाण्डालाद्युच्छिष्टान्नभोजने त्वङ्गिराः,

चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे।
द्विजः शुद्धेत् पराकेण शूद्रः कृच्छ्रेण शुद्ध्यति ॥

एतदज्ञानतः सकृद्विषयम्। ज्ञानतो द्वैगुण्यादिकम् ॥ ७ ॥

अथ सामान्येनाभोज्यान्नभोजनप्रायश्चित्तम्।

तत्र मनुः,

नाश्रोत्रियहुते यज्ञे ग्रामयाजिहुते तथा।

---

एतदिति सकृदज्ञानतश्चाण्डालान्नभक्षणे चान्द्रायणद्वयमुक्तं तदनुसारात् अष्टचत्वारिंशद्वारे चतुर्विंशतिचान्द्रायणोपसंहारादशीत्युत्तरशतधेनवो भवन्ति, ज्ञानतश्चतुर्विंशतिवारभोजनेऽप्येता एव इत्यर्थः। ज्ञाने त्विति ज्ञाने त्वष्टचत्वारिंशद्वारभोजने तत्तुल्यत्वान्मरणवैकल्पिकचतुर्विंशतिवार्षिकव्रते कृतेऽप्य व्यवहार्य्यता साम्यपदोपादानादिति अनुपातकप्रकरणे विवेचितं मरणे तु सर्वदोषाभाव एवेति अत इति अत्यन्ताभ्यासोऽष्टचत्वारिंशद्वारः। साम्यं युज्यत इति साम्यं तुल्यत्वम् उभयत्रैव अज्ञानपातित्यात् ज्ञाने च जातिसाम्यादिति भावः एतदिति वचनमिदं सगुणविषयमिति संसर्गप्रकरणे उक्तं तदितरत्र तु अज्ञानतश्चाण्डालान्नभक्षणोक्ततप्तकृच्छ्रद्विगुणचान्द्रायणं पतितादीनामन्नभक्षणात्तदुच्छिष्टभक्षणे पापद्वैगुण्यस्य प्रागुक्तत्वात् इति ध्येयम्। एवञ्च बलाद्भोजने यत् पराकव्रतमुक्तं तत्राप्युच्छिष्टभक्षणे पराकद्वयं मन्तव्यमित्यपि ध्येयम्। अत्र चाण्डालीं पुक्कसीं म्लेच्छीं श्वपाकीं पतितां तथेत्युपपातकप्रकरणोक्तसंवर्त्तवचने चाण्डालीम्लेच्छीगमनयोस्तुल्यप्रायश्चित्तदर्शनात् म्लेच्छान्नभक्षणेऽपि चाण्डालान्नभक्षणोक्तमेव प्रायश्चित्तं मन्तव्यम्। म्लेच्छास्तु यवनादयः ॥ ७ ॥

स्त्रिया क्लीवेन च हुते भुञ्जीत ब्राह्मणः क्वचित्॥
अश्लीकमेतत् साधूनां यत्र जुह्वत्यमी हविः।
प्रतीपमेतद्देवानां तस्मात्तं परिवर्जयेत्।
मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन॥
केशकीटावपन्नञ्च पदास्पृष्टञ्च कामतः।
भ्रूणघ्नावेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया॥
पतत्रिणावलीढ़ञ्च शुना संस्पृष्टमेव च।
गवा चान्नमुपाघ्रातं दुष्टान्नञ्च विशेषतः॥
गणान्नं गणिकान्नञ्च विदुषाञ्च जुगुप्सितम्।
स्तेन गायनयोश्चैव तक्ष्णो वार्द्धुषिकस्य च॥
दीक्षितस्य कदर्य्यस्य बद्धस्य निगड़स्य च।
अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च॥
शुक्तं पर्य्युषितञ्चैव शूद्रस्योच्छिष्टमेव च।

---

अथ सामन्येनेति। मनुरिति स्त्रिया प्रवर्त्तितयागे हुतमिति उपलक्षणम् अश्लीकम् अश्लीकमेतद्भोजनं साधूनामित्यर्थः। अत्र यज्ञेऽमी ऋत्विजः सन्तो जुह्वति अत्र भुञ्जीत यत एतद्धुतं देवानां प्रतीपम् अग्राह्यमित्यर्थः। क्रुद्धः सर्वदा क्रोधनः आतुरो रोगी तस्मिन्निति तस्मिन् केशकीटावपन्ने इत्यर्थः। भ्रूणघ्ना वेक्षिते तु पञ्चगव्यपानमात्रव्रतस्य लघुनो वक्ष्यमाणत्वात् इदमभ्यासविषयम् एवमिति गोघ्राते विड़ालकाकाद्युच्छिष्टप्रकरणेऽज्ञानतः सोपवासपञ्चगव्यपानस्य लघुनो वक्ष्यमाणत्वात् अभ्यासविषयमित्यर्थः। उपरि केशकीटादिस्पर्शे तु मृज्जलादिना मनुरेव शुद्धिमाह पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्। दूषितं केशकीटैश्च मृत्प्रक्षेपेण विशुद्ध्यति। सहपाके तु सकृदज्ञाने ब्रह्मसुवर्चलाक्वथित-जलपानम् अभ्यासे तु ज्ञानाज्ञानयोः प्राजापत्यं त्रिरात्रञ्चेदमिति निर्गलितार्थः पदाचरणेन कामतः स्पृष्टमन्नममत्या भुक्त्वा त्रिरात्रं मत्या तु भुक्त्वा कृच्छ्रमित्यभ्यास-विषयम्। गोघ्रातं शकुनोच्छिष्टं पादस्पृष्टञ्च कामतः इत्यभिधाय मत्स्यांस्तु

चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः॥
उग्रान्नं सूतिकान्नञ्च पर्य्याचान्तमनिर्दशम्।
अनर्च्चितं वृथामांसमवीरायाश्च योषितः॥
द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम्।
पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा॥
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च।
कर्म्मारस्य निषादस्य रङ्गावतारकस्य च॥
सुवर्णकर्त्तुर्वैणस्य शस्त्रविक्रयिणस्तथा।
श्ववतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च॥
रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे।
मृष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्व्वशः॥
अनिर्दशञ्च प्रेतान्नमतुष्टिकरमेव च।
भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्॥
मत्या जग्ध्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च।

अश्रोत्रियोऽनधीतवेदस्तेनारब्धयज्ञ इत्यर्थः। ग्रामयाजी अनेकजनानां श्राद्धपूजाकारयिता ऋत्विग्भावेन होमस्वस्त्य-

---

कामतो जग्ध्वा सोपवासस्त्र्यहं वसेदिति याज्ञवल्क्येन सकृत् कामतः त्रिरात्राभिधानात् एतच्चापेयचौरपानप्रकरणे वक्ष्यते।* अकामतः पदास्पर्शे तु प्रोक्षणेन शुद्धिरिति भावः। मनुवचने भ्रूणघ्नावेक्षितमिति मृज्जलादिशुद्धिं विनैव भोजने प्रायश्चित्तं शातातपः आह। यथा क्लीवाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः। दृष्टं वा स्याद् यदन्नन्तु तस्य निष्कृतिरुच्यते इति अभ्युक्ष्य किञ्चिदुद्धृत्य सुवर्णरजतोदकैः। भस्मना वापि संस्पृश्य भुञ्जीताप्यविशङ्कितः। मनूक्तं प्रायश्चित्तमभ्यासविषयं प्रागुक्तमेव उदक्या रजस्वला तत्स्पृष्टान्नस्य सकृद्भक्षणे मनूक्तं प्रायश्चित्तमिदं पतत्री पक्षी तेनावलीढं शुना स्पृष्टं चकाराच्छूनावलीढञ्च अत्र सर्व्वत्रा-

थनकर्त्ता च स होता यत्र यज्ञे तत्रान्नं न भोज्यम्। क्लीवश्च कात्यायनोक्तो यथा,

न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति।
मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते॥

अश्लीकमेतत् साधूनाम् प्रतीपमेतद्देवानामिति निन्दार्थवादौ। केशकीटावपन्नं केशकीटैः सह पक्व इत्यर्थः अस्मिन् भ्रूणघ्नावेक्षिते चाज्ञानाभ्यासे त्र्यहः। ज्ञानाभ्यासे तु कृच्छ्रं ज्ञेयं मनुनैव ज्ञानतः,

केशकीटावपन्नञ्च पिबेद् ब्रह्मसुवर्चलाम्।

इति ब्रह्मसुवर्चलाक्वथितजलपानपूर्वकोपवासस्य लघुन उक्तत्वात् एवं गोघ्रातेऽपि घुष्टान्नं को भोक्तुकाम इति घोषणया यदन्नम्। गणान्नं बहुभिर्मिलित्वा यज्ञोज्यं क्रियते। वार्द्धुषिकश्च यमोक्तः यथा,

समर्थं पण्यमादाय महार्घं यः प्रयच्छति।

---

भ्यासे अतएव काकाद्युच्छिष्टाशनप्रकरणे एषु ज्ञानतः सप्तद्दिनत्रयं वक्ष्यते एतदभक्ष्यपक्षिजग्धविषयं भक्ष्यपक्षिजग्धे तु मृज्जलादिना शुद्धिरिति कुल्लूकभट्टः। यथा मनुः पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्। दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुद्ध्यति। अवधूतं अवज्ञया दत्तमित्यर्थः। अतएव वचनात् गोघ्रातेऽपि मृज्जलादिशुद्धिं विनैवाभ्यासतो भोजने मनूक्तप्रायश्चित्तमिदं गणिका चात्र सवर्णोत्तमवर्णा अपतिता च। विदुषा भक्ष्याभक्ष्यविदा यदन्नं जुगुप्सितं निन्दितं स्तेनोऽत्र महापातक्यनुपातक्युपपातकिव्यतिरिक्तः। गायनस्य तद्वृत्त्या जीवतः तक्ष्णः तक्षकवृत्तिकस्य द्विजातेरित्यर्थः। एवं परतोऽपि मन्तव्यं समर्थमिति यश्च वृद्ध्या धनं प्रयोजयेत् सोऽपि वार्द्धुषिकः इत्यर्थः। मनुवचने अभिशस्तः परीवादग्रस्तः। शुक्तपर्य्युषितयोरिति उभयथा ज्ञानेनाज्ञानेनाप्यभ्यास इत्यर्थः। वक्ष्यमाणेति जाबालशङ्खाभ्यां ज्ञाने त्रिरात्राभिधानात् यथा जाबालः पर्य्युषितं

स वै वार्द्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत्॥

दीक्षितः दीक्षणीययागानन्तरम् आयज्ञसमाप्तेस्तस्यान्नमभोज्यम्। कदर्य्यश्च,

आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीड़यन्।
लोभाद् यः प्रचिनोत्यर्थान् स कदर्य्य इति स्मृतः॥

इति देवलोक्तः। बद्धस्य रज्ज्वादिना। निगड़स्य चेति अर्श आदित्वान्मत्वर्थीयात् प्रत्यये अयो निगड़युक्तस्य इत्यर्थः। षण्डः स्त्रीपुंव्यञ्जनरहितः। यथा देवलः,

षण्डको लिङ्गहीनः स्यात् संस्कारानर्हकश्च सः।

शुक्तपर्य्युषितयोरप्युभयथैवाभ्यासे वक्ष्यमाणजावालशङ्खवचनात्॥ १॥

सूतिकान्नं सूतिकोद्देशेन शौचिभिरपि यत् कृतम्। पर्य्याचान्तम् आचमनाव्यवहितम्। अनर्चितं निन्दया विधुरी-

---

पुनः सिद्धं अभक्ष्यं लशुनादिकम्। गोशूद्रकाकाद्युच्छिष्टं भुक्त्वा च व्रतमाचरेत्। शङ्खः केवलानि च भुक्तानि तथा पर्य्युषितानि च ऋजीषपक्वं भुक्त्वा च त्रिरात्रन्तु व्रती भवेत्। मनुवचने शूद्रोच्छिष्टमिति एतच्च वालाद्यत्यन्ताशक्तविषयमिति उच्छिष्टभक्षणप्रकरणे वक्ष्यते। गोविन्दराजस्तु शूद्रभुक्तावशिष्टं स्थालीस्थमित्याह चिकित्सकस्य मृगयोश्च तत्तद्वृत्त्या जीवतो द्विजातेरित्यर्थः। क्रूरस्य वाचन्यन्मनस्यन्यदित्यादिरूपेण कपटव्यवहारिणः शूद्रभुक्तावशिष्टस्थालीस्थान्नभोजनशीलस्य विप्रस्यान्नं सकृत् भुक्त्वेत्यर्थः। उग्रोऽसमत्यकारीति केचित्। उग्रोदारुणकर्म्मेति कुल्लूकभट्टः गोविन्दराजस्तु शूद्रायां क्षत्रियोत्पादित उग्रजातिस्तदन्नमित्यर्थः॥ १॥

सूतिकोद्देशेनेति अत्र निर्द्देशमिति सम्बन्धनीयं दशरात्राभ्यन्तरे इत्यर्थः। आचमनाव्यवहितमिति यत्समीपे आचमनं कृतम् आचमनविन्दुपातशङ्कया दूषित-

ञ्चतम् अवीरा पतिपुत्रविहीना निःसम्बन्धिनो सम्बन्धिन्यास्तु श्राद्धादिनाभ्यनुज्ञानात् व्यवहारात् धनाधिकाराच्च । ये त्ववीरां बन्धकीं ब्रुवते ते पतिपुत्रविहीनायाः स्त्रियास्तथेति ब्रह्मपुराणान्निरसनीयाः नगरिशब्दो नगराधिपवाचकः । दृन्नन्तो न तु जीवन्तः । यथा ब्रह्मपुराणम् ।

नगराधिपतेः शत्रोः पिशुनानृतिनोस्तथा ।

इति अवक्षुतं क्षवदूषितम् । शैलूषश्च

वृत्त्यन्वेषी नटानाञ्च स तु शैलूषकः स्मृतः ।

इत्यादिपुराणोक्तः । तुन्नवायः सूचिकर्मकृत् । निषादः प्रतिलोमजभेदः । रङ्गावतारको नृत्यस्थाने गीतवाद्यादिना तदनुगुणतया प्रसङ्गी ॥ २ ॥

---

मित्यर्थः । भट्टस्तु यवान्ने भुज्यमाने एकपङ्क्तिस्थानवमन्यभोजनमध्ये केनचिदाचमनं कृतं तदन्नमित्याह निन्दया विधुरीकृतमिति स्वयं परेण वा निन्दातिशयेन दूषितमित्यर्थः । पतिपुत्रेति असति पुत्रे पतिध्वंसवती अवीरा तेन कुमारी नावीरेति । सम्बन्धिन्यास्त्विति श्राद्धोत्सवादौ ब्राह्मणभोजनाद्यनुज्ञानात् प्रायेण सम्बन्धिनामेव श्राद्धादौ भोजनात् । ननु श्राद्धादौ विधानबलात्तथाऽस्तु अन्यत्र तु सम्बन्धिनामपि दोषो भवतु इत्याशङ्क्याह व्यवहारादिति ननु व्यवहारे किं प्रमाणमित्याह धनाधिकाराच्चेति यस्य धनग्रहणेऽधिकारस्तस्यान्नग्रहणे को दोष इति भावः । वस्तुतस्तु सदाचार एवात्र प्रमाणं मनुवचने पतितान्नं संसर्गपतितान्नम् अवीरास्वर्णकारसंसर्गपतितानाञ्चेति वक्ष्यमाणविष्णुवचनैकवाक्यत्वात् क्षवदूषितमिति क्षवः क्षुतं क्षवथुदूषितमित्यपपाठः क्षवथोः कासपर्य्यायत्वात् यथा स्त्री क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान् इत्यमरः । मनुवचने पिशुनानृतिनोश्चेति पिशुनः यो राजस्थाने मिथ्यापरीवादं सूचयति । अनृती प्रायेण मिथ्याप्रलापी । क्रतुविक्रयिणः पुण्यविक्रयिणः क्रतोर्विक्रयासम्भवात् । कृतघ्नः यः कृतोपकारस्यापकारं करोति । कर्मारवृत्त्या जीवतो द्विजातेरित्यर्थः । तथा कर्मारजातेरपि तस्य शूद्रविशेषत्वात् । प्रतिलोमजभेद इति निषादशब्देनोभयमुच्यते चाण्डालः शूद्रायां ब्राह्मणेनोत्पादितश्च । यथा याज्ञवल्क्यः शूद्रायां

सुवर्णकर्त्ता धातुवादादिना। वैणोवंशविकारनिर्माता। श्ववान् आखेटकाद्यर्थं कुक्कुरपोषणरतः। शौण्डिकादयश्च तद्वृत्तिद्विजाः अन्त्यजानान्तु गुरुप्रायश्चित्तस्योक्तत्वात् एव-मपरमुनिवचनेष्वपि प्रेतान्नपदमशौचान्नोपलक्षणम् अत्र चोभ-यथा सक्तज्ज्ञेयम्। त्रिरात्रे चतुर्विंशतिपणा देयाः ॥ ३ ॥

यमेन वार्द्धुषिकादीन्युपक्रम्य

एतेषां ब्राह्मणो भुक्त्वा पीत्वा कृत्वा प्रतिग्रहम्
प्राजापत्येन शुद्ध्येत्तु तस्मात् पापान्नसंशयम् ॥

इति प्राजापत्यस्य विहितत्वात्। अत्राप्यज्ञानकृतात् ज्ञान-कृतस्य द्वैगुण्यव्यवस्थया तत्स्थानपातादिह तदेव न तु तप्त-कृच्छ्रादिकं गुरुलघु वा ग्राह्यम् अतोऽत्र धेनुरेकादेया।

---

निषादः पारशवो वेति प्रतिलोमजाश्चाण्डालादयो यस्य चण्डालेतरशूद्रापुत्रनिषाद इत्यर्थः। अतएव शूद्रान्नभक्षणे कृच्छ्रं चण्डालान्नभक्षणे चान्द्रायणमुक्तम् ॥ २ ॥

धातुवादादिनेति आदिग्रहणादौषधग्रहणम् एतच्च कपटेन स्वर्णं कृत्वा विक्रेतुः न तु स्वरूपस्वर्णसिद्धिकर्त्तुरिति भावः। शस्त्रविक्रयिण इति शस्त्रविक्रयेण जीवतो द्विजातेरित्यर्थः। आखेटको मृगया। शौण्डिकादय इति आदिशब्दाद्वैणादीनां प्रागुक्ततक्षादीनाञ्च ग्रहणम्। रजको वस्त्रादि-रञ्जनकारी नृशंसः परपीड़ारतः। स्त्रीजितानाञ्च सर्वश इति सर्वेषां स्त्रीजितानामित्यर्थः। त्रिविधः स्त्रीजितो भवति स्त्रीवचनाद्गुरुनिर्भर्त्सकः स्त्रीकृतपरिभवसहिष्णुः सर्वकर्मसु स्त्राधीनश्चेति। अशौचान्नोपलक्षणमिति जननाशौचान्नं मरणाशौचान्नञ्चेत्यर्थः। अत्र चेति उभयथा जननाशौचे मरणाशौचे चेत्यर्थः। मनुवचनेऽतुष्टिकरं विचिकित्सा तु हृदये अस्मिन्नन्ने प्रजायते इति भविष्योक्तं ग्रहलेखं तत्राभ्यासे प्राजापत्यमेव अज्ञानासम्भवात् ऐती विस्मृतमेव चेति बलात्कारविषयमिति वक्ष्यते ॥ ३ ॥

मनुवचने कृच्छ्रपदं प्राजापत्यपरं न तु तप्तकृच्छ्रादिपरमिति त्रिरात्रेति

यच्चात्र हारीत आह । चाक्रिकलोहकारक तक्षकान्नभोजने त्रिरात्रमुपवसेत् गोमूत्रं गोमयञ्च प्राश्नीयात् । ध्वजिवणिक्-किराटी वार्द्धुषिकान्नभोजने पञ्चरात्रमिति तत्र त्रिरात्रव्रतं मनुतुल्यविषयमेव पञ्चरात्रं तु ज्ञानादीषदापदि अस्य च षडुपवाससङ्कलितप्राजापत्यात् किञ्चिदूनत्वात् सार्द्धपुराण-द्वयं देयम् ॥ ४ ॥

चाक्रिको वृषचक्रेण तैलनिष्पादकः तक्षकः काष्ठतक्षण-वृत्तिः । ध्वजी शौण्डिकवृत्तिरित्यर्थः । वणिक् शिल्पी । किराटी वणिग्भेदः तथा स एव भगवृत्तिपुंश्चलीवेश्यान्न-भोजने सप्तरात्रं दुष्कृतिगरदतस्करान्नभोजने दशरात्रं दीक्षितप्रव्रजितगणघुष्टान्नभोजने चान्द्रायणं ताम्रकांस्यसीस-ककारव्याधिततस्करान्नभोजने तप्तकृच्छ्रं ब्राह्मणवृत्तिघ्नवध-

---

यमेनेति हेत्वन्तरमाह अत्रापीति अत्र मनुवचनेऽपि तत् स्थानपातात् कृच्छ्रपदस्य द्वैगुण्यस्थाने पातात् प्राप्तत्वात् इह कृच्छ्रपदे तदेव प्राजापत्यमेव ग्राह्यमित्युत्तरेणा-न्वयः न तु तप्तकृच्छ्रसान्तपनादिकमित्यर्थः । मनुतुल्यविषयमिति अज्ञानविषय-मित्यर्थः ईषदापदि अल्पदुर्भिक्ष इत्यर्थः ॥ ४ ॥

वृषचक्रेणेति अस्य च तैलिकस्यान्त्यजत्वात् तद्वृत्तिकरो द्विजातिरित्यर्थः । लौहकारजातेः शूद्रभेदत्वात् अज्ञानतः शूद्रान्नभक्षणे त्रिरात्रस्य वक्ष्यमाणत्वात् युज्यत इदमिति भावः एवं तद्वृत्तिकरद्विजातेरपि । शिल्पी कांसवणिक् वणिक्-भेदो गन्धवणिक् एतयोः शूद्रतुल्यत्वात् युज्यत इत्यर्थः स एव हारीत एव भगवृत्ति-र्भगोत्पादितधनेन या जीवति । पुंश्चली तदितरा वेश्या वेशेन सर्वपुरुषगामिनी आसां सकृदन्नभोजने ज्ञानतः सप्तरात्रोपवासः । दुष्कृती नित्यकर्मानुष्ठाता । गरदो विषदानेन शूद्रहन्ता निमित्ती । तस्करो महापातक्यनुपातक्युपपातकि-व्यतिरिक्त एतेषामन्नभक्षणाभ्यासे दशरात्रं दीक्षितादीनामन्नभक्षणे त्वष्टधाभ्यासे चान्द्रायणम् । ताम्रादिकारः कांसवणिक् एतेषाञ्चतुर्णामन्नभक्षणे तप्तकृच्छ्रं ब्राह्मण-वृत्तिघ्नो राजा बधबन्धादौ नियोगेन तद्वृत्त्याजीवी तयोरापद्यन्नभक्षणे तप्तकृच्छ्रं

ब्रह्मोपघातवृत्त्यन्नभोजने च यौनस्रौवमौखसङ्कीर्णपाकान्न-भोजने च असंस्कृतावज्ञातसरोषविस्मयान्नभोजने च अत्रापि सप्तरात्रादीनां गुरुलघूनां ज्ञानादेव सकृदभ्यासापेक्षयापदि व्यवस्थोहनीया। सप्तरात्रे सपादधेनुः तप्तकृच्छ्रे पादोन-धेनुचतुष्टयं दशरात्रतप्तकृच्छ्रयोर्लघुगुरुणोर्विषयभेदाच्चात्र तस्करपदं न पुनरुच्यते भगवृत्तिर्मैथुनशुल्केन यस्य वृत्तिः। गरदो विषदः व्याधिजनकौषधिदाता च ॥ ५ ॥

अत्रैव विषये यमोऽपि निन्दामुपदर्श्य प्रायश्चित्तमाह,

राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् ।
वैश्यान्नं सूतिकान्नञ्च लोकेभ्यः परिकृन्तति ॥
तथा राजहतस्यान्नं चौरस्यान्नं तथैव च ।
सूतके मृतके चान्नं स्वर्गस्थानपि पातयेत् ॥
विष्ठा वार्द्धुषिकस्यान्नं रुधिरं ब्रह्मघातिनः ।
पूयं चिकित्सकस्यान्नमुदक्यास्त्वन्नमिन्द्रियम् ॥
मलं हि रजकस्यान्नं कर्मारस्य च किल्विषम् ।

---

ब्राह्मणवृत्तिघ्नस्य द्वादशवार्षिकमहाव्रतातिदेशेन महापातकितुल्यत्वात् महा-पातक्यन्नभक्षणे चान्द्रायणस्य वक्ष्यमाणत्वात् आपद्विषयं युज्यते एवेति तथा यौनस्रौवमौखैर्मैथुनयाजनाध्यापनैः संकीर्णानां संसर्गमहापातकिनामापद्यन्न-भक्षणे तप्तकृच्छ्रं तथाऽसंस्कृतं केशाद्युपहतं भृज्जनादिभिरसंस्कृतं यदन्नं यच्चावज्ञया दत्तं यच्च रोषवता दत्तं यच्च विस्मयेन साहङ्कारेण सता दत्तं तद्भक्षणेऽत्यन्ताभ्यासे तप्तकृच्छ्रमित्यर्थः। नन्वेकस्यैव मुनेः स्थानद्वये तस्करप्रायश्चित्तं पुनरुक्तमित्याशङ्क्य परिहरति दशरात्रेति। व्याधिजनकेति गरद इत्युपलक्षणं व्याधिजनकौषधि-दाता चेत्यर्थः ॥ ५ ॥

अत्रैवेति अत्रैव मनूक्तविषयमित्यर्थः। राजान्नमिति राजहतस्य राज्ञाऽप-राधेऽङ्कितस्य उदक्या उदक्याया इत्यार्षः। इन्द्रियं शुक्रम्। किल्विषं पाप्मा चेति

पाप्मा तथान्नं शौण्डस्य घाण्टिकस्य तथैव च।
इतरे ये त्वभोज्यान्नास्तेषामन्नं विवर्जयेत्॥
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः।
पीत्वा वापि द्विजस्तेषां सद्यः पावनमाचरेत्॥
कृच्छ्रं द्वादशरात्रं वा तप्तकृच्छ्रमथापि वा॥
अजाविके माहिषिके कूटे च वृषलीपतौ।
एतेषां भोजनं कृत्वा द्वादशाहं पयः पिबेत्॥

अत्रापि प्राजापत्यवृहत्तप्तकृच्छ्रद्वादशाहपयोव्रतानां ज्ञानत एव सकृदभ्यासापेक्षया यथायोग्यं व्यवस्था। वृहत्तप्तकृच्छ्रेषु पादोनधेनुचतुष्टयं द्वादशाहपयोव्रते च सार्द्धैकदिनदुग्धपानेनैकोपवासपर्य्यवसानात् द्वादशदिनैरुपवासाष्टकं पर्य्यवस्यति तदा च षडुपवाससंकलितप्राजापत्यं सपादं सम्मतमतः सपादधेनुमूल्यं व्रताचरणाशक्तेन देयम्। लोकेभ्यः परिक्रन्ततीति पुण्यार्जितस्वर्गेभ्यो व्यावर्त्तयति घाण्टिको दिव्यवाचनिकः। अजाविकोऽजाविभ्यां यो जीवति एवं माहिषिकोऽपि कूटो वाच्यन्यन्मनस्यन्यदित्यादिकरूपेण कपटव्यवहारी। वृषलीपतिः शूद्रापतिः। अथवा उशनसोक्ता ग्राह्या। तद्यथा,

बन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा।
अपरा वृषली ज्ञेया कुमारी या रजस्वला॥ ६॥

---

सञ्जनकालात्तद्व्यपदेशः पीत्वा वा भुक्त्वा वा इत्यर्थः द्वादशरात्रं कृच्छ्रं प्राजापत्यमित्यर्थः। अजाविकादिविषये च भोजने उक्तं प्राजापत्यादिकमित्यर्थः। प्रायश्चित्तान्तरमाह एतेषां राजादीनां सर्वेषामन्नभक्षणे द्वादशरात्रं पयोव्रतं वा कुर्य्यात्। एतेषां विषयव्यवस्थामाह चनापीति ज्ञानतः सकृत् प्राजापत्यम् अभ्यासे द्वादशाहपयोव्रतम् अत्यन्ताभ्यासे तप्तकृच्छ्रमिति व्यवस्था। दिव्य-

अपरेषाञ्चाभोज्यान्नत्वं स्मृत्यन्तरेऽनुसन्धेयम्।

यत् पुनर्मनुनैव,

अभोज्यानान्तु भुक्तान्नं स्त्रीशूद्रोच्छिष्टमेव च।
भुक्ता मांसमभक्ष्यञ्च सप्तरात्रं यवान् पिबेत्॥

इति सामान्येनानुक्ताभोज्यान्नाशने सप्तरात्रयवपानमुक्तं तत् स्त्रोक्तत्रिरात्रव्रतसमानत्वादज्ञानविषयमेव। एवं विष्णूक्तमपि सप्ताहपयःपानमज्ञानात् ज्ञानादापदि वा वारद्वयाभ्यासे ज्ञेयम्॥ ७॥

यथा विष्णुः। गणगणिकास्तेन गायकान्नानि भुक्ता सप्तरात्रं पयसा वर्त्तेत तक्षणश्चान्नं चर्मारकर्त्तुश्च वार्द्धुषिककदर्य्यदीक्षित बद्धनिगड़ाभिशस्तषण्डानाञ्च पुंश्चलीदाम्भिकचिकित्सकलुब्धकक्रूरोच्छिष्टभोजिनाञ्च अवीरास्त्रीसुवर्णकारसंसर्गपतितानाञ्च पिशुनानृतवादिक्रतुधर्मसोमविक्रयिणाञ्च शैलूषतुन्नवायकृतघ्नरजकादीनाञ्च कर्मारनिषादरङ्गावतारिवेणुशस्त्रविक्रयिणाञ्च श्वजीविशौण्डिकतैलिकचेलनिर्णेजकानाञ्च।

---

वाचनिक इति दिव्यवचनेन शपथवचनेन यः सर्वदा व्यवहरति स तथा। कुमारी अनूढ़ा सती या रजस्वलेत्यर्थः। इतरे ये इति वचनं व्याचष्टे॥ ६॥

अपरेषामिति अपरेषां मत्तक्रुद्धादीनां मन्वाद्युक्तानामित्यर्थः। तत्स्त्रोक्तेति मासैकयवपाने धेनुद्वयमुक्तं तच्चतुर्थांशे सप्ताहे धेन्वर्द्धमूल्यदानं त्रिरात्रसममित्यर्थः। ननु सप्ताहयवपानेऽर्द्धधेनुः सप्ताहपयःपाने च पादोनधेनुः कथमुभयोः साम्यमित्याशङ्क्याह ज्ञानादापदीति॥ ७॥

विष्णुरिति लुब्धको मृगयुः। क्रूरः कपटव्यवहारी। तैलिकश्चाक्रिकेतरः शूद्रभेदः चाक्रिकस्यान्त्यजत्वात्। स चतुर्थेति सपादपूरणद्वयमित्यर्थः। अत्रेति यद्यपि गणादीनां चेलनिर्णेजकपर्य्यन्तानामभोज्यानामेवान्नभोजने एतत् प्रायश्चित्त-

भ्रूणघ्नावेक्षितमुदक्या संस्पृष्टं पतत्रिणावलीढं शुना संस्पृष्टं गवाघ्रातञ्च कामतः पदा स्पृष्टमवज्ञातञ्च मत्तक्रुद्धातुराणाञ्च अनर्चितं वृथामांसञ्च। अत्र सप्तरात्रपयःपाने सार्द्धैकदिनपयःपानेनैकोपवासव्यवस्थया सार्द्धचतुष्टयोपवासपर्य्यवसानात् स चतुर्थभागपुराणद्वयं देयम्। अत्र यद्यपि गणगणिकादीनुपक्रम्याभोज्यान्नता दर्शिता: एतावता तदन्नाशनविषयमेवैतत्प्रायश्चित्तमवसीयते तथापि भ्रूणघ्नावेक्षितोदक्यासंस्पृष्टान्नादीनामपि तैः सह पाठादेषाञ्च पृथक् प्रायश्चित्तानाम्नानात्तद्विषयमप्येतत् प्रायश्चित्तं ज्ञेयम्। अतो दृष्टस्पृष्टादिभेदेन सप्तविधदुष्टान्नभोजन एवेदं प्रायश्चित्तम्। अयन्तु विशेषः अवेक्षितावज्ञातघ्रातादिलघुविषयेऽज्ञानाभ्यासे ज्ञानादापदि वा विज्ञेयम् ॥ ८ ॥

तथा पतिताद्यन्नभोजने प्रायश्चित्तविशेषः तत्र बृहस्पतिः,

पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च।

मासोपवासं कुर्वीत चान्द्रायणमथापि वा ॥

चान्द्रायणमिदमज्ञानाभ्यासे ज्ञानाभ्यासे मासोपवासः चान्द्रायणे सार्द्धसप्तधेनवः मासोपवासे पञ्चदशधेनवः। एतेन ज्ञानतः

---

मवसीयते न तु भ्रूणघ्नावेक्षितादीनां तथाप्यत्र पृथक्प्रायश्चित्तानभिधानात् एतदेव प्रायश्चित्तं मन्तव्यमित्यर्थः। उपसंहरति अत इति भ्रूणघ्नदृष्टं उदक्यया शुना पदा च संस्पृष्टं पतत्त्रिणावलीढं गवाघ्रातम् अवज्ञातमनर्च्चितं वृथामांसञ्चेति सप्तविधं दुष्टान्नम् एतद्भोजने इदं सप्तरात्रपयःपानमित्यर्थः। अत्रैव सप्तविधमध्येऽयं विशेषः भ्रूणघ्नदृष्टे गवाघ्रातेऽवज्ञाते आदिपदादनर्च्चिते च लघुविषयेऽज्ञानाभ्यासे ज्ञानादापदि अनेकाभ्यासे वा सप्तरात्रपयःपानं ज्ञेयम्। उदक्यासंस्पृष्टादौ गुरुविषये सकृदज्ञानादित्यर्थः ॥ ८ ॥

अथ पतितान्नभक्षणे प्रायश्चित्तमाह तथेति एनेनेति अज्ञानकृतद्वैगुण्यं ज्ञान-

सकृद्भोजने चान्द्रायणमेवावतिष्ठते। कृच्छ्राब्दपादानुवृत्तौ वशिष्ठः। एतदेव चाण्डालपतितान्नभोजनेषु ततः पुनरुपनयनम्। एतदपि ज्ञानाभ्यासविषयम्। कृच्छ्राब्दपादे सार्द्धसप्तधेनवः। पुनरुपनयनेनास्य किञ्चिद् गुरुत्वात् द्विरभ्यास इति भावः। यत्तु प्रचेतसोक्तं,

> पतितान्नन्तु यो भुङ्क्ते सप्ताहमुदके वसेत्।
> पानीयपानतश्चैव कुशवारि पिबेत् त्र्यहम्॥

तदज्ञानतः सकृत्त्रिद्वान्नविषयम्। सप्ताहजलशयने क्लेशगौरवात् धेनुद्वयम्। आमान्नभक्षणे तूशनाः।

> पतितात् द्रव्यमादाय भुङ्क्ते च ब्राह्मणः क्वचित्।
> कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं चरेद्द्विजः॥

एतज्ज्ञानाभ्यासे अज्ञानाभ्यासे चार्द्धम् अतिकृच्छ्रे धेनुत्रयम्। सुमन्तुः। अभिशस्तपतितपौनर्भववन्ध्याषण्ढपुंश्चल्यशुचिशस्त्रकारतैलिकचाक्रिकध्वजिकसुवर्णकारालेख्यकषण्डतुन्नवायकवन्धकगणगणिकान्नानि चाभोज्यानि शौकरिकव्याधनिषादरजकवरुडकैवर्त्तचर्मकारा अभोज्यान्ना अप्रतिग्राह्याश्च तदन्नाशन-

---

कृतेऽतोऽज्ञानाभ्याससकृज्ज्ञानकृतयोस्तुल्यत्वमिति भावः। वशिष्ठ इति एतच्च क्षत्रियविषयं ज्ञानाभ्यास इति चाण्डालान्नभक्षणप्रकरणे व्याख्यातम्। अभ्यासविषयत्वं विवृणोति पुनरुपनयनेनेति अस्य कृच्छ्राब्दपादस्य पतितान्नन्त्विति एतच्च सगुणविषयमिति संसर्गप्रकरणे व्याख्यातम्। कृत्वा तस्येति उत्सर्गं वमनं कृत्वा इत्यर्थः। सुमन्तुरिति अशुचिरशौचम्। आलेख्यकश्चित्रकरः। कवन्धको वणिग्भेदः। शौकरिकः शूकरपोषणेन यो जीवति। निषादः पारशवो मनूक्तः। वरुडः कोठरा इति प्रसिद्धः। सुमन्तूक्तमध्ये येऽन्त्याजाश्चाक्रिक-

प्रतिग्रहयोश्चान्द्रायणं चरेत्। एतज्ज्ञानाभ्यासे अज्ञानाभ्यासे तदर्द्धम्। वरुड़ः काष्ठभूरादिभेदः॥ ९॥

---

अथ चाण्डालपतितस्पृष्टान्नभक्षणप्रायश्चित्तम्।

तत्र शङ्खः। अमेध्यचाण्डालपतितपुक्कसरजस्वलावधूतकु.. कुष्ठिस्पृष्टानि भुक्त्वा कृच्छ्रं चरेत्। अमेध्यं मद्यभाण्डादि-पुक्कसः क्षत्रियायां शूद्राज्जातः। स्वभावतः पाणिविकलः कुणिः कृच्छ्रं प्राजापत्यं तदशक्तौ धेनुरेका एतदज्ञानतः एतत् कुण्यादिष्वभ्यासे ज्ञेयम्। तथा ब्रह्मपुराणं,

चाण्डालपतितामेध्यैः कुनखैः कुष्ठिना तथा।
उदक्या सूतिकास्पृष्टं भुक्त्वा मासं वने वसेत्॥

अत्र षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुध्यति इति द्वादश-वार्षिकमहाव्रतस्थाने षाड्वार्षिकप्राजापत्यविधानाच्चतुर्विं-शतिदिनसाध्यमहाव्रतस्य प्राजापत्यतुल्यता ततश्चेतिकर्त्तव्यता-

---

चर्मकारादयस्तेषाम् ज्ञानान्नभक्षणे वारद्वयाभ्यासे चान्द्रायणं ये चान्येऽभिशस्त-पौनर्भवादयः तेषामष्टधाभ्यासे यौ च भ्रूणघ्नपतितौ तयोः सकृदिति विवेकः॥ ९॥

अथ चण्डालपतितस्पृष्टान्नेति। मद्यभाण्डादीत्यादिशब्दाल्लशुनादीनां ग्रहणम्। अवधूतो राज्ञादेशाद्बहिष्कृतः पाणिविकलः स्वभावतः कर्माक्षमपाणिः एतत् कुण्यादिष्विति। विषयलाघवादित्यर्थः। अत्रादिपदात् रजस्वलाया अपि ग्रहणं मनुना सकृदज्ञाने त्रिरात्राभिधानात् शङ्खवचनेन सह विरोधं परिहरति अत्रेति अत्र यद्यपि महाव्रतस्यार्द्धं प्राजापत्यकालः ततश्च मासैकमहाव्रते सपादप्राजा-पत्यसङ्कलनात् चतुर्विंशतिदिनव्रतमेकप्राजापत्यसमं भवति तथाप्यत्र भिक्षा-भिन्नादीतिकर्त्तव्यताभावात् केवलं वनवासे मासैके प्राजापत्यं भवतीत्यविरोधः।

शून्यमासवनवासप्राजापत्ययोः साम्यमेव एतत् सकृदशने-ऽभ्यासे त्वावृत्तिरूहनीया ज्ञानतश्च। रजकादीनान्तु चाण्डालान्नभक्षणप्रायश्चित्तादर्द्धं प्रायश्चित्तमापस्तम्बादिवचनात्। तदनुसारेण रजकादिस्पृष्टान्नभक्षणे धेनोरर्द्धमज्ञाने ज्ञानतश्च धेनुरेकैव॥ १॥

---

अथ पतितस्पर्शेऽकृतस्नानस्य भोजने प्रायश्चित्तम्।

तत्र पैठीनसिः

महापातकिसंस्पर्शे स्नानमेव विधीयते।
संस्पृष्टस्तु यदा भुङ्क्ते तप्तकृच्छ्रं तदाचरेत्॥

एतद्वचनं रजकान्त्यजस्पर्शविषयं यथा,

स्नानार्हस्तु यदा स्नानमकृत्वाश्नाति वै द्विजः।
अहोरात्रोषितः स्नातः पञ्चगव्येन शुध्यति॥

तप्तकृच्छ्रं पापलाघवाच्चतुरहसाध्यं याज्ञवल्क्योक्तं ग्राह्यं तद-शक्तौ सपादधेनुमूल्यं दातव्यम् एतज्ज्ञानतोऽज्ञानतस्तदर्द्धम् अत्यन्ताभ्यासे तु चान्द्रायणेन चैकेन सर्वपापक्षयो भवेत् इति

---

एतदिति सकृदज्ञानाशन इत्यर्थः। ज्ञानतश्चेति ज्ञानतः प्राजापत्यावृत्तिः प्राजा-पत्यद्वयमित्यर्थः। तदनुसारेणेति तदनुसारेण चाण्डालोक्तार्द्धप्रायश्चित्तानुसारेण अज्ञानतः चाण्डालस्पृष्टान्नभक्षणोक्तप्राजापत्यादर्द्धम् धेनोरर्द्धं अज्ञानादन्त्यजान्न-भक्षण इत्यर्थः॥ १॥

अथ पतितस्पर्शं इति स्नानार्हं इति पैठीनसिवचनान्तरं रजकान्त्यजस्पर्श-विषयम्। अत्यन्ताभ्यासेत्विति षोड़शाभ्यास इत्यर्थः। सर्वपापक्षयो भवेदिति

चान्द्रायणं कुर्य्यात्। शङ्खब्रह्मपुराणादिषु साहचर्य्यदर्शना-च्चाण्डालादिस्पर्शेऽप्येतद्वेदितव्यमिति ॥ १ ॥

अथ शूद्रादिस्पृष्टान्नकेशकीटोपहतान्नभक्षणप्रायश्चित्तम्। तत्र जाबालः,

केशकीटावपन्नञ्च स्त्रीभिः स्पृष्टं तथैव च।
श्वोदक्या शूद्रसंस्पृष्टं पञ्चगव्येन शुध्यति ॥

अवपन्नं केशादिभिः सह पक्वमित्यर्थः। स्त्रीशब्दोऽत्र शूद्रस्त्री-परः ब्राह्मण्यां निषेधवैयर्थ्यात्। पञ्चगव्यपानञ्च व्रतरूपं रज-स्वलादिसमभिव्याहारात् तेन दिनैकोपवासः पर्य्यवस्यति ॥२॥

केशकीटाद्युपहतस्य च प्रोक्षणादिकं कृत्वा भोजने प्राय-श्चित्ताभावम् आह यमः,

अवक्षुतं केशपतङ्गकीटकैरुदक्यया वा पतितैश्च दुष्टम्।

---

वचनात्तदधिकेऽपि चान्द्रायणमेव न त्वधिकमिति भावः। चाण्डालाद्यन्त्यावसायि-स्पर्शे किं स्यादित्यत आह शङ्खेति एतत् पतितस्पर्शोक्तं सर्वं प्रायश्चित्तमित्यर्थः ॥ १ ॥

अथ शूद्रादिस्पृष्टेति जाबाल इति केशकीटावपन्नं केशकीटैः सह पक्व-मित्यर्थः। शुना उदक्यया शूद्रेण च संस्पृष्टं भुक्तेति शेषः। अतएव पञ्चगव्य-पानं व्रतरूपमिति वक्ष्यते। उदक्यात्र चतुर्थदिनस्नाता दिनत्रयाभ्यन्तरे तु शङ्खादिना प्राजापत्यस्योक्तत्वात्। स्त्रीशब्दोऽत्रेति स्वपरिणीतशूद्रस्त्रीपर इत्यर्थः। अतएव शूद्रसंस्पृष्टमित्यनेन न पुनरुक्तता रजस्वलादीत्यादिशब्दात् श्वशूद्रयोर्ग्रहणम् एतेषां स्पर्शस्य गुरुत्वात् तत्समभिव्याहारात् केशकीटावपन्नान्नभक्षणेऽपि व्रतरूपमेव न तु पञ्चगव्यपानमात्रं तेनेति व्रतरूपत्वेनेत्यर्थः। एतच्चाज्ञाने ज्ञाने तु द्वैगुण्य-मिति अस्थ्यादिदूषितान्नभक्षणप्रकरणे वक्ष्यते मनुना तु केशकीटावपन्नस्य श्वस्पृ-ष्टस्य च ज्ञाने प्राजापत्यमज्ञाने त्रिरात्रं यदुक्तं तदत्यन्ताभ्यासविषयम्। केश-कीटाद्युपहतस्येति उपरिपतितकेशकीटादिभिर्दूषितस्येत्यर्थः ॥ २ ॥

यम इति अवक्षुतम् उपरिकृतक्षुतम् एतदामान्नविषयं मनूक्तन्तु प्राजापत्यं प्रायश्चित्तं सिद्धान्नविषयम्। पतङ्गः शलभः कीटः पिपीलिकादिः तेषामुपरि-

अलातभस्माम्बुहरिश्चतोयैः संसृष्टमन्नं मनुराह भोज्यम् ॥

ब्रह्मपुराणञ्च,

चाण्डालपतितामेध्यैः कुनखैः कुष्ठिना तथा।
ब्रह्मघ्नसूतिकोदक्याकौलेयककुटुम्बिभिः ॥
दुष्टं वा केशकीटाक्तं स्नङ्गस्य कनकाम्बुभिः।
शुद्धमद्यात् शहल्लेखं प्रभूतं व्युष्टमेव च ॥

कौलेयकः श्वा। कुटुम्बी प्राणिविशेषः। व्युष्टं पर्य्युषितम्। तच्च प्रचुरतरमभ्युक्ष्य भक्षणीयमित्यर्थः। यदा त्वन्नं केश-कीटादिभिरत्यन्तोपहतं भवति तदा वर्जनीयमेव अतएव देवलः,

विशुद्धमपि चाहारं मक्षिका कृमिजन्तुभिः।
केशकीटनखैर्वापि दूषितं परिवर्जयेत् ॥ २ ॥

अथ वृथा पाकान्नभक्षणप्रायश्चित्तम्।

तत्र शातातपः,

यत्र नाश्नन्ति देवाश्च पितरश्च यथाविधि।
वृथापाकः स विज्ञेयः तस्य नाद्यात् कथञ्चन ॥
वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः।

---

घातात् दुष्टमन्नमिति शेषः। अलातमङ्गारः भस्म करीषभस्म होमभस्म वेत्यर्थः। ब्रह्मपुराणमिति अमेध्यैरस्पृश्यैः भिल्लादिभिर्दुष्टमित्यन्वयः। विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते। शहल्लेखन्तु विज्ञेयम् इति भविष्यपुराणोक्तं शहल्लेखं तदपि प्रभूतमेव शोध्यम् अल्पस्य तु त्याग एव एवं व्युष्टस्यापीत्यर्थः। यदा त्विति सहपाकादत्यन्तदूषितमित्यर्थः। देवल इति कृमयः किञ्चुलुकाद्या जन्तवः पिपीलिकाद्याः मक्षिकाभिः सहपाकेन दूषितं वर्जयेदेव तस्य तु मृज्जलादिनापि न शुद्धिः एतद्भक्षणे जावालोक्तं प्रायश्चित्तमिति भावः ॥ २ ॥

प्राणायामं त्रिरभ्यस्य घृतं प्राश्य विशुध्यति ॥
एतदज्ञानतो ज्ञानतो द्वैगुण्यम् ॥ ४ ॥

अथ वृथामांसादिभक्षणप्रायश्चित्तम्।

तद्भक्षणविधौ मनुः,

क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा।
अर्चयित्वा पितॄन् देवान् खादन्मांसं न दुष्यति ॥

प्रायश्चित्ते छागलेयः,

वृथामांसं न भोक्तव्यं भोक्तव्यं श्राद्धकर्मणि।
अन्यथा भक्षयन् विप्रः प्राजापत्यं समाचरेत् ॥

वृथामांसं यद्देव पितृभुक्तशेषं न भवति यथा देवीपुराणम्।

नवं कृषरपूपानि पायसं मधुसर्पिषी।
वृथामांसञ्च नाश्नीयात् पितृदेव विवर्जितम् ॥

नवं नवान्नं कृषरस्तिलतण्डुलसम्पर्कः कृषरः सोऽभिधीयत इति कात्यायनोक्तः खिचड़ीति यस्य प्रसिद्धिः। तथा शङ्खलिखितौ न तदश्नीयाद् यन्न देवपितृमनुष्यार्थं कुर्य्यात्। हारीतः परमान्नकृषरशस्कुलीमांसयावकपूपान्न पाचयेदात्मार्थम्।

---

अथ वृथापाकेति। यन्नेति बलिवैश्वदेवनित्यश्राद्धाद्यर्थं विना यः पाक इत्यर्थः वृथापाकस्यान्नं भुञ्जान इत्यर्थः ॥ ४ ॥

अथ वृथामांसेति। तद्भक्षणविधौ मांसभक्षणविधौ इत्यर्थः। उत्पाद्य आहृत्य परोपकृतम् अन्यैर्दत्तम्। पितॄन् श्राद्धेन देवान् यज्ञेन मांसमित्युपलक्षणं मत्स्यानपि। वृथामांसमिति श्राद्धे दत्तं मांसं निमन्त्रितो भुञ्जीतेत्यर्थः। अन्यथा देवपितृशेषं श्राद्धदत्तञ्च विना। देवीपुराणमिति पितृदेवविवर्ज्जितम्। पितृदेवोद्देशं विना कृतं नवान्नादिमांसान्तम् अतएव वृथाकृतं नाश्नीयात् अतएव वृथाकृतमांसादिसंज्ञान्येतेषामित्यर्थः। तथा च याज्ञवल्क्यः वृथाकृषर संयाव-

र्थम्। अभ्यासे तु चान्द्रायणेन चैकेन सर्वपापक्षयो भवेत् इति बोद्धव्यम्॥ १॥

अत्रापवादमाह देवलः,

भक्षयन्नपि मांसानि शेषभोजी न लिप्यते।
औषधार्थमशक्तौ वा नियोगाद् यज्ञकारणात्॥

बृहस्पतिः,

रोगी नियुक्तो विधिना हुतं विप्रहृतस्तथा।
मांसमद्याच्चतुर्द्धैषा परिसंख्या प्रकीर्त्तिता॥

एवञ्च,

न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥

इति मनुवचनमपि पितृदेवार्चनशिष्टमांसविषयम्। एवंभूतमांसत्याग एव मन्वाद्युक्तफलश्रुतिरपि निषिद्धानाचरणस्य

---

पायसादूपशष्कुलीरिति। शष्कुलीपिष्टकभेदः। अभ्यास इति अत्यन्ताभ्यास इत्यर्थः॥ १॥

अत्रापवादमिति शेषभोजी पितृदेवशेषभोजी इत्यर्थः अशक्तौ रोगे औषधार्थम्। नियोगात् श्राद्धे यज्ञकारणात् प्रोक्षितं मांसमित्यर्थः। बृहस्पतिरिति हुतं होमविशिष्टं विप्रहृतो विप्रकाम्यया तथा च याज्ञवल्क्यः प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया। देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दुष्यति परिसंख्येति चतुर्द्धैव नान्यथेत्यर्थः। विधिनियमपरिसंख्याभेदस्तु न्यायकौमुद्यां विवृतोऽस्माभिः। एवञ्चेति चतुर्द्धैव भक्षणविधौ सतीत्यर्थः यत्रैव भक्षणविधिस्तत्रैव दोषाभाव इत्यर्थः। इदानीं ये वर्जयन्ति मांसानि मासशः पक्षशोऽपि वा। तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयत इत्यादिवचनात् पर्वणि मांसवर्जनाच्च सामान्यत एव मांसभक्षणं प्रतीयत इति भवदेवमतं निराकरोति एवम्भूतेति यत्रैव भक्षणं प्राप्तं तत्रैव मांसत्यागे फलश्रुतिः न तु निषिद्धे तदितरस्थले तत्र हेतु

पुण्याजनकत्वात्। मद्यञ्च येषां न निषिद्धं तेषामेव तान्नि-
वृत्तिर्महाफला मैथुने पर्ववर्जं व्रजेच्चेनामनृतौ रतिकाम्ययेति
यन्मनुनोक्तं तत्त्यागविषयं महाफलम्। तथा निन्दामप्याह
वृहस्पतिः,

अतोऽन्यथा च योऽश्नीयाद्विधिं हित्वा पिशाचवत्।
यावन्ति पशुलोमानि तावत् प्राप्नोति मारणम्॥

तथा च याज्ञवल्क्यः,

वसेत् स नरके घोरे दिनानि पशुरोमभिः।
सम्मितानि दुराचारो यो हन्त्यविधिना पशून्॥ २॥

अत्र च योहन्त्यविधिनेति विशेषणोपादानान्न भक्षणमात्रे
दोषप्रतिपादनम्। यत्तु यमेनोक्तं,

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
घातकाः सर्वं एवैते संस्कर्त्ता षष्ठ उच्यते॥

निषिद्धानाचरणस्येति मद्यञ्चेति येषां शूद्रादीनामित्यर्थः। तत्त्यागविषयमिति तत्र
पर्वेतरस्थले मैथुनत्यागविषयमित्यर्थः। न च ऋतुस्नातान्तु यो भार्य्यां सन्निधौ
नोपगच्छति। घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः इति यमवचनात् तथा
ऋतौ नोपैति यो भार्य्यामनृतौ यश्च गच्छति। तुल्यमाहुस्तयोर्दोषमयोनौ
यश्च सिञ्चति इति बौधायनवचनाच्च अगमने दोषश्रवणात् कथं मैथुनत्यागस्य
महाफलत्वमिति वाच्यम्। प्रजया पितृभ्य इति पितृर्णशोधकत्वात् पुत्रोत्पत्ति-
पर्य्यन्तमेव ऋतुकालाभिगमननियमान्तरः परं मैथुनत्यागस्य महाफलत्वादिति।
प्रसङ्गात् मैथुनत्यागस्य महाफलत्वं व्याख्याय भवदेवमते दोषान्तरमाह तथेति
निन्दाम् अविधिमांसभक्षणनिन्दाम्। अतोऽन्यथा प्रागुक्तपितृदेवार्च्चनावशेषा-
दन्यत्र तावत्तावन्ति दिनानि मारणं नरकोपभोगमित्यर्थः। याज्ञवल्क्येन
तथाभिधानात्॥ २॥

न चेति किन्तु हननेऽपीति शेषः। निर्द्दिशेवेति निर्द्देशेनाज्ञया विशसनात्

निर्द्देशादनुमन्ता स्यात् विशस्ता विशसनात्तथा।
हननेन तथा हन्ता धनेन क्रायकस्तथा॥
विक्रयी च धनादानात् संस्कर्त्ता तत् प्रवर्त्तनात्।
घातकाः षट् समाख्याता भोक्ता तत्र तु सप्तम॥ इति।

तद्धिंसायां सत्यामेतानि भवन्तीति बोधनार्थं न तु समानदोषार्थम्। अतएव मनुः,

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्।
न च प्राणिवधः स्वर्गस्तस्मान्मांसं न भक्षयेत्॥

मांसाशनत्यागे कृतसंकल्पेन तु नियोगादिनापि न भक्ष्यमित्यत्र यमः,

भक्षयेत् प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्॥

न चैवं

नियुक्तस्तु यथा न्यायं यो मांसं नात्ति मानवः।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥

इति मनुविरोधः स्यात् तस्यानिषिद्धमांसविषयत्वेनोपपत्तेः।

---

कुट्टनात् हननेन वधेन। संस्कर्त्ता पाचकः तत्प्रवर्त्तनात् प्रकृत्यमाणभक्षणे प्रवर्त्तनात् किन्तु हन्तुरेव दोषाधिक्यमिति शेषः। न च प्राणिवधः स्वर्ग इति मनुवचनात् घातकाः सर्व एवैते इत्यनेनान्येषां घातकत्वातिदेशाच्च। यम इति प्रोक्षितं यज्ञे प्रोक्षितं तथा ब्राह्मणकाम्ययापि सकृदेव न तु नित्यम्। तथा दैवे दैवकर्मणि देवार्च्चनावशिष्टं तथा श्राद्धे नियुक्तश्च मांसं भक्षयेत् तत्रापि मांसत्यागनियमे कृते वर्जयेदित्यर्थः। न चैवमिति नियुक्तः श्राद्धे नियुक्तः। तस्येति तस्य मनुवचनस्य। अनिषिद्धमांसः अपरित्यक्तमांस इत्यर्थः। यमेन

शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः ।
शरीरात्स्रवते धर्मः पर्वतात् सलिलं यथा ।

इति शङ्खवचनात्,

शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्त्तव्यमनायासः स उच्यते ॥

इत्यादिवृहस्पतिवचनेभ्यः शरीरस्यावश्यरक्षणीयत्वाद्व्याधिनिमित्ते ह्यन्यनिमित्ते वा प्राणात्यये पुनस्त्यक्तमांसोऽपि ब्रह्मचारी गृही वा भक्षयित्वा पश्चात् प्रायश्चित्तं कुर्य्याताम् ॥ ३ ॥

यथा ब्रह्मपुराणम्,

ब्राह्मणानुज्ञया भक्ष्यं त्यक्तं मांसञ्च रोगिभिः ।
मातापितृभ्यां संभुक्तं शेषं वा ब्रह्मचारिणा ॥
पुनः प्रशान्तरोगेण कर्त्तव्यमधिकं व्रतम् ।
न भक्ष्यं यतिना मांसं कदापि च मुमूर्षुणा ॥

तथा मनुः,

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया ।

---

कृतनियमस्य रोगिणो मांसवर्जनं नाभिहितमिति तस्यैव तात्पर्य्यं विवृणोति शरीरमिति शरीरं पीड्यत इति सुशुभेन धर्म्ममूलेनापि कर्म्मणा येनात्यन्तं शरीरं पीड्यते तत्कर्म न कर्त्तव्यं हेतुमाह यस्मात् कर्म्मणोऽनायासः स्यात् स एव धर्म्म उच्यते मुनिभिर्यतः अन्यनिमित्ते वेति भक्ष्याभावनिमित्ते वेत्यर्थः ॥ ३ ॥

ब्रह्मपुराणमिति अत्र त्यक्तविशेषणात् रोगिपदेन ब्रह्मचारी कृतनियमगृही चोच्यते ततश्च रोगिभिरुभयैर्ब्राह्मणानुज्ञया त्यक्तमपि मांसं भक्ष्यं तथा ब्रह्मचारिणा मातापितृभुक्तं यत् शेषं तच्च भक्ष्यं वाशब्दस्यार्थे अधिकं ब्रह्मचारिव्रतादधिकं सूर्य्योपस्थानरूपं नियमं तथा ब्रह्मचार्य्यधिकारे बौधायनः स चेन्नाधीयीत कामं गुरूच्छिष्टं भैषज्यार्थं सर्वं प्राश्नीयात् येनेच्छेत् तेन चिकित्सयेत् स यदाविगदः स्यात् । अथादित्यमुपतिष्ठेत् हंसः शुचि यदेत्येतयेति तुल्यन्यायात् यतेरपि रोगिणो

यथा विधिनियुक्तस्तु प्राणानामेव चात्यये ॥

अत्र प्राणानामेव चात्यय इति त्यक्तमांसगृहस्थब्रह्मचारिविषयम् ॥ ४ ॥

## अथ सामान्याभक्ष्यमांसभक्षणप्रायश्चित्तम्।

तत्र मनुः,

अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च।
भुक्त्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान् पिबेत् ॥

तत्राशक्तेन चतुर्विंशतिपणा देया एतदज्ञानतः सकृज्ज्ञाना-दिना तु द्वैगुण्यादिकम्। यथा भक्ष्यमांसमभिधायाह शङ्खः

मांसमन्यदतो भुक्त्वा संप्रोक्तं व्रतमाचरेत्।

इति संप्रोक्तं मासयावकव्रतमेतदभ्यासापेक्ष्यमिति धर्मप्रदीपः अत्र च धेनुद्वयम्। हारीतः। ग्राम्यारण्यानां पशूनाम् अश्नीत्यादिना भक्ष्यमुक्त्वाह अनुक्तानां पशूनां भक्षणेऽतिकृच्छ्रो ग्राम्याणां चान्द्रायणं तथा पक्षिणाञ्चानुक्तानां जलचराणां

---

मांसभोजनप्राप्तावाह न भक्ष्यमिति अत्रेति त्यक्तमांसगृहस्थब्रह्मचारिविषयमपीत्यर्थः। प्राणात्ययनिमित्तेन पितृदेवार्चनादिकं विनाप्यनिवृत्तमांसेन यथा मांसं भक्ष्यं तथा निवृत्तमांसगृहस्थब्रह्मचारिभ्यामपि निमित्ततौल्यात्। एवञ्च पर्वस्वपि मांसं भक्ष्यं प्राणान्यथानुपपत्तेः ॥ ४ ॥

अथ सामान्याभक्ष्यमांसेति मनुरिति अभोज्यानां सुवर्णकारादीनां द्विजातीनां मनुनैव आयुः सुवर्णकारान्नमित्यादिना प्रागुक्तानाम् अत्र स्त्रीपदमसवर्णपरिणीत-स्त्रीपरं शूद्रपदं शूद्राजातस्वपुत्रपरम्। ज्ञानादिना त्विति ज्ञाने द्वैगुण्यम् अभ्यासे तस्यापि द्वैगुण्यमित्यर्थः। धर्मप्रदीप इति एतेन सकृदज्ञाने धेनुरेकेति भावः। हारीत इति अश्नन्ति मांसमिति शेषः पशूनामारण्यानां भक्षणेऽतिकृच्छ्रमित्यर्थः।

सर्वक्रव्यादानां भक्षणे तप्तकृच्छ्रम् अतिकृच्छ्रे धेनुत्रितयं तप्तकृच्छ्रे पादोनधेनुचतुष्टयम्। अत्यन्ताभ्यासे तु चान्द्रायणेन चैकेन सर्वपापक्षयोभवेदिति चान्द्रायणं करणीयम् अत्राष्टौ धेनवः पश्वादीनां मांसानाञ्च भक्ष्याभक्ष्यत्वं स्मृत्यन्तरेऽनुसन्धेयम्॥ ५॥

अथ गवादिमांसभक्षणप्रायश्चित्तम्।

तत्र सुमन्तुः। गोमांसभक्षणे प्राजापत्यं चरेत् इदमज्ञानतः सकृद्भक्षणविषयम्। पराशरः,

अगम्यागमने चैव मद्यगोमांसभक्षणे।
शुद्धेत्र चान्द्रायणं कुर्य्यान्नदीं गत्वा समुद्रगाम्॥
चान्द्रायणे ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्॥

इदं ज्ञानतः अभ्यासे। शङ्खः,

गामश्वं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखन्तथा।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरं व्रतम्॥

एतच्चिरकालाभ्यासे संवत्सरब्रह्महत्याव्रते पञ्चदशधेनवः पुन-

---

सर्वेषां जलस्थलचारिणां क्रव्यादानां मांसादपक्षिणामित्यर्थः। हारीतवचनं त्रिधाभ्यासे बोद्धव्यम् अत्यन्ताभ्यासे सर्वत्र चान्द्रायणस्योक्तत्वात्। एतच्च वचनाद्यविशेषातिरिक्तस्थले बोद्धव्यम्॥ ५॥

अथ गवादिमांसेति पराशर इति अत्र मद्यपदं त्रिविधसुरेतरपरं तस्याज्ञानतः सकृत्पानविषयं वचनमिति प्रागेव व्याख्यातम् इदं ज्ञानतोऽभ्यास इति अभ्यासोऽत्र चतुर्थाभ्यासः सुमन्तुवचनेऽज्ञानतः प्राजापत्यस्योक्तत्वात् तेन सकृज्ज्ञाने प्राजापत्यद्वयमिति भावः। सर्वं पञ्चनखमिति श्वाविधं शल्यकं गोधां खड्ग-

पनयनञ्च। यथा विष्णुः। विड्वराहग्राम्यकुक्कुटनरगोमांस-भक्षणे सर्व्वेष्वेव द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्॥ ६॥

अथ हंसादिभक्षणप्रायश्चित्तम्।

तत्र शङ्खः,

हंसं मद्गुञ्च काकोलं काकं वा खञ्जरीटकम्।
मत्स्यादांश्च तथा मत्स्यान् बलाकां शुकसारिके॥
चक्रवाकं प्लवं कोलं मण्डूकं भुजगं तथा।
मासमेतद्व्रतं कुर्य्यात् भूयश्च तन्न भक्षयेत्॥

एतत्तु कामतोऽभ्यासापेक्ष्यं मासयावकव्रते धेनुद्वयम् अकामतोऽभ्यासे चार्द्धम्। अज्ञानतः सकृदशने विष्णुः। कलविङ्कहंस-मद्गुचक्रवाक-रज्जु-बालसारसदात्यूहशुकसारिभासबलाकाकोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत्॥ ७॥

अथ कामतो मत्स्यभक्षणप्रायश्चित्तम्।

तत्र याज्ञवल्क्यः,

मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्।

---

कूर्म्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदत इति मनूक्तेतरः पञ्चनखो मन्तव्यः। क्रव्यादं मांसादपशुं व्याघ्रादिकमित्यर्थः। विष्णुरिति विड्वराहादि-भक्षणे चान्द्रायणमिति प्रागुक्तेनान्वयः॥ ६॥

अथ हंसादीति। मद्गुर्जलचरपक्षिभेदः काकोलः द्रोणकाकः मत्स्यादान् श्येनादीन् मत्स्यानित्यन्ताभ्यासविषयमिति मत्स्यभक्षणप्रायश्चित्ते वक्ष्यते एतदप्य-विधिभक्षणविषयं प्लवः पक्षिभेदः कोलो ग्राम्यशूकरः अकामत इति एवं सकृज्-ज्ञानतोऽपि धेनुरेकेत्यर्थः। विष्णुरिति कलविङ्कः चटकः रज्जुवालः दीर्घपुच्छ-भेदः भासो वनकुक्कुटः गृध्रः इति केचित् ज्ञाने तु षड्रात्रमिति भावः॥ ७॥

इदं सकृदशनेऽकामतस्तदर्द्धम्। शङ्खवचने मासैकयावकव्रत-मभ्यासविषयम्॥ १॥

अथ पृष्ठमांसादिभक्षणप्रायश्चित्तम्।

तत्र ब्रह्मपुराणे,

पशोस्तु मार्य्यमाणस्य न मांसं ग्राहयेद्विजः।
पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा॥
भूमेरन्तर्गतं कृत्वा मृद्भिश्चाच्छादितञ्च यत्।
पक्वमांसमृजीषञ्च प्रयत्नान्न तु भक्षयेत्॥
प्रमादाद् भक्षितैरेभिर्वने वासं वसेदहः।
द्वितीयेऽहनि शुद्धेस्तु सोमान् देवान् पितॄन् यजेत्॥

ऋजीषं पिष्टपचनभाण्डं तत्र पक्वमित्यर्थः। उपवासं कृत्वा परदिने मांसेन श्राद्धं कुर्य्यात् इत्यर्थः। एतत् सकृदकामतः। कामतस्तु सकृद्भक्षणे याज्ञवल्क्यः,

चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च।
मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं चरेत्॥

सूनाघातनस्थानं तद्भवं सौनं वल्लूरं शुष्कमांसं ब्रह्मपुराणवाक्ये

---

अथ कामतो मत्स्यभक्षणेति। इदम् अविधिभक्षणविषयं पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोरित्यादिमन्वादिवचनात् निषिद्धमत्स्यानान्तु भक्षणे सामान्योक्ता भक्ष्यमांसभक्षणप्रायश्चित्तं द्रष्टव्यं निषिद्धमत्स्यास्तु शास्त्रतो व्यवहारतश्चोन्नेयाः॥ १॥

अथ पृष्ठमांसादीति। मांसं वक्ष्यमाणपृष्ठादिमांसम् अग्रहणे हेतुः पृष्ठमांसमिति गर्भशय्यां जठरस्थमांसं सोमान् सोमादीन् देवान् बहुवचनात् ते च सोमेन्द्रादयः। अन्यत्र तेषां साहित्यदर्शनात्। पितृयागः श्राद्धम्। याज्ञ-

शुष्कमांससमभिव्याहारात् पृष्ठमांसादीनामपि भक्षणे एतदेव। अभ्यासे तु शङ्खः,

सूनामांसं शुष्कमांसमात्मार्थं च तथापरम्।
भुक्त्वा मासं व्रतं कुर्य्यात् प्रयत्नात् सुसमाहितः॥

अत्यन्ताभ्यासे च चान्द्रायणं चरेदित्यनुवृत्तौ मनुः,

शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च।
अज्ञातञ्चैव सूनास्थमेतदेव व्रतं चरेत्॥ २॥

## अथ निषिद्धतिथिषु मांसभक्षणप्रायश्चित्तम्।

तत्र मांसभक्षणनिषेधे विष्णुपुराणं,

चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा।
पर्व्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च॥
स्त्रीतैलमांससम्भोगी पर्व्वस्वेतेषु वै पुमान्।
विण्मूत्रप्राशनं नाम प्रयाति नरकं मृतः॥
अशेषपर्व्वस्वेतेषु तस्मात् संयमिभिर्नरैः।
भाव्यं सच्छास्त्रवेदेज्याध्यानजप्यपरैः सदा॥

---

वल्काग्र इति चाषः पक्षिभेदः। सौनं व्याधात् क्रीतम् एतदेव त्रिरात्रमित्यर्थः। अङ्क इति आत्मार्थं स्वार्थं पक्वमित्यर्थः। मासव्रते धेनुद्वयम् अत्र यद्यपि कामतः अभ्यासे प्राप्तत्रिरात्रात् द्विगुणं षड्रात्रं भवति तत्रैका धेनुः तथापि वचनादिह मासव्रतमिति भावः। कवकं छत्राकम् अज्ञातपशुमांसम्॥ २॥

अथ निषिद्धतिथिष्विति। भूरावश्यक इति भूः स्वर्णादित्यर्थः। दृष्ट इति षष्ठ्यादिषु यथासंख्येन तैलादिनिषिद्धो न तु समुदायेनेति विवृणोति षष्ठ्यां तैलमिति अन्यथा वचनमिदं व्यर्थं स्यात्तर्हि अष्टम्यां तैलस्त्र्यादीनां कथं वर्जनमिति चेत् विष्णुपुराणवचनादिति ब्रूमः तर्हि किमर्थं यथासंख्यविधानं सत्यं षष्ठ्यां तैलमात्रनिषेधार्थम् अष्टम्यादिषु मांसादीनां निन्दातिशयार्थञ्च अतएवानेक-

तत्र भाव्यमिति भूरावश्यके इति ण्यचि अवश्यम्भवनीय-मित्यर्थः। दक्षः,

षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशी।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे॥

तथा, षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा।
क्षुरकर्म चतुर्दश्यां तथा पर्वणि मैथुनम्॥

एतच्च स्नातकविषयम्। अतएव पर्वमैथुननिषेधे मनुः,

अमावास्याष्टमी चैव पौर्णमासी चतुर्दशी।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥

अत्र प्रायश्चित्ते मनुः,

वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्॥

अभ्यासे तु प्राजापत्यं चान्द्रायणं वा इति आपस्तम्बवचना-द्व्यवस्था॥ ३॥

---

वचनेषु षष्ठ्यां तैलमात्रनिषेधः श्रूयते। यथा भविष्ये। प्रतिपत्सु नवम्याञ्च षष्ठ्यां पञ्चसु पर्वसु। अभ्यञ्जनस्य पानाद्यैस्तैलं नैव स्पृशेन्नरः। स्मृतिसमुच्चये। पक्षादौ च रवौ षष्ठ्यां रिक्तायाञ्च तथा तिथौ। तैलेनाभ्यज्यमानस्य चतुर्भिरपि हीयते इत्यादि संवत्सरकौमुद्यां विहृतमस्माभिः। स्नातक इति स्नातकः कृत-समावर्त्तनः ब्रह्मचारिणः स्त्र्यादिनिषेधस्य सर्वदैव प्राप्तत्वात् अतएवेति अतएव विष्णुपुराणवचनस्य स्नातकविषयत्वोपसंहारात् मनुरपि स्नातकविषये पर्वसु मैथुन-निषेधमुक्तवानित्यर्थः। अत्र च ऋतावित्यनेनामावास्यादिनिषिद्धेतरस्थल एव ऋतुकालगमनाभिधानं न तु ऋतुकालानुरोधात् पर्वादिष्वपीति ध्येयम्। एवममावास्याष्टकादिषु मांसेन श्राद्धविधानानुपपत्त्या निमन्त्रितः श्राद्धे दत्तं मांसं भुञ्जीत एवेति भावः। एवं रोगिणामपि प्राणरक्षार्थं निषिद्धतिथिष्वपि

### अथ देवतार्थोपकल्पितभक्ष्यवृथापायसापूपादि-भक्षणप्रायश्चित्तम्।

अत्र याज्ञवल्क्यः,

देवतान्नं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा।
अनुपाकृतमांसानि विड्जानि कवकानि च॥

तथा,

वृथाकृषरसंयावपायसापूपशष्कुलीः।
कलविङ्कं प्लवं कोलं कुररं रज्जुवालकम्।
जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान्॥
भासांश्च रक्तपादांश्च सौनं वल्लूरमेव च।
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्॥

तथा शङ्खः,

वृथा कृषरसंयावपायसापूपशष्कुलीः।
भुक्त्वा त्रिरात्रं कुर्वीत व्रतमेतत् समाहितः॥

तेन देवपितृतिथिवर्जं कामतः सकृदमीषां भक्षणे त्रिरात्रं शिग्रुः शोभाञ्जनः। लोहितान् व्रश्चनानिति लोहितान् वृक्षच्छेदनोद्भवनिर्यासान्। अतएव मनुः,

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।

---

मांसं भक्ष्यमेवेति प्रागेव व्याख्यातम्। अभ्यासे त्विति प्राजापत्यमत्यन्ताभ्यासे चिरकालाभ्यासे चान्द्रायणमित्यर्थः॥ २॥

अथ देवतार्थोपकल्पितेति। याज्ञवल्क्य इति देवतान्नं देवतार्थोपकल्पितं दैवदत्तम् अन्नमित्युपलक्षणं फलमूलादि च। हविः पुरोडाशादि। जाल-वद्ग्रथितपादान् हंसादीन् द्विजान् पक्षिणः रक्तपादान् लोहितचरणान् पारा-

अनुपाकृतमांसानि वैदिकमन्त्रेणाप्रोक्षितानि । विड्जानि अमेध्योद्भवानि इत्यर्थः । तथा मनुः, अमेध्यप्रभवाणि चेति प्रभवग्रहणादमेध्यदेशोद्भवादुत्पन्नस्यानिषेधः । बौधायनः,

अमेध्येषु च ये वृक्षाः उप्ताः पुष्पफलोपगाः ।
तेषां नैव प्रदुष्यन्ति पत्रपुष्पफलानि च ॥

तत्र वृक्षग्रहणाच्छाखाद्युत्पन्न-फलादेर्भक्ष्यत्वमेव । करकः कोष्टकः कृषरः तिलतण्डुलसम्पर्कः संयावकः क्षीरघृतादि-सिद्ध-ओदनविशेषः शष्कुली मुद्गादिचूर्णसिद्धा ॥ ४ ॥

---

### अथैकाकिमिष्टान्नभक्षणप्रायश्चित्तम् ।

तत्र निन्दायां मनुः,

एकाकी मिष्टमश्नाति वञ्चयित्वा सुहृत् सुतान् ।
दारान् भृत्यातिथींश्चैव तथा सम्बन्धिबान्धवान् ॥
उत्सन्नपितृदेवेज्यः पशुघाती च यो वृथा ।
लालापनरके घोरे दुर्गन्धे पात्यते नरः ॥

अत्र प्रायश्चित्तविशेषाश्रवणान्नैकाकी मिष्टमश्नातीति श्रुते-राचारातिक्रमप्रायश्चित्तम् । वेदोदितानामित्यनेन मनुनोक्त

---

वतादीन् एषाञ्च कलविङ्कादिपक्षिणां कामतः सकृदशने त्रिरात्रमुक्तं तद्रोगिणां मन्तव्यम् । अतएव हंसादिभक्षणप्रायश्चित्ते विष्णुवचने कलविङ्कादिपक्षिणां सकृदज्ञानतस्त्रिरात्रमुक्तं सङ्गच्छते । अमेध्यदेशोद्भवादिति अमेध्यदेशोद्भवाद् वृक्षा-दुत्पन्नस्य फलादेरित्यर्थः ॥ ४ ॥

अथैकाकीति । उत्सन्न इति उत्पन्ना पितृदेवेज्या यस्य तेन देवपितृयागार्थं पशुघाते न दोष इत्यर्थः । वृथापशुघाते तु तत्तत्पशुवधोक्तं प्रायश्चित्तमेवेति ।

एकाहोपवासः कार्य्यः, एतत् सकृत् अभ्यासे तु द्वैगुण्यादिक-मूहनीयम् ॥ ५ ॥

अथ पर्य्युषितशुक्तभक्षणप्रायश्चित्तम्।

तत्र विष्णुः, यवगोधूमजं पयोविकारं स्नेहाक्तं चुक्रुषाभवं वर्जयित्वा पर्य्युषितं प्राश्योपवसेत्। तथा दधिवर्जं केवलानि सर्वंशुक्तानि। तेनास्नेहाक्तपर्य्युषिताशने शुक्तभक्षणे चोपवासः कर्त्तव्य एतदज्ञानतः ॥ ६ ॥

ज्ञानतस्त्वाह जावालः,

पर्य्युषितं पुनः सिद्धमभक्ष्यं लशुनादिकम्।
शूद्रकाकगोऽश्वोच्छिष्टं भुक्त्वा च त्र्यहमाचरेत् ॥

तथा शङ्खः,

लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा।
केवलानि च शुक्तानि तथा पर्य्युषितानि च ॥
ऋजीषपक्वं भुक्त्वा तु त्रिरात्रं तु व्रती भवेत्।

व्रतमिह गोमूत्रयावकेन तत्प्रक्रमात्। चुक्रुषाभवं सूपकार-

---

लालापेति पानं पा लालायाः पानं यत्र तस्मिन्नरके। अभ्यासे त्विति द्विरभ्यासे द्विगुणं त्रिरभ्यासे त्रिगुणमित्यादि ॥ ५ ॥

अथ पर्य्युषितशुक्तेति। विष्णुरिति यवगोधूमजं शक्तुपिष्टकादिपयोविकार-मामिक्षादि। स्नेहाक्तं यत्किञ्चित् केवलानि अमिश्राणि अन्यद्रव्यमिश्रणा-दम्लताभावान्न दोष इत्यर्थः ॥ ६ ॥

जावाल इति। पुनः सिद्धं द्विःसिद्धमित्यर्थः। अभक्ष्यमिति लशुनादि-विशेषणम् एतच्च ज्ञानतो रोगिविषयम् अरोगिणो ज्ञानतश्चान्द्रायणस्योक्तत्वात् यत्तु रोगिणो गायत्र्यष्टसहस्रसम्पातसहितोपवासो लशुनभक्षणप्रायश्चित्ते वक्ष्यते तदनेन सह वैकल्पिकं मन्तव्यं यथा ज्ञानतो गोशूद्रकाकश्वोच्छिष्टभक्षणे त्रिरात्रं

शास्त्रप्रसिद्धव्यञ्जनविशेष उक्ताड़ इत्यर्थः। शुक्तञ्च यन्मधुरं कालवशादम्लताम् उपगतम्।

अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः।

इति वृहस्पतिवचनात्॥ ७॥

दधिभक्ष्यञ्च शुक्तेषु सर्वञ्च दधिसम्भवम्।
यानि चैवाभिसूयन्ते पुष्पमूलफलैः शुभैः॥

एतेन काञ्जिकसन्धानेऽभक्ष्यमेव शुक्तञ्च केवलमभक्ष्यं द्रव्यान्तरमिश्रितञ्च भक्ष्यमेव। तथाच गोतमः केवलमदधीति न भक्ष्यमिति शेषः। गुड़ादिसम्मिश्रितं दध्याद्यभक्ष्यमाह यमः,

गुड़ादिद्रव्यसंमिश्रं वर्ज्जं पर्य्युषितं दधि।
तथैव यावकादीनि मन्थादिरचितान्यपि॥

अत्र प्रायश्चित्ते ब्रह्मपुराणं,

सगुड़ं मरिचाक्तञ्च तथा पर्य्युषितं दधि।
जीर्णं तक्रमपेयञ्च नष्टस्वादञ्च केवलम्॥
प्रमादाद्भक्षितैरेभिर्वने पञ्चव्रतं चरेत्।

---

शूद्रोच्छिष्टञ्चात्र शूद्रोच्छिष्टन्तु विज्ञेयं पूर्वं शूद्रे प्रदर्शितम् इति भविष्योक्तं शूद्रभुक्तोच्छिष्टाशने तु ज्ञानतः पराकस्य वक्ष्यमाणत्वात् तथा गवाद्युच्छिष्टाशने ज्ञानतः त्रिरात्रं वक्ष्यते यथा संवर्त्तः श्वकाकगोभिरुच्छिष्टभोजने तु दिनत्रयम् इति गोमूत्रयावकोऽत्र केवलगोमूत्रक्काथः॥ ७॥

मनुरिति। यानि च शुक्तानि ~उदकैः पुष्पमूलफलैः शुभैरनुन्मादकैरभिसूयन्ते तानि भक्ष्याणि तथा च वृहस्पतिः कन्दमूलफलैः पुष्पैः स्वच्छं शुक्तञ्च वस्तु यत्। अविकारि भवेन्मेध्यमभक्ष्यं तद्विकारकृत्। तथा च देवलः अभक्ष्यं आहुराहारं शुक्तं पर्य्युषितञ्च यत्। अन्यत्र दधिसर्पिर्भ्यामौषधात् मधुनो गुड़ात् इति। यम इति गुड़ादिद्रव्यसंयुक्तं दधि पर्य्युषितं चेन्न भक्ष्यं आदिपदान्मधुगुड़विकारयोर्ग्रहणम्। तथा यावकादीनि मन्थादिरचितानि तक्रादीन्यपि

भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत् ॥

पञ्चव्रतं ज्ञानाच्चिराभ्यासे। अत्र चाब्दिकवनवासव्रते पञ्चदशधेनुव्यवस्थया मासेन सपादधेनुमूल्यं पक्षेण च तदर्द्धात् पुराणद्वयमेव गुरुव्रतत्वात् दातव्यं क्षारलवणञ्च प्रत्यक्षलवणं तथेति भविष्यपुराणेन निषिद्धप्रत्यक्षलवणं ज्ञेयम्। पुनरप्यपवादे मनुः,

यत् किञ्चित् स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम्।
तत् पर्य्युषितमप्याद्यं हविः शेषञ्च यत् भवेत् ॥

विशेषमाह स एव,

चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः।
यवगोधूमजं सर्वं पयसश्चैव विक्रिया ॥

अमी च यदि विकारवन्तो न भवेयुस्तदा भक्ष्याः यथा यमः,

अपूपाश्च करम्भाश्च धानावटकशक्तवः।
शाकं मांसमपूपञ्च सूपं कृषरमेव च ॥
यवागूं पायसञ्चैव यच्चान्यत् स्नेहसंयुतम्।
सर्वं पर्य्युषितं भक्ष्यं शुक्तञ्चेत् परिवर्जयेत् ॥

तथा बृहस्पतिः,

अविकारि भवेन्मेध्यमभक्ष्यं तद्विकारि यत् ॥ ८ ॥

---

गुड़ादिद्रव्यसंयुक्तानि पर्य्युषितानि चेन्न भक्ष्याणि ब्रह्मपुराणमिति जीर्णं चिरस्थितं फेनवत् भक्तमण्डवत् नष्टस्वादं नष्टरसञ्च तक्रमपेयमित्यर्थः। क्षारलवणञ्चेति क्षारलवणनिषेधोऽयं प्रत्यक्षलवणविषयः अक्षारलवणानान्तु प्रत्यक्षाणामपि दोषाभावो वक्ष्यते। अमी चेति अमी दधि तक्रभवेतरपयोविकार यवगोधूमविकारा यदि विकारवन्तः शुक्तरूपा भवेयुस्तदाऽभक्ष्या इत्यर्थः यम इति अपूपा यवगोधूम-

अथ वाग्दुष्टादिभक्षणप्रायश्चित्तम्।

तत्र भक्षणार्हमाह मनुः,

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥

शङ्खः,

वाग्दुष्टं भावदुष्टं च भाजने भावदूषिते।
भुक्त्वान्नं ब्राह्मणः पश्चात् त्रिरात्रन्तु व्रती भवेत्॥

एतदभ्यासे व्रती यावकेन तत्र द्वादश पणा देयाः॥ ९॥

अथ शूद्रभाजनभिन्नकांस्यभोजनप्रायश्चित्तम्।

तत्र पराशरः,

भिन्नभाण्डे तु भुञ्जानो ह्यज्ञानेन द्विजोत्तमः।
सुवर्णोदकसंस्पृष्टं घृतं प्राश्य विशुध्यति॥

ज्ञाने तु संवर्त्तः,

शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाण्डके।

---

निर्मिता अपि तथा करम्भादधिशक्तवोऽपीति एतेषां पर्य्युषितत्वं न दोषाय शुक्तत्वे च दोष इत्यर्थः अपूपं शस्कुल्यादिकम्॥ ८॥

अथ वाग्दुष्टादिभोजनेति। शङ्ख इति भावदुष्टं भविष्योक्तं शष्कुलिख तच्च मृज्जलाद्यप्रोक्षितमेव। यावकेन यवयावकेनेत्यर्थः सकृदशने षट्पणा देया इत्यर्थः॥ ९॥

अथ शूद्रभाजनेति। अत्र इति संसृष्टं संयुक्तमित्यर्थः भाण्डपदमिति सामान्यस्य भाण्डपदस्य विशेषकांस्यपददर्शनात् तत्परत्वमिति हृदयम्। वस्तुतस्तु यत्र तु विशेषवैयर्थ्यात्श्रुतिद्वय कल्पनादेर्विरोधः तत्रैव सामान्यशब्दस्य विशेषदर्शनात् तत्परत्वं यथा औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु। प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुतादश इति जावालवचने सामान्यस्यौरसक्षेत्रजपुत्रस्य पार्वणेन विधानेन देयमाश्रमता सदेति मत्स्यपुराणवचनेऽपिमद्विशेषणवैयर्थ्यभिया साग्नि-

अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

भाण्डपदं कांस्यपरम्।

यथा बौधायनः,

भिन्नकांस्ये तु योऽश्नीयान्नद्यां स्नात्वा जपन् द्विजः।
गायत्र्यष्टसहस्रन्तु एकभक्तस्ततः शुचिः ॥

तथा देवलः,

ताम्ररजतसुवर्णाश्मशङ्खशुक्तिस्फाटिकानां भिन्नमभिन्नमिति न दोषः ॥ १ ॥

अथ लशुनादिभक्षणप्रायश्चित्तम्।

तत्र याज्ञवल्क्यः,

पलाण्डुं विड्वराहञ्च छत्राकं ग्राम्यकुक्कुटम्।
लशुनं गृञ्जनञ्चैव जग्ध्वा चान्द्रायणं चरेत् ॥

---

परत्वम् अत्र तु तादृशविरोधाभावात् सामान्यवचनस्य भाण्डपदस्य सङ्कोचभिया विशेषवचनस्य कांस्यपदस्योपलक्षणत्वमेव यथा सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् इति। मनुवचने द्विजपदस्य सङ्कोचभिया शातातपादिवचने ब्राह्मणपदं द्विजानामुपलक्षणं यथा शातातपः ब्राह्मणश्चेत् सुरापः स्यात् कथञ्चित् काममोहितः अग्निवर्णां सुरां पीत्वा मृतः शुद्धिमवाप्नुयात्। गौतमः सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये इत्यादि ग्रन्थकृतैवोक्तम् अन्यथात्रापि द्विजपदस्य ब्राह्मणपरत्वमेव स्यात् किञ्च यदि भाण्डपदस्य कांस्यपरत्वं तदा देवलवचने भग्नताम्रादिभाण्डानां प्रतिप्रसवो न सङ्गच्छते। तस्मात्ताम्रादितरेषु पित्तलादि-भिन्नभाण्डेषु भोजनं प्रतिषिद्धमेव तत्राप्युक्तमेव प्रायश्चित्तम्। अतएव भोजन-मुपक्रम्य हारीतः। न कार्ष्णायसेन मृत्पात्रेण भिन्नेन नावकीर्णेन। तथा मनुरपि। न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते इति। शिष्टाचारोऽ-प्येवम् एव ॥ १ ॥

एतज्ज्ञानतः सकृत्

अत्र च पुनरुपनयनं कार्य्यमित्यत्र विष्णुः मलानां मद्यानां वाऽन्यतमस्य प्राशने चान्द्रायणं कुर्य्यात्। लशुनपलाण्डुगृञ्जनतद्गन्धि विड्वराह ग्राम्यकुक्कुटगोमांसभक्षणे च सर्व्वेष्वेतेषु च द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्। अज्ञानादाह यमः,

पलाण्डुं कवकञ्चैव गृञ्जनं लशुनं तथा।
चत्वार्य्यज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद्द्विजः॥

अत्रैव हारीतः,

पलाण्डुलशुनगृञ्जनछत्राककुष्माण्डप्राशने च।

कुष्माण्डस्तत् प्रभेदश्छत्राक इति देशान्तरख्यातः। चान्द्रायणेऽष्टौ धेनवः। तप्तकृच्छ्रे पादोनधेनुचतुष्टयम्। एतत् सदृशेऽपि प्रायश्चित्तमाह देवलः,

पलाण्डुसदृशं यत् स्यात् गन्धवर्णरसादिभिः।
अभोज्यं तद्भवेत् सर्वं भुक्त्वा चान्द्रायणं चरेत्॥
लशुनादिषु ये तुल्या गन्धवर्णरसादिभिः।
अभक्ष्यास्ते द्विजातीनां भुक्त्वा सान्तपनं चरेत्॥

अत्र चान्द्रायणं पूर्व्वोक्तविषयमेव। धेनुद्वयसङ्कलितसान्तपनन्तु ज्ञानतोऽशक्तस्य। यत्तु शङ्खलिखितावाहतुः लशुनपला-

---

अथ लशुनादिभक्षणेति। विष्णुरिति मलानां रेतोमूत्रपुरीषाणां मद्यानां पानसादीनां त्रिविधसुराव्यतिरिक्तानामित्यर्थः लशुनादिभक्षणे च चान्द्रायणमिति सम्बन्धः तद्गन्धिः लशुनादिसदृशगन्धिः। अत्रैवेति अत्र तप्तकृच्छ्रविषय इत्यर्थः पूर्व्वोक्तरीत्येति सार्द्धैकाहदुग्धपानेन एकोपवासपर्य्यवसानात् द्वादशदिनैरुपवासाष्टकं पर्य्यवस्यतीति सामान्याभोज्यान्नभक्षणप्रायश्चित्तप्रकरणोक्तरीत्येत्यर्थः यच्चेति अत्र

खुगृञ्जनकरञ्जकिंपाककुम्भीभक्षणे द्वादशरात्रं पयः पिबेत्। तदत्र पूर्वोक्तरीत्या उपवासाष्टकपर्य्यवसानादुपवासाष्टकसङ्कलितं प्राजापत्यं सपादं संपद्यते। तेनैतत् बालस्त्रियोरज्ञानात् सकृद्भोजने वेदितव्यम्। किंपाकं छत्राकं कुम्भी पाना इति ख्याता। यच्च मनुना,

पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः।

इत्युक्तं यद्दा शङ्खेन भुक्ता पलाण्डुं लशुनमित्युक्ता अनन्तरं कुर्य्यात् संवत्सरं व्रतमित्यनेन संवत्सरयावकव्रतञ्चोक्तं तच्चिरतरकालाभ्यासे। व्याधितस्यौषधक्रियायामपवादमाह सुमन्तुः लशुनपलाण्डुगृञ्जनकुम्भीश्राद्धसूतिकाभोज्यान्न मधुमांसरेतोऽमिध्याभक्ष्यभक्षणे गायत्र्यष्टसहस्रेण मूर्द्धि सम्पातानवनयेत् उपवासश्च एतान्येव व्याधितस्य भिषक्क्रियायामप्रतिषिद्धानि भवन्ति यानि चान्यान्येवंप्रकाराणि तेष्वप्यदोष इति। सम्पातानुदकविन्दून् शिरसि पातयेत्। एतत् प्रायश्चित्तमत्यन्ताशक्तस्य ज्ञानतः सकृद्भक्षणे। मधुमांसाशने च ब्रह्मचारिणामेव॥ २॥

अथ सूतकमृतकान्नभक्षणप्रायश्चित्तम्।

तत्र मनुना,

अनिर्दशस्य प्रेतान्नमतुष्टिकरमेव च।

---

मनुनोक्तं यच्च शङ्खेनोक्तं तच्चिरतराभ्यास इत्यन्वयः सुमन्तुरिति अन्यत्र भक्ष्यालाभे रोगिणः प्रेतश्राद्धसूतिकावार्द्धुषिकादि द्विजान्नभक्षण इत्यर्थः। सावित्र्यष्टसहस्रसम्पातसहितोपवासो व्याधितस्य ज्ञानविषयः अज्ञाने तु दोषाभावमाह एतान्येवेति एतदिति प्रायश्चित्तं सम्पातसहितोपवासरूपं ज्ञानेऽत्यन्ताशक्तस्य रोगिण इत्यर्थः॥ २॥

इत्यनेनाज्ञानज्ञानाभ्यां सकृद्विषये त्रिरात्रप्राजापत्ये उक्ते एव। यमेनापि प्राजापत्यं विहितम्। पराशरः,

अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा।
प्रायश्चित्तं कथं तत्र चातुर्वर्ण्ये विधीयते॥
गायत्र्यष्टसहस्रेण शुद्धिः स्यात् शूद्रसूतके।
विशः पञ्चशतेनैव क्षत्रियस्य शतेन च॥
ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुध्यति।
अथ वा वामदेव्येन साम्नैवैतेन शुध्यति॥

एतल्लघुत्वादापन्नस्य सकृदज्ञानतः। अष्टसहस्रम् अष्टोत्तरसहस्रम्। विष्णुः ब्राह्मणादीनामशौचे यः सकृदन्नमश्नाति तस्य तावदशौचं यावत्तेषामशौचापगमे प्रायश्चित्तं कुर्य्यात्। सवर्णस्याशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तन्निमग्नस्त्रिरघमर्षणं जपित्वा उत्तीर्य्य गायत्र्यष्टसहस्रं जपेत्। क्षत्रियाशौचे ब्राह्मणस्त्वेतदेवोपोषितः कृत्वा शुद्ध्यति। वैश्याशौचे राजन्यः वैश्यस्याशौचे ब्राह्मणस्त्रिरात्रोपोषितः ब्राह्मणाशौचे

---

अथ सूतकमृतकान्नेति। यमेनापीति यमवचनन्तु सामान्याभोज्यान्नभक्षणप्रायश्चित्तप्रकरणे द्रष्टव्यम्। आपन्नस्येति दुर्भिक्षादिपीड़ितस्यान्यन्नालाभ इत्यर्थः। विष्णुरिति तस्य तावदशौचमिति एतदनापद्विषयं तत्र प्रायश्चित्तन्तु ज्ञाने प्राजापत्यम् अज्ञाने त्रिरात्रं मनूक्तमित्यर्थः। आपन्नस्य तु यावज्जीवनं तावद्दिनमशौचं यथा कूर्मपुराणे यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः। तावन्त्यहान्यशौचं स्यात् प्रायश्चित्तं ततश्चरेदिति आपन्नस्य प्रायश्चित्तमाह सवर्णस्याशौच इति द्विजपदं त्रैवर्णिकपरं वैश्याशौच इति राजन्यश्चोपोषितः पूर्वोक्तस्रवन्तीस्नानगायत्र्यष्टसहस्रजपं कुर्य्यात् वैश्याशौचे ब्राह्मण इति त्रिरात्रोपवासस्रवन्तीस्नानगायत्र्यष्टसहस्रजपो ब्राह्मणस्यैवेति ब्राह्मणाशौच इति अत्रोपवासो नास्ति केवलं

राजन्यः क्षत्रियाशौचे वैश्यः स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत् वैश्यस्य ब्राह्मणाशौचे गायत्र्यष्टशतं जपेत्। शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यं चरेत्। शूद्रस्य द्विजाशौचे भुक्त्वा स्नानमाचरेत्। शूद्राशौचे शूद्रः स्नात्वा पञ्चगव्यं पिबेत्। एतदापद्यज्ञानतः सकृद्भोजनविषयम् ॥ ३ ॥

अथवा आमान्नविषये पराशरविष्णुवचने बोद्धव्ये। शङ्खः,

शूद्रस्य सूतके भुक्त्वा षण्मासान् व्रतमाचरेत्।
वैश्यस्य च तथा भुक्त्वा त्रीन् मासान् व्रतमाचरेत् ॥
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत्।
ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती भवेत् ॥

एतज्ज्ञानाभ्यासविषयम्। मासैकयावकाहारे धेनुद्वयम्। विप्राशौचेऽत्यन्ताभ्यासे शातातपः,

उच्छिष्टमविच्छिष्टमन्नञ्च मृतसूतके।
चौरस्यान्नं नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत् ॥

शूद्रस्य तु एतस्य पादो विष्णुवचनाज्ज्ञेयः। तथा जलपाने अङ्गिराः,

---

स्रवन्तीस्नानगायत्रीपञ्चशतजपः वैश्यस्येति गायत्र्यष्टशतजपमात्रं न तु स्रवन्तीस्नानमिति अष्टशतमष्टाधिकशतम्। शूद्राशौच इति द्विजोऽत्र ब्राह्मणः क्षत्रियवैश्ययोस्तु पादपादह्रानिः। शूद्रस्येति अत्र द्विजपदं त्रैवर्णिकपरम् ॥ ३ ॥

अथवेति आमान्नभक्षणेऽप्येतदेव प्रायश्चित्तमिति भावः। एतदिति अभ्यासाभिधानात् शङ्खोक्ताङ्कं सकृद्भोजने मन्तव्यं यथा ज्ञानतः शूद्रसूतके ब्राह्मणस्य षड्धेनवः वैश्यस्य सूतके धेनुत्रयं क्षत्रियसूतके धेनुद्वयं ब्राह्मणसूतके धेनुरेका मनूक्तेति भावः क्षत्रियादीनान्तु कामतः सकृद् ब्राह्मणसूतके भोजने मनूक्तप्राजापत्यपादपादह्रानिः एवमुत्तरत्रापि। विप्राशौच इति ब्राह्मणस्येति शेषः।

सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः।
पिवेत् पानीयमज्ञानात् समश्नीयात् स्पृशेत वा॥
पानीयपाने कुर्वीत पञ्चगव्यस्य भक्षणम्।
त्रिरात्रं भोजने प्रोक्तं स्पृष्ट्वा स्नानं विधीयते॥

सकृज्जलपाने पञ्चगव्यं पीत्वोपवासः। सकृद्भोजने त्रिरात्रं मनुसमानम्॥ ४॥

अथैकादशाहादिश्राद्धान्नभोजनप्रायश्चित्तम्।

तत्र शङ्खः,

चान्द्रायणं नवश्राद्धे पराको मासिके मतः
पक्षत्रयेऽतिकृच्छ्रं स्यात् षाण्मासे कृच्छ्रमेव च।
आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके॥

नवश्राद्धं चतुर्थाहादिश्राद्धम्। यथा यमः,

---

नवश्राद्धमिति सकृद्भोजने मन्तव्यम्। शूद्रस्येति एतस्य चान्द्रायणस्य पादः पादशेषस्तु शूद्रजातिषु शस्यत वति बृहस्पतिविष्णुवचनादित्यर्थः। मनुसमानमिति ज्ञाने तु द्विगुणमित्यर्थः॥ ४॥

अथैकादशाहादीति प्रथममासिक इति लक्षणया मासिकषाण्मासिकाब्दिकपदैस्तथाभिधानादिति भावः। वस्तुतस्तु मासिकपदेन द्वादशमासिकान्युच्यन्ते षण्मासपदेन षाण्मासिकद्वयमुच्यते। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा इति परिशिष्टवचनात् तथा संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय इति विष्णुवचनात् यौगिकमाब्दिकपरं सपिण्डीकरणाभिधायकम् एतेषु यथायथं पराककृच्छ्रपादकृच्छ्रव्रतानीति पादकृच्छ्रः चतुरहसाध्यः न तु प्राजापत्यस्य पादः स्वतन्त्रव्रतसाहचर्यादिति भावः। द्वितीयाब्दिक इति द्वितीयाब्दिकः प्रथमसांवत्सरिकश्राद्धम्। अयं भावः उक्तरीत्या आब्दिकपदेन सपिण्डीकरणमुच्यते ततश्च आब्दिकात् सपिण्डीकरणात् पुनः पश्चात् क्रियत इति व्युत्पत्त्या पुनराब्दिकपदेन प्रति-

चतुर्थे पञ्चमे चैव नवमैकादशे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥

एतत् सकृत् भोजने चान्द्रायणे सार्द्धसप्तधेनवः। प्रथममासिके पराकः तत्र धेनुपञ्चकम्। त्रैपक्षिकेऽतिकृच्छ्रं तत्र धेनुत्रयं द्विमासिकादिषाण्मासिकपर्य्यन्तं कृच्छ्रं तत्र धेनुरेका आब्दिके अब्दमध्ये यद्विधेयं तेन षण्मासादूर्द्धमब्दपर्य्यन्तं कृच्छ्रपादस्तत्र पुराणैकम्। पुनराब्दिके द्वितीयाब्दिके एकाहस्तत्र रूप्य-रत्तिकाषट्कं पितृलोकप्राप्तावपि देयं वचनादित्यर्थः॥ ४॥

यत्तु स्यातां षाण्मासिकाब्दिके इति कृत्वा छन्दोगपरिशिष्टवचनं पठितवन्तस्तत्र षाण्मासिकं न्यूनषाण्मासिकम् आब्दिकं न्यूनवार्षिकमिति व्याख्याय प्रायश्चित्ते तु पुनराब्दिक इति प्रथमाब्दिक एवैकाहं विदधति पूर्वेद्युराब्दिकं

---

संवत्सरं कुर्य्यादित्यनेन विहितं प्रथमसांवत्सरिकश्राद्धमुच्यते पुनर्यं आब्दिक इत्यर्थः। तथा च लघुहारीतेन असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः। तथैव मासिकं पूर्वं सपिण्डीकरणं तथेति सपिण्डीकरणात् पृथगेव प्रथमसांवत्सरिकश्राद्धमुक्तम् एतस्यैव ग्रहणे एकाहः। न च द्वितीयाब्दे क्रियमाणं पुनराब्दिकमिति केषाञ्चिद्व्याख्यानं युक्तं पुनरब्दे भव इति व्युत्पत्त्या पौनराब्दिकपदापत्तेः निषेधवचनाभावेन प्रथमसांवत्सरिके दोषाभावात् द्वितीयसांवत्सरिकस्यानौचित्याच्च। पितृलोकेति सपिण्डीकरणात् पितृलोकप्राप्तेर्ज्ञातत्वादिति भावः॥ ४॥

यत्त्विति स्यातां षाण्मासिके तदेति परिशिष्टवचने षाण्मासिकाब्दिक इति पाठं कृत्वा तत्र वचने आब्दिकपदं न्यूनाब्दिकमिति व्याख्याय तदनुसारात् परतः क्रियमाणे पुनराब्दिकपदाभिधेये प्रथमाब्दक्रियमाणे सपिण्डीकरण एव एकाहं यद्विदधति व्यवस्थापयन्ति केचित् तच्चिन्त्यमिति परेणान्वयः अत्रैव तेषामुपपत्तिमाह पूर्वेद्युरिति वार्षिकं न्यूनवार्षिकं प्रथमः प्रथमाब्दिकः सपिण्डीकरणमेवावगम्यते तथाच सति द्वितीयाब्दिके प्रथमसांवत्सरिके कथं प्राय-

श्राद्धम् । परेद्युः पुनराब्दिकमिति पुनराब्दिकः प्रथमाब्दिक एवावगम्यते शङ्खवचनात् तथाहि सपिण्डनेन प्रेतत्वविमुक्तः कथं द्वितीयाब्दिके प्रायश्चित्तमर्हतीति तच्चिन्त्यं परिशिष्टवचने षाण्मासिकशब्दस्य गौणस्योक्तत्वात् अन्यस्य ग्रहणानर्हत्वात् ततश्च स्यातां षाण्मासिके तदेतीदृशादेवाकरपाठात् सर्वे परिक्षेप्याः ॥ ५ ॥

---

## अथ हस्तदत्तशूद्रादत्तघृतादिभक्षणप्रायश्चित्तम् ।

तत्र निन्दायां वशिष्ठः,

हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्बिषम् ॥
तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा ।
प्रदद्यान्न तु हस्तेन नायसेन कदाचन ॥

---

श्चित्तमित्यर्थः । परिशिष्टवचन इति षाण्मासिकपदे षण्मासपदस्य गौणस्योक्तत्वात् एकाहेन न्यून इत्यभिधानात् अन्यस्य च मुख्यस्य षण्मासस्य ग्रहणानर्हत्वात् वक्तुमनर्हत्वात् ततश्चोभयसमाधेये षाण्मासिकपदस्य न्यूनषाण्मासिकवाचकत्वे सति स्यातां षाण्मासिके तदेत्याकरपाठानुरोधात् सर्वे वादिनः प्रतिक्षेप्याः यत आब्दिकपाठ एव तेषां मूलं स तु पाठो यद्यनाकरस्तदा स्वयमेव तन्मतमपास्तम् । पूर्वेद्युर्वार्षिकं श्राद्धमिति शङ्खवचनस्य त्वयमर्थः पूर्वदिनेऽपराह्णानुरोधात् कृते सपिण्डिकरणे परेद्युर्मध्याह्ने यदा तत्तिथिलाभस्तदा तत्र प्रथमसांवत्सरिकं कार्यमिति यदा परदिने मध्याह्ने तत्तिथिर्न लभ्यते तदा पूर्वेद्युरेव सपिण्डनपरतिथावपराह्णेऽपि कार्यं सपिण्डनोत्तरविहितत्वात् प्रतिसांवत्सरिकस्य रात्र्यादीतरस्य श्राद्धकालत्वाच्चेति अन्यथा प्रतिसंवत्सरविधिबाधापत्तेः ॥ ५ ॥

अथ हस्तदत्तेति वशिष्ठ इति दातारं नोपतिष्ठन्ते फलेनेति शेषः एकेन

भविष्ये,

आयसेन तु पात्रेण यदन्नन्तु प्रदीयते।
भोक्ता विष्ठासमं भुङ्क्ते दाता तु नरकं व्रजेत्॥

प्रायश्चित्ते यमः,

माक्षिकं फाणितं शाकं गोरसं लवणं घृतम्।
हस्तदत्तानि भुक्त्वा तु भोक्ता सान्तपनं चरेत्॥

सान्तपनञ्च द्व्यहसाध्यम् अत्रैकपुराणं देयम् एतज्ज्ञानतोऽज्ञानतोऽर्द्धम् एतच्छूद्रादत्तेऽपि ब्रह्मपुराणे साहचर्य्यदर्शनात्। तद्यथा,

एकेन पाणिना दत्तं शूद्रादत्तं न भक्षयेत्।
घृतं तैलञ्च लवणं पानीयं पायसं तथा॥

लौहपात्रेण परिवेशनेऽपि एतदेव प्रायश्चित्तम्। वशिष्ठवचने हस्तदत्तस्येवास्यापि निषेधेन तुल्यन्यायात्॥ १॥

---

अथाकृतापोशानाकृतमौनभोजनप्रायश्चित्तम्।

तत्र संवर्त्तः,

आपोशानमकृत्वा तु यो भुङ्क्ते नापदि द्विजः।
भुञ्जानश्च यदा ब्रूयात् गायत्र्यष्टशतं जपेत्॥

अष्टशतम् अष्टोत्तरशतम्॥ २॥

---

पाणिनेति एकेन केवलेनेत्यर्थः घृतादिकमित्युपलक्षणं सर्वं भक्ष्यमित्यर्थः॥ १॥

अथाकृतापोशानेति। आपोशानं प्रथमगण्डूषजलपानम्॥ २॥

## अथाकृताचमनस्य पानभोजनप्रायश्चित्तम् ।

संवर्त्तः,

अनाचान्तः पिबेद्यस्तु भक्षयेद्वापि किञ्चन ।
गायत्र्यष्टसहस्रन्तु जप्यं कृत्वा विशुद्ध्यति ॥
आचामेच्चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणम् ।
ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥
दन्तलग्ने फले मूले भुक्तस्नेहे तथैव च ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

इति शातातपीयाभ्यां,

कषायकटुताम्बूले भुक्तस्नेहानुलेपने ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥

इति लघुहारीतवचनाच्च अनाचान्तः कषायकटुताम्बूले-व्यतिरिक्तं द्रव्यं सकृद्भक्षयित्वा दुग्धमधुनारिकेलजलादिकञ्च सकृत् पीत्वा अष्टोत्तरसहस्रावृत्तां गायत्रीं जपेत् । अभ्यासे त्वेतदेव द्विगुणादि । स्नातकव्रतलोपे मनूक्तोपवासो वा ॥ ३ ॥

---

अथाकृताचमनस्येति । संवर्त्त इति अनाचान्तः अकृतद्विराचमनः भक्ष्य-नाणस्तु प्रयतोऽपि द्विराचामेदिति वशिष्ठवचनात् आचामेति आचमनमत्र द्विरा-चमनं द्विराचामेद्वासः परिधाय ओष्ठौ च संस्पृश्य यत्रालोमकाविति वशिष्ठ-वचनात् आचान्त इति यद्यपि शातातपादिवचने भोजनोत्तरकालीनमेवाचमनं निषिद्धते तथाप्येकविषयकयोर्द्वयोराचमनयोरेकस्य निषेधेऽन्यस्याप्यर्थत एव निषेध इति हृदयम् । उपवासो वेति परदिन इत्यर्थः ॥ ३ ॥

अथ यज्ञोपवीतरहितस्य भोजनप्रायश्चित्तम्।

लघुहारीतः,

विना यज्ञोपवीतेन भुङ्क्ते च ब्राह्मणो यदि।
स्नानं कृत्वा जपं कृत्वा उपवासेन शुद्ध्यति॥

मन्त्रानादेशे गायत्रीतिवचनादनिर्दिष्टे शतमितिवचनाच्च शतावृत्तिगायत्रीजपं कृत्वोपवसेत्॥ ४॥

---

अथ रेतोमूत्रपुरीषभक्षणप्रायश्चित्तम्।

तत्र बृहस्पतिः,

अलेह्यानामपेयानामभक्ष्याणाञ्च भक्षणे।
रेतोमूत्रपुरीषाणां शुद्धैर चान्द्रायणं चरेत्।

याज्ञवल्क्यः,

अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥

सुरां मुख्येतरां गौड़ीं माध्वीं च। गौतमः। अमद्यपाने

---

अथ यज्ञोपवीतरहितस्येति। लघुहारीत इति स्नानं भोजनोत्तरमेव जपोपवासौ च परेऽहनीत्यर्थः॥ ४॥

अथ रेतोमूत्रपुरीषेति। बृहस्पतिरिति वचनमिदं सामान्याभक्ष्यभक्षण-प्रायश्चित्तप्रकरणे व्याख्यातम्। याज्ञवल्क्य इति वचनमिदम् अज्ञानतः सकृद्विषयं तथाच भविष्ये रेतो मूत्रपुरीषाणां गौड़ीमाध्व्योश्च प्राशने। क्रव्यादपशु-विष्ठानां संस्काराच्छुद्धिरिष्यते इत्युक्तम् एतत् सगुणविषयम् अतएव सगुणयोः क्षत्रियवैश्ययोरपि गौड़ीमाध्वीप्राशने संस्कार उक्तः। निर्गुणयोस्तु दोषा-भाव एव उक्तः इति सुरापानप्रकरणे तदितरविषये त्वाह गौतम इति मद्यपदं

यद्वाङ्गिरसोक्तं,

> प्राजापत्यं चरेद्वैश्योऽतिकृच्छ्रं क्षत्रियश्चरेत्।
> कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रो विण्मूत्रभक्षणे॥

इति तदप्यज्ञानात् द्विरभ्यासे कृच्छ्रातिकृच्छ्रे मनूक्ते धेनुपञ्चकम्। त्रिरभ्यासे तु याज्ञवल्क्योक्तैकविंशतिदिनसाध्यधेनुषट्कात्मकः परिकल्प्यः। अत्रापि पुनरुपनयनं सामान्योक्तं ज्ञेयम्। विण्मूत्रदूषितफलादौ प्रायश्चित्तमाह लघुविष्णुः,

> मृद्वारिकुसुमादींश्च फलकन्देक्षुमूलकान्।
> विण्मूत्रदूषितान् प्राश्य चरेत् कृच्छ्रञ्च पादतः॥
> सन्निकृष्टेऽर्द्धमेव स्यात् कृच्छ्रस्याशु विशोधनम्।

दूषितत्वं संसर्गमात्रं सन्निकृष्टत्वं तु महान् संसर्गः तेन लघु-

---

प्राजापत्यमिति। यद्यपि वैश्येऽर्द्धमिति वचनात् अज्ञानोक्ततप्तकृच्छ्रार्द्धं वैश्ये भवति तथापि वाचनिकमेव प्राजापत्यमिति। क्षत्रिये तु पादोनं क्षत्रिये मतमिति वचनात् पादोनतप्तकृच्छ्रतुल्यमतिकृच्छ्रं युक्तं विप्रस्य त्वज्ञानात् विण्मूत्रभक्षणे कृच्छ्रातिकृच्छ्राख्यं व्रतम् अत्र कृच्छ्रातिकृच्छ्रमित्येकवचनादेकमेव व्रतं न तु कृच्छ्रमतिकृच्छ्रञ्चेति व्रतद्वयं स च कृच्छ्रातिकृच्छ्रः सुमन्तूक्तो याज्ञवल्क्योक्तश्चेति द्विविधः सुमन्तूक्ते द्वादशरात्रनिराहारः कृच्छ्रातिकृच्छ्र इति वचनात् द्वादशाहसाध्ये पञ्चधेनवः याज्ञवल्क्योक्ते तु कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिमितिवचनादेकविंशतिदिनजलपानसाध्ये षड्धेनवः तत्र यद्याङ्गिरोवचने कृच्छ्रातिकृच्छ्रः सुमन्तूक्तः तदा द्विरभ्यासात् अज्ञानकृतविट्कृत्भक्षणविषयः यदि याज्ञवल्क्योक्तः स्यात् तदा त्रिरभ्यासविषयः संकलनीय इत्यर्थः। यद्यप्यभ्यासे प्रागुक्ततप्तकृच्छ्रस्य द्वैगुण्यादिकं युज्यते तथापि वचनस्यानन्यगत्याऽल्पत्वेऽपि वाचनिकमिति ध्येयम्। सामान्योक्तमिति मत्तानां मद्यानां वा इत्याद्यभिधाय सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात् इति विष्णुवचनोक्तमित्यर्थः। कृच्छ्रं पादकृच्छ्रम् इत्यर्थः। कृच्छ्रस्यार्द्धं प्राजापत्यार्द्धमित्यर्थः।

गुरुप्रायश्चित्तम्। एतच्च रसस्वादाद्यनुपलम्भपक्षेऽज्ञानतः सकृत् विषयम्। ज्ञानतो द्वैगुण्यम्। रसाद्युपलम्भे तु कामतो व्यासः,

संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः।
भुक्त्वा स्वभावदुष्टञ्च तप्तकृच्छ्रं समाचरेत्॥

तप्तकृच्छ्रं गोतमोक्तं द्वादशाहसाध्यम्। तेन पादो न धेनुचतुष्टयं देयम्। अज्ञानत उपलम्भेऽर्द्धम्॥ ६॥

---

अथ मृल्लोष्टभक्षणप्रायश्चित्तम्।

तत्र निन्दायां भविष्यपुराणम्,

अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षं लवणं तथा।
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणम्॥

प्रत्यक्षलवणञ्चात्र क्षारलवणम्।

सैन्धवं लवणञ्चैव यच्च सामुद्रकं भवेत्।
पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः॥

इति वायुपुराणवचनात्। अतएव,

भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत्।

---

व्यास इति संसर्गदुष्टमुक्तविषयं क्रियादुष्टं पतितैः स्पर्शादिभिः दुष्टान्नञ्च ज्ञानात् सकृद् भुक्त्वा पुरीषन्तु स्वभावत इति भविष्योक्तं स्वभावदुष्टं पुरीषञ्च बलात्काराभ्यासे भुक्त्वा तप्तकृच्छ्रं चरेदित्यर्थः। उपलम्भे रसोपलम्भे अज्ञानतस्तप्तकृच्छ्रार्द्धं धेनुद्वयमित्यर्थः॥ ६॥

अथ मृल्लोष्टभक्षणेति। दन्तधावनमङ्गुल्येति भक्षणकाले दृष्टलवणमित्यर्थः

इति ब्रह्मपुराणोक्तम्। प्रायश्चित्ते चात्र प्रचेताः मृल्लोष्ट्रखादनेऽहोरात्रमभोजनाच्छुद्धिः। एतत् सकृत्। यत्तूशनसोक्तं मृल्लोष्ट्रप्राशने तप्तकृच्छ्रम्। तच्चिराभ्यासे तप्तकृच्छ्रश्चतुरहसाध्यः तत्र सपादधेनुः॥ १॥

---

अथ ब्रह्मचारिणो मधुमांसादिभक्षणप्रायश्चित्तम्।

तत्र मनुः,

मासिकान्नं तु योऽश्नीयादसमावर्त्तको द्विजः।
स त्रीण्यहान्युपवसेदेकाहञ्चोदके वसेत्॥

इदमज्ञानतः मासिकान्नपदं सकलप्रेतश्राद्धोपलक्षकम्। वक्ष्यमाणसंवर्त्तवचनात् एकाहमुदके वसेदिति त्र्यहमुपोष्य चतुर्थेऽह्नि जले वसेदित्यर्थः। तथाच देवलः,

मृतान्नं मधुमांसञ्च यद्यश्नाति व्रती क्वचित्।
त्रिरात्रोपोषितः सम्यक् रात्रिमेकां जले वसेत्॥

ज्ञाने तु संवर्त्तः,

सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च।

---

तत्र क्षारलवणमेव सामुद्रादिलवणस्य प्रत्यक्षस्याप्यदोषकथनात् भुक्त्वेति ब्रह्मपुराणोक्तं प्रत्यक्षलवणविषयमित्यर्थः॥ १॥

अथ ब्रह्मचारिण इति मासिकान्नमिति प्रेतश्राद्धभोजने गृहस्थस्य चान्द्रायणादिकं प्रागुक्तं ब्रह्मचारिणस्तु सदैव भिक्षाशित्वादल्पप्रायश्चित्तं युज्यत एवेति भावः यमेन त्विति श्राद्धमात्रे प्रेतश्राद्धमात्रे वैपक्षिकादावपीत्यर्थः न त्वमावास्यादिश्राद्धे सूतकान्नसमभिव्याहारात् ब्राह्मणः काममश्नीयात् श्राद्धे व्रतमपीडयन्निति

गुरुप्रायश्चित्तम्। एतच्च रसस्वादाद्युपलम्भपक्षेऽज्ञानतः सकृत् विषयम्। ज्ञानतो द्वैगुण्यम्। रसाद्युपलम्भे तु कामतो व्यासः,

संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः।
भुक्त्वा स्वभावदुष्टञ्च तप्तकृच्छ्रं समाचरेत्॥

तप्तकृच्छ्रं गौतमोक्तं द्वादशाहसाध्यम्। तेन पादो न धेनु-चतुष्टयं देयम्। अज्ञानत उपलम्भेऽर्द्धम्॥ ६॥

---

अथ स्पष्टलवणभक्षणप्रायश्चित्तम्।

तत्र निन्दायां भविष्यपुराणम्,

अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षं लवणं तथा।
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणम्॥

प्रत्यक्षलवणञ्चात्र क्षारलवणम्।

सैन्धवं लवणञ्चैव यच्च सामुद्रकं भवेत्।
पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः॥

इति वायुपुराणवचनात्। अतएव,

भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत्।

---

व्यास इति संसर्गदुष्टमुक्तविषयं क्रियादुष्टं पतितैः स्पर्शादिभिः दुष्टानञ्च ज्ञानात् सकृद् भुक्त्वा पुरीषन्तु स्वभावत इति भविष्योक्तं स्वभावदुष्टं पुरीषञ्च बलात्कारा-भ्यासे भुक्त्वा तप्तकृच्छ्रं चरेदित्यर्थः। उपलम्भे रसोपलम्भे अज्ञानतस्तप्तकृच्छ्राद्धं धेनुद्वयमित्यर्थः॥ ६॥

अथ स्पष्टलवणभक्षणेति। दन्तधावनमङ्गुल्येति भक्षणकाले दृष्टलवणमित्यर्थः

इति ब्रह्मपुराणोक्तम्। प्रायश्चित्ते चात्र प्रचेताः मृल्लोष्ट्र-खादनेऽहोरात्रमभोजनाच्छुद्धिः। एतत् सकृत्। यत्तूशन-सोक्तं मृल्लोष्ट्रप्राशने तप्तकृच्छ्रम्। तच्चिराभ्यासे तप्तकृच्छ्रञ्चतु-रहसाध्यः तत्र सपादधेनुः॥ १॥

---

अथ ब्रह्मचारिणो मधुमांसादिभक्षणप्रायश्चित्तम्।

तत्र मनुः,

मासिकान्नं तु योऽश्नीयादसमावर्त्तको द्विजः।
स त्रीण्यहान्युपवसेदेकाहञ्चोदके वसेत्॥

इदमज्ञानतः मासिकान्नपदं सकलप्रेतश्राद्धोपलक्षकम्। वक्ष्य-माणसंवर्त्तवचनात् एकाहमुदके वसेदिति त्र्यहमुपोष्य चतुर्थेऽह्नि जले वसेदित्यर्थः। तथाच देवलः,

मृतान्नं मधुमांसञ्च यद्यश्नाति व्रती क्वचित्।
त्रिरात्रोपोषितः सम्यक् रात्रिमेकां जले वसेत्॥

ज्ञाने तु संवर्त्तः,

सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च।

---

तच्च क्षारलवणमेव सामुद्रादिलवणस्य प्रत्यक्षस्याप्यदोषकथनात् भुक्तेति ब्रह्म-पुराणोक्तं प्रत्यक्षलवणविषयमित्यर्थः॥ १॥

अथ ब्रह्मचारिण इति मासिकान्नमिति प्रेतश्राद्धभोजने गृहस्थस्य चान्द्रा-यणादिकं प्रागुक्तं ब्रह्मचारिणस्तु सदैव भिक्षाशित्वादल्पप्रायश्चित्तं युज्यत एवेति भावः यत्नेन त्विति श्राद्धमात्रे प्रेतश्राद्धमात्रे वैपक्षिकादावपीत्यर्थः न त्वमावास्यादि-श्राद्धे सूतकान्नसमभिव्याहारात् ब्राह्मणः काममश्नीयात् श्राद्धे व्रतमपीड़यन्निति

ब्रह्मचारी तु योऽश्नीयात् मधुमांसं कथञ्चन ॥
प्राजापत्यं तु कृत्वासौ मौञ्जीहोमेन शुध्यति ।

यमेन तु श्राद्धमात्र एव कृच्छ्र उक्तः। यथा,

मधुमांसञ्च योऽश्नीयात् श्राद्धं सूतकमेव च ॥
प्राजापत्यं चरेत् कृच्छ्रं व्रतशेषं समापयेत् ।

मांसं भक्ष्यमांसं सूतकं सूतकमृतकान्नमित्यर्थः। अतएव वशिष्ठः ब्रह्मचारी चेन्मधुमांसमश्नीयात् शिष्टभोजनीयम्। कृच्छ्रं द्वादशरात्रं चरित्वा व्रतशेषं समापयेत्। श्राद्धसूतकभोजनेषु चैवमिति शिष्टभोजनमर्हतीति शिष्टभोजनीयं तच्च भक्ष्यपशोरेव। तत्रापवादमाह देवलः,

अकामापन्नं मधुवाजसनेये न दूष्यति ।

अकामापन्नमज्ञानभक्षितम् अज्ञानकृतपापमतो नास्ति। न तु पापमेव नास्तीत्यर्थः। वाजसनेयग्रहणमादरार्थम्। तथा ब्रह्मचार्य्यधिकारे बौधायनः। स चेद्व्याधीयीत कामं गुरूच्छिष्टं भैषज्यार्थे सर्वं प्राश्नीयात्। येनेच्छेत् तेन चिकित्सेत् स यदा अगदः स्यात् अथादित्यमुपतिष्ठेत् हंसः शुचिसदित्येतयेत्यादि ॥ २ ॥

---

याज्ञवल्क्यवचनाच्चेति। तच्चेति मांसमित्यर्थः। देवल इति वाजसनेये यजु वेदे आदरार्थं प्रामाण्यप्रदर्शनार्थमित्यर्थः। अज्ञानकृतेति अज्ञानकृते यत्पा तदिह नास्ति न तु पापमेव नास्ति किन्तु स्नानाद्यपनेयं पापमस्तीत्यर्थः। चेदिति यदि वेदाध्ययनं न कुर्य्यात्तदा गुरूच्छिष्टे दोषो नास्ति अध्येता तु ायेदित्यर्थः। व्याधीयीतेति पाठे त्वयमर्थः विशेषेण आ सम्यगधीयीत चे व गुरूच्छिष्टं भुञ्जीत ॥ २ ॥

अथ ब्रह्मचारिण आमिषभाण्डपक्वान्नभोजनप्रायश्चित्तम्।

लघुहारीतः,

आमिषस्य तु यो भाण्डे पक्वमश्नाति सव्रतः।
कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्॥

एतत् प्रमादात् सकृत्। ज्ञाने तु तद्द्वैगुण्यादिकम्। क्षीरपानाशक्तेनैकपुराणं देयम्॥ ३॥

---

अथ देवतातिथिभृत्यादिवर्जनभोजनप्रायश्चित्तम्।

निन्दायां मार्कण्डेयपुराणं,

देवतातिथिभृत्येषु भूतेष्वभ्यागतेषु च।
अभुक्तवत्सु येऽश्नन्ति तद्वत् पित्रग्निपक्षिषु॥
दुष्टान्नपूयनिर्यासभुजः सूचीमुखास्तु ते।
जायन्ते गिरिवर्ष्माणः पश्यैते यादृशा नराः॥

अत्र प्रायश्चित्तविशेषाश्रवणात् अभ्यासे धेनुरेका देया यत्रोक्तमित्याद्युशनो दर्शनात्॥ ४॥

---

अथ ब्रह्मचारिण इति स्पष्टार्थम्॥ ३॥

अथ देवतातिथीति मार्कण्डेयपुराणमिति देवता देवपूजा अतिथिरध्वनीनोऽसम्बन्धी भृत्याः भरणीयाः सुतकन्यादयः भूतानि बलिदेवताः अभ्यागताः गुरुमित्रादयः पितरो नित्यश्राद्धदेवताः अग्नयो गार्हपत्यादयः पक्षिणः काकादयः काम्यबलिदेवताः एते पुरः स्थिताः विरूपाः यादृशाः नराः तादृशा जायन्त इत्यर्थः अत्रेति प्रायश्चित्तविशेषाश्रवणात् वेदोदितानां नित्यानां कर्मणां समतिक्रमे इति मनुवचनात् उपवास इत्यर्थः। अभ्यासे इति यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनम्। प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः इत्युशनोवचनम्॥ ४॥

## अथास्थ्यादिदूषितान्नभोजनप्रायश्चित्तम्।

तत्र ब्रह्मपुराणे,

अस्थ्यादिदूषितस्यान्नं भुञ्जानस्य यदा भवेत्।
स्नात्वार्कमर्चयित्वा तु घृतं प्राश्य विशुध्यति॥

अस्थिशब्दोऽत्राभक्ष्यास्थिमात्रवचनः। अतएव हारीतः,

मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्दकान्।
पीत्वा नवोदकञ्चैव पञ्चगव्येन शुध्यति॥

घृतप्राशनरूपं व्रतं तेन घृतं प्राश्योपवसेत्। हारीतः कृमि-कीटपिपीलिकाजलौकःपतङ्गास्थिप्राशने गोमूत्रगोमयाहार-स्त्रिरात्रेण प्रयतो भवेत्। एतज्ज्ञानाभ्यासे अस्य च पाव-नार्थं प्राशनमात्रात् त्रिरात्रोपवाससमं सार्द्धपुराणमेव देयम्। तथा शङ्खलिखितौ केशमक्षिकारुधिरप्राशने आम-मांसकृमिभक्षणे रुधिरच्छर्दने रजस्वलावधूताभिगमने

---

अथास्थ्यादिदूषितान्नेति। अस्थ्यादीति भुञ्जानस्यान्नं यदास्थ्यादिदूषितं भवे-त्तदा स भुञ्जानो विशुद्ध्यतीत्यन्वयः। अभक्ष्यास्थिमात्रेति न तु मांसादिसम्बन्ध्यस्थि-विषयः। हारीतवचने शङ्खादिसमभिव्याहारात् मत्स्यकण्टकादिदूषितानोदनान् भुक्त्वेति शेषः। नवोदकमिति यथा दशदिवसमध्ये तदशुद्धौ यमः, अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका। दशरात्रेण शुद्ध्यन्ति भूमिष्ठञ्च नवो-दकम्। भूमिमात्रपतितं न तु जलान्तरमिश्रमित्यर्थः। पञ्चगव्यघृतप्राशनयो-र्विकल्पः एतदज्ञाने हारीतः इति कृमिकीटादिदूषितान्नप्राशन इत्यर्थः। ज्ञाना-भ्यास इति ब्रह्मपुराणवचनमज्ञानविषयं ज्ञाने तद्द्वैगुण्यादुपवासद्वयं ततश्च त्रिरात्रं ज्ञानाभ्यासे इति भावः। यत्तु मनूक्तं केशकीटावपन्ने ज्ञाने प्राजापत्यमज्ञाने त्रिरात्रं तदत्यन्ताभ्यासविषयमिति प्रागेवोक्तम् अस्य चेति गोमूत्रगोमयस्य पावनार्थत्वेन प्राशनमात्रादल्पतमप्राशनात्त्रिरात्रोपवास एव पर्य्यवस्यति ततस्तत्तुल्यं सार्द्धपुराणं देयमित्यर्थः। एवमस्थ्यादिदूषितान्नभक्षणे प्रायश्चित्तमुक्त्वा केवलमक्षिकारुधिरादि-

त्रिरात्रोपवासं घृतप्राशनञ्च कुर्य्यात्। अज्ञाने तु हारीतः भक्ष्याणामप्याममांसरुधिरप्राशनात् पञ्चगव्यं प्राश्योपवसेदित्यर्थः। तथा सुमन्तुः नखकेशरुधिरप्राशने सद्यः स्नानं घृतकुशहिरण्योदकप्राशनञ्च तदनयोर्विकल्पः। स्पष्टमाह बौधायनः अजाविकमहिषमृगाणामाममांसभक्षणे केशरुधिरप्राशने बुद्धिपूर्वं त्रिरात्रमज्ञानादुपवासः॥ १॥

---

अथ पुंसवनसीमन्तोन्नयनकर्मणि भोजनप्रायश्चित्तम्।

आपस्तम्बः,

याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम्।
स्त्रीणां प्रथमगर्भे च भुक्त्वा चान्द्रायणं चरेत्॥
ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्॥

संग्रहे स्त्रीणामिव। ब्रह्मौदने आवसथ्याधानाङ्गकर्मविशेषे सोमे सोमयागे तयोर्भोज्ये इत्यर्थः। एतज्ज्ञानाभ्यासे

---

प्राशने प्रायश्चित्तमाहतुः शङ्खलिखिताविति एतज्ज्ञानविषयम् अवधूता अपरिचिता भिक्षुकी। सुमन्तुरिति अत्रापि घृतादिप्राशनात् परमुपवासः। बौधायन इति महिषोऽत्रारण्यः मृगो हरिणादिर्भक्ष्य एव॥ १॥

अथ पुंसवनसीमन्तोन्नयनेति। नवश्राद्धं नवमिश्रमित्यर्थः एतच्चाभ्यासे स्त्रीणां कृतप्रायश्चित्तानां संग्रहे प्रथमगर्भे प्रथमगर्भकृत्ये पुंसवने च भोजनं कृत्वेत्यर्थः। जातश्राद्ध इति जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपीति वचनात्तदामान्नश्राद्धं तत्र भुक्त्वा तद्द्रव्यं प्रतिगृह्य भुक्त्वेत्यर्थः। एतज्ज्ञानाभ्यासे इति अभ्यासोऽत्यन्ताभ्यासः सोऽत्र पञ्चदशधेति एतच्च नवश्राद्धवर्जं चान्द्रायणं नवश्राद्ध इति शङ्खवचनविरोधात् अज्ञानाभ्यासे तथाविधाज्ञानाभ्यासे तदर्द्धं चान्द्रायणार्द्धमित्यर्थः। सकृदज्ञाने त्वाह विष्णुरिति अभोज्यानामपेयानामभक्ष्याणाञ्च भक्षणे। कृच्छ्र-

अज्ञानाभ्यासे तदर्द्धं सकृदज्ञाने तु विष्णूक्तः कृच्छ्रपादः तत्र द्वादशपणाः ज्ञाने तु द्वैगुण्यम् ॥ २ ॥

---

अथ जातकर्मादिसंस्कारभोजनप्रायश्चित्तम् ।

तत्र अङ्गिराः,

जन्मप्रभृतिसंस्कारे बालस्यान्नस्य भोजने ।
असपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः ॥

व्यासः,

निवृत्ते चूड़होमे च प्राङ्नामकरणात् तथा ।
चरेत् सान्तपनं भुक्ता जातकर्मणि चैव हि ॥

सान्तपनं द्व्यहसाध्यम् अत्रैकपुराणं देयं इदमज्ञाने ज्ञाने तु द्वैगुण्यं चूड़ाकरणादिनिमित्तभोजनविषयमिदम् ॥ २ ॥

अथ भोजनकाले गुदस्रावप्रायश्चित्तम् ।

तत्र भोजनप्रकरणे ब्रह्मपुराणं

रेतोमूत्रपुरीषाणामुत्सर्गश्चेत् प्रमादतः ।

---

पादं विशुद्ध्यर्थं चरेयुः चिप्रशोधनमिति विष्णुवचनं सामान्याभक्ष्यभक्षणप्रायश्चित्त-प्रकरणे प्रागुक्तमिति सकृज्ज्ञाने तु प्राजापत्यार्द्धमिति ॥ २ ॥

अथ जातकर्मादिसंस्कारेति व्यास इति चूड़ाकरणानन्तरं तदङ्गकं यद्-ब्राह्मणभोजनं यच्च नामकरणात् प्राक् ब्राह्मणभोजनं यच्च जातकर्मनिमित्तं ब्राह्मणभोजनं तत्रेत्यर्थः । तथा च गोभिलः । अपवर्गेऽभिरूपभोजनमिति सूत्रार्थः । क्रियासमाप्तिरपवर्गः अभिरूपा ब्राह्मणाः तथा पारस्करः दशम्यामु-त्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति ॥ २ ॥

तत्रादौ च प्रकर्त्तव्या तेन शुद्धिर्मृदम्बुभिः ॥
पश्चादाचम्य तु जले जपत्र्यमघमर्षणम्।

एतदप्यनिगीर्णग्रासे। आपस्तम्बः,

भुञ्जानस्य तु विप्रस्य कदाचित् स्रवते गुदम्।
उच्छिष्टमशुचित्वञ्च प्रायश्चित्तं कथं भवेत् ॥
आदौ कृत्वा तु शौचं वै ततः पश्चादुपस्पृशेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

उच्छिष्टमिति भावे क्तः उच्छिष्टत्वमित्यर्थः।

वृद्धशातातपः,

निगिरन् यदि मेहेत भुङ्क्ते वा मेहने कृते।
अहोरात्रोषितो भूत्वा जुहुयात् सर्पिषाहुतीः ॥

एतदुभयं सकृन्निगीर्णग्रासे। उपस्पृशेत् स्नायात् उपवसेदपरदिने संकल्पं कृत्वेत्यर्थः। अभ्यस्तग्रासाशने वृद्धशातातपः।

मूत्रोच्चारसमुत्सर्गे मोहाद् भुङ्क्तेऽथवा पिबेत्।
त्रिरात्रं तत्र कुर्वीत इति शातातपोऽब्रवीत् ॥ ४ ॥

---

अथ भोजनकाले सूतकाद्यशौचप्रायश्चित्तम्।

तत्र वृद्धशातातपः,

यदा भोजनकाले तु अशुचिर्भवति द्विजः।
भूमौ निक्षिप्य तद्ग्रासं स्नात्वा विप्रो विशुध्यति ॥
भक्षयित्वा तु तं ग्रासम् अहोरात्रेण शुध्यति।

---

अथ भोजनकाले इति उपस्पृशेत् स्नायादित्यर्थः सर्पिषाहुतीरिति गायत्र्या तिस्र आहुतीरित्यर्थः ॥ ४ ॥

अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यति ॥

अशुचिः सूतकादिनेत्यर्थः ॥ ५ ॥

अथ तैलाभ्यङ्गादिना स्नानार्हस्याकृतस्नानस्य भोजन-प्रायश्चित्तम्।

तत्र संवर्त्तः,

समुत्पन्ने द्विजस्नाने भुञ्जीतान्नं पिबेत्तथा।
गायत्र्यष्टसहस्रं तु जपेत् स्नात्वा समाहितः ॥

स्नाने समुत्पन्ने तैलाभ्यङ्गक्षौरादिना अष्टसहस्रमष्टोत्तर-सहस्रम्। एतत् सकृदभ्यासे त्वावृत्तिरूहनीया ॥ ६ ॥

---

अथ परिहितनीलीवस्त्रस्य भोजनप्रायश्चित्तम्।

तत्र शङ्खः,

नीलीवस्त्रं परिधाय भुक्त्वा स्नानार्हकस्तथा।
त्रिरात्रं तु व्रतं कुर्य्यात् छित्वा गुल्मलतान्तथा ॥

इदमज्ञानतो ज्ञानतस्तु द्वैगुण्यम् ॥ ७ ॥

---

अथ भोजनकाले सूतकादीति स्पष्टार्थम् ॥ ५ ॥

अथ तैलाभ्यङ्गादिनेति क्षौरादिनेत्यादिशब्दात् उद्वर्त्तनग्रहणम् अभ्यङ्गादिना स्नाने समुत्पन्ने प्राप्ते सति अकृतस्नान इति शेषः ॥ ६ ॥

अथ परिहितनीलीति। स्नानार्हकः तैलाभ्यङ्गादिनिमित्तेन स्नानार्हः अकृत-स्नान इत्यर्थः। व्रतमत्र ब्रह्मवधोक्तमहाव्रतमिति वृक्षच्छेदनप्रायश्चित्ते प्रागुक्तम्। तत्र मासैकमहाव्रते सपादधेनुसङ्कलनात्तदनुसारेणात्र दिनत्रये षट्पणा देया

अथ स्वकीयोच्छिष्टप्राशनप्रायश्चित्तम्।

तत्र शातातपः,

उच्छिष्टमगुरोरभोज्यं स्वयमुच्छिष्टोपहतञ्च।

गुरुः पित्रादिः अतएव ब्रह्मपुराणे।

मातापितृभ्यां संभुक्तं शेषं वा ब्रह्मचारिणा।

भोक्तव्यमिति शेषः। तथापस्तम्बः।

पितुर्ज्येष्ठस्य तु भ्रातुरुच्छिष्टं भोज्यं स्वोच्छिष्टभोजने प्रायश्चित्तम्।

प्रायश्चित्तञ्चात्र विष्णुवचनात् कृच्छ्रपादः। यथा

अभोज्यानामपेयानामभक्ष्याणाञ्च भक्षणे।

कृच्छ्रपादं विशुद्ध्यर्थं चरेयुः चिप्रशोधनम्॥

एतदज्ञानतः सकृत् अभ्यासे तु द्वैगुण्यादिकमूहनीयम्।

यच्चात्र चतुर्ऋषिमतमिति कृत्वा वचनं पठन्ति।

समुच्छिष्टन्तु यो भुङ्क्ते यो भुङ्क्ते त्यक्तभाजने।

एवं वैवस्वतः प्राह भुक्त्वा चान्द्रायणं चरेत्॥

एतज्ज्ञानाभ्यासविषयम्॥ ८॥

अथ ब्राह्मणाद्युच्छिष्टभक्षणप्रायश्चित्तम्।

तत्र शङ्खलिखितौ,

ब्राह्मणोच्छिष्टभोजने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत्।

---

अथ स्वकीयोच्छिष्टेति। उच्छिष्टोपहतमिति। उच्छिष्टसंसृष्टमित्यर्थः कृच्छ्रपादोऽत्र प्राजापत्यपाद इति प्रागुक्तमेव ज्ञाने तु कार्च्छ्रार्णार्धं तत्र चतुर्विंशति-पणा देयाः। त्यक्तभाजन इति भोजनसमाप्त्या त्यक्ते भाजने पुनः यो भुङ्क्ते इत्यर्थः ज्ञानाभ्यासोऽत्र पञ्चदशधाभ्यासः॥ ८॥

क्षत्रियोच्छिष्टभोजने ब्राह्मीरसविपक्केन त्र्यहं क्षीरेण वर्त्तयेत्। वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो ब्रह्मसुवर्चलां पिबेत्। शूद्रोच्छिष्टभोजने सुराभाण्डोदकपाने च षड्रात्रमभोजनं चान्द्रायणं वा। अभिमन्त्रितजलं पीत्वोपवसेत् व्रतरूपत्वात् एतत् ब्राह्मणस्य ब्राह्मणाद्युच्छिष्टाशने अज्ञानतः सकृत् एवं क्षत्रियादेः समाधमोच्छिष्टाशने समाधमवर्णोक्तमेतदेव यथायथमुन्नेयं शूद्रोच्छिष्टाशने तु ब्राह्मणस्य ज्ञानतः सकृद्विषयं षड्रात्राभोजनं यथा लघ्वापस्तम्बः,

> अज्ञानात् यस्तु भुञ्जीत शूद्रोच्छिष्टं द्विजोत्तमः ।
> त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥

एतद्द्विजोत्तमग्रहणात् ब्राह्मणविषयम्। क्षत्रियादिपरत्वे वक्ष्यमाणविष्णुवचनविरोधात्। एतदपि सकृत्विषयम्। अत्र च त्रिरात्रेऽघमर्षणमपि जपनीयम्। यथा सुमन्तुः शूद्रोच्छिष्टभोजने त्रिरात्रमघमर्षणं जपेत् ॥ ८ ॥

---

अथ ब्राह्मणाद्युच्छिष्टभक्षणेति। एतत् ब्राह्मणस्येति ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्यानामुच्छिष्टाशने इत्यर्थः। एवमिति ब्राह्मणस्य ब्राह्मणोच्छिष्टाशने यत् तत् क्षत्रियवैश्ययोः सजातीयोच्छिष्टभक्षणे एवं ब्राह्मणस्य क्षत्रियोच्छिष्टभक्षणे यत् तत् क्षत्रियस्य वैश्योच्छिष्टभक्षणे इत्यर्थः। एवञ्च शूद्रस्यापि तुल्यन्यायात् सजातीयोच्छिष्टभक्षणे एकाहो ज्ञेयः एतदपि सकृदज्ञानविषयम्। शूद्रोच्छिष्टाशन इति लघ्वापस्तम्बवचनेऽज्ञानतस्त्रिरात्रोपवासविधानात् ज्ञानविषयमिदं षड्रात्राभोजनं तच्च बालाद्यत्यन्ताशक्तविषयं वक्ष्यमाणलघुविष्णुवचनसमानार्थं शूद्रान्नभक्षणे प्राजापत्यविधानात् तदुच्छिष्टाशने तदधिकस्य युक्तत्वात् अतएव लघुविष्णुवचने शूद्रान्नभक्षणे यूनः पराको वक्ष्यते ब्राह्मणविषयमिति बालादिविषयमित्यर्थः। अन्यथा वैश्योच्छिष्टाशने त्रिरात्रं शङ्खलिखितोक्तं शूद्रेऽपि तदेवेति महद्वैषम्यं स्यादिति क्षत्रियादिपरत्वे वक्ष्यमाणविष्णुवचनविरोधादिति क्वचित् अतएव पुस्तके पाठोऽपपाठ एव। ब्राह्मणपदवत् द्विजोत्तमपदादेव सन्देहाभावात् न पातत्या

चान्द्रायणं तूभयत्रैव ज्ञानाभ्यासे। क्षत्रियादीनाञ्चात्र पादपादह्रानिरूह्या क्षत्रियस्य च ब्राह्मणोच्छिष्टभोजने ब्राह्मणोक्तप्रायश्चित्तार्द्धम्। वैश्यस्य ततोऽप्यर्द्धम् एवं वैश्यशूद्रयोरपि स्वापेक्षया पूर्ववर्णत्वेनोन्नेयम्। उशनोवचने वर्णक्रमेण ह्रसितप्रायश्चित्तदर्शनात्। तद्यथा,

अन्त्यानां भुक्तशेषस्तु भक्षितो यैर्द्विजातिभिः।
चान्द्रं कृच्छ्रं तदर्द्धञ्च क्रमात्तेषां विशोधनम्॥

तथा विष्णुरपि न्यायप्राप्तमेवार्थमनुवदन्नाह आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत ब्राह्मणः शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रम्। वैश्योच्छिष्टाशने पञ्चरात्रम्। राजन्योच्छिष्टाशने त्रिरात्रम्। राजन्यः शूद्रोच्छिष्टाशने पञ्चरात्रं वैश्योच्छिष्टाशी त्रिरात्रं वैश्यः शूद्रोच्छिष्टाशी च। अत्र वमनं कृत्वा पयसा वर्त्तेतेति सर्वत्र सम्बध्यते। त्रिरात्रमित्यस्य वैश्येऽपि सम्बन्धः। आमश्राद्धं च गर्हितैर्यत् क्रियते। अथवा जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपीत्यनेन चोदिताच्छिन्न-

---

द्विजोत्तमैरित्यत्र ग्रन्थकृतैव तथा प्राग्विवेचितम्। किञ्च विष्णूक्तपञ्चरात्रपयःपाने त्रिरात्रोपवाससङ्कलनया विरोधगन्धोऽपि नास्तीति॥ ९॥

चान्द्रायणन्त्विति उभयत्र शूद्रोच्छिष्टाशने सुराभाण्डोदकपाने चेत्यर्थः। ज्ञानाभ्यास इति अभ्यासोऽष्टधाभ्यासः। क्षत्रियादीनाञ्चात्रेति अत्र चान्द्रायणे पादपादह्रानिरित्यर्थः। वैश्यस्येति शूद्रस्य तु विप्रोच्छिष्टाशने दोषो नास्तीति भावः। एवमिति वैश्यस्य पूर्ववर्णः क्षत्रियः शूद्रस्य पूर्ववर्णो वैश्यः तयोः पूर्ववर्णोच्छिष्टभक्षणे ब्राह्मणस्य ब्राह्मणोच्छिष्टभक्षणोक्तार्द्धमित्यर्थः। एवञ्च शूद्रस्य क्षत्रियोच्छिष्टभक्षणे दोषो नास्तीत्यर्थः। उशनोवचन इति अर्द्धार्द्धह्रासदर्शनादित्यर्थः। तदेव दर्शयति तद्यथेति कृच्छ्रमत्र तप्तकृच्छ्रं इति प्रागेव व्याख्यातं न्यायप्राप्तमिति शङ्खलिखितवचने यदुक्तं तत्र यत्र न्यायप्राप्तं तमर्थमनुवदन्नाह इत्यर्थः। अत्र

नाड़ीश्राद्धम्। अत्र सकृदशने। इह च सप्तरात्रपयःपाने सार्द्धचतुष्टयोपवासः पर्य्यवस्यति ॥ १० ॥

तेनेदमज्ञानाद्द्विरभ्यासे ज्ञानादापदि वा। तदनन्तरं पञ्चरात्रः शङ्खलिखितोक्ततुल्यः ततः त्रिरात्रश्च तदनन्तरं पञ्चरात्रश्च शङ्खलिखितोक्ततुल्यः स्वापेक्षया तृतीयवर्णत्वात्। ततः त्रिरात्रश्च स्वापेक्षया अनन्तरवर्णत्वेन तथैवेति। ज्ञानतस्तु शङ्खः,

शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः।
क्षत्रियस्य तु सप्ताहं ब्राह्मणस्य तथा दिनम्।
आमश्राद्धाशने विद्वान् मासमेकं व्रतञ्चरेत् ॥

व्रतमिदं गोमूत्रयावकेनेति ॥ ११ ॥

---

सकृदशन इति अज्ञानत इति शेषः। इह चेति सार्द्धैकदिनपयोव्रते एकाहोपवाससङ्कलनादित्यर्थः ॥ १० ॥

तेनेति। आपद्यज्ञानाद्द्विरभ्यासे सप्तरात्रपयःपानम् आपदि सकृज्ज्ञाने वा इत्यर्थः। आपदीति शूद्रोच्छिष्टमात्रविषयमित्यर्थः इदानीं सकृदज्ञानतो वैश्याद्युच्छिष्टभक्षणे प्रायश्चित्तं व्यवस्थापयति तदनन्तरेति वैश्योच्छिष्टाशने पञ्चरात्रमिति यदुक्तं तच्छङ्खलिखिततुल्यं तदुक्तत्रिरात्रोपवासस्य पञ्चरात्रपयःपानतुल्यत्वादिति। ततस्त्रिरात्रेति। राजन्योच्छिष्टाशने त्रिरात्रमिति यदुक्तं तदपि शङ्खलिखिततुल्यमित्यर्थः। तद्विषये त्रिरात्रपयःपानस्योक्तत्वात् न्यायप्राप्तमनुवदति। तदनन्तरेति। राजन्यस्य शूद्रोच्छिष्टाशने पञ्चरात्रमिति यदुक्तं तदपि शङ्खलिखिततुल्यं तत्र हेतुः स्वापेक्षया इति विप्रस्य तृतीयवर्णवैश्योच्छिष्टाशने त्रिरात्रोपवासस्योक्तत्वात् क्षत्रियस्यापि स्वतृतीयवर्णशूद्रोच्छिष्टाशने पञ्चरात्रपयःपानतुल्यं युज्यत इति। ततस्त्रिरात्रश्चेति वैश्योच्छिष्टाशी राजन्यस्त्रिरात्रमिति यदुक्तं तदपि शङ्खलिखितोक्ततुल्यमेव यथा विप्रस्यानन्तरवर्णक्षत्रियोच्छिष्टभक्षणे त्रिरात्रपयःपानमुक्तं तथात्रापि राजन्यस्यानन्तरवर्णवैश्योच्छिष्टाशने त्रिरात्रं युज्यत

लक्ष्मीधरेण व्याख्यातम्। तेन पञ्चदशधेनुसंकलितमासोपवासव्रतात् पञ्चमभागापकर्षादिह द्वादश धेनवः। एतदनुसारेण पक्षादिष्वप्यूह्यम्। अत्र च ब्राह्मणोच्छिष्टाशने दिनैकव्रतं ज्ञानतः सकृद्बोद्धव्यम्। क्षत्रियाद्युच्छिष्टाशने च ज्ञानात्यन्ताभ्यासे। एतदपि ब्राह्मणस्य। क्षत्रियादेस्तु शङ्खलिखितवाक्ये दर्शितव्यवस्थैव श्रेयसी आमश्राद्धञ्च व्याख्यातमेव तत्राज्ञानत एवाभ्यासे। लघुविष्णुः,

> शूद्रजुष्टं शुना वापि संस्पृष्टं प्राश्य भोजनम्।
> तप्तकृच्छ्रेण शुद्धेत्तु प्राजापत्येन वा पुनः॥
> शक्त्या पराको दातव्य इति धर्मस्य निश्चयः।
> क्षत्रवैश्यादिकैर्दुष्टं गर्दभैः शूकरैस्तथा॥
> पादहीनं चरेत् कृच्छ्रं शक्त्या सर्वं चरेद्द्विजः।

एतानि च शक्त्यपेक्षया देयानि तत्र वृद्धे तप्तकृच्छ्रः। बाले प्राजापत्यम्। यूनि तु पराक इति। अत्र च युवस्थविरयो-

---

इति तथा वैश्यानन्तरवर्णशूद्रोच्छिष्टाशने त्रिरात्रपयःपानं युज्यत इत्यर्थः। ज्ञानतस्त्विति ज्ञानतोऽत्यन्ताभ्यास इत्यर्थः॥ ११॥

लक्ष्मीधरः कल्पतरुकारः। गोमूत्रयावकेनेति केवलगोमूत्रयावकेनेत्यर्थः ऊह्यमिति पक्षे धेनुषट्कं सप्ताहे धेनुत्रयमित्यर्थः अत्र चेति ब्राह्मणस्येति शेषः व्रतं गोमूत्रयावकव्रतं क्षत्रियादेस्त्विति यद्यपि शङ्खलिखितवाक्ये क्षत्रियवैश्ययोः शूद्रोच्छिष्टभक्षणे कण्ठोक्तं किञ्चिन्नास्ति तथापि विष्णुसूत्रानुसारेण न्यायलभ्यव्यवस्थेत्यर्थः आमश्राद्धञ्चेति व्याख्यातं जातश्राद्धमित्यर्थः। तत्र मासमेकं व्रतं यदुक्तं तदज्ञानात्यन्ताभ्यास इत्यर्थः स च षट्त्रिंशदभ्यासः अज्ञानतः सकृदशने त्रिरात्रपयोव्रतस्योक्तत्वात्। इदानीं ज्ञानतः सकृच्छूद्रोच्छिष्टभक्षणे त्वाह लघुविष्णुरिति शूद्रजुष्टं शूद्रसेवितं शूद्रभुक्तमिति यावत्। शुना स्पृष्टमिति अत्यन्ताभ्यासविषयमिदं मनुवचनविरोधात् क्षत्रवैश्यादिकैरिति ज्ञानविषयमिदं पादोनं सम्पूर्णं वा प्राजा-

वैषम्यभयात् द्वादशाहसाध्यं तप्तकृच्छ्रं वृद्धे युक्तम्। न तु बाले लघु-
चतुरहःसाध्यं तप्तकृच्छ्रं वृद्धे च प्राजापत्यमिति व्याख्या युक्ता।
तप्तकृच्छ्रे पादोनधेनुचतुष्टयम्। प्राजापत्ये धेनुरेका पराके
धेनुपञ्चकम्। अत्रापवादमाह अङ्गिराः,

ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कथञ्चन।
न तत्र दोषं मन्यन्ते नित्यमेव मनीषिणः॥

तथा ब्रह्मपुराणं

ब्राह्मण्या हि तथा सार्द्धं क्वचित् भुञ्जीत चाध्वनि।
अधोवर्णस्त्रिया सार्द्धं भुक्त्वा पतति तत्क्षणात्॥

कथञ्चन क्वचिदित्यभिधानात् कदाचिदसमावेश इत्यर्थः॥१२॥

अथ विड़ालकाकाद्युच्छिष्टाशने प्रायश्चित्तम्।

तत्र मनुः,

विड़ालकाकाद्युच्छिष्टं जग्ध्वा श्वनकुलस्य च।

---

पत्यं शक्त्यपेक्षया देयं तत्र बालवृद्धरोगिणां पादोनं यूनः सम्पूर्णम्। बाल इत्य-
त्यन्ताशक्तोपलक्षणं तेन रोगिणोऽपि प्राजापत्यमिति भावः उक्तव्यवस्थायां हेतुमाह
अत्र चेति युवस्थविरयोः प्रायश्चित्तसाम्ये महद्वैषम्यं यूनः स्थविरस्य दुर्बलत्वात्
तद्भयात् द्वादशाहतप्तकृच्छ्रं द्वादशाहःसाध्यं वृद्धे युक्तम् एवं स्थविराद्बालस्य दुर्बलत्वात्
प्राजापत्यं बाले युक्तमिति भावः इदानीं कस्यचित् व्याख्यां निराकरोति न त्विति
बाले चतुरहः साध्यं तप्तकृच्छ्रं तत्र सपादधेनुः वृद्धे प्राजापत्यमिति व्याख्यानं
न युक्तं बालस्य स्थविरतो दुर्बलत्वात् स्वमते धेनुसङ्कलनयाह तप्तकृच्छ्रं इति तदयं
संक्षेपः ज्ञानतः समर्थब्राह्मणस्य शूद्रोच्छिष्टभक्षणे पराकः वृद्धस्य तप्तकृच्छ्रं बालस्य
तु प्राजापत्यं मनुसमानम् अज्ञानतः तदर्द्धं शङ्खलिखितोक्तं षड्रात्रं प्राजापत्य-
समं बालात्यन्ताशक्तविषयं विष्णुवचनमापद्विषयम्। ब्राह्मण्येति अपरिणीतब्राह्म-
ण्येत्यर्थः अधोवर्णस्त्रिया असवर्णपत्न्या इत्यर्थः॥१२॥

केशकीटावपन्नञ्च पिबेद् ब्रह्मसुवर्चलामिति ॥

ब्रह्मसुवर्चला पीतवर्णकुसुमसूर्य्यावर्त्तः। ताञ्च पीत्वा दिनमेकम् अतिवाहनीयं प्रमादविषयमेतत्। ज्ञानात्तु त्रिरात्रम्। यथा शङ्खः,

> दूषितं केशकीटैश्च मार्जारैर्मूषिकैस्तथा।
> मक्षिकामसकैश्चैव त्रिरात्रं तु व्रतं चरेत्॥

व्रतं गोमूत्रयावकेन तत्प्रक्रमात्। त्र्यहगोमूत्रयावकेन किञ्चिदूनसार्द्धपुराणं देयम्। विष्णुः। गोभिरुच्छिष्टाशने दिनमेकमुपोषितः पञ्चगव्यं पिबेत्। एतदज्ञाने। ज्ञाने तु संवर्त्तः।

> श्वकाकगोभिरुच्छिष्टभक्षणे तु दिनत्रयम्।

तथाज्ञानाभ्यासे वशिष्ठः,

श्वकाकावलीढ़शूद्रोच्छेषणभोजनेष्वतिकृच्छ्रः कृच्छ्र इतरेषु अन्यत्र मधुमांसविप्रकर्षेषु। अतिकृच्छ्रे धेनुत्रयं इतरेषु गवादिषु। श्वामृगग्रहणे शुचिरिति वचनात् श्वभक्षितमृगे

---

अथ विड़ालकाकाद्युच्छिष्टेति। शङ्ख इति केशकीटादिदूषितान्नभक्षणे त्रिरात्रं ज्ञानाभ्यासविषयम् इत्यस्यादिदूषितान्नभक्षणप्रकरणे उक्तं मार्जारमूषिकोच्छिष्टाशने त्वज्ञानतः सकृदित्यर्थः किञ्चिदूनेति त्र्यहोपवाससार्द्धपुराणमुक्तम् अत्र तु किञ्चिदाहारसत्वात् किञ्चिदूनसार्द्धपुराणं युज्यते एव न च मासगोमूत्रयावकस्य भागहारः कल्पनीयः मासोपवासवदुत्तरोत्तरक्लेशाधिक्यान्मासोपवासपञ्चमभागहानियुक्ता अत्र तु न तथेति अन्यथा सर्वत्र त्रिरात्रव्रते मासोपवासभागहारप्रसङ्गः स्यादिति। वशिष्ठ इति ज्ञानाभ्यासोऽत्र षोढ़ाभ्यासः शूद्रोच्छेषणन्तु पूर्वं शूद्रे प्रदर्शितमिति भविष्योक्तं शूद्रभुक्तावशिष्टं स्थालीस्थञ्च इतरेषु गोविड़ालाद्युच्छिष्टेषु कृच्छ्रं प्राजापत्यं मधुमांसयोः काकाद्यवलीढ़प्रदेशाद् यद्विप्रकर्षस्थानं तदन्यत्रैवोक्तं प्रायश्चित्तं श्वभिर्हतस्य षण्मांसं शुचि तन्मनुर-

श्वभक्षितस्थानेतरमांसं भक्ष्यमेव विप्रकर्षग्रहणादेवं मधुन्यपि। तथैवात्यन्ताभ्यासे शङ्खः,

शुनस्तूच्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत्।
काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत्॥

व्रती गोमूत्रयावकेन तत्प्रक्रमात्। विवाहादिषु तु तत्तदन्नमपहायापरं पर्य्युक्ष्य भक्षणीयम्। तथा यमः,

देवद्रोण्यां विवाहेषु यज्ञेषु प्रततेषु च।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत्॥
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति।
घनानां प्रोक्षणाच्छुद्धिः द्रवाणामतितापनात्॥
संस्पर्शाच्च भवेच्छुद्धिरपामग्नेर्घृतस्य च।
छागेन मुखसंस्पृष्टं शुचि चैवहि तद्भवेत्॥

एतदशक्तस्य सकृद्विषयम्। अकृतसंस्कारभोजने तु विष्णुः,

पक्षिश्वापदजग्धस्य रसस्यान्नस्य भूयसः।
संस्काररहितस्यापि भोजने कृच्छ्रपादकम्॥

---

ब्रवीदिति मनुवचनन्तु अस्मादेव वशिष्ठवचनात् अवलीढेतरप्रदेशविषयं मन्तव्यम् एवं मधुनोऽपीति एवं शकुनिफलपातन इति वचनात् काकावलीढफलेऽपि न दोषः व्रतीति केवलगोमूत्रयावकेन मासैके द्वादशदिनवो भवन्तीति प्रागुक्तम् एवं चतुर्विंशतिधाभ्यासे तत्रैव विषये गोकाकाद्युच्छिष्टाशने पक्षव्रतं वाचनिकम्। पर्य्युक्ष्य भक्षणीयमिति प्रोक्षणादिकं कृत्वा भक्षणं कार्य्यमित्यर्थः। यम इति देवद्रोण्यां देवायतने तन्मात्रम् उपहतमात्रं घनानां दध्यादीनां द्रवाणां घृतादीनाम् अन्नस्य शुद्धिमाह संस्पर्शादिति अपां सुवर्णाम्भसाम् एतच्च द्रोणाधिकान्नविषयम् अल्पस्य त्याग एव यथा वृद्धविष्णुः द्रोणाधिकसिद्धमन्नमुपहतं नैव दुष्येत

श्वापदाः कुक्कुरसदृशचरणाः व्याघ्रशृगालमार्जारादयः शुनोऽप्यत्र ग्रहणात् एतत् सकृत् ॥ १३ ॥

अथ कुत्सितपङ्क्तिभोजनप्रायश्चित्तम्।

अत्राङ्गिराः,

यस्तु पङ्क्तिषु भुञ्जीत कुत्सितासु विशेषतः।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥

निन्दितब्राह्मणाद्युपवेशनेन कुत्सितासु जलादिना पङ्क्तिभेदमन्तरेणाज्ञानकृतविषयमिदम्। ब्राह्मणः क्षत्रियपङ्क्त्यां तूपविश्यासंस्पृशन् यदा भुङ्क्ते तदा नक्तमाचरेत्। वैश्यपङ्क्त्यामेकरात्रम्। शूद्रपङ्क्त्यां त्र्यहमाचरेदिति विष्णुपुराणात्। अत्रासंस्पर्शन्नित्यस्य सर्वत्र सम्बन्धः। अनिन्दितपङ्क्तिष्वपि सहभोजने एकस्योत्थानेऽप्यश्नतां प्रायश्चित्तमाह शङ्खः,

एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने।
यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं न भोजयेत् ॥
मोहाद्भुञ्जीत यः पङ्क्त्याम् उच्छिष्टं सहभोजनम्।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं तथा ॥

---

तस्योपहतमात्रमपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भः क्षिपेत् सूर्य्यस्य दर्शयेदग्नेश्चेति विष्णुरिति रसस्य दुग्धादेः भूयसी द्रोणाधिकस्य ॥ १३ ॥

अथ कुत्सितपङ्क्तीति। निन्दितैरिति निन्दिताः स्वधर्मभ्रष्टाः आदिशब्दात् पापिब्राह्मणग्रहणम्। तथा ब्रह्मपुराणम् एकपङ्क्तिनिविष्टानां दुष्कृतं यद्दुरात्मनाम्। सर्वेषां तत्समं तावत् यावत् पङ्क्तिर्न भिद्यते, भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिश्च भेदयेत्। अज्ञानकृतविषयमिति ज्ञाने तु द्वैगुण्यमित्यर्थः। असंस्पृशन् जलादिना पङ्क्तिभेदनेन संसर्गमकुर्वन्नपीत्यर्थः। अत्र क्षत्रियादिपङ्क्तिष्वेव जलादिना पङ्क्तिभेदनेन नक्तादिप्रायश्चित्तमभिधाय निन्दितब्राह्मणपङ्क्त्यां पङ्क्ति-

सान्तपनं द्व्यहसाध्यम्। अत्र पुराणैकं देयमज्ञानतः सकृत्॥ १४॥

## अथापेयपानप्रायश्चित्तम्।

### तत्र सुराभाजनस्थजलपानप्रायश्चित्तम्।

तत्र मनुः,

अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा।
पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पयः॥

पयः क्षीरं शृतपदसमभिव्याहारात् शङ्खपुष्पी ओषधिविशेषः अत्र च सार्द्धैकदिनक्षीरपानेनैकोपवासपर्य्यवसानात् पञ्चरात्रेण किञ्चिदधिकोपवासत्रितयपर्य्यवसानात् सार्द्धपुराणं देयम् एतत् सुरागन्धरसानुपलब्धौ सुरामद्यभाण्डयोरज्ञानज्ञानाभ्यां प्रायश्चित्ते साम्यम्। अतएव शङ्खोऽप्यनयोर्गुरुत्वलघुत्वाभ्यां गुरुलघुप्रायश्चित्तद्वयमाह। तद्यथा

अपः सुराभाजनस्थाः पीत्वा पक्षं व्रती भवेत्।
मद्यभाण्डस्थिताः पीत्वा सप्तरात्रं व्रती भवेत्॥

एतच्च ज्ञाने व्रती यावकेन पक्षयावकपाने धेनुरेका।

---

भेदनेन प्रायश्चित्तं नास्तीत्युक्तं विष्णुना यत इत्यर्थः शङ्ख इति एकपङ्क्त्यां सह-भोजनमेकस्योत्थानादुच्छिष्टरूपं यो मोहाद्बुद्धिदोषाद्भुञ्जीतेत्यर्थः॥ १॥

इति प्रायश्चित्तविवेकटीकायां तत्वार्थकौमुद्याम् अभक्ष्यभक्षणप्रायश्चित्तम्।

अथापेयपानेति। सुराभाजनस्थेति शृतपदसमभिव्याहारादिति क्षीरस्य विषोरेव शृतमिति निपातनादित्यर्थः यावको यवयावकः सप्तरात्रे अर्द्धधेनु सुरार्द्रभाण्डस्थजलपाने तक्रादिमिश्रितसुरापानवत् सुरापानोक्तं प्रायश्चित्तं प्रागुक्तमि- शुष्कभाण्डे तु चिरावस्थानेन गन्धवासोपलम्भे त्वाह तथा यमः इति एतदि- ज्ञानतः सकृद्विषयमित्यर्थः अत्रेति अत्र द्वादशाहपयोव्रते अष्टोपवाससंकलनया सपादधेनुमूल्यमित्यर्थः। प्रतिदिनेति द्वे कृष्णले रूप्यमास इति याज्ञवल्क्य

तथा यमः,

सुराभाण्डस्थिताश्चापो यदि कश्चिद्द्विजः पिबेत्।
द्वादशाहन्तु पयसा पिबेद्ब्रह्मसुवर्च्चलाम्।
गायत्र्यष्टसहस्रं वा जपं कुर्वीत मानसम्॥

वाशब्दः समुच्चये। जपोऽपि द्वादशाहमेव अष्टसहस्रम् अष्टोत्तरसहस्रम्। एतत् सकृद्विषयम् अत्र सपादधेनुमूल्यं देयम्। प्रतिदिनजपे तु रूप्यमाषकत्रयम्। ज्ञानाभ्यासे तु। शङ्खलिखितौ। शूद्रोच्छिष्टभोजने सुराभाण्डोदकाशने च षड्रात्रमभोजनं चान्द्रायणं वा षड्रात्रः सकृद्विषयोऽज्ञानतः। कुक्कुरोच्छिष्टभोजने तु यमः।

शुनोच्छिष्टाः स्थिताश्चापो यदि कश्चित् पिबेद्द्विजः।
शङ्खपुष्पीविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्॥

हारीतः,

स्त्रियोच्छिष्टाः स्थिताश्चापो यदि कश्चित् पिबेद्द्विजः।
शङ्खपुष्पीविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्॥

स्त्रीपदं चातुर्वर्ण्यस्त्रीपरम्।

तथा शूद्रोच्छिष्टान्विताश्चापो यदि कश्चित् पिबेद्द्विजः।
कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्॥

---

वचनात् रूप्यमाषकत्रये रक्तिकाषट्कमष्टोत्तरसहस्रजपे भवति तत्राष्टौ पणाः एवञ्च द्वादशाहेन पुराणषट्कं सपादधेनुमूल्यं च पादोनपुराणचतुष्टयं मिलित्वा पादोनदशपुराणानि मद्यभाण्डोदकपाने तु गन्धवासोपलम्भे एतदर्द्धं ज्ञानतो मन्तव्यं ज्ञानाभ्यासमिति गन्धरसानुपलम्भे ज्ञानाभ्यासे इत्यर्थः अभ्यासोऽत्राष्टधाभ्यासः तत्र चान्द्रायणमिति प्रागुक्तं शूद्रोच्छिष्टभोजने तु षड्रात्रभोजनं बालाद्यशक्तविषयमिति विशेषः प्रागुक्त एवेति। स्त्रियोच्छिष्टा इति। स्त्रीभुक्तावशिष्टा इत्यर्थः स्त्रीपदमिति अत्र जातिकृतविशेषो नास्तीत्यर्थः प्रमाणमाह तथेति शूद्रोच्छिष्टाः शूद्रभुक्तावशिष्टा इत्यर्थः। एतदपीति अभ्यासोऽत्राज्ञानाभ्यासः

एतदज्ञानतः । ज्ञानतो द्वैगुण्यम् अत्र च क्षीरपानेन दिनद्वयोपवासपर्य्यवसानात् पुराणैकं देयम् । लघुविष्णुः,

शुना संस्पृष्टभाण्डे तु रेतोमूत्रादिदूषिते ।
जलक्षीरादिकं पीत्वा तप्तकृच्छ्रं समाचरेत् ॥

एतदपि स्वादानुपलब्धावभ्यासे तप्तकृच्छ्रम् ।

याज्ञवल्क्योक्तं,

चतुरहसाध्यमत्र सपादधेनुमूल्यं देयम् ॥ २ ॥

अथ चाण्डालकूपभाण्डोदकपानप्रायश्चित्तम् ।

तत्र आपस्तम्बः,

चाण्डालकूपभाण्डेषु यस्त्वज्ञानाज्जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते ॥
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः ।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रस्य निर्दिशेत् ॥

सान्तपने धेनुद्वयमिदमभ्यासतः । अनभ्यासे तु देवलः,

चाण्डालकूपभाण्डेषु यस्त्वज्ञानात् जलं पिबेत् ।
स तु त्र्यहेण शुद्ध्येत शूद्रस्त्वेकेन शुध्यति ॥

विशेषमाह शातातपः,

चाण्डालोदकभाण्डेषु यः पिबेत्तृषितो जलम् ।

---

नुवचने किञ्चिदधिकसार्द्धपुराणस्योक्तत्वात् रसास्वादोपलम्भे तु त्रिगुणं मन्तव्यं प्रागुक्तयमवचनानुसारादिति ध्येयम् ॥ २ ॥

अथ चाण्डालकूपभाण्डेति । आपस्तम्ब इति । चाण्डालकृतकूपे चाण्डालभाण्डे चेत्यर्थः तदर्द्धं प्राजापत्यार्द्धमित्यर्थः अत्रार्द्धार्द्धह्वानिर्वाचनिकौ सान्तपन इति अज्ञानाभ्यासोऽत्र चतुर्द्धाभ्यासः देवलवचने सकृदज्ञाने त्र्यहोपवासविधानात् शूद्रस्त्वेकेनेति अर्थात् द्व्यहेन क्षत्रियवैश्ययोः शुद्धिः आपस्तम्बोक्तं प्राजापत्यादि-

तत्क्षणात् क्षीयते तच्चेत् प्राजापत्येन शुध्यति ॥

यदि न क्षीयते तोयं चिरेणैवास्य जीर्य्यति।

प्राजापत्यं न कर्त्तव्यं कृच्छ्रं सान्तपनं चरेत्।

एतच्च ज्ञानतः,

सकृत्पाने सान्तपनं सप्ताहसाध्यमत्र धेनुद्वयं देयम्।

अन्यखानितचाण्डालपरिगृहीतकूपादावङ्गिराः।

चाण्डालपरिगृहीतं यो ह्यज्ञानादुदकं पिबेत्।

तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः ॥

एतदभ्यासे। आपदि त्वापस्तम्बः,

श्वपाकचाण्डालपरिग्रहेषु पीत्वा जलं शुद्ध्यति पञ्चगव्यैः।

पञ्चगव्यपानं पूर्व्वमुपोष्येत्यर्थः।

अथ चाण्डालस्पृष्टजलक्षीरादिपानप्रायश्चित्तम्।

तत्र अङ्गिराः,

यस्तु चाण्डालसंस्पृष्टं पिबेत् किञ्चिदकामतः।

स तु सान्तपनं कृच्छ्रं चरेत् शुद्ध्यर्थमात्मनः ॥

किञ्चिदिति जलक्षीरादिकम्। सान्तपनं द्व्यहसाध्यं तदशक्तौ पुराणमेकं देयम्। ज्ञाने त्वापस्तम्बः,

चाण्डालेन तु संस्पृष्टा अपो यः पिबति द्विजः।

---

ननु अभ्यासविषयं ज्ञेयं एतत् सर्वं दर्षितस्य तत्क्षणाज्जीर्णत्वविषयं चिरकालाज्जीर्णत्वे द्विगुणमित्याह विशेषमाहेति एतदभ्यास इति चाण्डालकृतकूपोदकपाने त्र्यहोपवासस्वीकृतत्वात् तेन सकृदज्ञाने प्राजापत्यार्द्धं एवं ज्ञानेऽपि प्राजापत्यमिति ध्येयम्। आपदीति। एतत् सकृदज्ञानविषयं ज्ञाने तु द्विगुणं मन्तव्यम्। चाण्डालस्पृष्टेति द्व्यहसाध्यमिति लघुविषयत्वादित्यर्थः। यम इति।

त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

अत्रापवादे यमः,

आममांसं घृतं चौद्रं स्नेहाश्च फलसम्भवाः।
म्लेच्छभाण्डस्थिता दुष्टाः निष्क्रान्ताः शुचयः स्मृताः ॥३॥

अथान्त्यजखानितकूपादिजलपानप्रायश्चित्तम्।

तत्रापस्तम्बः,

अन्त्यजैः खानिताः कूपास्तड़ागानि तथैव च।
एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति ॥

पञ्चगव्यपानमुपवासपूर्वं व्रतरूपत्वात् एतदज्ञानतः ज्ञानतो द्वैगुण्यम्। यत्तु। वृद्धशातातपवचनं,

अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥

इति तदत्यन्तापद्विषयम् ॥ ४ ॥

अथान्त्यजभाण्डस्थजलादिपाने प्रायश्चित्तम्।

तत्र पराशरः,

भाण्डस्थितमभोज्यानामपः पीत्वा पयो दधि।
ब्राह्मणः चत्रियो वैश्यः शूद्रश्चैवोपसर्पति ॥
ब्रह्मकूर्च्चोपवासश्च याज्यवर्णस्य निष्कृतिः।
शूद्रस्य नोपवासस्तु दिनेनैकेन शुध्यति ॥

---

म्लेच्छभाण्डस्थम्लेच्छस्पृष्टयोस्तुल्यत्वाभिप्रायेण इदमुक्तमिति भावः। फलसम्भवाः स्नेहाः तैलादयः ॥ ३ ॥

अथान्त्यजखानितेति। यत्त्विति सेतौ सेतुबन्धेन रचितजले ॥ ४ ॥

अथान्त्यजेति। तत्रेति अभोज्यानामन्त्यजानाम्। याज्यवर्णा द्विजातयः दिनेनैकेन दिवानशनेन नक्तव्रतेनेत्यर्थः। दिनेनैकेनेति यदुक्तं तच्च युक्तिमूल

उपसर्पति उपसर्पेत् प्रायश्चित्तार्थमित्यर्थः। तच्च लिङर्थे लडिति साधुः। एतच्च द्वग्रहसाध्यम् अतैकपुराणं देयम्। एतदज्ञानतो ज्ञानतो द्वैगुण्यं शूद्रस्य तु वर्णक्रतक्कासक्रमेण नक्तव्रतसमं रूप्यमाषकदानम् ॥ ५ ॥

अथ शूद्रोदकपानप्रायश्चित्तम्।

तत्र शातातपः,

> यदि विप्रः प्रमादेन शूद्रतोयं पिबेत् स्वयम्।
> प्रायश्चित्तं कथं तत्र येन शुद्धिमवाप्नुयात् ॥
> उपोष्य विल्वपत्राणां पलाशस्य कुशस्य च।
> एतेषामुदकं पीत्वा तेन शुद्धिर्भविष्यति ॥

एतच्च ज्ञानतः सकृत् अज्ञानतस्तदर्द्धम् एतदपि द्वग्रहसाध्यम् अतैकपुराणं देयम्। अत्रापवादमाह जाबालः,

> नवभाण्डेषु पानीयं शूद्रविट्क्षत्रजन्मनाम्।
> पेयं तदपि विप्राणां पयो दधि तथैव च ॥
> घृतं तैलं पयः क्षीरं तथैवेक्षुरसो गुड़ः।
> शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥

तथा शङ्खः,

घृतदधिपयस्तक्राणाम् आकरभाण्डस्थितानामदोषः ॥ ६ ॥

---

मित्याह शूद्रस्य त्विति विप्रे तु सकलं देयमिति वचनाच्छूद्रस्य पादशेषौचित्यादिति भावः। क्षत्रियवैश्ययोस्तु विप्रसमत्वं वाचनिकमेव ॥ ५ ॥

अथ शूद्रोदकेति। तत्रेति स्वयमित्यनेन ज्ञानविषयमिदं प्रमादेन शूद्रोदकपाने प्रायश्चित्ताभावभ्रमेणेत्यर्थः शूद्रतोयं शूद्रस्वामिकजलं विल्वादीनां समुदितानां पत्रक्वथितजलपानमात्रं परदिने कृत्वेत्यर्थः नवभाण्डेष्विति एतेन क्षत्रियवैश्ययोरपि पुरातनभाण्डस्थजलपाने दोष इत्युक्तं शातातप इति पयो दुग्धं क्षीरं क्षीरविकारः आकरभाण्डस्थितानामिति यस्मिन् भाण्डे घृतादीनामुत्पत्तिस्तदाकरभाण्डं अन्त्यजसम्बन्धिष्वपि तेषु स्थितानामित्यर्थः ॥ ६ ॥

### अथ पीतशेषजलपानप्रायश्चित्तम् ।

तत्र भविष्यपुराणं,

ग्रासशेषन्तु नाश्नीयात् पीतशेषं पिबेन्न तु ।
शाकमूलफलेक्ष्वादि दन्तच्छेदैर्न भक्षयेत् ॥

तत्र प्रायश्चित्ते शङ्खः,

पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित् ।
त्रिरात्रन्तु व्रतं कुर्य्यात् वामहस्तेन वा पुनः ॥

एतत् प्रायश्चित्तम् ग्रासशेषाशनादिष्वपि ज्ञेयं तुल्यन्यायात् स्वोच्छिष्टभक्षणे पीतशेषजलपाने च ज्ञानाभ्यासे तुल्यचान्द्रायणदर्शनाच्च । एतच्च ज्ञानाभ्यासे अज्ञानतोऽभ्यासे चैतदर्द्धं भूयोऽभ्यासेऽपि प्राजापत्यसान्तपने कल्पनीये वामहस्तेनेति वामहस्तेन जलमुद्धृत्य जलपात्रं वेत्यर्थः तथा च पुलस्त्यनाम्ना-वचनं पठन्ति,

शङ्खशुक्तितरङ्गाश्च यच्चान्यत् पानभाजनम् ।
दक्षिणेनैव तत् कुर्य्यात् न वामेन कदाचनेति ॥

---

अथ पीतशेषेति । तत्रेति पीतशेषं स्वपीतशेषमपि दन्तच्छेदैः इस्ते धृत्वा पुनः पुनर्दन्तैः छित्वेत्यर्थः शङ्ख इति व्रतं यवयावकेन ग्रासशेषाशनादिष्विति आदिपदाद्दन्तच्छेदनभक्षणग्रहणं तुल्यन्यायादिति एकत्र समभिव्याहारेण निषेधश्रवणादित्यर्थः स्वोच्छिष्टभक्षणेति चतुर्व्विंषिमते स्वोच्छिष्टभक्षणे ज्ञानात्यन्ताभ्यासे चान्द्रायणं प्रागुक्तम् अत्र च वृद्धशातातपवचने ज्ञानात्यन्ताभ्यासे पीतशेषजलपाने चान्द्रायणं वक्ष्यते अतो द्वयोः साम्यमिति भावः अत्र यद्यपि शातातपवचनं शूद्रपीतशेषविषयमिति वक्ष्यते तथापि पीतशेषत्वमात्रमादाय साम्यं युक्तमिति भावः । एतच्चेति अज्ञानाभ्याससकृज्ज्ञानकृतयोस्तुल्यत्वादित्यर्थः भूयोऽभ्यास अत्यभ्यास इत्यर्थः पठन्तीति न शङ्खे न पिबेत्तोयमिति वचनविरोधादवास्वरसः । [illegible] दक्षिणेन दक्षिणहस्तेनेत्यर्थः तृतीयया साधनत्वावगतेर्वामहस्तेन वा

न वामेन केवलेनेत्यर्थः तरङ्गः काचपात्रं वृहन्मनुः।

न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना॥

इति निन्दामाह। शातातपः,

उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः।

सुरापानेन तत्तुल्यं मनुराह प्रजापतिः॥

यच्च वृद्धशातातपेनोक्तं,

पीतशेषन्तु यत्तोयं पिबति ब्राह्मणः पुनः।

अपेयं तत्तु जानीयात् पीत्वा चान्द्रायणञ्चरेत्॥

तच्छूद्रपीतशेषविषयं ज्ञानाभ्यासापेक्षं वा॥ ७॥

अथ प्रपादिजलपाने प्रायश्चित्तम्।

लघुहारीतः,

प्रपाजलं सीरघटस्य चैवं द्रोणीजलं कोषविनिर्गतञ्च।

पीत्वावगाहेत जलं सवासा उपोषितः शुद्धिमवाप्नुते च॥

एतच्च ज्ञानतः सकृत् आपदि तु स एव च।

द्रोण्यामायामयुक्तायां छन्ने प्रावर्त्तके तथा।

ग्रामप्रपाजलञ्चैव पीत्वापत्सु न दुष्यति॥

छन्ने प्रावर्त्तके सेचकेऽज्ञात इत्यर्थः। तथा यमः,

---

पुनरिति शङ्खवचनैकवाक्यत्वाच्च यत्तु वामपार्श्वस्थिते तोये यो भुङ्क्ते ज्ञानदुर्बलः। ग्रासे ग्रासे मलं भुङ्क्ते पानीयं रुधिरं भवेदिति वचनं तद्वामभागे पानपात्र-स्थापननिषेधपरं ज्ञानाभ्यासापेक्षमिति ज्ञानतः सकृत् शूद्रपीतशेषजलपाने प्राजापत्यं बोद्धव्यमिति भावः॥ ७॥

अथ प्रपादीति। प्रपाजलमिति कूपजलोत्तोलनार्थं सर्वेषां यो घटः तत्स्थं जलं द्रोणी काष्ठाम्बुवाहिनी चैत्रादिजलसेकपात्रविशेषः तत्स्थं जलं षड्गादि-कोषः तत्स्थं जलम्। स एव हारीत एवेत्यर्थः प्रावर्त्तके जलसेकप्रवर्त्तके छन्ने

एतद्वयं ज्ञाने अज्ञानेऽर्द्धम्। ज्ञानत एव क्लिन्नत्वेन विशेष-माह आपस्तम्बः,

अन्तःस्थितेषु क्लिन्नेषु सर्वपञ्चनखेषु च।
पिबेदपो यः कूपेषु षड्रात्रेण स शुद्ध्यति॥
अक्लिन्नेषु त्रिरात्रं स्याच्छूद्राणां दिनमेव तु।

पञ्चनखेष्वभक्ष्येषु एतच्च मानुषेतरक्लिन्नशवे ज्ञेयम्। अतएव देवलः,

क्लिन्नो भिन्नः शवश्चैव कूपस्थो यदि दृश्यते।
पयः पिबेत् त्रिरात्रं तु मानुषे द्विगुणं स्मृतम्॥

तत् कूपजलं पीत्वोपवसेत्त्रिरात्रमित्यर्थः। एतदकामतः कामतः षड्रात्रं द्वैगुण्येन तु कृच्छ्रद्वयतुल्यं न तु धेनुपञ्चक-संकलितद्वादशाहसाध्यपराको विप्रकृष्टो युक्तः षडुपवाससं-कलितकृच्छ्रार्द्धत्रिरात्रस्य मूलभूतत्वादिति हेतुः। कामा-भ्यासे आपस्तम्बः,

क्लिन्ने भिन्ने शवे चैव तत्रस्थे यदि तत् पिबेत्।
पराकेण विशुद्धिः स्यात् ब्राह्मणानाञ्च भोजनात्॥

अत्यन्ताभ्यासे तु लघुहारीतः,

क्लिन्ने भिन्ने शवे चैव तत्रस्थे यदि तत् पिबेत्।

---

मित्यर्थः। अस्मिन्नेव विषये वक्ष्यमाणापस्तम्बोक्तं पराकव्रतं कैश्चिदुक्तं तद्दूषयति न त्विति विप्रकृष्टोऽत्यन्तासम्बन्धः तदेव विवृणोति षडुपवासेति षडुपवाससङ्कलित-कृच्छ्रस्यार्द्धं दिनत्रयं तन्मूलभूतम् अयमर्थः अज्ञाने क्लिन्नभिन्नशवे देवलेन त्रिरात्रं मानुषशवे तु तद्द्विगुणं षड्रात्रमुक्तं ततश्च ज्ञाने तद्द्विगुणमेव युक्तमिति कथं पराकोऽत्यन्तासम्बन्धः युक्तः इति तर्हि तद्वचनं किंविषयमित्याह कामाभ्यासे इति

शुद्धेर चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा ॥
अशक्तस्य तप्तकृच्छ्रमिति धर्मप्रदीपः ॥ १० ॥

## अथापेयक्षीरपानप्रायश्चित्तम् ।

तत्र मनुः,

अनिर्दशाया: गोः क्षीरं औष्ट्रमैकशफन्तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥
आरण्यानाञ्च सर्वेषां मृगाणां महिषीं विना ।
स्त्रीक्षीरञ्चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥

तथा गोतमः गोः क्षीरमनिर्दशाहायाः सूतके अजामहिष्योश्च नित्यमाविकमपेयम् औष्ट्रमैकशफञ्च स्यन्दिनीयमसूसन्धिनीनाञ्च याश्च वत्सव्यपेताः । तथा यमः,

अनिर्दशाहगोः क्षीरमाजं माहिषमेव च ।
आविकं सन्धिनीक्षीरमौष्ट्रमैकशफन्तथा ॥
वर्जयेद्गोरवत्सायाः पयश्चैवान्यवत्सया ।
आरण्यानाञ्च सर्वेषां वर्जयित्वा तु माहिषम् ॥

शङ्खः । सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्जम् । अत्र च शेषेषूपवसेदहरिति मनुनोपवास उक्तः एतदज्ञानतः सकृद्विषयम् । तथोपवसेदित्यनुवृत्तौ विष्णुश्च गोऽजामहिषीवर्जं सर्वपयांसि तान्यनिर्दशाहं तान्यपि सन्धिनीस्यन्दिनी-

---

अभ्यासोऽत्र पञ्चधाभ्यासः तत्र मानुषे तु पराकद्वयमिति भावः अत्यन्ताभ्यासोऽष्टधाभ्यासः धर्मप्रदीप इति वस्तुतस्तु तप्तकृच्छ्रमज्ञानविषयम् ॥ १० ॥

अथापेयक्षीरेति । मनुरिति अनिर्दशायाः प्रसवादिदशदिनमध्यवर्त्तिन्याः एकशफाः अश्वादयः अवयो मेषाः सन्धिनी वृषाक्रान्ता आरण्यमृगाणां हरिणादीनां स्त्रीक्षीरं मनुष्यदुग्धम् । गोतम इति अजामहिष्योरनिर्दशयोश्चेत्यर्थः

विवत्साक्षीरञ्चामेध्यभुजश्च। सन्धिनी वृषभाक्रान्ता विवत्सा हस्तप्रस्रववती। अतएव हारीतः,

हस्तवत्या निन्दितोध्न्याश्च पयो वर्जयेत्।

निन्दितोध्नी व्रणादिदूषितस्तनी स्यन्दिनी नित्यं स्रवत्पयस्तनी यमसूर्वत्सयुग्मप्रसूता ॥ ११ ॥

यमवचनेऽनिर्दशाहमित्यस्य आजं माहिषमेव चेत्यनेनापि सम्बन्धः। आविकादिकन्तु दशाहादूर्द्धमप्यपेयमेव गोतमविष्णुदर्शनात्। शक्कन्मूत्रयोरपि तुल्यन्यायान्निषेधः। सर्वासां द्विस्तनीनामित्यनेनैडकादेर्ग्रहणम् अमेध्यभुजो मद्यादिभक्षणशीलायाः। सकृत् कामतस्तु

गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टञ्च कामतः।
सन्धिन्यनिर्दशायाश्च गोः पयः परिवर्जयेत्।
औष्ट्रमैकशफं स्त्रैणम् आरण्यकमथाविकम् ॥

---

स्यन्दिनी स्वयंस्रवत्क्षीरा यमसू युग्मप्रसविनी गौरेव सन्धिनी साहचर्य्यात् वत्सव्यपेता विवत्सा तासां क्षीरमित्यर्थः ॥ ११ ॥

यम इति। अनिर्दशाहमिति आजमाहिषयोरपि सम्बध्यते अन्यः स्वप्रसूतेतरो वत्सो यस्याः तया हेतुभूतया यत् पयस्तत्सम्भूतमित्यर्थः। विष्णुरिति तान्यपि गोऽजामहिषीपयांस्यपि अनिर्दशाहं पीत्वोपवसेदित्यर्थः। शक्कन्मूत्रयोरिति आविकादिकयोरित्यर्थः स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति पाणिनिसूत्रम् अस्यार्थः धान्यादीनाम्भवने इति वक्ष्यमाणसूत्रस्य भवनार्थात् प्रागर्थेषु स्त्रीपुंसाभ्यां यथासंख्यं नञ्स्नञौ भवतः एतदुक्तं भवति भवन्त्यत्र भवनं चेत्रं तत्र धान्यादिभ्यः षष्ठ्यादीनप्रत्ययो वक्ष्यते तस्मात् भवनार्थात् प्राक् येष्वर्थेषु प्रत्यया विधातव्यास्तेषु अर्थेषु नञ्स्नञौ स्यातां तन्मध्ये तत्र भव इत्यर्थे यः प्रत्ययो विधीयते ततः तस्मिन्नर्थे नञ् भवतीति। शक्व इति ज्ञाना भ्यासो द्विरभ्यासः क्षीरविकाराशने तु सप्तरात्रं वाचनिकं तत्रैव विषय इति ज्ञानाभ्यास इत्यर्थः। आममांसादिष्विति आममांसपूयसन्धिन्यनिर्दशाक्षीरेष्वित्यर्थः वृथामांसे सकृज्ज्ञाने प्राजापत्यस्योक्तत्वात्

इत्युक्त्वाह। याज्ञवल्क्यः,

मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् इति।

स्त्रैणमिति स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति भवनार्थे नञ्-प्रत्यये मानुषीक्षीरमित्यर्थः। अभ्यासे तु शङ्खः,

> अनिर्दशाहं गोः क्षीरं माहिषं चाजमेव च।
> गोश्च क्षीरं विवत्सायाः स्यन्दिन्याश्च तथा पयः॥
> सन्धिन्या मेध्यभक्ष्याया भुक्त्वा पक्षं व्रतं चरेत्।
> क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः।
> सप्तरात्रं व्रतं कुर्य्यात् यदेतत् परिकीर्त्तितम्॥

व्रतं यावकेन पक्षयावके धेनुरेका सप्ताहयावके चतुर्विंशति-पणाः। एतच्च ज्ञानाभ्यासे। अत्रैव विषये विशेषमाह शातातपः। उष्ट्रीक्षीरमानुषीक्षीरप्राशने पुनरुपनयनं तप्त-कृच्छ्रञ्च आममांसपूयसन्धिन्यनिर्दशाहगोक्षीरपाने ह्यथामांसे च प्राजापत्यम् अत्र च सोपनयनतप्तकृच्छ्रमुष्ट्रीस्त्रीक्षीरप्राशने एव। स च याज्ञवल्क्योक्तश्चतुरहसाध्यः तत्र सपादधेनुः आममांसादिषु च कृच्छ्रं ज्ञानाभ्यास एव। यत्त्वनेनैव उष्ट्री-क्षीरमविक्षीरमित्युक्त्वा चान्द्रायणमित्युक्तं तज्ज्ञानतोऽत्यन्ता-भ्यासे वेदितव्यम्। गोतमः उद्धृतस्नेहविनायनपिण्याक-

---

यश्चिति अनेन शातातपेन क्षीरादीत्यादिशब्दात् तद्विकारग्रहणं घृतमलमिति सुयस्विद्रव्येण घृतशोधनात्तदवशिष्टं विनायनमित्यर्थः तथा च विकाण्डशेषः घृत-शङ्खौ घृतस्याधःस्थितः कल्को विनायनमिति प्रभृतिपदोपगृहीतं विवृणोति यथा मांसानीति। रसं संपीड्य त्यक्तानीत्यर्थः अत्र चेति उद्धृतस्नेहपदेन उद्धृतरस उच्यते तेनोद्धृतस्नेहानामात्तवीर्य्यत्वे सति उद्धृतस्नेहात्तवीर्य्यपदयोस्तुल्यत्वे सति यत् पुनरात्तवीर्य्यपदं तत् पिण्याकादीनामत्यन्तोद्धृतस्नेहानामेव निषेधार्थं न तु किञ्चिदुद्धृतस्नेहानां तेन पिण्याकाद्यामतक्राम्बुशक्तूनां प्रतिवासरम्। एकरात्रोप

विवत्साक्षीरञ्चामेध्यभुजश्च। सन्धिनी वृषभाक्रान्ता विवत्सा हृस्तप्रस्नववती। अतएव हारीतः,

हस्तवत्या निन्दितोध्न्याश्च पयो वर्जयेत्।

निन्दितोध्नी व्रणादिदूषितस्तनी स्यन्दिनी नित्यं स्रवत्पयस्तनी यमसूर्वत्सयुग्मप्रसूता ॥ ११ ॥

यमवचनेऽनिर्दशाहमित्यस्य आजं माहिषमेव चेत्यनेनापि सम्बन्धः। आविकादिकन्तु दशाहादूर्द्धमप्यपेयमेव गोतमविष्णुदर्शनात्। शकृन्मूत्रयोरपि तुल्यन्यायान्निषेधः। सर्वासां द्विस्तनीनामित्यनेनैडकादेर्ग्रहणम् अमेध्यभुजो मद्यादिभक्षणशीलायाः। सकृत् कामतस्तु

गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टञ्च कामतः।
सन्धिन्यनिर्दशायाश्च गोः पयः परिवर्जयेत्।
औष्ट्रमैकशफं स्त्रैणम् आरण्यकमथाविकम् ॥

---

स्यन्दिनी स्वयंस्रवत्क्षीरा यमसू युग्मप्रसविनी गौरेव सन्धिनी साहचर्य्यात् वत्सव्यपेता विवत्सा तासां क्षीरमित्यर्थः ॥ ११ ॥

यम इति। अनिर्दशाहमिति आजमाहिषयोरपि सम्बध्यते अन्यः स्वप्रसूतेतरो वत्सो यस्याः तया हेतुभूतया यत् पयस्तत्सम्भूतमित्यर्थः। विष्णुरिति तान्यपि गोऽजामहिषीपयांस्यपि अनिर्दशाहं पीत्वोपवसेदित्यर्थः। शकृन्मूत्रयोरिति आविकादिकयोरित्यर्थः स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति पाणिनिसूत्रम् अस्यार्थः धान्यादीनभवने इति वक्ष्यमाणसूत्रस्य भवनार्थात् प्रागर्थेषु स्त्रीपुंसाभ्यां यथासंख्यं नञ्स्नञौ भवतः एतदुक्तं भवति भवन्त्यत्र भवनं चेदं तत्र धान्यादिशब्दादीनप्रत्ययो वक्ष्यते तस्मात् भवनार्थात् प्राक् येष्वर्थेषु प्रत्यया विधातव्यास्तेषु अर्थेषु नञ्स्नञौ स्यातां तन्मध्ये तत्र भव इत्यर्थे यः प्रत्ययो विधीयते ततः तस्मिन्नर्थे नञ् भवतीति। शश्व इति ज्ञाना भ्यासो द्विरभ्यासः क्षीरविकाराशने तु सप्तरात्रं वाचनिकं तत्रैव विषय इति ज्ञानाभ्यास इत्यर्थः। आममांसादिष्विति आममांसपूयसन्धिन्यनिर्दशाक्षीरेष्वित्यर्थः इयामांसे सकृज्ज्ञाने प्राजापत्यस्योक्तत्वात्

इत्युक्त्वाह। याज्ञवल्क्यः,

मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् इति।

स्त्रैणमिति स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति भवनार्थे नञ्प्रत्यये मानुषीक्षीरमित्यर्थः। अभ्यासे तु शङ्खः,

अनिर्दशाहं गोः क्षीरं माहिषं चाजमेव च।
गोश्च क्षीरं विवत्सायाः स्यन्दिन्याश्च तथा पयः॥
सन्धिन्या मेध्यभक्ष्याया भुक्त्वा पक्षं व्रतं चरेत्।
क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः।
सप्तरात्रं व्रतं कुर्य्यात् यदेतत् परिकीर्त्तितम्॥

व्रतं यावकेन पक्षयावके धेनुरेका सप्ताहयावके चतुर्विंशतिपणाः। एतच्च ज्ञानाभ्यासे। अत्रैव विषये विशेषमाह शातातपः। उष्ट्रीक्षीरमानुषीक्षीरप्राशने पुनरुपनयनं तप्तकृच्छ्रश्च आममांसपूयसन्धिन्यनिर्दशाहगोक्षीरपाने वृथामांसे च प्राजापत्यम् अत्र च सोपनयनतप्तकृच्छ्रमुष्ट्रीस्त्रीक्षीरप्राशने एव। स च याज्ञवल्क्योक्तश्चतुरहसाध्यः तत्र सपादधेनुः आममांसादिषु च कृच्छ्रं ज्ञानाभ्यास एव। यत्त्वनेनैव उष्ट्रीक्षीरमविक्षीरमित्युक्त्वा चान्द्रायणमित्युक्तं तज्ज्ञानतोऽत्यन्ताभ्यासे वेदितव्यम्। गोतमः उद्धृतस्नेहविनायनपिण्याक-

---

यश्चेति अनेन शातातपेन क्षीरादीत्यादिशब्दात् तद्विकारग्रहणं घृतमलमिति सुयन्त्रिद्रव्येण घृतशोधनात्तदवशिष्टं विनायनमित्यर्थः तथा च विकाण्डशेषः घृतशब्दो घृतस्याधःस्थितः कल्को विनायनमिति प्रभृतिपदोपग्रहीतं विशुष्कोति यथा मांसानीति। रसं संपीड्य त्यक्तानीत्यर्थः अत्र चेति उद्धृतस्नेहपदेन उद्धृतरस उच्यते तेनोद्धृतस्नेहानामात्तवीर्य्यत्वे सति उद्धृतस्नेहात्तवीर्य्यपदयोस्तुल्यत्वे सति यत् पुनरात्तवीर्य्यपदं तत् पिण्याकादीनामत्यन्तोद्धृतस्नेहानामेव निषेधार्थं न तु किञ्चिदुद्धृतस्नेहानां तेन पिण्याकाचामतक्राम्बुशक्तूनां प्रतिवासरम्। एकरात्रोप

मथितप्रभृतीनि आत्तवीर्य्याणि। अत्रापि शेषेषूपवसेदहरि-
त्येव बोद्धव्यं ज्ञानतो द्वैगुण्यम् उद्धृतस्नेहं चीरादिविनायनं
घृतमलं पिण्याकः खलिः मथितं तक्रम् आत्तवीर्य्याणि गृहीत-
साराणि यथामांसानि रसनिष्पादनोज्झितानि। अत्रोद्धृत-
स्नेहानामात्तवीर्य्यत्वे सत्यपि पुनरात्तवीर्य्यपदमत्यन्तोद्धृत-
स्नेहपिण्याकोदकप्रायतक्राभिप्रायम्।

पिण्याकाचामतक्राम्बुशक्तूनां प्रतिवासरम्।

इति याज्ञवल्क्यविरोधात्॥ १२॥

कपिलाचीरे विशेषमाह। आपस्तम्बः,

चत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः।
यः पिबेत् कापिलं चीरं न ततोऽन्योऽस्त्यपुण्यकृत्॥

भविष्यपुराणे,

कापिलं यः पिबेच्छूद्रो नरके स विपच्यते।
हुतशेषं पिबेद्विप्रो विप्रः स्यादन्यथा पशुः॥

तत्रापि शेषेषूपवसेदहरिति मनुनोक्तोपवासः। एतच्छूद्रव्यति-
रिक्तविषयं कपिलापानं शूद्रस्येति वचनेन तस्य महापातक-
त्वात्। यदि चान्यानि मुन्यन्तरोक्तानि अभक्ष्यभक्षणे अपेय-

---

वासश्च सौम्यः कृच्छ्रोऽयमुच्यते इति याज्ञवल्क्यवचने व्रतविधौ पिण्याकतक्रभक्षण-
विरोधः परिहृत इत्यर्थः। हुतशेषमिति देवतादत्तशेषमपि मन्तव्यं यागत्वेन
तुल्यन्यायात्। अत्रापीति एतदज्ञानतः ज्ञाने तु द्वैगुण्यम् एतदिति एतत्
प्रायश्चित्तमित्यर्थः॥ १२॥

कपिलेति। एतानि महापातकानीत्यनुवृत्तौ मांसविक्रयी ब्रह्महत्या
ब्राह्मणीगमनं कपिलापानं शूद्रस्येति च्यवनवचने तस्य कपिलाचीरपानस्य
महापातकत्वात् महापातकत्वातिदेशादित्यर्थः। तेन तत्रानुपातकोक्तं प्राय-

पाने गुरुलघुप्रायश्चित्तानि तानि कामाकामसकृदभ्यासापेक्षया योज्यानि द्रव्याणामानन्त्यात् प्रतिव्यक्तिषु अभक्ष्यत्वमभिधातुमशक्यमिति तत् स्मृत्यन्तरादेवावगन्तव्यम्। शिष्टवाक्याच्च। यथा शङ्खः,

भक्ष्याभक्ष्याण्यनेकानि ब्राह्मणस्य विशेषतः।
तत्र शिष्टा यथा ब्रूयुस्तथा कार्य्यो विनिश्चयः॥

तत्र सामान्याभक्ष्यभक्षणप्रायश्चित्तमुक्तमेव। अभक्ष्यभक्षणशङ्कायामपि प्रायश्चित्तमाह॥ १२॥

वशिष्ठः,

शङ्कास्थाने समुत्पन्ने अभोज्यभोज्यसंकुले।
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु॥
अक्षारलवणां रूक्षां पिबेत् ब्राह्मीं सुवर्चलाम्।
त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह॥

अङ्गिराः,

अनापदि चरेद् यस्तु सिद्धां भिक्षां गृहे वसन्।
दशरात्रं पिबेद्वज्रमापत्काले त्र्यहं पिबेत्॥

---

श्चित्तमिति भावः प्रतिव्यक्तिषु प्रतिद्रव्येष्वित्यर्थः तत्रेति भक्ष्याभक्ष्याण्यनेकानीत्यनेन शङ्खेन यत्र प्रायश्चित्तं नास्ति तत्र वशिष्ठवचनात् प्रायश्चित्तमुह्यमित्युक्तं तच्च प्रथमतः सामान्याभक्ष्यभक्षणप्रकरणे अभोज्यानामपेयानामित्यादिनोक्तमेव तत्राप्यभक्ष्यत्वशङ्कायामपि प्रायश्चित्तमाह॥ १२॥

वशिष्ठ इति। शङ्कास्थान इति इदं भक्ष्यमभक्ष्यं वेति शङ्काविषये भोजने कृते सति आहारशुद्धिं वक्ष्यामीत्यर्थः रूक्षां रुग्यां सिद्धां सिद्धान्नभिक्षां गृहे वसन् स्वगृहे तिष्ठन् वज्रं केवलगोमूत्रयावकव्रतम् एतदत्यन्ताभ्यासविषयं प्रायश्चित्त-

शङ्कास्थाने समुत्पन्ने ह्यभोज्यभोज्यसंज्ञके।
प्रतिमासमिदं प्रोक्तम् अभक्ष्य प्रति शङ्कया॥
प्रतिसंवत्सरञ्चैव श्रोत्रियस्य विधीयते॥

अत्र द्वादशधेनुसंकलितमासगोमूत्रयावकस्य तृतीयभागत्वात् दशरात्रे धेनुचतुष्टयं त्र्यहे च धेनुरेका देया। मनुः,

संवत्सरस्यैकमपि चरेत् कृच्छ्रं द्विजोत्तमः।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः॥
अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता।
अज्ञातभुक्तमुत्ताय्यं शोध्यं वाप्याशु शोधनैः॥

अत्र च प्रकरणे वर्णविशेषेण प्रायश्चित्तम् नाभिहितम् अत्र विष्णुवचनादवस्था यथा विष्णुः,

विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यते॥

इति प्रायश्चित्तविवेके उपपातकाभक्ष्यभक्षणप्रायश्चित्तानि॥१४॥

---

गौरवादिति अभक्ष्यभक्षणशङ्कायान्तु मासमध्ये एतत् व्यहवज्रव्रतमश्री यस्य प्रोक्तं श्रोत्रियस्य तु संवत्सरमध्ये सकृदेतदित्यर्थः अत्रेति मासगोमूत्रयावके द्वादश-धेनवः प्रागुक्तास्तत्तृतीयभागे धेनुचतुष्टयमिति भावः। मनुरिति इदमशुद्धं भुक्तमिति विशिष्य न ज्ञायते किन्तु सामान्यतोऽशुद्धं भुक्तमिति ज्ञायते तच्छुद्ध्यर्थं संवत्सरमध्ये एकं प्राजापत्यञ्चरेत् विशिष्टज्ञातस्य तु भुक्तस्य शुद्ध्यर्थं विशेषतस्तदुक्तं प्रायश्चित्तमित्यर्थः। अभोज्यमन्नं रजस्वलादिदुष्टं नात्तव्यं तच्चाज्ञातभुक्तं पश्चात् ज्ञातञ्चेत् तदा उत्तार्य्यम् अनुत्तीर्णं चेत्तदा आशु शोधनैः पञ्चगव्यादिभिः शोध्यम् अत्र चेति यत्र तु विशिष्योक्तं तत्र तदेव यत्र तु वर्णभेदेन प्रायश्चित्तविशेषो नोक्तः तत्र विष्णुवचनादवस्थेत्यर्थः॥ १४॥

इति प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्याम् अपेयपानप्रायश्चित्तम्।

अथोपपातके स्तेयप्रायश्चित्तं निरूप्यते।

तत्र मणिमुक्तादिस्तेयप्रायश्चित्तम्। तत्र मनुः,

मणिमुक्ताप्रवालानां सर्वस्याश्ममयस्य च।
अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता॥

कणान्नता कणाभक्षणं द्वादशाहकणान्नभक्षणे च षडुपवासाः सम्पद्यन्ते तदशक्तौ पुराणत्रयं देयम् अत्र सकृदभ्यासकालदेशद्रव्यस्वाम्यपहर्त्तृगुणदैन्याद्यपेक्षया उत्कृष्टापकृष्टद्रव्यापहारे वैषम्यदोषः शमनीयः। अपहृतद्रव्यप्रदानपूर्वकञ्चैतत् कर्त्तव्यम्। यथा विष्णुः,

दत्त्वैवापहृतं द्रव्यं धनिकस्याभ्युपायतः।
प्रायश्चित्तं ततः कुर्य्यात् कलुषस्यापनुत्तये॥ १५॥

अथ रजताश्वादिस्तेयप्रायश्चित्तम्।

तत्र हारीतः, रजतस्तैन्ये चान्द्रायणम्। जाबालः,

अश्वगोभूमिकन्याश्च हृत्वा चान्द्रायणं चरेत्।
क्षुद्रपशूनपहृत्य प्राजापत्यं समाचरेत्॥

कन्यापदमधमकन्यापरम् अन्यत्र कन्यान्तु हरतो बध इति

---

अथेति। तत्र मणिमुक्तेति मनुरिति मण्यादीनां हरण इति शेषः। मणयः सूर्य्यकान्ताद्याः सर्वस्याश्ममयस्य अश्मविकारस्य पात्रादेरित्यर्थः उपलानां प्रस्तरभेदानां मरकतादीनामित्यर्थः। अत्रेति बहुमूल्यानां सकृदल्पमूल्यानाम् अभ्यासे कालदेशौ दुर्भिक्षादिदोषेण उपहतानुपहतौ द्रव्यस्वामी सगुणो निर्गुणश्च अपहर्त्तुस्तच्छीलादिगुणः दैन्यञ्च आदिशब्दात् लघुगुरुप्रयत्नादीनां ग्रहणम् उत्कृष्टं बहुमूल्यम् अपकृष्टम् अल्पमूल्यम्॥ १५॥

अथ रजताश्वादीति। क्षुद्रपशवोऽजाद्याः अन्यत्र उत्तमकन्याविषये बधदण्डत्वेन प्राणान्तिकप्रायश्चित्ताभिधानादिति भावः। विष्णुरिति, तथाच मनुः

दण्डस्योक्तत्वात् एतद्‌ ब्राह्मणासम्बन्धिरजतभूम्यश्वादिविषयम्। ब्राह्मणरजतादिहरणस्यानुपातकत्वोक्तेः। तथा च विष्णुः, ब्राह्मणभूमिहरणं निक्षेपापहरणं सुवर्णस्तेयसमम्। रजताश्वगोभूमिकन्यानां सकृद्धरणे चान्द्रायणम् उक्ततरक्षुद्रपश्वपहारे चाभ्यासतः॥ १६॥

## अथ धान्यादिस्तेयप्रायश्चित्तम्।

तत्र मनुः,

धान्यान्नधनचौर्य्याणि कृत्वा कामाद्द्विजोत्तमः।
सजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति॥

अन्नं कृतान्नं धनं गवादि। ततश्च ब्राह्मणसम्बन्धिनामेतेषाम् ब्राह्मणकर्त्तृकापहारे इदं प्रायश्चित्तम्। तत्कर्त्तृकेऽपि क्षत्रियादिधनाद्यपहारे लघुतरम्। अतएव स एव,

हीनादादेयमादौ स्यात्तदलाभे समादपि।
असम्भवे त्वाददीत विशिष्टादपि धार्मिकात्॥

इति परिग्रहविशेषाद्‌ गुरुत्वं दर्शयति। यद्यपि धान्यापहाराद्धनापहारस्य गुरुत्वेन वैषम्यात्तुल्यप्रायश्चित्तमन्याय्यं तथापि,

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽप्यधिकं वधः।

---

न्वेषस्यापहरणं नराश्वरजतस्य च। भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम्। तदपि ब्राह्मणसम्बन्धिविषयं विष्णुवचनैकवाक्यत्वात् ब्राह्मणासम्बन्धे तु गोभूम्यादि- [illegible]हरणे चान्द्रायणमित्यर्थः यच्च क्षुद्रपश्वपहारे प्राजापत्यमुक्तं तदभ्यासत एव वेदि- [illegible]व्यमित्यर्थः॥ १६॥

[illegible] धान्यादीति। मनुरिति, अत्र चौर्य्याणीति बहुवचनादभ्यासविषयमिदं [illegible] स एव मनुरेव अत्यन्ताशक्तौ चौर्य्यविषय इत्यर्थः। परि-

इति मनूक्तदण्डस्य महापराधविषयत्वात् कृच्छ्राब्दस्य गुरुत्वानुरूपतैव एतदुक्तं स्यात् यावत्परिमितधान्यापहारे बधः तावत एव स्तेयेऽब्दकृच्छ्रं स्यात् न्यूनाधिकापहारेऽनयैव दिशा कल्प्यम्। कुम्भपरिमाणञ्च कैश्चिल्लिखितकात्यायनवचनात्। यथा,

दशद्रोणी भवेत् खारी कुम्भोऽपि द्रोणविंशतिः।

इति धनमप्येतावत्परिमितधान्यमूल्यमवसेयम्। ये तु एतानि समुदितानि अपहृत्य प्रायश्चित्तमिदं व्यवस्थापयन्ति तेषां गुरुतल्पगस्य त्र्यब्दमभिधाय,

धनधान्यान्नचौर्य्येषु पृथगेकैकमारभेत्॥

इति यमवचनविरोधः अत्र हि एकैकद्रव्यस्तेये एकैकं वर्षमारभेदिति वीप्सातोऽवगतमिति। अन्नापहारे विशेषमाह पैठीनसिः। भक्ष्यभोज्यस्यान्नस्योदरपूरणमात्रहरणे त्रिरात्रं एकरात्रं वा पञ्चगव्याहारतेति। अत्र च,

सायं प्रातर्द्विजातीनामशनं देवनिर्मितम्।

इति द्विकालभोजननियमात् द्विकालभोजनोचितान्नहरणे त्रिरात्रम्। एककालान्नापहारे एकरात्रं पञ्चगव्याहारतेति भक्ष्यं मोदकादि। भोज्यमोदनशक्त्वादि॥ १७॥

---

महद्विशेषात् द्रव्यस्वामिसम्बन्धविशेषात् असम्भव इत्यनेन गुरुत्वं दर्शयति। कुम्भपरिमाणञ्चेति ज्ञेयमिति शेषः दशद्रोणेति द्रोणपरिमाणमुक्तं पद्मपुराणे। प्रसृतिभिर्द्वादशभिः कुड़वस्तच्चतुर्गुणः प्रस्थः प्रस्थैश्चतुर्भिश्च आढ़कः परिकीर्त्तितः। चतुराढ़को भवेद् द्रोण इति। ये त्विति अपहृत्य स्थितस्येति शेषः त्र्यब्दं कृच्छ्राब्दत्रयम् अभिधाय प्रोक्तं यद् यमवचनं तेन विरोध इत्यन्वयः धनधान्यादित्रिषु एकैकं कृच्छ्राब्दं मिलित्वा अब्दत्रयमित्यर्थः॥ १७॥

## अथ मनुष्यादिस्तेयप्रायश्चित्तम्।

मनुः,

मनुष्याणाञ्च हरणे स्त्रीणां क्षेत्रगृहस्य च।
कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम्॥

मनुष्यस्त्रियौ दासदास्यौ न तूत्कृष्टौ तद्धरणे तु,

पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः।
मुख्यानाञ्चैव रत्नानां हरणे बधमर्हति॥

इति गुरुदण्डस्य मनुनोक्तत्वात् तद्विषयमेव,

निःक्षेपस्यापहरणं नराश्वरजतस्य च।
भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं विदुरिति॥

अनुपातकत्वात् गुरुप्रायश्चित्तं ज्ञेयम्। क्षेत्रादीनान्तूपयोगातिशयाभ्यासाद्यपेक्षयास्त्येव प्रायश्चित्ते गुरुलघुभावः॥ १८॥

## अथ गुड़ादिस्तेयप्रायश्चित्तम्।

तत्र जाबालः,

गुड़कार्पासधान्यानि सर्पिर्लवणमेव च।
पक्वान्नमौषधं तैलं शय्या वास उपानहौ॥
कांस्यायस्ताम्रसीसं वा अर्द्धं कृच्छ्रार्द्धमेव च।
उदके फलमूलेषु पुष्पपर्णसुगन्धिषु॥

---

अथ मनुष्यादीति। मनुरिति कूपवापीजलानां सर्वेषां हरणे इत्यर्थः उपयोगातिशयः उपभोगातिशयः अभ्यासादीत्यादिशब्दात् प्रयत्नादीनां ग्रहणम्॥१८॥

अथ गुड़ादिस्तेयेति। गुड़ादिकमपहृत्येति शेषः। तथा च उदकादिकेष्वपहृतेष्विति शेषः। उदकादिकमुपलक्षणं सर्वत्रैव तत्तुल्यमूल्यदानादिना स्वामिसन्तोषो मन्तव्यः। प्रायश्चित्तेन युज्यते इति उक्तेन कृच्छ्रार्द्धतदर्द्धप्रायश्चित्तेन इत्यर्थः। चान्ये त्विति द्विरभ्यासेन दशकुम्भापहार इत्यर्थः। तथैव प्रागुक्तत्वा-

भक्ष्याण्डमधुमांसेषु सन्तोष्य स्वामिनं ततः।
पापं निवेद्य विप्रेभ्यः प्रायश्चित्तेन युज्यते॥

अर्द्धमिति कृच्छ्रार्द्धस्यार्द्धं पादमित्यर्थः। धान्ये तु दशकुम्भापहारे कृच्छ्राब्दस्योक्तत्वात् कृच्छ्रार्द्धस्य तत् षष्टिभागत्वात् धान्यस्यापि दशकुम्भषष्टिभागस्य समधिकद्रोणत्रयस्य तावद्धान्यमूल्यानां चान्येषां हरणे एतद्वेदितव्यम्। ततश्च सकृद्गुड़ाद्यपहारे पादकृच्छ्रव्रतं तदशक्तौ द्वादशपणा देया अभ्यासे कृच्छ्रार्द्धम्॥ १८॥

अथ तृणादिस्तेयप्रायश्चित्तम्।

तत्र मनुः,

तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुड़स्य च।
चेलचर्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम्॥

शुष्कान्नस्य तण्डुलादेः। द्विकालाशनयोग्यापहारे त्रिरात्रं वह्वपहारे त्वधिकमप्यूह्यम्। तृणादीनाञ्च तत्तुल्यमूल्याना-

---

दिति तत्षष्टिभागत्वादिति कृच्छ्राब्दे त्रिंशत्कृच्छ्राणि भवन्ति ततश्च कृच्छ्राब्दं त्रिंशत्कृच्छ्राणां षष्टितमभाग इत्यर्थः। धान्यस्यापीति कुम्भस्तु द्रोणविंशतिः दशकुम्भी द्रोणशतद्वयं तत्षष्टितमभागः समधिकद्रोणत्रयं त्रिभागाधिकद्रोणत्रयं भवति तस्यान्येषाञ्च गुड़ादिद्रव्याणां तावद्धान्यमूल्यानां त्रिभागाधिकद्रोणत्रयधान्यमूल्यानां सकृद्धरणे कृच्छ्रार्द्धार्द्धं पादव्रतं द्विरभ्यासे दशकुम्भहरणे कृच्छ्राब्दस्योक्तत्वात् द्विरभ्यासहरणे कृच्छ्रार्द्धमित्यर्थः। उदकापहारे तु स्वामिनस्तत्कृततावन्मूल्यद्रव्यनाशे तावन्मूल्यस्वद्रव्यसंवर्द्धनं वा मन्तव्यम् एवञ्चाभ्यासाधिक्ये च प्रायश्चित्ताधिक्यं तथा च तावत्परिमितधान्यद्वैगुण्यादिके अन्येषाञ्च गुड़ादीनाञ्च तावत्परिमितधान्यमूल्यद्वैगुण्यादिके सति उक्तप्रायश्चित्तद्वैगुण्यादिकं बोद्धव्यमिति भावः॥ १८॥

अथ तृणादीति। मनुरिति हरणे इत्यनुवर्त्तमानेन तृणादीनां सम्बन्धः द्विकालाशनेति पैठीनसिवचने तथैव प्रागुक्तत्वात् तत्तुल्यमूल्यानामिति द्विकाला-

मिति धर्म्मप्रदीपः। एषामेव प्रभूतापहारे बहुधापहारे चेत्यपरे। अभ्यासादिष्वाह। शङ्खः,

तथा धान्यस्यापहारे मणीनां रजतस्य च।
धनापहरणे चैव कुर्य्यात् संवत्सरं व्रतम्॥

तिलधान्यान्नवस्त्राणां शय्यानामामिषस्य च।
संवत्सरार्द्धं कुर्वीत व्रतमेतत् समाहितः॥

तृणेक्षुकाष्ठतक्राणां रसानामपहारकः।
मासमेतद् व्रतं कुर्य्यात् गन्धानां सर्पिषां तथा॥

लवणानां गुड़ानाञ्च मूलानां कुसुमस्य च।
मासार्द्धन्तु व्रतं कुर्य्यात् एतदेव समाहितः॥

लौहानां वैदलानाञ्च सूत्राणां चर्म्मणान्तथा।
एकरात्रं व्रतं कुर्य्यादेतदेव समाहितः॥

गन्धः कस्तूरिकादिः। वैदलं वेणुघटितभाण्डम्। व्रतं ब्रह्मवधोक्तमहाव्रतं तस्यैवोपक्रान्तत्वात्। अत्रापि कालदेशापहर्त्तृद्रव्यस्वामिगुणदौर्गत्याभ्यासानभ्यासकामाकामापेक्षया उत्कृष्टापकृष्टद्रव्यापहारयोः वैषम्यकृतदोषः समर्थनीयः। अत्रापवादमाह शङ्खः,

---

अनर्योग्यशुष्कान्नमूल्यानामित्यर्थः वस्तुतस्तु प्रागुक्तजावालवचने गुड़ादीनां सामयिकद्रोणत्रयमूल्यानामपहाराभ्यासे कृच्छ्रार्द्धमुक्तम् अत्रापि गुड़ादिसाहचर्य्यात् तावन्मूल्यानां तृणादीनां हरणे कृच्छ्रार्द्धतुल्यं त्रिरात्राभोजनं मन्तव्यम् इति हृदयम्। शङ्ख इति। धनं ताम्ररैत्तादि तिलधान्यान्नवस्त्राणामित्यत्र धान्यं शूकधान्यं यवादि रसानां मध्वादीनां व्रतमिति ब्रह्मवधोक्तमहाव्रतस्य संवत्सरादिव्रतमित्यर्थः। अत्रापीति दौर्भाग्यं दारिद्र्यम् एवं प्रागुक्तभागहारानुरूपेणात्यन्ताभ्यासादिभिः सकृदन्तैः संवत्सरतदर्द्धमासतदर्द्धदिनैकव्रतानि यथायोग्यं समर्थनीयानीति भावः। अस्तेयमिति। अग्निरत्र गार्हपत्यादिः गवे गोग्रासार्थं

अस्तेय मम्नये काष्ठमस्तेयञ्च तृणं गवे।
कन्याहरणमस्तेयं यो हरत्यनलङ्कृताम्॥ २०॥

अथ जीविकापहारप्रायश्चित्तम्।

अत्र यद्यपि वृत्तिच्छेदे ग्रामजानप्रयोजनबुद्ध्यादिनापहर्त्तुः स्वनिष्ठलाभावादपहारोऽस्य नास्ति तथापि कुत्रापि स्वनिष्ठत्वस्य दृश्यमानत्वात् तथा चौरस्यैव वैरनिर्यातनभयादिना जलाग्निप्रक्षेपेऽपहार इति व्यपदेशाच्च वृत्तिच्छेदमात्रेऽपहारशब्दप्रयोग इति भावः। अतएव धर्मप्रदीपेऽपि स्तेयप्रकरणे एतत्प्रायश्चित्तं दर्शितम्। अत्र वायुपुराणं,

यदेतत् द्रविणं नाम प्राणास्ते तु वहिश्वराः।
स तस्य हरते प्राणान् यो यस्य हरते धनम्॥

प्रायश्चित्ते शङ्खः,

यस्य यस्य तु वर्णस्य वृत्तिच्छेदं समाचरेत्।
तस्य तस्य बधप्रोक्तं प्रायश्चित्तं समाचरेत्॥

---

कन्याऽत्र सवर्णा समकुलसम्भवा च योऽनलङ्कृतां तां हरति तस्यैव कन्याहरणमस्तेयम् अन्यथालङ्कारापहारप्रायश्चित्तं कुर्यादित्यर्थः॥ २०॥

अथ जीविकेति। यत्र परजीविकां चैत्रादिकम् अपहृत्य स्वयं गृह्णाति तत्र चैत्राद्यपहार एव यत्र तु परजीविकाच्छेदं कृत्वा ग्रामाय राज्ञे वा समर्पयति तत्र प्रायश्चित्तं निरूप्यते। तच्च स्तेयं न भवति तत्र स्वीयबुद्ध्यभावात् ततः कथं स्तेयप्रायश्चित्तम् इत्याशङ्कापरिहरति अत्रेति ग्रामजानं ग्रामस्थलोकसमूहः तस्य प्रयोजनार्थं या बुद्धिः आदिपदात् परापकारादीनां ग्रहणम् अपहर्त्तुः वृत्तिच्छेत्तुः कुत्रापि यत्र स्वयं गृह्णाति वैरनिर्यातनं शत्रौरपकारः भयं राजभय आदिशब्दात् अपक्रष्टासामर्थ्यादि तेन हेतुना जलाग्निप्रक्षेपः तत्र यथा गौण्या लक्षणया वा वृत्त्या विनाशमात्रेऽपहारपदप्रयोगः तथात्रापीति भावः तत्रेति तत्र विनाशमात्रे अपहारपदप्रयोगे यो यस्य धनं हरति विनाशयति स तस्य प्राणान् हरति विनाशयतीत्यर्थः। शङ्ख इति वृत्तिर्जीवनोपायः बधप्रोक्तं प्रायश्चित्तं व्रतरूप-

अपहृत्य तु वर्णानां विप्रो भूमिं प्रमादतः।
प्रायश्चित्तं बधप्रोक्तं ब्राह्मणानुमते चरेत्॥

एतद्वृत्त्युचितभूम्यपहारे ज्ञेयम् अल्पापहारे चान्द्रायणस्योक्तत्वात्। अत्र चोत्तमत्वाधमत्वे प्रयोजकत्वादिकं सकृदभ्यासौ ज्ञानाज्ञाने संवीक्ष्य बधोक्तपादार्द्धादिव्यवस्थोहनीया॥ २१॥

अथ देवद्विजद्रव्यापहारे प्रायश्चित्तम्।

तत्र सुमन्तुः,

देवद्विजद्रव्यापहर्त्ता चाप्सु निमग्नोऽघमर्षणमावर्त्तयेत् इति संवत्सरप्रक्रमे राज्ञा लिखितत्वादत्रापि संवत्सरमघमर्षणमावर्त्तयेदित्यवसीयते। यच्चात्र गुरुप्रायश्चित्तं मुन्यन्तरोक्तं श्रूयते तदत्यन्ताभ्यासोत्तमसम्बन्धाद्यपेक्षया समूह्यम्। यत्तु मनुराह,

अष्टापाद्यं हि शूद्रस्य स्तेये भवति किल्बिषम्।
षोड़शैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च॥

---

मित्यर्थः। प्रमादोऽत्र बुद्धिदोषः ब्राह्मणानुमते विद्वद्ब्राह्मणानुमत इत्यर्थः। पूर्ववचनोक्तं वृत्तिपदं स्थिरवृत्त्यभिप्रायमित्युक्तवचनेन स्वयं विवृतं तेन कादाचित्कवाणिज्याद्यपहारे नैष दोष इत्युक्तम् एतदिति न तु यत्किञ्चित्भूम्यपहार इत्यर्थः। चान्द्रायणस्येति यथा मनुः मनुष्याणाञ्च हरणे स्त्रीणां चैवगृहस्य च। कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम्। अत्र चेति उत्तमाधमत्वं सगुणनिर्गुणत्व प्रयोजकत्वादिकं प्रयोजकत्वानुमन्तृत्वानुग्राहकत्वादिकं पादार्द्धादीत्यादि पदात् पादोनसम्पूर्णव्रतव्यवस्थेति॥ २१॥

अथ देवेति सुमन्तुरिति। यद्द्रव्यापहारे यत् प्रायश्चित्तं प्रोक्तं यत् कर्त्तव्यमेव अघमर्षणावर्त्तनमप्यधिकं कार्य्यमित्यर्थः। यत्त्विति। यत्र यत् प्रायश्चित्तमुक्तं तच्छूद्रसम्बन्धे अष्टापाद्यम् अष्टगुणितमित्यर्थः। षोड़शैव षोड़शगुणितमित्यर्थः एवमुत्तरत्रापि। द्विगुणा चतुःषष्टिरष्टाविंशत्यधिकशतं तद्दोषेति [illegible] स आत्मनस्तद्दोषगुणवित् तस्य स्तेयस्य दोषगुणौ वेत्ति करणे दोषम् [illegible]

ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः॥

इति तत् जात्युत्कर्षेण पापाधिक्यात् अत्यन्तनिन्दार्थम्। अष्टभिरापद्यते गुण्यत इति अष्टापाद्यमष्टगुणमित्यर्थः। एकगुणन्तु शूद्रादप्यधमानाम्॥ २२॥

इति प्रायश्चित्तविवेके उपपातके स्तेयप्रायश्चित्तम्।

अथोपपातके अगम्यागमनप्रायश्चित्तम्।

तत्र सवर्णाऽस्वजनस्त्रीगमनप्रायश्चित्तम्।

तत्र वर्षाणीत्यनुवृत्तौ गोतमः द्वे परदारे त्रीणि श्रोत्रियस्य द्रव्यलाभे चोत्सर्गो यथास्थानं वा गमयेत्। श्रोत्रियस्य सवर्णां भार्य्यां गत्वा त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्य्यञ्चरेत्। अतो द्वे वर्षे अश्रोत्रियनिर्गुणब्राह्मणभार्य्यायाम्। यदि तु परदारेषु किञ्चिद्द्रव्यं प्राप्तं तदा तस्य परित्यागः करणीयः। यया वा दत्तं तस्या एव दद्यात्। तथा गमनं कृत्वेत्यनुवृत्तौ यमः द्वे परभार्य्यासु त्रीणि श्रोत्रियपत्नीषु। एतत् कामतः सकृद्-

---

गुणञ्च जानाति अतस्तस्य ब्राह्मणस्य सर्वतः पापाधिक्यं युज्यत इति भावः। तदिति यन्मनुराह तच्छूद्रादीनां द्रव्यहरणे यथायथं जात्युत्कर्षेण पापाधिक्यात् निन्दातिशयार्थमेव न तु वस्तुतो अष्टगुणादिकम् अतएव ब्राह्मणद्रव्यहरणे चतुःषष्ट्यादिगुणपापमनवस्थितं पापाधिक्यप्रदर्शनपरमुक्तम्। ननु शूद्रद्रव्यहरणेऽष्टगुणपापकथनं किमपेक्षया निन्दातिशयख्यापनपरमित्यत्राह एकगुणन्त्विति॥ २२॥

इति प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्यां उपपातके स्तेयप्रायश्चित्तम्।

तत्र सवर्णास्वजनस्त्रीगमनेति तत्रागम्यागमनप्रायश्चित्तमध्ये इत्यर्थः। गोतम इति। अत्र परदारपदं श्रोत्रियेतरसवर्णपरदारपरं परतः श्रोत्रियाभिधानात् अतएव ग्रन्थकृता त्रीणि श्रोत्रियस्येति व्याख्याय पश्चात् द्वे परदारे इति व्याख्यातं प्राकृतं प्रकरणोपात्तं ब्रह्मवधोक्तमित्यर्थः। आपस्तम्बवचनं श्रोत्रियपत्नीविषयं गोतमवचनैकवाक्यत्वात् अस्यार्थं इति यस्मात् पातकात् पुरुषः पतितो भवती-

गमने यथापस्तम्बः सवर्णायामनन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशति एवमभ्यासे द्विपादः अत्यन्ताभ्यासे त्रिपादः चतुर्थे सर्वमिति। अस्यार्थः पुरुषान्तराव्यभिचरित-सवर्णागामिनः पुरुषस्य सकृत्सन्निपाते पादः पततीत्युपदिशति यस्मात् पापात् पततीत्युपदिशति मुनिस्तस्य पापस्य पादश्चतुर्थांशो भवतीत्यर्थः। एवं द्वितीयाभ्यासे चापरपादः तृतीयाभ्यासेऽपरपादः चतुर्थे सम्पूर्णं भवति। तेनार्थात् सकृद्गमने त्रैवार्षिकम्। द्वितीये षड्वार्षिकम्। तृतीये नव-वार्षिकम्। चतुर्थे सम्पूर्णं द्वादशवार्षिकमित्युक्तम्। एतद्विधेः प्राथमिकादिति देवलेनोक्तम् ॥ २३ ॥

जिकनस्तु, सवर्णायामनन्यपूर्वायां सकृत् पुरुषान्तरसन्नि-पाते सम्यग्रेतोविसर्गरूपे अपरस्याभिगन्तुः स्वजातिविहित-प्रायश्चित्तस्य पादः पतति ह्रसतीत्यर्थः। एवमपरपुरुषगमने अपरपादह्रासः। एवमपरपुरुषाभिगमनेऽपरपादह्रासः। चतुर्थे स्वैरिण्यभिगमनप्रायश्चित्तमेव स्वजात्युक्तं कार्यमित्यर्थः।

---

त्युपदिशति मन्वादिमुनिस्तस्य महापातकस्य पादश्चतुर्थो भागोऽव्यभिचरित-सवर्णासकृद्गमने भवतीत्यर्थः एवमव्यभिचरितसवर्णान्तरायां पुनर्गत्वाऽपरः पादो महापातकाद्धं भवति एवमव्यभिचरितसवर्णान्तरायां पुनर्गत्वाऽपरः पादः पादोनं महापातकं भवति एवमव्यभिचरितसवर्णान्तरायां पुनर्गत्वा सर्वं द्वादश-वार्षिकमित्यर्थः। एतद्दिति विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम्। तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ॥ महापातकव्रतादन्या निष्कृतिर्नास्ती-त्यर्थः ॥ २३ ॥

जिकनस्त्विति। एकपुरुषव्यभिचारिगमने एकपादह्रासः पुरुषद्वयव्यभिचरि-तागमने पादद्वयह्रासः। पुरुषत्रयव्यभिचरितागमने पादत्रयह्रासः। पुरुषचतु-ष्टयव्यभिचरितागमने स्वजात्युक्तसर्वप्रायश्चित्तह्रासः किन्तु स्वैरिणीगमनप्रायश्चित्तं

स्वैरिणीत्वञ्च पुरुषचतुष्टयगमनात् एकपुंसश्चतुर्धाभिगमनाद्दा न विशेषः उत्तरोत्तराभ्यासस्य हीनत्वापादकत्वात् । अभ्यासे तु तयोर्भूय इत्यस्य तु तुल्यरूपपापहेतुक्रियाभ्यासविषयत्वादिति तदसंगतम् । प्रथमाभिगन्तृसन्निपातापेक्षया सकृत्त्वे द्वितीयाभिगन्त्रपेक्षया अभ्यासस्यासम्भवात् यदपेक्षया सकृत्त्वं तदपेक्षया एवाभ्यासस्य दृष्टत्वात् किञ्च श्रुतत्वात् प्रथमाभिगन्त्रपेक्षया एवाभ्यासश्चतुर्थसंख्या च युक्ता न त्वश्रुतद्वितीयजनगन्त्रपेक्षया अभिगन्तृचतुष्टयकल्पनापत्तेः सकृच्छब्दस्यानर्थक्याच्च । आवृत्तौ स्वैरिणीत्वान्नेदं द्वितीयाभिगन्तुः प्रायश्चित्तमिति चेन्न एकपुरुषस्य चतुर्धाभिगमात् स्वैरिणीत्वे सर्वशिष्टाचारविरोधः । किञ्च सवर्णायामनन्यपूर्वायां प्रथमपुरुषसन्निपाते प्रायश्चित्तस्यापस्तम्बेनानुक्तत्वात् कस्य पादह्रासः स्यात् । तस्मात् प्रथमपुरुषसन्निपाते पादप्रायश्चित्तमेवानेन विधीयते । अभ्यासे द्वैगुण्यादिकमिति ॥ २४ ॥

---

कार्य्यमिति ननु ह्रासः कथं अभ्यासे तु तयोर्भूय इति वचनाद्वृद्धिरेव युज्यत इत्याशङ्क्याह अभ्यासे त्विति यत्र तुल्यरूपं पापान्तरं तत्रैव द्वैगुण्यादिकं अत्र हि अनन्यपूर्वागमनाद्व्यभिचरितागमने न्यूनं पापं सर्वसम्मतमतोऽतुल्यपापयोर्न तद्वचनविषयत्वं यद्यपि अभ्यासे त्विति वचनं सुरेतरमद्यपानविषये प्रागुक्तं तथापि मद्यपानाभ्यासे आवृत्तिर्दृष्टाऽत्राभ्यासे कथं ह्रासः इत्याशङ्क्य जितनेनोक्तम् इदमिति ध्येयम् । अथाभ्यासशब्दोऽत्र पुनरर्थे मन्तव्य इत्याशङ्क्याह किञ्चेति दोषान्तरमाह, अभिगन्तृचतुष्टयेति । दूषणान्तरमप्याह सकृच्छब्दानर्थक्याच्चेति अनन्यपूर्वायामित्यनेनैव प्राप्तौ सकृत्पदवैयर्थ्यादिति भावः नन्वेकस्यैव पुरुषस्य गमनावृत्तौ स्वैरिणीत्वमतः प्रथमाभिगन्तुरेव गमनावृत्तौ पादपादह्रासौ वाच्यः ननु द्वितीयाद्यभिगन्तुरिति एतदेवावृत्ताविति एकपुरुषस्येति पुरुषान्तरव्यभिचारे हि स्वैरिणीत्वव्यवहारः शिष्टानामिति भावः ननु सवर्णायामेकपुरुषव्यभिचरितायां द्वितीयाभिगन्तुः प्रथमाभिगमने पादपादह्रासौ वाच्य इत्याशङ्क्याह किञ्चेति इत्युपदिश्यतीति पदवैयर्थ्यमपि दोषान्तरं मन्तव्यं तस्मादिति तस्यैव चतुरभ्यास इत्यर्थः तत्रैव मते पुनराशङ्क्य सिद्धान्तयति ॥ २४ ॥

तथापि पततीति ह्रासपरं भवत्विति चेन्न प्रथमाभिगन्तरि ह्रासपरत्वासम्भवात्। ब्राह्मणीविषयाणि चैतानि वचनानि अन्यस्यामल्पप्रायश्चित्तविधानात्। तथा शङ्खलिखितौ अन्यथा वैश्यायामवकीर्णं संवत्सरं त्रिसवनमनुतिष्ठेत्। क्षत्रियायां द्वे वर्षे ब्राह्मण्यां त्रीणि वैश्यावच्छूद्रायाम्। अन्यथेति स्वैरिणीत्वाभाव इत्यर्थः। स्वैरिणीप्रायश्चित्तस्य संहितायां पूर्वमुक्तत्वात्। तेन ब्राह्मणस्य ब्राह्मण्यां श्रोत्रियस्य भार्य्यायां त्रैवार्षिकम्। क्षत्रियस्य क्षत्रियभार्य्यायां द्वैवार्षिकं वैश्यस्य वैश्यभार्य्यायां वार्षिकम्। शूद्रस्य पञ्चयज्ञानुष्ठायिन्यायवृत्तशूद्रभार्य्यायां वार्षिकमेव। यथा मनुः,

> शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्।
> वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम्॥

अन्यशूद्रागमने षाण्मासिकम्। यत्तु बौधायनवचनं पुंसां ब्राह्मणादीनां संवत्सरं ब्रह्मचर्य्यम्। शूद्रं कटाग्निना दहेदिति। तद्ब्राह्मणस्यात्यन्तनिर्गुणब्राह्मणपत्नीगामिनः सांवत्सरिकमेव विधत्ते। क्षत्रियस्य निर्गुणक्षत्रियपत्नीगमने

---

तथापीति। एकस्यैव पुरुषस्यानेकामन्यपूर्वागमने पादः पतति पादो ह्रसतीत्यर्थः कथं न स्यादित्यर्थः। प्रथमेति प्रायश्चित्तान्तरानभिधानादिति भावः। त्रिसवनमिति ब्रह्मचर्य्योपलक्षकं वचनमिदं सवर्णव्यभिचारविषयं न तु ब्राह्मणस्य वर्णचतुष्टयस्त्रीगमनविषयं ब्राह्मणस्यानुलोम्यव्यभिचारे पृथक्प्रायश्चित्तस्य वक्ष्यमाणत्वात् अस्य शूद्रेति सच्छूद्रवधे वार्षिकम् असच्छूद्रवधे तदर्द्धं षाण्मासिकमुक्तम् तथापि सदसच्छूद्रागमने तथेति भावः यत्त्विति ब्राह्मणादीनां चतुर्णां सवर्णागमने संवत्सरब्रह्मचर्य्यं शूद्रन्तु सवाद गामिनं कटाग्निना वीरणदलैर्वेष्टितम्

तदेव। वैश्यशूद्रयोरपि सांवत्सरिकमेव शङ्खलिखितसमानार्थम्। शूद्रन्तु दर्पात् सद्वृत्तशूद्रपत्नीगामिनं कटाग्निना दहेत्। अतएव परस्त्रीसंग्रहणे बृहस्पतिः,

उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्द्दभेन तु इति।

अतो ब्राह्मणस्य सकृज्ज्ञानतोऽस्वजनश्रोत्रियब्राह्मणपत्नीगमने त्रैवार्षिकं व्रतं तदशक्तौ पञ्चचत्वारिंशद्धेनवो दातव्याः। वारचतुष्टयगमने द्वादशवार्षिकमज्ञानतस्तदर्द्धमिति॥ २५॥

अथ क्षत्रियादिस्त्रीणामानुलोम्येन गमनप्रायश्चित्तम्।

तत्र यदेव सवर्णपुरुषगमनप्रायश्चित्तम् तदेव पादपादहीनं कार्य्यम्। यथा स्त्रीव्यभिचारे बृहत् प्रचेताः,

आनुलोम्येन विहितं कृच्छ्रं पादावरोपितम्॥

इति कृच्छ्रं महाव्रतं तच्च सजातीयगमने यदुक्तं तदुक्तमेवाधमाया गमने पादपादहीनं कार्य्यमित्यर्थः। तेन ब्राह्मणस्य क्षत्रियागमने द्विवार्षिकं पादहीनं वैश्यागमने वार्षिकं पादद्वयहीनं षाण्मासिकव्रतमिति यावत्। विशिष्टशूद्रागमनेऽप्येवम्। अधमशूद्रागमने षाण्मासिकं पादत्रितयहीनं सार्द्धमासिकमित्यर्थः। एवं क्षत्रियस्य वैश्यागमने नवमासिकं

---

दहेदित्यर्थः अतएवेति दर्पात् परस्त्रीधर्षणे बृहस्पतिः प्राणान्तिकं दण्डमुक्तवानित्यर्थः अत इति यथा ब्राह्मणस्य श्रोत्रियेतरासवर्णस्त्रीगमने त्रैवार्षिकं क्षत्रियस्य सवर्णागमने द्वैवार्षिकं वैश्यस्य सवर्णागमने वार्षिकं शूद्रस्य सच्छूद्रपत्नीगमने वार्षिकम् असच्छूद्रगमने षाण्मासिकमिति। अज्ञानतः सर्वत्र तदर्द्धम्॥ २५॥

अथ क्षत्रियादिस्त्रीणामानुलोम्येनेति। प्रचेता इति क्षत्रियादीनां विहितं स्वजातिविहितं यत् कृच्छ्रं महाव्रतं द्विवार्षिकादिकं तदानुलोम्येन व्यभिचारे पादावरोपितं पादपादहीनं कार्य्यं यद्यप्यत्र वीप्सा न श्रूयते तथाप्युत्तरोत्तरजात्यपकर्षाद्वीप्सा मन्तव्या अन्यथा ब्राह्मणक्षत्रिययोः वैश्यसच्छूद्रागमने तुल्यमेव

सच्छूद्रागमनेऽप्येवम्। अधमशूद्रागमने षाण्मासिकं पाद-द्वयहीनं त्रैमासिकं वैश्यस्य सच्छूद्रागमने वार्षिकमेव वैश्या-वद्भावात् अधमशूद्रागमने सार्द्धचातुर्मासिकम्॥ २६॥

अथ शूद्रादीनां प्रतिलोमस्त्रीगमनप्रायश्चित्तम्।

तत्र वशिष्ठः। शूद्रश्चेत् ब्राह्मणीमभिगच्छेद्वीरणदलैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते। वैश्यश्चेत् ब्राह्मणीमभिगच्छेल्लोहित-दलैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनु-संव्राजयेत् पूता भवतीति विज्ञायते। राजन्यश्चेद् ब्राह्मणी-मभिगच्छेत् शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते। एवं वैश्यो राजन्यायां शूद्रश्च राजन्यवैश्ययोरिति महापथमनुसंव्राजये-दिति राजमार्गेण पुनरावर्त्तयेन्निःसारयेदिति। एतज्ज्ञानतः। अज्ञानतो मरणवैकल्पिकचतुर्विंशतिवार्षिकस्यार्द्धं द्वादश-वार्षिकम्। यत्तु शङ्खेनोक्तम्,

प्रातिलोम्ये बधः पुंसां स्त्रीणां नासादिकर्त्तनमिति।

---

नवमासिकं प्रायश्चित्तं स्यात् तथा क्षत्रियवैश्ययोः सच्छूद्रागमने तुल्यमेव सार्द्ध-मासचतुष्टयं स्यात् अस्य चानौचित्यात्॥ २६॥

अथ शूद्रादीनां प्रातिलोम्येन स्त्रीति। लोहितदलैः लोहितवीरणदलैरित्यर्थः एवमिति वैश्यशूद्रयोर्ब्राह्मणीगमने यद्वत् तद्वत् प्रायश्चित्तमित्यर्थः इतरथेति वक्ष्यमाणक्षत्प्रचेतोवचनादित्यर्थः ज्ञानतस्तु सर्वत्र वशिष्ठोक्तं मरणमेव पाद-

तद्दयथोक्तमरणप्रायश्चित्ताकरणे प्रसक्तिनिराकरणार्थं पुरुषस्य बधः स्त्रीणां नासिकादिकर्त्तनमित्येवं रूपं दण्डं विदधाति न तु प्रायश्चित्तम्। तेनाज्ञानतः शूद्रस्य ब्राह्मणीगमने द्वादशवार्षिकम्। इतरत्र पादपादहानिः। तेन शूद्रस्याज्ञानतः क्षत्रियागमने नववार्षिकं वैश्यागमने षाड्वार्षिकम्। तथा च वृहत् प्रचेताः,

> शूद्रस्य ब्राह्मणीं मोहात् गच्छतः शुद्धिमिच्छतः।
> पूर्णमेतद् व्रतं देयं माता यस्माद्धि तस्य सा॥
>
> पादहान्यान्यवर्णासु गच्छतः सार्ववर्णिकम्।
> प्रायश्चित्तमिदं देयमगम्यागमने क्रमात्॥

एतेन वैश्यस्याज्ञानतो ब्राह्मणीगमने नववार्षिकं क्षत्रियस्याज्ञानतो ब्राह्मणीगमने षाड्वार्षिकमेवेति। अत्र धेनुमूल्यव्यवस्था सुव्यक्ता।

यद्यपि शूद्रस्य ब्राह्मणीगमनं महापातकत्वेनोक्तं तथा क्षत्रियवैश्ययोः ब्राह्मणीगमनमनुपातकत्वेन तथापि अनुलोमस्त्रीगमनं तावदुपपातकमेव। तत्प्रसङ्गादसवर्णत्वेन प्रतिलोमस्त्रीगमनप्रायश्चित्तमप्युक्तमतो न वैषम्यमिति॥ २७॥

---

हान्येति अन्यवर्णासु क्षत्रियवैश्यासु गच्छतः शूद्रस्य पादहान्या प्रायश्चित्तं एवमन्यत्रापि पादहान्या सार्ववर्णिकं प्रायश्चित्तं क्रमाद्देयम्। एतद्विवृणोति ग्रन्थकृत् एतेनेति। यद्यपीति। शूद्रस्य ब्राह्मणीगमनं महापातकं क्षत्रियवैश्ययोरनुपातकं उपपातकमध्ये वक्तुं न युक्तं तथाप्यनुलोमगमनस्य उपपातकस्य प्रसङ्गादिदमप्युक्तमित्यर्थः॥ २७॥

## अथ समोत्तमवर्णद्वित्वपुरुषव्यभिचरितसवर्णासवर्ण-स्त्रीगमनप्रायश्चित्तम् ।

एकपुरुषव्यभिचरितस्त्रीगमने पतितस्त्रीसंसर्गप्रायश्चित्तमेव। तत्र विप्रस्य सवर्णानुलोमस्त्रीगमने संवर्त्तः,

शूद्रां तु ब्राह्मणो गत्वा मासार्द्धं मासमेव वा ।
गोमूत्रयावकाहारस्तिष्ठेत् तत्पापशुद्धये ॥

सकृद्गमने मासार्द्धम् अभ्यासे मासं मासैकगोमूत्रयावकाहारे धेनुद्वयम्। तथा,

क्षत्रियां वाथ वैश्यां वा गच्छेद् यः काममोहितः ।

---

अथ समोत्तमवर्णद्वित्वेति। समवर्णेन उत्तमवर्णेन वा द्वित्वेण व्यभिचरिता या स्त्री तस्याः सवर्णाया असवर्णाया वा गमने पुरुषान्तरस्य सवर्णस्यानुलोमस्य प्रतिलोमस्य वा प्रायश्चित्तं निरूप्यत इत्यर्थः। एकपुरुषव्यभिचरितेति। अव्यभिचरितस्त्रीगमने प्रायश्चित्तमुक्तमेव एकपुरुषव्यभिचरिता तु स्त्री पारदार्य्यात्मविक्रया इति मनुवचनात् उपपातकिनी तद्गमने तत्संसर्गप्रायश्चित्तमेव न तु वक्ष्यमाणवचनानि तद्विषयकाणि किन्तु पुरुषद्वयव्यभिचरितस्त्रीविषयाण्येव इति भावः तत्रेति पुरुषद्वयव्यभिचरितस्त्रीगमनमध्ये तादृश्याः सवर्णाया अनुलोमस्त्रियाश्च गमने ब्राह्मणस्य प्रायश्चित्तमाह संवर्त्त इत्यर्थः सकृद्गमन इति एतच्चाज्ञानविषयमिति वशिष्ठवचने व्यक्तं भविष्यति। मासैकेतीति गोमूत्रयावकोऽत्र गोमूत्रसिद्धयावकपरः न तु वत्सव्रतं लघुविषयत्वात् ब्राह्मणीगमने अतिकृच्छ्रस्य वक्ष्यमाणत्वात् शूद्रागमने तन्न्यूनस्यैव युक्तत्वाच्च अतएवाभ्यासे धेनुद्वयं सकृद्गमने धेनुरेकेति युज्यते। तथेति संवर्त्त इत्यर्थः। क्षत्रियां वैश्याञ्चैतादृशीं यो ब्राह्मणः सान्तपनमिदं सकृदज्ञानविषयं अनिवृत्तधर्मकर्मणः पत्नीविषयञ्च विप्रामिति विप्रां तादृशीमित्यर्थः एतदपि सकृदज्ञानविषयं वशिष्ठवचनात् एतच्चेति निवृत्तधर्मकर्मणो विप्रस्य पत्नीगमने एतत् प्राजापत्यमित्यर्थः वशिष्ठ इति यदि ब्राह्मणस्य तादृशदारानभिगच्छेत् तदा निवृत्तधर्मकर्मणो दारगमने तस्य कृच्छ्रं प्राजापत्यं अनिवृत्तधर्मकर्मणो दारगमने तु अतिकृच्छ्रं

तस्य सान्तपनं कृच्छ्रं भवेत्तत् पापमोचनम् ॥

सान्तपने धेनुद्वयम्। तथा,

विप्रामस्वजनां गत्वा प्राजापत्यं समाचरेत्।

एतच्च निवृत्तधर्मकर्मणः पत्नीगमने वेदितव्यम्। यथा वशिष्ठः ब्राह्मणश्चेदप्रेक्षापूर्वकं ब्राह्मणदारानभिगच्छेत् निवृत्तधर्मकर्मणः कृच्छ्रोऽनिवृत्तधर्मकर्मणोऽतिकृच्छ्रः॥ १ ॥

एवं राजान्यवैश्ययोः। क्षत्रियवैश्ययोरप्येवंभूतस्वजातीयभार्य्यागमने कृच्छ्रातिकृच्छ्रौ। एषु द्विचपुरुषव्यभिचारेणाभ्यासानभ्यासाभ्याञ्च विशेष ऊहनीयः। एतेन पुरुषत्रयव्यभिचरितब्राह्मण्यां सकृद्गमने प्राजापत्यम्। तथा प्रतिलोमब्राह्मणीगमने स एव,

---

तत्र धेनुत्रयं एतच्च सकृद्विषयं तत्राप्रेक्षापूर्वकमित्यनेन प्रागुक्तसंवर्त्तवचनमप्यज्ञानविषयं मन्तव्यं तेनेयं व्यवस्था अनिवृत्तधर्मकर्मणः सम्बन्धे ब्राह्मणीगमने अतिकृच्छ्रे धेनुत्रयं क्षत्रियागमने सान्तपने धेनुद्वयं शूद्रागमने मासार्द्धयावके धेनुरेका। निवृत्तधर्मकर्मणः सम्बन्धे तु ब्राह्मणीगमने प्राजापत्ये धेनुरेका अर्थात् क्षत्रियावैश्यागमने सान्तपनतृतीयभागे पादोनधेनुरेका शूद्रागमने कृच्छ्रपादो मन्तव्यः सर्वमिदं ब्राह्मणस्य इति। क्षत्रियवैश्ययोः स्वजातीयागमने प्रायश्चित्तमाह॥ १ ॥

एवमिति। एतद्व्याचष्टे क्षत्रियवैश्ययोरिति एवम्भूतयोर्निवृत्तानिवृत्तधर्मकर्मणोः स्वजातीयायाः पुरुषद्वयव्यभिचरितपत्न्या गमने कृच्छ्रातिकृच्छ्रावित्यर्थः एतच्च सर्वमज्ञानतः ज्ञानतो द्वैगुण्यं एष्विति संवर्त्तवशिष्ठवचनविषयेषु पुरुषद्वयव्यभिचारेण पुरुषत्रयव्यभिचारेण चाभ्यासेनानभ्यासेन च विशेष ऊहनीयः अयमर्थः पुरुषद्वयव्यभिचरितायाः सकृद्गमने प्रागुक्त एव विशेषः पुरुषत्रयव्यभिचरितायास्तु गमने उक्तप्रायश्चित्ततृतीयभागः। एतदेव विवृणोति एतेनेति। यस्मिन् विषयेऽतिकृच्छ्रं विहितं तत्रैव प्राजापत्यमित्यर्थः अभ्यासे तु सर्वत्र द्वैगुण्यं तथैव त्रिपुरुषव्यभिचरितायाः प्रातिलोम्येन गमने स एव, संवर्त्त एव।

कथञ्चित् ब्राह्मणीं गच्छेत् क्षत्रियो वैश्य एव वा।
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति॥
शूद्रस्तु ब्राह्मणीं गत्वा कथञ्चित् काममोहितः।
गोमूत्रयावकाहारो मासैकेन विशुद्ध्यति॥

तथा हारीतः अभिप्लुतानुपेत्य परदारान् अधोवर्णान् वा इदमापः प्रवहतेत्यन्तर्जले अष्टशतं जप्त्वा तिलाढ़कं ब्राह्मणाय दद्यात्। एतत् विप्रेतरवर्णस्य सवर्णानुलोमस्त्रीगमनविषयं विप्रे तु संवर्त्तेन प्रायश्चित्तविशेषस्योक्तत्वात्। एवं वैश्यस्य क्षत्रियागमने शूद्रस्य च क्षत्रियावैश्यागमने पादपादहान्या ऊह्यमिति॥ २॥

---

गोमूत्रयावकोऽत्र वज्रव्रतं मरणस्थाने विहितत्वेन विषयगौरवात् तेन मासार्द्धे षड्धेनवः मासे द्वादशधेनवः ब्राह्मणीं पुरुषद्वयव्यभिचारिणीमित्यर्थः पुरुषत्रयव्यभिचारे तु उक्तप्रायश्चित्तस्य तृतीयभागः प्राक् तथा दर्शनात् सर्वमिदमज्ञानविषयम्। हारीत इति अभिप्लुतान् पुरुषत्रयव्यभिचरितान् अधोवर्णा हीनवर्णाः तादृशीः स्त्रीरिति शेषः इदमापः प्रवहतेत्यादि यजुर्वेदप्रसिद्धो मन्त्रः। एतदिति विप्रेतरवर्णस्य क्षत्रियस्य वैश्यस्य चाभिगन्तुः पुरुषत्रयव्यभिचारिण्याः सवर्णाया अनुलोमजायाः त्वसकृद्गमनविषयमित्यर्थः। द्विपुरुषव्यभिचारे तु वशिष्ठवचने एवं राजन्यवैश्ययोरित्यनेन दर्शितम्। विप्रेतरविषयत्वे हेतुमाह विप्रे त्विति विप्रे त्वभिगन्तरि संवर्त्तवशिष्ठाभ्यां द्विपुरुषव्यभिचारे पुरुषत्रयव्यभिचारे च प्रायश्चित्तविशेषस्य दर्शितत्वात् लघुप्रायश्चित्तमिदं पुरुषत्रयव्यभिचारे विप्रेतरवर्णविषयमित्यर्थः क्षत्रियवैश्ययोस्तादृशप्रतिलोमस्त्रीगमने प्रायश्चित्तमर्थादिदर्शयतीति एवमिति कथञ्चिदित्यादिवचने वैश्यस्य ब्राह्मणीगमने मासार्द्धप्रायश्चित्तमुक्तं क्षत्रियागमने तदेव पादहीनं एवं तत्रैव शूद्रस्य ब्राह्मणीगमने मासैकव्रतमुक्तं क्षत्रियावैश्यागमने तु तस्यैव पादहानिरित्यर्थः पादहान्यान्यवर्णास्त्विति प्रचेतोवचने तथा दृष्टत्वादिति भावः। एतत् सर्वं सवर्णेनानुलोमेन वा द्विव्रपुरुषेण व्यभिचरिताविषयं न तु प्रतिलोमवर्णेनान्त्यजेन वा द्वित्रपुरुषेण व्यभिचरिताविषयं तासां महापातकित्वात् तत्संसर्गप्रायश्चित्तमेवेत्यग्रिमप्रकरणे वक्ष्यते॥ २॥

## अथ चातुर्वर्ण्यस्वैरिणीगमनप्रायश्चित्तम्।

तत्र शङ्खलिखितौ स्वैरिण्यां वृषल्यां प्रसूतोऽवकीर्णः सचेलस्नातः उदकुम्भं ब्राह्मणाय दद्यात्। वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत्। क्षत्रियायां त्रिरात्रोपोषितो यवाढ़कं दद्यात्। ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यात्। प्रकीर्णास्वेवमस्वतन्त्रासु। स्वैरिणीचतुःपुरुषगामिनी प्रकीर्णा केनचिदनवरुद्धा अस्वतन्त्रा अवरुद्धा द्विविधा तदेवं स्वैरिणी तयोरिदं प्रायश्चित्तमित्यर्थः। कल्पतरुकारस्यापि अयमेव स्वरसः। प्रसूत इत्यनेन स्वैरिण्यामपत्योत्पादनेऽप्येतदेव प्रायश्चित्तम्। एतत् विप्रेतरवर्णत्रयस्य सवर्णानुलोमप्रतिलोमस्त्रीगमनविषयम्। विप्रे त्वस्मिन्नेव विषये यमः,

ब्राह्मणो ब्राह्मणीं गत्वा द्विजे दद्यात् मृगाजिनम्।<br>
क्षत्रियायां धनुर्दद्यात् वैश्यायामायसीं शिलाम्॥<br>
शूद्रां गत्वा तथा विप्र उदकुम्भं द्विजातये।<br>
त्रिरात्रोपोषितः स्नात्वा दद्यात् सम्मार्जनीं तथा॥

---

अथ चातुर्वर्ण्यस्वैरिणीति तत्रेति। प्रसूत उत्पादितगर्भः अवकीर्णः क्षतसङ्गमभावो वेत्यर्थः चतुःपुरुषगामिनी स्वैरिणीत्यग्रिमप्रकरणे महाभारतवचनै व्यक्तौ भविष्यति। द्विविधेति प्रकीर्णा अवरुद्धा चेति द्विविधा स्वैरिणीत्यर्थः उभयत्रैव तुल्यं प्रायश्चित्तमित्यर्थः अत्र प्रकीर्णासु स्वतन्त्रास्विति सूत्रं प्रागुक्तस्वैरिणीविषयादन्यविषयमिति प्रतीयते एवमित्युपादानात् तथाच सूत्रस्यानर्थक्यश्चेत्यस्वरसद्वयमालोच्याह कल्पतरुकारस्येति वस्तुतस्तु पत्यादिनाऽस्वतन्त्रा या सा पतिपुत्रवती सती यदि प्रकीर्णा पत्यादिकं विहाय स्वातन्त्र्येणाहारविहारादिकं करोति तदा तस्यां लोकद्वयविरुद्धायां गत्वा एवं स्वैरिण्युक्तप्रायश्चित्तं कुर्य्यादिति सूत्रार्थं प्रतीमः। विप्रे त्विति अस्मिन्नेव विषये स्वैरिणीगमनविषये इत्यर्थः। आयसीं लौहमयीं शिलां पेषणीमित्यर्थः उदकुम्भं संमार्जनीञ्च दद्यादित्यर्थः।

तत्र त्रिरात्रोपोषित इति सर्वत्र सम्बध्यते। एतत् समोत्तमवर्णमात्रव्यभिचरितस्वैरिण्यागमने ज्ञेयम्। शूद्रान्त्यजादिगामिन्यान्तु महापातकश्रवणात् अभिगन्तुर्महापातकप्रायश्चित्तमेव। तथा याज्ञवल्क्यः,

> नीचाभिगमनं गर्भपातनं भर्त्तृहिंसनम्।
> विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्॥

तथा वृहस्पतिरपि,

> हीनवर्णोपभुक्ता या त्याज्या बध्यापि वा भवेत्।

इति न तु विशेषाश्रवणात् स्वैरिणीगमनप्रायश्चित्तमुचितम्। तर्हि अज्ञानाच्चण्डालव्यभिचरितस्वैरिण्यागमनेऽपि स्वैरिणीगमनप्रायश्चित्तं स्यात्। तथा चाण्डाल्याः स्वैरिण्याः सपत्नीमात्रादेश्च स्वैरिणीगमनप्रायश्चित्तमेव स्यात्। किञ्च सुवर्णहरणादिना महापातकिन्याः पश्चात् स्वैरिण्यागमनेऽपि स्वैरिणीगमनप्रायश्चित्तं स्यात्। तदा च सकलशिष्टाचारविरोधः॥ २॥

---

शूद्रान्त्यजादिगामिन्यान्त्विति शूद्रपदं प्रतिलोमवर्णपरं अन्त्यजा रजकादयः अभिगन्तुः संसर्गरूपमहापातकप्रायश्चित्तमित्यर्थः तथेति नीचाभिगमनम् अन्त्यजाभिगमनं हीनवर्णेन प्रतिलोमवर्णेन उपभुङ्क्तेत्यर्थः। न त्विति न तु शूद्रान्त्यजगामिन्यां स्वैरिण्यां गत्वा स्वैरिणीगमनप्रायश्चित्तमुचितं किन्तु संसर्गोक्तप्रायश्चित्तमेवेत्यर्थः एतदेव प्रतिबन्द्या दूषयति। तर्हीति ज्ञानाच्चाण्डालव्यभिचारे चाण्डालजातिरेव स्यात् न तत्र न विप्रतिपत्तिः अज्ञानादपि चाण्डालव्यभिचरितस्वैरिणीगमने स्वैरिणीगमनप्रायश्चित्तप्रसङ्ग इत्यर्थः तथेति चाण्डाली सपत्नीमात्रादिर्वा या स्वैरिणी तस्यागमनेऽपीत्यर्थः आदिशब्दान्मातृदुहितृभगिन्यादीनां ग्रहणम्। अथ सर्वत्रैवेष्टापत्तिरित्यत्राह तदा चेति॥ २॥

## अथ चातुर्वर्ण्यबन्धकीगमनप्रायश्चित्तम्।

तत्र प्रचेताः। बन्धकीगमने उपस्पृश्य प्राणायामं कुर्य्यात्। ब्राह्मणीबन्धकीगमने कमण्डलुं दद्यात्। क्षत्रियबन्धकीं गत्वायुधम्। वैश्यबन्धकीं गत्वा प्रतोदम्। उत्तरोत्तरवर्णत्रयोपादानात् स्नानपुरःसरः प्राणायामः शूद्रबन्धकीविषयः एतत् सवर्णानुलोमप्रतिलोमविषयं विशेषाश्रवणात्। बन्धकी च स्वभर्त्तृव्यतिरिक्तपञ्चपुरुषगामिनी स्वैरिणी चतुष्पुरुषगामिनी। यथा महाभारते आदिपर्व्वणि पाण्डवोत्पत्त्यावर्ज्जुनजन्मानन्तरम्।

पाण्डुस्तु पुनरेवैनां पुत्त्रलाभान्महायशाः।
वक्तुमैच्छद्धर्मपत्नीं कुन्ती त्वेनमथाब्रवीत्॥
नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत।
अतः परं स्वैरिणी स्यात् पञ्चमे बन्धकी तथा॥

अत्यन्ताभ्यस्तबन्धकीगमने प्राजापत्यम्। यथोशना,

यत्रोक्तं यत्र वा नोक्तमिह पातकनाशनम्।
प्राजापत्येन कृच्छ्रेण शुद्ध्यते नात्र संशयः॥ ४॥

यत्तु मनुनोक्तं,

शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते॥

---

अथ चातुर्वर्ण्यबन्धकीति। प्रचेता इति उपस्पृश्य स्नात्वेत्यर्थः पञ्चमे पञ्चमादावित्यर्थः एतदपि सर्वं प्रतिलोमान्त्यजेतरव्यभिचरितबन्धकीविषयं अत्यन्ताभ्यस्तेति अत्यन्ताभ्यस्ते बन्धकीगमने प्राजापत्यमित्यर्थः॥ ४॥

यच्च शङ्खेनोक्तं,

> आपद्यपि न कर्त्तव्या शूद्रा भार्य्या द्विजेन तु।
> तस्यान्तस्य प्रसूतस्य निष्कृतिर्नोपपद्यते॥
>
> तपस्वी ज्ञानशीलश्च सर्वधर्मभृतां वरः।
> ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे॥
>
> नीयते तु सपिण्डत्वं शूद्रो येषां कुलोद्भवः।
> सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितस्तु ते॥
>
> सपिण्डीकरणं कार्य्यं कुलजस्य तथा ध्रुवम्।
> श्राद्धद्वादशकं कृत्वा प्राप्ते श्राद्धे त्रयोदशे॥
>
> सपिण्डीकरणस्यार्हो न तु शूद्रस्तथा ध्रुवम्।
> तस्मात् सर्वप्रयत्नेन शूद्रां भार्य्यां विवर्जयेत्॥

एतद्व्युत्क्रमशूद्राविवाहनिन्दार्थम्। शूद्रावेदीति शूद्रां भार्य्यां विवर्जयेदिति वचनात् भार्य्यात्वस्य परिणयनजन्यत्वात्। यत्तूशनसोक्तं,

> निष्कृतिः स्यात् सुरापस्य हत्वा वा ब्रह्मवादिनम्।
> वृषल्यभिप्रजातस्य निष्कृतिर्नोपपद्यते॥

---

पूर्वं सर्वत्र शूद्रागमनेऽल्पप्रायश्चित्तमुक्तं तत्र मन्वादिविरोधमाशङ्क्य परिहरति। यत्त्विति शूद्रावेदी शूद्रापरिणेता ब्राह्मणः परिणयनमात्रेणैव पतितो भवतीति अत्रेरुतथ्यतनयस्य च मतं शौनकमते तु तत्र सुतोत्पत्त्यैव पतति न तु परिणयनमात्रेण भृगोर्मते तु तन्मात्रेप्सुवतयैव पतति इति। मतत्रयमुक्त्वा स्वमतमाह मनुः। शूद्रामिति शयनमारोप्य सङ्गमं कृत्वा न तु परिणयनमात्रेण अधोगतिं याति पततीत्यर्थः सुतमपत्यमात्रं जनयित्वा ब्राह्मण्याद्धीयते शूद्रतुल्यतां प्राप्नोतीत्यर्थः। निष्कृत्यभावे हेतुमाह तपस्वीति शूद्रश्राद्धे शूद्रकृतश्राद्धे त्रयोदशे सपिण्डीकरणे इत्यर्थः कुलोद्भवः शूद्रः येषां पिण्डदानेन त्रिपदादीन

ब्राह्मणो वृषलीं गत्वा त्र्यहं भवति सूतकी।
अथास्यां गर्भमाधत्ते ब्राह्मण्यादेव हीयते॥

हारीतः, ब्राह्मणो वृषलीं गत्वा सद्यो गच्छेदधोगतिम्।
अथास्यां गर्भमाधत्ते पतत्याशु न संशयः॥

तदनूढ़ाशूद्रागमनापत्योत्पादननिन्दार्थम्। तेन सकृत् ब्राह्मणस्यानूढ़ाशूद्रापत्योत्पादने पापगौरवाच्चान्द्रायणम्,

चान्द्रायणेन चैकेन सर्वपापक्षयो भवेत्।

इति वचनात्। एतच्चापत्यत्यागपूर्वकं कार्य्यम्॥ ५॥

अभ्यासे तु द्वैगुण्यादिकं देयम्। अत्यन्ताभ्यासे तु यः शूद्रायामभिजायते तदपत्यस्य भवतीत्युक्त्वा बौधायनः। तेषां निर्वेशश्चतुर्थकालमितभोजनाः स्युरपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपघ्नन्ति पापमिति। एतच्चातुर्वार्षिकप्राजापत्यसममित्युक्तम्। यत्तु मनुनोक्तं,

यत् करोत्येकरात्रेण वृषलीसेवनाद्द्विजः।
तद्भैक्ष्यभुक् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति॥

---

च सपिण्डत्वं नीयते नयतीत्यर्थे त्वार्षः श्राद्धद्वादशकं प्रतिमासिकं कृत्वा त्रयोदशे श्राद्धे प्राप्ते उपस्थिते सति कुलजस्य सपिण्डीकरणं कार्य्यमिति विधिः तत्र शूद्रः सपिण्डनार्हः सपिण्डीकरणश्राद्धार्हो न भवतीत्यर्थः एतत् व्युत्क्रमेणेति अन्यथा शूद्रापरिणयनविधिवैयर्थ्यापत्तेः शूद्रापत्यस्य विभागविधानविरोधापत्तेश्च तदनूढ़े इति अनूढ़ा अन्यपरिणीतेत्यर्थः निन्दार्थमिति न तु वास्तवमित्यर्थः। चान्द्रायणमिति एतच्चाधमशूद्रागमनविषयं यद्गमने पूर्वं षाण्मासिकव्रतमुक्तम्॥५॥

अभ्यासे त्विति। पुत्रोत्पादने द्वैगुण्यत्रैगुण्यञ्चेत्यर्थः अत्यन्ताभ्यासे चतुःपञ्चादिपुत्रोत्पत्तौ इत्यर्थः शूद्रायामभिजायते शूद्रायां गर्भमुत्पादयति स

तद्व्यतिक्रमेण शूद्राविवाहप्रायश्चित्तार्थम्। न चात्र वृषली चाण्डालीति भवदेवकल्पतरुकारव्याख्यानं युक्तम् अशब्दार्थत्वात्।

चाण्डालाद्याः प्रक्रम्य वृषल्यः परिकीर्त्तिताः।

इति वचनस्यानाकरत्वात् आपस्तम्बविरोधाच्च यथा,

यदेकरात्रेण करोति पापं कृष्णवर्णं ब्राह्मणः सेवमानः।
चतुर्थकाले उदकावगाही त्रिभिर्वर्षैस्तदपोहेत पापम्॥

कृष्णवर्णः शूद्रः अथवा वृषलीपदं मनुवचने कुमारीं रजस्वलामाचष्टे यथोशना,

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा।
अपरा वृषली ज्ञेया कुमारी या रजस्वला॥

अथ व्युत्क्रमविवाहप्रायश्चित्तम्।

तत्रापस्तम्बः दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय

---

तदपत्यः शूद्रापत्यः स भवतीत्यर्थः तेषां निर्वेशः प्रायश्चित्तमिदं वस्तुतस्तु। यदुच्यते द्विजातीनां शूद्रदारोपसंग्रहः। न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयमिति याज्ञवल्क्यानुसारात् नानामुनिमतद्वैधे याज्ञवल्क्यादीनां शूद्रापरिणयननिषेधनिश्चय एव प्रतीयते तथा मनुरपि शूद्रां शयनमारोप्येति तथा आपद्यपि न कर्त्तव्या शूद्रा भार्य्या इति शङ्खवचनमपि अतो निषिद्धा शूद्रापरिणयनादपत्योत्पादने सर्वपापक्षयकरं चान्द्रायणं कार्य्यं परिणयनमात्रे तु तां परित्यज्य चान्द्रायणेन चैकेन सर्वपापक्षयी भवेदित्युशनसोक्तं प्राजापत्यं येषां मुनीनां मते शूद्रापरिणयनविधिस्तेषामेव मते शूद्राव्यतिक्रमविवाहप्रायश्चित्तमग्रिमप्रकरणे वक्ष्यते। परदारगमने तु सच्छूद्रायां वार्षिकम् असच्छूद्रायां षाण्मासिकमित्युक्तमेव प्राक् तत्र च गर्भोत्पादनस्य उशनो हारीतादिभिरतिनिन्दितत्वात् बौधायनोक्तमेव त्रैवार्षिकव्रतं चातुर्वार्षिकप्राजापत्यसमं कार्य्यम्। यत्करोत्येकरात्रेणेति मनुवचनन्तु सकलगृह्यकर्माध्यक्षायाः परि-

दारव्यतिक्रमिणे भिक्षां देहि इति सप्तागाराणि चरेत् सा वृत्तिः षण्मासान् दारव्यतिक्रमीति ब्राह्मणक्षत्रियवैश्यकन्याविवाहमकृत्वा यो ब्राह्मणः शूद्राविवाहं करोति स उच्यते। षाण्मासिकव्रते सार्द्धसप्तधेनवः। सोऽयमनापदि सकृदज्ञानविषयम्। आपत्काले त्वाह शातातपः ब्राह्मणो राजन्यापूर्वीं द्वादशरात्रं चरित्वा निर्विशेत् तां चैवोपगच्छेत्। वैश्यापूर्वीं तप्तकृच्छ्रं शूद्रापूर्वीं कृच्छ्रातिकृच्छ्रम्। राजन्यापूर्वीं ब्राह्मणकन्याविवाहमकृत्वा यो राजन्यकन्याविवाहं करोति एवमन्यदप्यूहनीयम्। अनापदि ज्ञानाभ्यासान्मनूक्तं त्रिभिर्वर्षैर्व्यपोहतीति बोद्धव्यम् ॥ ६ ॥

अथ वेश्यागमनप्रायश्चित्तम्।

तत्र संवर्त्तः,

पशुवेश्यागमने प्राजापत्यम्। तेन वेश्योपगमने प्राजापत्यम्। तदशक्तौ धेनुरेका देया। एतत् सकृद्गमने अभ्यासे तु,

---

णीतायाः वृषल्याः सानुबन्धगमनविषयं गोविन्दराजोऽप्येवं न तु व्युत्क्रमविवाहविषयं एकरात्रेण वृषलीसेवनादित्युपादानात् तदत्राग्निमप्रकरणे अल्पतमप्रायश्चित्ताभिधानाच्च न चाभ्यासविषयं एकरात्रेणेत्युपादानात् तथा स्वैरिण्यादिवृषलीगमने तु यथायथमेव प्रागुक्तप्रायश्चित्तं प्रतीमः। अथ व्युत्क्रमविवाहेति शातातप इति निर्विशेत् परिणयेत् स्वजातीयामिति शेषः तां स्वजातीयामेवोपगच्छेत् न तु व्युत्क्रमपरिणीतामित्यर्थः अनापदि ज्ञानाभ्यासादिति यद्यपि वृषलीसेवनमेव प्रायश्चित्तनिमित्तं मनुनोक्तं तथापि व्युत्क्रमपरिणीतवृषलीसेवनस्य विशिष्टस्यात्र निमित्तत्वात् व्युत्क्रमविवाहोऽपि निमित्तमित्यभिप्रायः यथा एकरात्रेण अनेकवारसेवनमत्राभिप्रेतम् अतोऽभ्यासः सम्भवतीति वस्तुतस्तु सेवनादित्येकवचनात् एकरात्रेणेत्यस्य वैयर्थ्याच्चायुक्तमेतत् किन्तु प्रागुक्तव्यवस्थेति ॥ ६ ॥

चान्द्रायणेन चैकेन सर्वपापक्षयो भवेत्।

इति आपस्तम्बवचनाच्चान्द्रायणम् ॥ ७ ॥

अथ रजस्वलाभिगमनप्रायश्चित्तम्।

तत्र शङ्खलिखितौ [illegible] स्वलावधूतागमने त्रिरात्रोपवासो घृतप्राशनञ्च कुर्[illegible] अवधूता उन्मत्ता। याज्ञवल्क्यः,

त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां शुचिर्भवेत्।

त्रिरात्राशक्तौ चतुर्विंशतिपणाः देयाः। एतत् कामतः सकृद्गमने अभ्यासे तु द्वैगुण्यादिकम्। यथा मनुः,

अमानुषीषु पुरुष उदक्यायामयोनिषु।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥

सान्तपने धेनुद्वयं मनुनोक्तत्वात्। अमानुषीषु वड़वाद्यासु अयोनिषु स्त्रिया अपि योनीतरस्थानेषु। यत्तु शातातप आह। अनुदकमूत्रपुरीषकरणे सचेलस्नानं महाव्याहृतिहोमश्च रजस्वलाभिगमने चैतदेव। तत् प्रमादतो गमने रेतःसेकात् प्राक्। यच्च ब्रह्महत्यानुवृत्तौ शङ्खः,

पादेकं शूद्रहत्यायामुदक्या गमने तथा।
गोवधे च तथा कुर्य्यात् परस्त्रीगमने तथा ॥

तद्बुद्धिपूर्वकसानुबन्धात्यन्ताभ्यासे वेदितव्यमिति धर्मप्रदीपः ॥ ८ ॥

---

अथ वेश्यागमनेति। संवर्त्त इति पशुगमने वेश्यागमने चेत्यर्थः वेश्या च वेशेन या जीवति सा च समानुलोमवर्णा प्रतिलोमवर्णा चेति न तु प्रतिलोमान्त्यजव्यभिचरिता तासां महापातकित्वादिति प्रागुक्तमेव ॥ ७ ॥

अथ रजस्वलाभिगमनेति। मनूक्तत्वादिति स्वोक्तस्यैव सान्तपनस्य ग्रहीतुमुचितत्वादित्यर्थः। तद्बुद्धिपूर्वकेति शूद्रहत्यादिषु सर्वत्रैवं मन्तव्यम् ॥ ८ ॥

अथ ऋतौ भ्यार्य्यानभिगमनप्रायश्चित्तम्।

तत्र विष्णुः। पर्वानारोग्यवर्जमृतावगच्छन् पत्नीं त्रिरात्रमुपवसेत्। तथा च वृहस्पतिः,

ऋतौ भार्य्यां न गच्छेत् यः सोऽपि कृच्छ्रार्द्धमाचरेत्।

एतदप्रोषितस्य नीरुजः स्नानदिनात्पः... द्वादशदिनाभ्यन्तरे पर्वव्यतिरिक्ते सकृज्ज्ञाने वेदितव्यं कृच्छ्रार्द्धाशक्तौ चतुर्विंशति पणा देयाः। संवर्त्तः,

ऋतौ नोपैति यो भार्य्यां नियतां ब्रह्मचारिणीम्।
नियमातिक्रमात्तस्य प्राणायामशतं स्मृतम्॥

एतदज्ञानविषयम्। ज्ञानाभ्यासे प्राजापत्यम्॥ ९॥

अथ पर्वसु स्त्रीगमनप्रायश्चित्तम्।

तत्र वराहपुराणम्,

षष्ठ्यष्टमीममावस्याम् उभे पक्षे चतुर्दशीम्।
मैथुनं नैव सेवेत द्वादशीञ्च मम प्रियाम्॥

विष्णुपुराणम्,

चतुर्दश्यष्टमी चैव अमावस्याथ पूर्णिमा।
पर्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च॥

---

अथ ऋतौ भार्य्यानभिगमनेति। एतदिति नीरुजः सामर्थ्यस्य स्नानदिनात् स्नानानन्तरदिनात् पञ्चमदिनमारभ्य द्वादशदिवसेषु मध्ये पर्ववर्जमित्युपलक्षणं निषिद्धदिनवर्जगमने प्रायश्चित्तमिदमित्यर्थः। निषेधमाह मनुः ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः। तासामाद्याश्चतस्रश्च निन्दितैकादशी तथा। त्रयोदशी च शेषाः स्युः प्रशस्ता दशरात्रयः। तथा विष्णुः न श्राद्धं दत्त्वा न च भुक्त्वा नामन्त्रितः श्राद्धेन चामन्त्रयितेत्यादि। संवर्त्त इति नियतां पतिव्रतां ब्रह्मचारिणीं संयताहारां ऋतौ भार्य्यामुपेयादिति नियमविधेरतिक्रमात् इत्यर्थः॥ ९॥

स्त्रीतैलमांससम्भोगी पर्वस्वेतेषु यो नरः।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः॥

मनुः,

अमावस्यामष्टमीञ्च पौर्णमासीं चतुर्दशीम्।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥

प्रायश्चित्ते मनुः,

वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्॥

स्नातको गृहस्थः। अभ्यासे कृच्छ्रमत्यन्ताभ्यासे चान्द्रायणमनिर्दिष्टपापोक्तं ज्ञेयम्॥ १०॥

अथ श्राद्धदिनमैथुनप्रायश्चित्तम्।

तत्र विष्णुपुराणम्,

श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियोज्य च।
व्यवायी रेतसो गर्त्ते मज्जयत्यात्मनः पितॄन्॥

अत्रापि स्नातकव्रतलोपत्वादभोजनमेव प्रायश्चित्तम्॥ ११॥

अथ दिवामैथुनप्रायश्चित्तम्।

तत्र शङ्खः,

---

अथ पर्वसु स्त्रीगमनेति। तत्रेति षष्ठी चात्र स्कान्दषष्ठी कृष्णाष्टमी स्कान्दषष्ठी तस्यां वै संयतो भवेदिति वचनात्। द्वादशीञ्च मम प्रियामित्युपादानात् एकादश्युपवासविषयमिदं मन्तव्यम्॥ १०॥

अथ श्राद्धदिनमैथुनेति। अथ षोड़शेऽपि दिने न गन्तव्यं निषिद्धेतरत्रैव गमनविधानात् यथा मनुः पर्ववर्जं व्रजेच्चैनामिति अयञ्च न विधिः रागप्राप्तत्वात् किन्तु ऋतौ भार्य्यां गच्छेदेवेति नियम एव तत्र पर्वादिवर्जनं स्पष्टमेव उक्तं अतएव ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विज इति मनुः॥ ११॥

दिवा तु मैथुनं गत्वा नग्नः स्नात्वा तथाम्भसि।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत्॥

एतत् सकृत् अभ्यासे त्वावृत्तिः व्रती यावकेन नग्नपरस्त्री-दर्शने कामतो ज्ञेयम्। अस्य तूपक्षेपागतत्वान्न विवेचनं कृतमिति। अस्मिन्नेव विषये देवीराप इत्येताभिरन्तर्जले स्नातः पूतो भवतीत्यभिधाय। हारीतः,

अजीर्णवान्तश्मश्रुकर्मायोनिपशुदिवामैथुनगमने च। अयो-निपशुदिवाशब्दानां प्रत्येकं मैथुनगमनशब्देन सम्बन्धः। तथा मनुः,

मैथुनन्तु समासेव्य गोयानेऽप्सु दिवापि वा।
स्नात्वा वस्त्रैर्जपित्वाप्याः प्राणायामेन शुद्ध्यति॥

तथा याज्ञवल्क्यः,

प्राणायामं जले स्नात्वा खरयानोष्ट्रयानगः।
नग्नः स्नात्वा च सुप्त्वा च गत्वा चैव दिवा स्त्रियम्॥

अत्र अनादिष्टे शतमिति वचनात् प्राणायामशतं ज्ञेयं तदे-तेषां विकल्पः॥ १२॥

---

अथ दिवामैथुनेति। कामतो ज्ञेयमिति कामतोऽभिलाषाद्दर्शने ज्ञेयं न तु दैवाद्दर्शन इत्यर्थः। अस्य चेति अस्य नग्नपरस्त्रीदर्शनस्य उपक्षेपागतत्वात् प्रसङ्गप्राप्तत्वात् न विवेचनं कृतमित्यर्थः अस्मिन्नेवेति अस्मिन् दिवामैथुनविषये हारीत आहेत्यन्वयः देवीराप इत्येताभिरिति बहुवचनात् नित्यस्नाने कात्या-यनेनोक्तम् ऋक्चतुष्टयं ग्राह्यं देवीराप इति तं देवेभ्य इति इदमापः प्रवहत इति हविष्मती विना आप इति चतस्रः अयोन्यादिषु मैथुनगमने मैथुनप्राप्ता-वित्यर्थः मनुरिति यानि वस्त्राणि परिधाय मैथुनं कृतं तैः वस्त्रैः सह स्नात्वा आप्या ऋचो जपित्वा इत्यर्थः याज्ञवल्क्य इति आचरेदित्यनुवर्त्तते स्नात्वा सुप्त्वा इत्यत्र उभयत्र नग्न इति संबध्यते तदेषामिति एषां प्रज्ञाद्युक्तप्रायश्चित्तानां इच्छा-विकल्प इत्यर्थः॥ १२॥

## अथ स्त्रीव्यभिचारप्रायश्चित्तम्।

तत्र मनुः,

विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि।
यत् पुंसः परदारेषु तच्चैनां चारयेद् व्रतम्॥

निरुन्ध्यादिति अङ्गसंस्काररहितां मलिनां भूमिशायिनीम्। प्राणधारणनिमित्तमात्राहारां परिभूतां कृत्वा अपृथग्वेश्मनि ऋतुपर्य्यन्तं भर्त्ता स्थापयेत्। तथा च याज्ञवल्क्यः,

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्॥
व्यभिचारे ऋतौ शुद्धिर्गर्भे त्यागो विधीयते।
गर्भभर्त्तृबधादौ तु तथा महति पातके॥

यस्मिन् व्यभिचारे गर्भो भवति तत्र परित्याग एव। यदा सगर्भैव व्यभिचरति तदा गर्भे निःसृते प्रायश्चित्तं कुर्य्यात्। यथा ऋष्यशृङ्गः,

अन्तर्वत्नी तु युवतिः कामितायान्ययोनिना।
प्रायश्चित्तं नैव कुर्य्यात् यावद्गर्भो न निःसृतः॥

---

अथ स्त्रीव्यभिचारेति। याज्ञवल्क्य इति व्यभिचारे ऋतौ सति शुद्धिः प्रायश्चित्तं न तु ऋतुकालात् पूर्वं प्रायश्चित्तमित्यर्थः यत्तु रजसा स्त्रीमनो दुष्टेति मनुवचनं तत्तन्मात्रविषयम् अत्र तु परतो गर्भे त्याग इत्यभिधानात् कायिक-व्यभिचारे ऋत्वनन्तरं प्रायश्चित्तविधानं युज्यत एवेति एतेन ऋतौ सति शुद्धा स्यात् न प्रायश्चित्तं तत्र प्रायश्चित्तविधानन्तु रजोरहितविषयमिति मैथिल-व्याख्यानमपास्तं मनुना मनो दोष एव रजसा शुद्धिविधानात् यत्तु न स्त्री दुष्यति जारेण इत्यादिवचनं तद्बलात्कारोपभुक्ताया अल्पप्रायश्चित्तप्रदर्शनार्थं तत्र [illegible]त्यते यस्मिन्निति ऋत्वनन्तरञ्च प्रायश्चित्तमुक्तं तत्र यथाकाले ऋत्वभावाद्गर्भ-[illegible]सति त्याग एव न तु तस्याः प्रायश्चित्तमस्तीत्यर्थः ऋष्यशृङ्ग इति अन्य-

न प्रभावं गृहे कुर्य्यान्न चाङ्गादिप्रसाधनम्।
न शयीत समं भर्त्रा नवा भुञ्जीत बान्धवैः॥
प्रायश्चित्तं स्मृते गर्भे विधिं कृत्वाब्दिकं चरेत्।
हिरण्यमथवा धेनुं दद्याद्विप्राय दक्षिणाम्॥

अन्ययोनिना असम्बन्धिना आब्दिकमिति प्रदर्शनार्थं यत् पुंसः परदारेष्वित्यनेन त्रैवार्षिकविषये त्रैवार्षिकं द्विवार्षिकविषये द्विवार्षिकं एकवार्षिकविषये एकवार्षिकम् इत्येवमादिप्रायश्चित्तमुक्तम्॥ १३॥

तथा च बृहस्पतिः,

यत् पुंसः परदारेषु समानेषु व्रतं स्मृतम्।
व्यभिचारे तु भर्त्तुः स्त्री तदशेषं समाचरेत्॥

समानेषु सवर्णेषु समानग्रहणं हीनवर्णव्यभिचारेऽधिकप्रायश्चित्तदानार्थं न तूत्तमाधमव्यभिचारे प्रायश्चित्तनिषेधार्थम्। अन्यथा तत्संसर्गिणि प्रायश्चित्तव्यवस्था न स्यात् अतएव मनुना यत् पुंसः परदारेष्विति सामान्येनैवोक्तम् अशेषमिति स्त्रीत्वादर्द्धं नास्तीति तेन त्रैवार्षिकाशक्तौ पञ्चचत्वारिंशद्धेनवो

---

योनिनान्यसम्बन्धिना कामिता व्यभिचरिता सम्बन्धिव्यभिचारे तु महापातकित्वात् अनुपातकित्वात् परित्याग एवेति गृहे न प्रभावमधिकारं कुर्य्यात् अङ्गादित्यादिशब्दात् केशादीनां ग्रहणं प्रसाधनं वेशः विधिं प्रायश्चित्तविधिं कृत्वा आब्दिकमित्युपलक्षणं यत्र यद्विहितं प्रायश्चित्तं तच्चरेदित्यर्थः॥ १३॥

बृहस्पतिरिति। समानवर्णेषु परदारेषु यत् पुंसः प्रायश्चित्तं तदशेषं समानवर्णेषु भर्त्तुर्व्यभिचारे समानग्रहणमिति समानवर्णव्यभिचारे समानवर्णपरदारगमनप्रायश्चित्तं हीनोत्तमव्यभिचारे तु नैतत् किन्तु हीनव्यभिचारे ततोऽप्यधिकं उत्तमव्यभिचारे न्यूनमिति न तूत्तमाधमव्यभिचारे प्रायश्चित्तं नास्तीति वचनार्थः कथमेवं न स्यादित्याह अन्यथेति ननु सवर्णपरदारोक्तं तुल्यमेव

देयाः तदशक्तौ पञ्चविंशदुत्तरपुराणशतमूल्यं काञ्चनं देयम्। एवं द्विवार्षिकादावप्यूह्यम्। महापातकिगमने अङ्गिराः,

व्रतं यच्चोदितं पुंसां पतितस्त्रीनिषेवनात्।
तच्चापि कारयेन्मूढां पतितासेवनात् स्त्रियम्॥

अनिच्छन्त्या बलात्कारोपभोगे तु बृहस्पतिराह,

अनिच्छन्ती तु या भुक्ता गुप्तां तां कारयेत् गृहे।
मलिनाङ्गीमधः शय्यां पिण्डमात्रोपजीविनीम्॥
कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समङ्गताम्।
हीनवर्णोपभुक्ता या त्याज्या बध्यापि वा भवेत्॥

समङ्गतामिति समानजातीयामित्यर्थः। अत्र सकृदुपगमने प्राजापत्यं द्विरभ्यासे पराकः। त्रिरभ्यासे चान्द्रायणं यथोशना व्यभिचारिणीं भार्य्यां कुचेलपिण्डभूतां निवृत्ताधिकारां चान्द्रायणं पराकं प्राजापत्यं वा कारयेत् यदि तु क्षत्रियवैश्यशूद्रैरनिच्छन्ती ब्राह्मण्युपभुक्ता पश्चात्तदनुरक्ता भवेत् तद्विषयं बृहस्पतिवचनमिति धर्मप्रदीपः अतएवानिच्छन्तीगमनमात्रे संवर्त्तः स्वल्पप्रायश्चित्तमाह॥ १४॥

बलात् प्रमथ्य भुक्ता चेत् दह्यमानेन चेतसा।
प्राजापत्येन शुद्धिः स्यात्तस्याः पावनं परम्॥

---

सकलवर्णव्यभिचारे स्यात् न तु प्रायश्चित्तभेदः स्यादिति वचनार्थः कथं न स्यादित्याह अत एवेति मनुवचनविरोधात् उक्तमेव व्याख्यानं युक्तमिति भावः अङ्गिरा इति व्रतं संसर्गोक्तं पतितस्य आसेवनाद्द गमनादित्यर्थः मूढां काममोहितां हीनवर्णोपभुक्तेति वचनं व्याचष्टे तदिति पश्चात् प्रायश्चित्तासमर्था सती यदि तत्रैव हीनवर्णेऽनुरक्ता स्यात् तदा त्यागी वा राजद्वारावधी वा कार्य्यं इत्यर्थः अत एवेति सर्वदा अनिच्छन्ती गमन इत्यर्थः प्रथमवचनं बलात् [illegible]पभुक्ता ब्राह्मणीविषयम्॥ १४॥

यदि तु ब्राह्मणी गच्छेत् क्षत्रियं वैश्यमेव वा।
गोमूत्रयावकैर्मासात्तदर्द्धात् च विशुद्ध्यति॥
ब्राह्मण्याः शूद्रसम्पर्के कथञ्चित् समुपागते।
चान्द्रायणेन शुद्धिः स्यात् तदस्याः पावनं स्मृतम्॥

अत्र बलाद्रजकादिगते जाते शूद्रगमनप्रायश्चित्तादधिकं धेनुचतुष्टयं बोद्धव्यं विषमशिष्टत्वात् सार्द्धमासेन षड् धेनवः। यच्च मनुराह,

सा चेत् पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता।
कृच्छ्रचान्द्रायणञ्चैव तदस्याः पावनं स्मृतम्॥

तदप्यनिच्छन्त्या एव चतुर्थाभ्यासविषयं यत्तु ऋष्यशृङ्गवचनं,

बलेन कामिता नारी सवर्णेन कथञ्चन।
प्रायश्चित्तं त्रिरात्रं वै तस्याः शुद्ध्यर्थमादिशेत्॥

कामिता स्यादथान्त्यैर्या सा कृच्छ्राब्दं समाचरेदिति तदपि सवर्णेन बलाद्भुक्ताया रेतःसेकात् पूर्वं त्रिरात्रम् अन्त्यैश्चाण्डालादिभिश्च बलाद्भुक्ताया रेतःसेकपर्य्यन्तगमने कृच्छ्राब्दमिति

---

बलादिति। परतोऽपि सर्वत्रान्वेति गोमूत्रयावकमत्र गोमूत्रपक्वयावकं न तु केवलगोमूत्रयावकं शूद्रसम्पर्के वक्ष्यमाणाच्चान्द्रायणादधिकस्य तस्यायुक्तत्वात् अतः सार्द्धमासयवयावके धेनुत्रयमित्यर्थः कथञ्चिद्बलादित्यर्थः अत्रेति यातमिति भावे क्तप्रत्ययः बलाद्रजकाद्यन्त्यजगमने शूद्रायाः प्रायश्चित्तादुक्तचान्द्रायणादधिकं धेनुचतुष्टयं बोद्धव्यम् अयं भावः बलाद्वैश्योपभोगे धेनुत्रयतुल्यं सार्द्धमासव्रतमुक्तं बलाच्छूद्रोपभोगे तु चान्द्रायणस्योक्तत्वात् तस्मादधिकं धेनुचतुष्टयं दृष्टं बलाद्रजकादिभोगेऽपि शूद्रगमनोक्तचान्द्रायणादधिकं धेनुचतुष्टयं युज्यत एव इति अतएव बलाच्चाण्डालाद्युपभोगे त्रिंशद्धेनवो वक्ष्यन्ते। विषमशिष्टत्वात् इति मासादर्द्धाच्चेति विषमशिष्टत्वान्न विकल्पः किन्तु समुच्चितमेव अतोऽर्द्धमासेन सह तिस्रो धेनव इत्यर्थः। अतएव ऋष्यशृङ्गवचनद्वयमेतद्विषयतया न व्याख्यातं किन्त्वभ्यासविषयमुक्तं तत्र पराकस्योक्तत्वात् चतुर्थाभ्यासविषयमिति

धर्मप्रदीपः । अनिच्छन्तीविषय एव बलात्कारगमने रेतःसेकात् प्राक् चान्द्रायणमाह संवर्त्तः,

> चाण्डालं पुक्कसं म्लेच्छं श्वपाकं पतितं तथा ।
> एतान् गत्वा स्त्रियः श्रेष्ठाः कुर्य्युश्चान्द्रायणं परम् ॥

यानि चान्यानि गुरुलघुप्रायश्चित्तानि तानि एवंविधविषय एव यथायोग्यं व्यवस्थेयानि । परित्यागमाह अङ्गिराः,

> चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा तथा ।
> पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितः कुत्सितो हीनवर्ण इत्यर्थः । गुरुशिष्यौ स्वामिसम्बन्धिनौ ॥ १५ ॥

## अथान्त्यजस्त्रीगमनप्रायश्चित्तम् ।

तत्र संवर्त्तः,

> नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविनीम् ।
> गत्वा चान्द्रायणं कुर्य्यात्तथा चर्मोपजीविनीम् ॥

---

त्रिविधाभ्यासे चान्द्रायणं प्रागुक्तम् अत्र चान्द्रायणं प्राजापत्यञ्चेति चतुर्थाभ्यासे ज्ञेयमित्यर्थः यत्त्विति कामिता व्यभिचरिता छच्छाब्दे त्रिंशद्भिनवः अनिच्छन्तीति चाण्डालादिना बलात्कारगमन इत्यर्थः म्लेच्छं यवनादिकं श्रेष्ठा ब्राह्मण्यादयः पतिघ्नी सर्वैरेव परित्याज्या इत्यर्थः. कुत्सित इति प्रतिलोमवर्णगमने ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति वशिष्ठवचनं प्रागुक्तमेव एवं क्षत्रियावैश्ययोरपि प्रतिलोमगमने त्याग एव चाण्डालादिगमने तु सुतरामेव त्याग इति एतत् सर्वं स्वेच्छागमनविषयम् ॥ १५ ॥

अथान्त्यजेति । शूद्राश्रमेति शूद्राश्रमेण संगृहीताशूद्रत्वेन प्रतीता या [illegible]कादिस्त्री तत्र चतुर्विंशतिधागमने पतितत्वात् द्वादशवार्षिकप्रायश्चित्तं एतत्

एतदज्ञानतः सकृद्गमनविषयं तेन अज्ञानतः सकृद्गमने चान्द्रायणं तदशक्तौ अष्टौ धेनवः। शैलूषश्च वृत्त्यन्वेषी नटानान्तु स तु शैलूषकः स्मृत इति ब्रह्मपुराणोक्तः ज्ञानतः सकृद्गमने संवर्त्तः,

रजकव्याधशैलूषवेणुचर्मोपजीविनाम्।
कामतस्तु यदा गच्छेच्चरेच्चान्द्रायणद्वयम्॥

यत्तु स्वल्पयमवचनम्,

रजकश्चर्मकारश्च नटो वरुड़ एव च।
कैवर्त्तो मेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः॥
एतेषाञ्च स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयम्॥

इति तदबुद्धिपूर्वक द्विरभ्यासविषये कृच्छ्राब्दम् अज्ञाने चान्द्रायणद्वयं विदधाति। यच्च यमवचनम्,

रजकश्चर्मकारश्च नटो वरुड़ एव च।
कैवर्त्तो मेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः॥
एतेषाञ्च स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति॥

भिल्लो गण्डवारः वरुड़ः कोष्ठभूर इति प्रसिद्धः तत् शूद्राश्रमसंगृहीतरजकादिस्त्रीषु चतुर्विंशतिधाभ्यस्तगमने पतितत्वा-

---

ज्ञानतो विप्र इत्यनेन विदधाति चतुर्विंशतिधाभ्यासे हेतुमाह चतुर्विंशतिधेति सकृदज्ञानतश्चान्द्रायणमुक्तं चतुर्विंशतिचान्द्रायणैस्तुल्यं द्वादशवार्षिकं व्रतं यस्मादित्यर्थः ज्ञानात् साम्यन्तु गच्छतीति व्याचष्टे चतुर्विंशतिधाभ्यासकृते इति वक्ष्यमाणत्वात् रजकादिसाम्योपदेशात् साम्ये च मरणस्योक्तत्वात् मरणैक-

द्वादशवार्षिकव्रतप्रायश्चित्तं विदधाति चतुर्विंशतिधागमनैश्चतुर्विंशतिश्चान्द्रायणानि भवन्ति चतुर्विंशत्या तु चान्द्रायणैः द्वादशवार्षिकव्रतस्य समानत्वात् चतुर्विंशतिधाभ्यासकृते ज्ञानतो रजकादिस्त्रीगमने तत्समानत्वात् द्विगुणद्वादशवार्षिकरूपप्रायश्चित्तकृतेऽपि अव्यवहार्य्यतेत्यर्थः। प्रायश्चित्ताभावपरत्वे तु तत्संसर्गिणि प्रायश्चित्तव्यवस्था न स्यात् अतोऽज्ञानतः सकृद्रजकादि स्त्रीगमने चान्द्रायणं तदशक्तौ धेन्वष्टकं देयम्॥ १६॥

अथ कापालिकस्त्रीगमनप्रायश्चित्तम्।

तत्रापस्तम्बः,

कापालिकान्नभोक्तॄणां तन्नारीगामिनाम्तथा।
ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्॥

अत्र ज्ञाने त्रिंशद्धेनवः अज्ञाने पञ्चदशधेनवः॥ १७॥

अथ तिर्य्यग्योनिगमनप्रायश्चित्तम्।

तत्र शङ्खलिखितौ तिर्य्यग्योनिषु गोवर्जं सचेलः स्नात्वा तु यवसभारं गोभ्यो दद्यात्। इदम् अज्ञानतः सकृद्गमने। संवर्त्तः,

---

ल्पिकचतुर्विंशतिवार्षिकप्रायश्चित्तेऽपि ॰कृते साम्योपदेशादव्यवहार्य्यतेत्यर्थः तेन ज्ञानतो द्वादशधागमने द्वादशवार्षिकं व्रतं मन्तव्यम्। धेन्वष्टकमिति यद्यपि ान्द्रायणे सार्द्धसप्तधेनवः तथाप्यर्द्धधेनुदानस्याशक्यत्वात् किञ्चिदधिकमुक्तम् एवं वैव मन्तव्यम्॥ १६॥

अथ कापालिकस्त्रीति। अत्रापस्तम्बवचनं गमने सकृद्विषयं भोजने तु ानतोऽष्टधाभ्यस्ते कृच्छ्राब्दम् अज्ञानाच्चान्द्रायणद्वयमिति प्रागेवोक्तम्॥ १७॥

पशुवेश्याभिगमने प्राजापत्यं विधीयते।

इदमभ्यासतः वेश्यायां सकृदेव प्राजापत्याशक्तौ धेनुरेका देया। यत्तु जावालवचनम् इतरेषां पशूनान्तु कृच्छ्रपादो विशोधनम्। तद्द्वितीयाभ्यासविषयम् एवं यानि अन्यानि मुन्यन्तरोक्तगुरुलघुप्रायश्चित्तानि तानि अभ्यासे रेतःसेकात् पूर्वं गमने योज्यानि ॥ १८ ॥

अथ गोगमनप्रायश्चित्तम्।

तत्र विष्णुः गोव्रतं गोगमने च इदञ्च गोव्रतं गोवधोक्तं मासिकं विष्णूक्तमिदं सकृद्गमने अत्र धेनुचतुष्टयं देयं शङ्खलिखितौ गोष्ववकीर्णः संवत्सरं प्राजापत्यं चरेत्। इदमभ्यासे अत्र त्रिंशद्धेनवः। गोतमः गवितु गुरुतल्पसमः। अनेन द्वादशवार्षिकमत्यन्ताभ्यासे। निरन्तरं वर्षाभ्यासे मरणान्तिकम्। यानि स्मृत्यन्तरोक्तानि लघुप्रायश्चित्तानि तानि गवां ग्रहणमात्रविषयाणि व्यवहारिकप्रायश्चित्तं रेतःसेकमभ्युपगम्यैव दीयते यतो रेतःसेकात् प्राक्गमनं निश्चेतुमशक्यं अतस्तत्र दर्शितमिति। इति प्रायश्चित्तविवेके उपपातके अगम्यागमनप्रायश्चित्तम् ॥ १९ ॥

---

अथ तिर्य्यग्योनीति। इदमभ्यासत इति अत्यन्ताभ्यासादित्यर्थः परतोऽपि द्वितीयाभ्यासे कृच्छ्रपादस्य वक्ष्यमाणत्वात् इतरेषां गोभिन्नानामित्यर्थः ॥ १८ ॥

अथ गोगमनेति। इदमभ्यास इति अभ्यासोऽत्राष्टधाभ्यासः अत्यन्ताभ्यास इति पञ्चचत्वारिंशदभ्यास इत्यर्थः। इदानीमगम्यागमनप्रकरणमुपसंहरति व्यवहारिकेति सर्व्वमेवागम्यागमनप्रायश्चित्तं रेतःसेकमभ्युपगम्य रेतःसेकाभिप्रायेणैव दीयते व्यवस्थीयते इति व्यवहारः रेतःसेकात् प्राक्गमनस्य निश्चेतुमशक्यत्वात् अतो रेतःसेकात् प्राक्गमनप्रायश्चित्तं विविच्य न दर्शितमित्यर्थः ॥ १९ ॥

इति प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्यां अगम्यागमनप्रायश्चित्तम्।

## अथ परिवेदनादिप्रायश्चित्तम्।

तत्र छन्दोगपरिशिष्टं कात्यायनः,

दाराधिगमनाधाने यः कुर्य्यादग्रजाग्रिमः।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥

परिवित्तिः परिवेत्ता च नरकं गच्छतो ध्रुवम्।
अचीर्णप्रायश्चित्तौ तौ पादोनफलभागिनौ॥

अत्र शङ्खलिखितौ प्रायश्चित्तमाहतुः परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भिक्षां चरेताम्। शङ्खः,

परिवित्तिः परिवेत्ता च यया च परिविद्यते।
व्रतं संवत्सरं कुर्य्यात् दातृयाजकपञ्चमाः॥

व्रतञ्च यावकेन इदञ्च कामतः कन्यापितरं प्रयत्नादुत्साह्य-विवाहे हारीतः। ज्येष्ठेऽनिर्विष्टे कनीयान्निर्विशन् परिवेत्ता भवति परिविन्नो ज्येष्ठः परिवेदनीया कन्यापरिदायी-दातापरिकर्त्ता च याजकः ते सर्वे पतिताः। संवत्सरं प्राजापत्येन कृच्छ्रेण पापमपनुदेयुः समाप्तेऽब्दे तां कन्यां ज्येष्ठायोपपादयेयुः। सतामनुमन्यान्यया निर्विशेतैवं धर्मो न लुप्यते।

---

इदानीं संसर्गप्रायश्चित्तं विवक्षुः प्रथमं परिवेदनादिप्रायश्चित्तमाह अथ परिवेदनादीति। आधानमग्न्याधानम् अचीर्णेति तौ परिवित्तिपरिवेत्तारौ यत् कर्म कुरुतः तस्य पादोनफलभागिनावित्यर्थः परिशिष्टप्रकाशे तु इतरोपपातक-नरकफलस्य पादोनस्य भागिनाविति व्याख्यातं दातृ याजकौ पञ्चमौ यत्र ते तथा पणपूरणन्यायेन उभयोः पञ्चमत्वम्। संवत्सरयावकव्रते तु चतुर्विंशति-मेनवः। कन्येति कन्यापितरं यत्नान्मधुर वाग्दानादिप्रलोभनेन उत्साह्य उत्साहं कारयित्वा इत्यर्थः। अतएवाधिकप्रायश्चित्तम्। हारीत इति अनिर्विष्टेऽकृत-गार्हस्थ्ये निर्विशन् गार्हस्थ्यं कुर्वन् उपपादयेयुः समर्पयेयुः अनुमन्य स्वीकृत्य अन्यया

संव[illegible]त्येन त्रिंशद्भेनवः। यत्तु सुमन्तुनोक्तं परिवित्ति-परिवेत्तृकन्यादातृयाजकानां द्वादशरात्रं घृतप्राशनं ब्राह्मण-तर्पणञ्च तां पुनर्भवमाचक्षते न भूयश्चैनामभिगच्छेदिति तद-निर्विष्टे ज्येष्ठे विद्याधर्मार्थानामन्यतमार्थं देशान्तरगते पौनः-पुण्येन वार्त्तया अश्रवणे अवधिकालमप्रतीक्षमाणेन कनी-यसा विवाहकरणे वेदितव्यमिति धर्मप्रदीपः अवधिकालश्च वशिष्ठोक्तः यथा अष्टौ दश द्वादशवर्षाणि ज्येष्ठं भ्रातरमनि-र्विष्टम् असंप्रतीक्षमाणः प्रायश्चित्ती भवतीति तथा स एव,

> द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः न्याय्यः।
> प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः॥

द्वादशाब्दप्रतीक्षणञ्च ब्राह्मणस्यैव इत्यत्र गोतमः द्वादशवर्षाणि ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु विद्यार्थं प्रोषितस्य ब्राह्मणस्य दारा अप-त्योत्पत्त्यर्थं तदभिगमनञ्च द्वादशवर्षाणि प्रतीक्षेरन्नित्युक्त्वा भ्रातरि चैवमित्यनेन सर्वमतिदिष्टम्॥ २०॥

---

कन्यया निर्विशेत गार्हस्थ्यं कुर्यादित्यर्थः ब्राह्मणतर्पणं ब्राह्मणभोजनं कारयेदिति शेषः अवधिकालमिति अवधिकालाप्रतीक्षणहेतुकमेवेदं प्रायश्चित्तम् अवधिकाल-प्रतीक्षायान्तु न दोष इत्यर्थः। अष्टाविति अष्टौ वैश्यस्य दश क्षत्रियस्य च द्वादश ब्राह्मणस्येति विवेचयिष्यते गोतम इति कन्याग्न्युपयमेषु इत्यन्तं सूत्रम् अस्यार्थः विद्यासम्बन्धे विद्यार्थं प्रोषितस्य ब्राह्मणस्यागमनं तत्पत्नी द्वादशवर्षाणि प्रतीक्षेत तदूर्द्धं तत्रैव स्वयं गच्छेत् तथा ज्येष्ठभ्रातरि ब्राह्मणे विद्यार्थं प्रोषिते कनीयान् भ्राता कन्याग्न्युपयमेषु कन्याग्न्योः परिग्रहार्थम् एवं द्वादशवर्षाणि तदागमनं प्रतीक्षेतेति सूत्रं व्याचष्टे विद्यार्थमिति दाराः कर्त्तृभूताः स्वापत्योत्पत्त्यर्थं तदभिगमनं कर्त्तुरागमनं प्रतीक्षेरन्नित्यर्थः॥ २०॥

एतेनैतदवसीयते क्षत्रियस्य दशवार्षिकं वैश्यस्य अष्टवार्षिकं शूद्रस्य तु षाड्वार्षिकं क्षपणमिति गोतमेन सामान्येनाभिधात् । पुनः पुनर्वार्त्तां शृण्वतोऽपि तावत्कालमप्रतीक्षमाणस्य विष्णूक्तं तद्यथा परिवित्तिः परिवेत्ता च यया च परिविद्यते । तद्दाता याजकश्च चान्द्रायणं कुर्य्युः । तथा मनुरपि परिवित्तितानुजेनैव परिवेदनमेव चेत्यनेन परिवित्त्यादीनाम् उपपातकगणे पठितत्वात् पृथक्प्रायश्चित्तमनुक्त्वा गोवधप्रायश्चित्तवैकल्पिकं चान्द्रायणमेतद्विषय एवोक्तवान् तद्यथा,

एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥

याज्ञवल्क्योऽपि,

उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वापि मासेन पराकेणापि वा पुनः ॥

इति गोवधव्रतानन्तरमेतद्विषयमेवाह अत्र गोवधव्रतातिदेशात् ॥ २१ ॥

तत्र च शूद्रेऽर्द्धस्य व्यवस्थापितत्वात् अत्रापि सैव व्यवस्था । परिवित्त्यादिप्रायश्चित्ते वशिष्ठः । परिवित्तिः कृच्छ्रं द्वादश-

---

एतेनेति । ब्राह्मणस्य द्वादशवर्षाभिधानात् अष्टौ दशेति वशिष्ठोक्तं वैश्यक्षत्रियपरमवसीयते इत्यर्थः शूद्रस्य किं स्यात् इत्याकाङ्क्षायामाह शूद्रस्य तु षाड्वार्षिकं क्षपणमिति गोतमेन सामान्यत उक्तं तच्च शूद्रपरमेव अन्येषामुक्तविशेषाज्ञातत्वादित्यर्थः वार्त्ताया अश्रवणे सुमन्तूक्तं लघुप्रायश्चित्तं वार्त्ताश्रवणे तु व्रतं गुरु विष्णूक्तमिति पुनः पुनरिति ॥ २१ ॥

रात्रं चरित्वा निर्विशेत् ताञ्चैवोपयच्छेत् परिविन्दानः कृच्छ्राति-कृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निर्विशेत्। अग्रेदिधिषुपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विशेत् ताञ्चैवोपगच्छेत् दिधिषु-पतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निर्विशेत्। एतदज्ञानकृते परिवित्तिर्ज्येष्ठो निर्विशेत् अन्यस्यां विवाहं कुर्वीत ताञ्चैवोपगच्छेदिति तां कनिष्ठेनोढ़ां कनिष्ठेनैव दत्ता-मुपगच्छेत् स्वीकुर्य्यादित्यर्थः न तु तामेव परिणयेदिति। अतएव हारीतः तां कन्यां ज्येष्ठायोपपादयेयुः स ताम् अनु-मन्यान्यया निर्विशेतैवं धर्मो न लुप्यत इति। कनीयांश्च तां नाभिगच्छेत् न भूयश्चैनामभिगच्छेदित्युक्तसुमन्तुवचनात् कामतः पुनरग्रेदिधिषुपतिः अकामं कन्यापितरं प्रयत्नात्

---

अत्र चेति। एतदेव व्रतं कुर्य्यरित्यनेन मनुना अत्र परिवेदने गोवध-व्रतातिदेशात् तत्र गोवधे शूद्रस्यार्द्धप्रायश्चित्तस्योक्तत्वात् अत्रापि सैव शूद्रस्यार्द्ध-प्रायश्चित्तव्यवस्था अतिदेशसिद्धेत्यर्थः यस्मिन् विषये चान्द्रायणमुक्तं तस्मिन्नेव विषयेऽज्ञानकृते परिवित्तिपरिविन्नोः प्रायश्चित्तातिदेशमाह परिवित्त्यादीति परिवित्तिर्ज्येष्ठः निर्विशेत् परिणयेत् ताञ्च कनिष्ठेनोढां कनिष्ठेनैव दत्ताम् उप-यच्छेत् स्वीकुर्य्यात् परिविन्दानोऽनुजः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै ज्येष्ठाय तां कन्यां दत्त्वा पुनरन्यां निर्विशेत् परिणयेत् आदौ परिणीता अनुजा अग्रे दिधिषुः तज्ज्येष्ठा दिधिषुः अग्रेदिधिषुपतिः प्राजापत्यं चरित्वा निर्विशेत् तया सह गार्हस्थ्यं कुर्य्यात् ताञ्च दिधिषुम् अनूढां पित्रा दत्ताम् ऊढ़ाञ्चेत् पतिना दत्तामुपयच्छेत् स्वीकुर्य्यात् दिधिषुपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा तस्मै अग्रेदिधिषुपतये तां दिधिषुं दत्त्वा पुनरन्यां निर्विशेत् परिणयेदित्यर्थः एतदिति विदेशस्थो ज्येष्ठः परिणीतवा-नित्यसत्यं श्रुत्वा भ्रमात् कनिष्ठेन यत् परिणीतं तदज्ञानकृतं ज्ञाने तु द्वैगुण्यं कामत इति अकामं कन्यापितरं प्रयत्नात् उत्साह्य अग्रेदिधिषुपतेः कामतः कनीयस्या विवाहविषये गौतमः प्राकृतं ब्रह्मचर्य्यञ्चरेदित्यनुवृत्तावाह अग्न्युत्सादीति अग्न्युत्सादी परित्यक्ताग्निः निराकृतिः पञ्चयज्ञानुष्ठानरहितः यथा छन्दोगपरिशिष्टं निराकर्त्तामरादीनां स विज्ञेयो निराकृतिः उपपातकी अग्रेदिधिषुपत्यादिः एषु

प्रोत्साह्य कनीयस्या विवाहे प्राकृतं संवत्सरं ब्रह्मचर्य्यं चरे-दित्यस्याधिकारे गोतमः अगम्यागमनादिनिराकृत्युपपातकिषु चैवं प्राकृतमिति ब्रह्मबधोक्तम् एतयोश्चोपपातकित्वं गोतमेने-वापाङ्क्त्यानां प्रागदुर्बलादित्यनेन दर्शितम्। अग्रेदिधिषु-दिधिष्वोर्लक्षणमाह देवलः,

> ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा।
> सा चाग्रे दिधिषुर्ज्ञेया पूर्वा तु दिधिषुः स्मृता ॥ २२ ॥

ज्यायसोऽनुमत्या कनीयसोऽग्निपरिग्रहे दोषाभावमाह। हारीतः,

> सोदराणान्तु सर्वेषां परिवेत्ता कथं भवेत्।
> दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

तथा छन्दोगपरिशिष्टम्। कात्यायनः,

> नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च।
> दारैस्तु परिविन्द्यं स्यात् पृथग्धर्मा हि ब्राह्मणाः ॥

यथा वशिष्ठः,

> अग्रजोऽस्य यदा नाग्निरधिकार्य्यनुजः कथम्।

---

एवं प्राकृतं संवत्सरं ब्रह्मचर्य्यमित्यर्थः। गोतमोक्तप्राकृतपदार्थं विवृणोति प्राकृतं ब्रह्मबधोक्तमिति अत्र गोबधोक्तमिति क्वचित् पुस्तके पाठोऽपपाठ एव अगुरुतल्पादि-प्रकरणे ब्रह्महत्याव्रताधिकारेऽस्य वचनस्य लिखिष्यमाणत्वात् नन्वग्रे दिधिषु-दिधिषुपत्योः कथमुपपातकित्वं ज्ञातमित्यत्राह एतयोरिति दुर्बलात् प्रागित्यनेन सूत्रेण दुर्बलात् प्रागुक्तानाम् अपाङ्क्त्यानाम् अग्रेदिधिषुदिधिषुपति वार्द्धुषिका-दीनाम् उपपातकित्वं गोतमेनैव दर्शितमित्यर्थः ॥ २२ ॥

हारीत इति। नाग्निहोत्रेणेति ज्यायसोऽनुमतिविषयम् अननुमतौ तु दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते इति छन्दोगपरिशिष्टवचनात् पारिवेद्यमेव एतदेव अद-

अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि ॥

तथोशना,

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत्।

अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

एतेनैतदुक्तं विवाहस्त्वनुमत्यापि दोषायेति अपवादमाह। यमः,

पितृव्यपुत्त्रान् सापत्नग्रान् परनारीसुतांस्तथा।

दाराग्निहोत्रसंयोगे न दोषः परिविन्दतः ॥

परनारीसुता दत्तकादिभ्रातरः तथा छन्दोगपरिशिष्टं कात्यायनः,

देशान्तरस्थक्लीवैकवृषणानसहोदरान्।

वेश्याभिसक्तपतितशूद्रतुल्यातिरोगिणः ॥

जड़मूकान्धवधिरकुब्जवामनकुण्ठकान्।

अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च ॥

धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा।

कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥

धनवार्द्धुषिकं राजसेवकं कर्षकं तथा।

प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥

---

यति यथा विशिष्ठ इति यम इति पितृव्यपुत्त्रादीन् परिविन्दतोऽनुजस्य दाराग्निहोत्रसंयोगे न दोष इत्यर्थः। कात्यायन इति असहोदराः वैमात्रेयाः एकमातृजाता अपि भिन्नपितृकाश्च अतएव भीमस्य हिड़िम्बापरिणयनान्न दोष इति मनुवृत्तिकारः। अभार्य्याः शास्त्रविरुद्धभार्य्यासम्बन्धानैष्ठिकब्रह्मचारि वानप्रस्थभिक्षवः इति परिशिष्टप्रकाशः नृपस्य सेवायां सक्तानित्यर्थः धनवृद्धिप्रसक्तादौ प्रोषिते विशेषमाह धनवार्द्धुषिकमिति धनवृद्ध्या जीवतीति धनवार्द्धुषिकः।

प्रोषितं यद्यशृखानमब्दादेतत् समाचरेत्।
आगते च पुनस्तस्मिन् पादं तच्छुद्धये चरेत्॥

एकवृषण एकस्यामेव स्त्रियां यस्याभिगमनशक्तिः। शूद्रतुल्यमाह। मनुः,

गोरक्षकान् वाणिजिकान् तथा कारुकुशीलवान्।
प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्॥

कुण्ठः सर्वक्रियास्वलसः। अभार्य्यो मृतभार्य्यः। कामतः कारी श्रौतस्मार्त्तनिरपेक्षं स्वच्छन्दव्यवहारी। पौरानितिपाठे पौरो जनपदवत् प्रेष्यादिभावेन पुरनिवासी पुरप्रेष्यो वा॥ २३॥

## अथ व्रात्यप्रायश्चित्तम्।

तत्र मनुविष्णू,

येषां द्विजानां सावित्री नानुतिष्ठेद् यथाविधि।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥

प्राजापत्यत्रये धेनुत्रयम् एतत् पितृमातृरहितस्य निःस्वजनस्य सावित्रीपाते आलस्यानवधानादिना तु सावित्रीपाते याज्ञवल्क्यः,

आषोड़शाच्च द्वाविंशात् चतुर्विंशाच्च वत्सरात्।

---

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोर्गत इति प्रागुक्तवशिष्ठवचनन्तु अर्थोपार्जनविषयं वार्द्धुषिके तु वर्षत्रयमिमि व्यवस्था तत्रैव वर्षत्रयाभ्यन्तरे अशृखानम् अश्रूयमाणं प्रोषितं यदि परिविन्देत् तदा अब्दात्परत एतदस्यमाणं समाचरेत्। तदाह आगते चेति पादं परिवेदनप्रायश्चित्तस्य पादमित्यर्थः अशृखान इत्यार्षः॥ २३॥

अथ व्रात्यप्रायश्चित्तमिति। एतच्चेति यद्यपि यमवचने ब्राह्मणस्य पञ्चदशपर्य्यन्तमुक्तं राजन्यवैश्ययोस्तु न किञ्चित् तथाप्यत्र तदेकवाक्यतया ब्राह्मण

ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥
अत ऊर्द्ध्वं पतन्त्येते सर्वधर्मवहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥

आङत्र मर्य्यादावचनत्वं तेन ब्राह्मणस्य षोड़शवर्षस्य मर्य्यादाभूतत्वात् पञ्चदशाब्दपर्य्यन्तं कालः। एवं राजन्य-वैश्ययोरेकविंशतित्रयोविंशतिवर्षं यावत् कालद्वयम् एतच्चा-नन्तरं यमवचने स्फुटीभविष्यति अत्रैव विषये व्रात्यस्तोम-वैकल्पिकं दिनत्रयाधिकमासचतुष्टयसमाप्योद्दालकव्रतमाह वशिष्ठः। पतितसावित्रीक उद्दालकव्रतञ्चरेत्। द्वौ मासौ याव-केन वर्त्तयेत् मासं पयसा अर्द्धमासमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितं त्रिरात्रमब्भक्षः अहोरात्रमुपवसेत् अश्वमेधाव-भृथं वा गच्छेत् व्रात्यस्तोमेन वा यजेत आमिक्षा च आमिक्षा सा शृतोष्णे ,या क्षीरे स्याद्दधियोगत इत्यभिधानोक्ता अत्र द्विमासयावकव्रते धेनुचतुष्टयं मासैकक्षीरपाने सपादधेनुत्रि-तयं पञ्चमामिक्षाशने त्वेकधेनुः क्षीरादामिक्षायाः कठिनत्वेन वलहेतुत्वात् अष्टरात्रं घृतपाने अर्द्धधेनुः त्र्यश्वाव्भक्षणे एका-होरात्रोपवासाभ्यां मिलित्वा अर्द्धधेनुः एवं सपादनवधेनवः स्युः अस्य चोत्कृष्टगोदानसहितचान्द्रायणतुल्यत्वेनैतद्विषयम् एवं शङ्खलिखितौ व्रात्यश्चान्द्रायणञ्चरेत् गोदानञ्च कुर्य्यादिति। देशोपप्लववादिना पतितसावित्रीके यमः,

पतिता यस्य सावित्री दशवर्षाणि पञ्च च।
ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः॥

---

विषये मर्य्यादार्थत्वे सति इतरयोरपि मर्य्यादार्थत्वमाङः सामर्थ्यात् मासैकेति सार्द्धदिवसैनैकोपवाससङ्कलनया मासक्षीरपाने विंशतिरुपवासा भवन्ति तत्र

प्रायश्चित्तं भवेत्तेषां प्रोवाच वदतांवरः ।
विवस्वतः सुतः श्रीमान् यमो धर्म्मार्थतत्त्ववित् ॥
सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः ।
हविष्यं भोजयेदन्नं ब्राह्मणान् सप्त पञ्च वा ॥
एकविंशतिरात्रन्तु पिबेत् प्रसृतियावकम् ।
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥

अत्रैकविंशतिरात्रे यावकप्रसृतिपाने मासपयःपानतुल्यत्वात् सपादधेनुत्रयमेव। तथा अस्मिन्नेव विषये अतिक्रान्ते काले व्रात्याधिकारे हारीतः। तेषां प्रायश्चित्तं मासं पयो भक्षा गामनुगच्छेयुश्चीर्णप्रायश्चित्तन्तामिष्टव्रतैरुपनयेयुः यथाप्रकृति ऋतुच्छन्दोविशेषात् ऋतुर्वसन्तग्रीष्मशिशिरात्मकः छन्दोवेदः स्ववेदोक्तविधिना इत्यर्थः यद्यपि यमोक्तमेकविंशतिरात्रम् अत्र तु मासस्तथापि क्षीरपरिमाणानुपदेशात् यथेष्टमेव पानं यावकपानन्तु प्रसृतिपरिमितम् अतस्तुल्यत्वाद्विकल्पः अत एवास्येतिकर्त्तव्यतया किञ्चिद् गुरुत्वात् यथोक्तविषयत्वमेवेति ॥२४॥

---

च सपादधेनुत्रयमित्यर्थः अस्य चेति अस्योद्दालकव्रतस्य एतद्विषये आखस्यादिना सावित्रीपतनविषय एव शङ्खलिखितावाहतुरिति शेषः अत्र च उत्कृष्टेति दानस्य विशेषणं न तु गौः तदा हि उत्कृष्टगवीत्येतदेव स्यात् दानोत्कर्षश्च काञ्चनाद्यलङ्कारसाहित्येनेति एतच्च सूत्रे प्रदानपदाल्लभ्यते अतएव उद्दालकव्रततुल्यताऽपि सङ्गच्छते यम इति तथाऽर्थात् स्वस्वकाले ययोः राजन्यवैश्ययोः सावित्री पतिता स्यात् इत्यन्वयः सप्तपञ्चेति शक्त्यापेक्षया विकल्पः हविष्येण ब्राह्मणान् भोजयित्वा पश्चादेकविंशतिरात्रं प्रसृतिपरिमितं यावकं पिबेदित्यर्थः हारीत इति तेषां प्रायश्चित्तमुच्यते इति शेषः इष्टव्रतैः ब्रह्मचर्य्यादिभिः प्रकृत्यादीनामनतिक्रमेण प्रकृतिः स्वभावः स्वस्वविहितदण्डमेखलादिधारणं वसन्तग्रीष्मशिशिरात्मक इति स्ववरायण एवोपनयनविधानात् शरदात्मक इत्यपपाठः दक्षिणायने सर्वकर्मनि-

## अथावकीर्णिप्रायश्चित्तम्।

अत्र अवकीर्णी मैथुनेन क्षतव्रतः। यथा याज्ञवल्क्यः,

अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितमिति।

प्रायश्चित्ते अङ्गिराः,

अवकीर्णनिमित्तन्तु ब्रह्महत्याव्रतञ्चरेत्।

खरचर्मवासाः षण्मासांस्तथा मुच्येत किल्बिषात्। अवकीर्णमवकीर्णिता भावे क्तः। अत्र सार्द्धसप्तधेनवः इदं प्रमादसम्पन्ने। एतद्विषय एव याज्ञवल्क्यः,

अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितम्।
गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति॥

प्रयत्नात् स्त्रियमुत्पाद्य प्रवृत्ते त्वब्रवीन्मनुः,

एतस्मिन्नेनसि प्राप्ते संवेष्ट्य गर्द्दभाजिनम्।
सप्तागारं चरेद्भैक्ष्यं स्वकर्म परिकीर्त्तयन्॥
तेभ्यो लब्धेन भैक्षेण वर्त्तयेत्त्वेककालिकम्।
उपस्पृशं स्त्रिसवनमब्देन स विशुद्ध्यति॥

एतद्विषय एवाभ्यासे शातातपः, अथातोऽवकीर्णिप्रायश्चित्तं

---

षात्। अथ तथापि प्रसृतिमात्रयावकपाने कष्टाधिक्यमित्याशङ्क्याह तत एवेति अस्य मासपयोभक्षणस्य गवानुगमनादीति कर्त्तव्यतया गुरुत्वात् साम्यमित्यर्थः॥ २४॥

अथावकीर्णीति। अत्रेति अत्र प्रायश्चित्ते निरूपणीये अवकीर्णी निरूप्यते इति शेषः। इदं इति प्रमादेनानवधानेन परप्रलोभादिना सम्पन्ने स्त्रीसङ्गमे इदं प्रायश्चित्तमित्यर्थः। याज्ञवल्क्य इति नैर्ऋतं नैर्ऋतिदेवताकगर्द्दभम् आलभ्य तन्मांसेन होमादित्यर्थः। मनुरिति एतस्मिन् ब्रह्मचारिणि पापसम्पन्ने सतीत्यर्थः। एककालं वर्त्तयन् नक्तं भुञ्जानः। वक्ष्यमाणशङ्खलिखितवचनात्

व्याख्यास्यामो ब्रह्मचारी यद्यवकीर्य्येत् चतुर्थकालमब्दं भैक्ष-ञ्चरेदेवं पूतो भवतीति। तथा पैठीनसिरपि अवकीर्णी गर्द-भाजिनं वसेत्। संवत्सरं प्राजापत्यं चरेत् ॥ २५ ॥

शङ्खलिखिताभ्यान्तु विकल्प एवोक्तः तद्यथा सप्तरात्रेणा-वकीर्य्येत् भैक्षाग्निकार्य्ये अकुर्वन् सद्यः कामाद्युत्सर्गे रेतसो-ऽन्यत्र स्वप्नात्तत्र प्रायश्चित्तं महाव्याहृतिभिर्जुहुयात् ओंकार-पूर्विकाभिः संवत्सरं वा नक्तं भैक्षञ्चरेत् चतुर्थकालमितभुग्गा-यत्रीं संवत्सरानुगां जपेदिति। गायत्रीमपि संवत्सरं जपे-दित्यर्थः महाव्याहृतिहोमस्य लघुत्वादातिदेशिकावकीर्णित्वेन भैक्षाग्नित्यागे स्त्रियं विना कामाद्रेतस्त्यागे च व्यवतिष्ठते। स्त्रियं विनापि कामाद्रेतस उत्सर्गे प्रमादगमने च वशिष्ठः ब्रह्मचारी चेत् स्त्रियमुपेयात् अरण्ये चतुष्पथे लौकिके अग्नौ रक्षोदैवतं गर्दभं पशुमालभेत् नैर्ऋतं वा चरुं निर्वपेत् तस्य जुहुयात् कामाय स्वाहा। कामाकामाय स्वाहा नैर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहा इति एतदेव रेतसः प्रयत्नोत्सर्गे दिवास्वप्ने व्रतान्तरेषु वा समावर्त्तनात्। रेतोविसर्गे दिवा-स्वप्ने कामाभ्यासे ज्ञेयं पशोरभावे नैर्ऋतं चरुं निर्वपेदित्यर्थः एतच्चाकामावस्थायां कर्त्तव्यमित्यत्र बौधायनः। अथावकीर्ण-

---

त्रिसवनं त्रिसन्ध्यमुपस्पृशन् स्नानं कुर्वन्नित्यर्थः। चतुर्थकालमिति एकदिन-मुपोष्य परदिने रात्रौ भिक्षालब्धं भुञ्जीतेत्यर्थः ॥ २५ ॥

शङ्खेति। शङ्खलिखिताभ्यान्तु स्त्रीप्रोत्साहनविषये भैक्षाब्दाहारचतुर्थ-कालाब्दाहारयोर्विकल्प उक्तः स च व्यवस्थितः भैक्षाब्दाहारो मनुवचनसमा-नार्थः। चतुर्थकालाब्दाहारस्तु शातातपसमानार्थोऽभ्यासविषय इति। तदर्थ-भैक्षाग्निकार्य्ये अकुर्वन् सप्तरात्रेणावकीर्णी भवति स्त्रियं विना कामाद्रेतस्त्या-गेऽवकीर्य्येत्। उभयत्र प्रायश्चित्तं महाव्याहृतिहोमः। प्रोत्साह्य स्त्रीस-

मावस्थायां निश्यग्निमुपसमाधाय सम्परिस्तीर्य्य दार्वीं होमिकीं परिचेष्टां कृत्वा द्वे आज्याहुती जुहोतीति अत्र च व्रतान्तरेष्वित्यभिदधता वशिष्ठेन द्वादशाब्दिकादिव्रतेषु पुरुषार्थचान्द्रायणादिषु च यदादिष्टं ब्रह्मचर्य्यं तत्राप्येतदतिदिष्टमविशेषात् अतएव,

> कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः।
>
> अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः॥

इति मनुना सामान्येनैवावकीर्णिलक्षणमकारि अकामतो रेतसः संस्रावे मनुः,

> स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
>
> स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्॥

ब्रह्मचारिणो गुरुदारगमने तु तद्गमनोक्तप्रायश्चित्तेनैव गुरुणा लघ्ववकीर्णिप्रायश्चित्तं कृतं भवेत् यथा दण्डनिपातप्रायश्चित्तेनैव गुरुणा तन्नान्तरीयकावगोरणप्रायश्चित्तमपि सम्पद्यते॥ २६॥

---

प्रायश्चित्तमाह संवत्सरं वेति तत्रैव अभ्यासे आह चतुर्थकालमिति। संवत्सरानुगां संवत्सरानुगतां एतद्व्याचष्टे गायत्रीमपीति न केवलं संवत्सरं चतुर्थकालभुक्गायत्रीमपि संवत्सरं जपेदित्यर्थः। प्रमादगमने चेति प्रागेव व्याख्यातं वशिष्ठ इति आसमावर्त्तनादित्यन्तं सूत्रं प्रथमं प्रमादगमने प्रायश्चित्तमाह ब्रह्मचारी चेदिति याज्ञवल्क्यसमानार्थम्। इतिशब्दो होमसमाप्त्यर्थः। इदमेव प्रायश्चित्तमासमावर्त्तनात् कामाद्रेतस्त्यागदिवास्वप्नयोरभ्यासे अन्येष्वपि चातिदेशिकब्रह्मचर्य्येष्वपि व्रतेषु स्त्रीसङ्गमे चातिदिशति एतदेवेति बौधायन इति परिस्तरणं कृत्वा दार्वीं दर्वीसम्बन्धिनीं चेष्टां चरुं कृत्वा होमिकीं होमसम्बन्धिनीं चेष्टां पर्य्युक्षणादिकञ्च कृत्वेत्यर्थः। गुरुदारगमनेति प्रसङ्ग-

## अथ पितृष्वसृसुतादिपरिणयनप्रायश्चित्तम्।

तत्र सुमन्तुः, पितृष्वसृमातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणञ्चरेत् परित्यज्यैनां बिभृयात्। मातृसगोत्रा मातामहस्य सप्तपुरुषान् यावत्। यत्तु शातातपेनोक्तं,

> परिणीय सगोत्रान्तु समानप्रवरान्तथा।
> कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं समाचरेत्॥

इति तदनुलोमासवर्णकन्यापरिणयनविषयं सगोत्रा समानप्रवराग्रहणमविवाह्यस्त्रीमात्रोपलक्षणं विवाह्याविवाह्यस्त्रीविशेषश्च याज्ञवल्क्यटीकायामस्माभिरभिहितः। सगोत्रादिकन्यानाञ्चाज्ञानतो विवाहे इदं यथा बौधायनः, सगोत्राञ्चेदमत्योपगच्छेत् मातृवदेनां बिभृयात् प्रजाता चेत् कृच्छ्रा-

---

न्यायाद् गुरुप्रायश्चित्ताचरणेन लघुप्रायश्चित्तस्य गतार्थत्वादित्यर्थः। दृष्टान्तमाह यथेति अवगुर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने इति वचनात् अतिकृच्छ्रेण गुरुणा दण्डनिपातनप्रायश्चित्तेन कृतेन तन्नान्तरीयकस्य तत्सहचरितस्य दण्डावगोरणस्य लघुप्रायश्चित्तं कृच्छ्रं प्रसङ्गाद् यातार्थं यथेत्यर्थः॥ २६॥

अथ पितृष्वसृसुतादीति। बिभृयात् अन्नाच्छादनाभ्यां परिपोषयेत्। मातामहस्य सप्तमपुरुषान् यावदिति मातुःसपिण्डा यत्नेन वर्जनीया द्विजातिभिरिति व्यासवचनेन मातामहसपिण्डाया अवश्यवर्जनीयत्वावगमात् तदितरस्याः परिणयः प्रतीयते। एतच्चासुरादिनिन्दितविवाहविषयं शुद्धविवाहे तु मातृसमानोदकाया अपि वर्जनं यथा व्यासः सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि। जन्मनाम्नोरविज्ञानेऽप्युद्वहेदविशङ्कितः। जन्मनाम्नोर्ज्ञानपर्य्यन्तं समानोदकत्वं तदूर्द्ध्वमेव विवाहो विधीयते अतएव गोभिलः चासगोत्रा मातुःसपिण्डा चेति तदनुलोमेति उत्तमवर्णापरिग्रहे प्राणान्तिकप्रायश्चित्तस्योक्तत्वात् इदं वक्ष्यमाणबौधायनोक्तं बौधायन इति अमत्या अज्ञानेन उपगच्छेत् [illegible]येत् तदा मातृवद्व्यवहरेत् परित्यजेदित्यर्थः। एवं चावश्यं बिभृयात्

ब्दपादं चरित्वा जप्मन आत्मनो वेदाग्निभूतः पुनरग्निश्च-क्षुरादित्येताभ्यां जुहुयात्। ज्ञाने तु द्वैगुण्यं यत्तु सुमन्तुनोक्तं समानार्षेयीगमने कुष्माण्डैर्घृतहोमः त्रिरात्रमुपवासश्चेति तत् परित्यज्य म्रियमाणाया आरोहणमात्रविषयम्। एतच्च सर्वं प्रायश्चित्तं स्वाजन्याविशेषाच्चातुर्वर्ण्यस्य तुल्यमिति॥ २७॥

अथाग्न्युत्साद्यादिप्रायश्चित्तम्।

तत्र मनुः,

अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्॥

अपविध्य त्यक्त्वा वीरहत्या यजमानहत्या वीरो यजमान इति श्रुतेः। तथा यमः,

अग्नीनुत्सादयेत् यस्तु वीरहा स निरुच्यते।
चान्द्रायणेन शुद्ध्येयुः समं तत् ब्रह्महत्यया॥

एतच्च कामतः संवत्सरोत्सन्ने अग्निहोत्रे वेदितव्यम् अतएव

---

एतच्च परित्यागमात्रं परिणयनमात्रे ज्ञेयम्। अज्ञानात् सङ्गमे तु प्रागुक्त-चान्द्रायणाद्ध' मन्तव्यम् अज्ञानाद्गर्भोत्पादे त्वाह प्रजाता चेदिति कृच्छ्राब्दपादे सार्द्धसप्तधेनवः। ज्ञाने त्विति ज्ञानादूढ़ायां गर्भोत्पादने कृच्छ्राब्दं तत्र पञ्च-दशधेनवः यद्देवादेवहेलनमित्यादि कुष्माण्डाख्यमन्त्रः आरोहणेति आक्रमण-मात्रविषयमित्यर्थः। स्वाजन्यं स्वजनत्वं सर्ववर्णानामेव तादृशसम्बन्धाविशेषा-दित्यर्थः॥ २७॥

अथाग्न्युत्साद्यादीति। परिवित्तिवदिति कन्या पितरं प्रयत्नाद्युत्साद्य विवाहे वत्सरं प्राजापत्यं प्रागुक्तमिति। एतदनुसारेणेति प्रथमाब्दमध्ये चान्द्रायणविभागः कार्य्यः। द्वितीयाब्दे चान्द्रायणं सोमायनविभागश्चाधिकः।

हारीतः, संवत्सरोत्सन्ने अग्निहोत्रे चान्द्रायणं कृत्वा पुनराद-ध्यात् द्विवर्षोत्सन्ने अग्निहोत्रे सौमायनचान्द्रायणे कुर्य्यात्। त्रीणि वर्षाणि योऽग्निहोत्रमुत्सृज्य न पुनरादध्यात्। संवत्सरं परिवित्तिवत् कृच्छ्रमभ्यसेत्। सोमायनं सौम्यकृच्छ्रमत्रैका धेनुः एतदनुसारेणाधिकाल्पकालयोरूह्यं गृह्याग्नित्यागे तु सांवत्स-रिकं ब्रह्महत्याव्रतमुक्ताह अत्र गोतमः अग्न्युत्सादिनिराकृत्यु-पपातकिषु चैवमिति अथवा अग्न्युत्सादने कृच्छ्राब्दमिति शातातपीये कृच्छ्राब्दशब्दस्य महाव्रतपरत्वात् गोतमसमान-त्वम् उभयथापि पञ्चदशधेनवः ॥ २८ ॥

अतः परं पर्वणि होमलोपादीनां विशेषाः प्रस्तूयन्ते तत्र मरीचिः,

होमलोपे ह्यमावस्या सर्वस्याग्रयणादिषु।
कुर्य्यादिष्टिं पावमानीं शुचिन्तां तु यथाकृतिम् ॥

अग्नये शुचये अष्टाकपालं निर्वपेदित्यादि। बृहस्पतिः,

आहिताग्निरुपस्थानं न कुर्य्याद् यस्तु पर्वणि।
ऋतौ न गच्छेद्भार्य्यां वा सोऽपि कृच्छ्रार्द्धमाचरेत् ॥

---

तृतीयाब्दे सौमायनचान्द्रायणे तदधिकं यत्तद्विभागः तदूर्द्ध्वं प्रतिवर्षं चान्द्रा-यणमधिकम्। सायंप्रातरग्निहोत्रत्यागे प्रायश्चित्तमुक्त्वा गृह्याग्नित्यागे त्वाह गृह्याग्नीति वत्सरं ब्रह्महत्याव्रतमुक्त्वा तदनुवृत्तौ अत्राग्न्युत्सादिविषये गोतम आहेत्यर्थः। निराकृतिः पञ्चयज्ञानुष्ठानरहितः उपपातकी शूद्रहादिः महा-व्रतं ब्रह्महत्याव्रतम् ॥ २८ ॥

मरीचिरिति पर्वस्वष्टकादिषु आग्रयणं नवशस्येष्टिः शुचिः सन् पावमानी-मिष्टिं कुर्य्यात् तां त्विष्टिं यथाकृतिकर्मानुसारेण यावान् कर्मलोपस्तावतीं कुर्य्यादित्यर्थः। पावमानीमिष्टिं विवृणोति अग्नय इति। बृहस्पतिरिति

हारीतः उत्सृज्याग्निं प्रविशन् प्रवास्यैन्द्रावैश्वानर्य्या यजेत। तथा स एव सांवत्सरिकाणामिज्यानां पशुसोमानामसम्भवे वा सम्पत्कालादनृतमभिधायाभिशस्तोऽतिवाह्याग्निं वारुण्यैव यजेत। सम्पत्कालादनृतमभिधायेति सम्पत्कालेऽनृताभिधाने एतत् प्रायश्चित्तं विपदि पुनरदोष इत्यर्थः। मनुः,

इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्य्यये।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे॥

हारीतः योयक्ष्ये इत्युक्त्वा न यजेत् महान्तं वा क्रतुमभिसमीक्ष्य स्वल्पेनेष्ट्या न सर्वं प्रयुनक्ति तत्र त्रैधाभवी प्रायश्चित्तं यस्तप उपेत्य न यथास्वं तपस्यति अन्यथा वा चरति असमाप्तिको वा निवर्त्तते अत्राग्नेयो विधिश्चान्द्रायणम् वा त्रैधाभवी इष्टिरित्यर्थः महाभारते,

संस्पृशेयुर्यदान्योन्यं कथञ्चिद्वायुनाग्नयः।
इष्टिरष्टाकपालेन कार्य्या विविचयेऽग्नये॥

तथा अग्निं रजस्वला स्त्री च संस्पृशेदग्निहोत्रकम्।
इष्टिरष्टाकपालेन कार्य्या दस्युमतेऽग्नये।

---

उपस्थानं परिचर्य्याम्। क्लृप्ताङ्गं प्राजापत्याङ्गम् ऋतौ भार्य्यानभिगमने तु अप्रोषितस्य नीरुजः सक्लज्ञाने बोद्धव्यमिति प्रागुक्तम्। हारीत इति प्रवासी उत्सृज्याग्निं गृहं प्रविशन् गृहप्रवेशकाले वैश्वानरेष्ट्या यजेत् इन्द्रावैश्वानर्य्येति पाठे इन्द्राग्निदेवताकेष्ट्येत्यर्थः। स एव हारीत एव पशुयागसोमयागानां प्रवासे द्रव्यासम्भवे वाऽकरणे सम्पत्कालं प्राप्य मिथ्याभिधानेन च अभिशस्तो मिथ्यापातकपरिवादापन्नः अग्निमतिवाह्य सायं प्रातर्होममकृत्वा वारुण्या इष्ट्या यजेदित्यर्थः। मनुरिति अब्दपर्य्यये अब्दान्ते नित्यं नित्यतया क्लृप्तानां विहितानां पशुसोमयागानाम् असम्भवे वैश्वानरेष्टिं निर्वपेदित्यर्थः। हारीत इति अकृत-

आर्त्तो न जुहुयादग्निं त्रिरात्रं यस्तु ब्राह्मणः।
इष्टिरष्टाकपालेन कार्य्या स्यात्तम्भवेऽग्नये॥
सूतकाग्निर्यदावाग्निं संस्पृशेदग्निहोत्रिकम्।
इष्टिरष्टाकपालेन कार्य्यावाग्नि मतेऽग्नये।
दर्शञ्च पौर्णमासञ्च यस्य तिष्ठेत् प्रतिष्ठितम्॥
इष्टिरष्टाकपालेन कार्य्या पथि कृतेऽग्नये॥ २९॥

अथ गृहस्थस्य चिरतरकालानग्नित्वप्रायश्चित्तम्।

अस्य च अनाहिताग्निताऽस्तेयमित्यनेन मनुना उपपातकत्वमुक्तम्। गोवधप्रायश्चित्तं त्रैमासिकमभिधायाह मनुः,

एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः।
अवकीर्णिवर्जं शुद्धार्थं चान्द्रायणमथापि वा॥

तेनातिबहुतरकाले अनाधाने गोवधव्रतसमानत्वाद्द्वादशधेनवः तद्व्रतोक्तदक्षिणा च देया। अल्पकालेऽनाधाने च चान्द्रायणमिति॥ ३०॥

---

संकल्पो योयद्यप्यपि इत्युक्ता न यजेत् यश्च कृतसंकल्पो महान्तं क्रतुं इष्ट्वा स्वल्पं नाङ्गेनेष्ट्वा सर्वमङ्गजातं न करोति तत्र त्रेधाभवीनामेष्टिः प्रायश्चित्तं यथायथयम् आवश्यकचान्द्रायणादिना तपस्यति यश्च तपोमध्ये विहितादन्यथा वा चरति यश्चासमाप्य निवर्त्तते तत्राग्नेयो विधिः वैश्वानरेष्टिरित्यर्थः। भारत इति त्रयाणामग्नीनामन्योन्यस्पर्शे विविचिन्नामेऽग्नये इष्टिः कार्य्या इत्यर्थः। अग्नये विविचये स्वाहेति प्रयोगः एवमुत्तरत्रापि। दर्शञ्चेति प्रतिष्ठितं सन्तिष्ठेत् विश्राम्येत् प्रतिमासं न भवेदित्यर्थः॥ २९॥

अथ गृहस्थस्य चिरतरकालेत्यादि। द्वादशधेनव इति एतच्च प्राचीनमतानुसारेणोक्तं वस्तुतस्तु सप्तदशधेनवः वृषभाधिका दशगावश्च दक्षिणेति तत्र विवेचितम्॥ ३०॥

## अथ ब्राह्मणस्य वेदानध्ययनयज्ञाकरणपुत्रानुत्पादन-प्रायश्चित्तम्।

अस्यापि ऋणानाश्चानपक्रियेति मनुनोपपातकत्वमुक्तम् ऋणञ्च देवपितृगार्षलक्षणं तथा च श्रुतिः ब्राह्मणो वै जायमानस्त्रिभिः ऋणैर्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यो विद्यया ऋषिभ्य इति। ऋणमिव ऋणमवश्यशोध्यत्वात् अत्रापि एतदेव व्रतं कुर्य्युरिति मनूक्तमेव प्रायश्चित्तं तेन त्रैमासिकं गोवधव्रतं तदशक्तौ द्वादशधेनवः वृषाधिका दशगावश्च दक्षिणा देयाः अत्र प्रत्येकमेव ऋणत्वावगतेः प्रत्येकमेवेदं प्रायश्चित्तम् ॥ ३१ ॥

## अथानाश्रमित्वप्रायश्चित्तम्।

तत्र दक्षः,

> अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः।
> आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ ॥

प्रायश्चित्ते तु हारीतः, अनाश्रमी संवत्सरं प्राजापत्यं चरित्वा आश्रममुपेयात् द्वितीयेऽतिकृच्छ्रं तृतीये कृच्छ्रातिकृच्छ्रम् अत ऊर्द्धं चान्द्रायणमिति तेन संवत्सरेकानाश्रमित्वे कृच्छ्रं वत्सरद्वये अतिकृच्छ्रं वत्सरत्रितये कृच्छ्रातिकृच्छ्रम् अत ऊर्द्ध-

---

अथ ब्राह्मणस्य वेदानध्ययनेत्यादि। तत्र प्रत्येकमिति त्रिभिर्ऋणैः ऋणवान् जायते इति श्रुतेर्वेदाध्ययनादिषु प्रत्येकमेव ऋणत्वं ततश्च प्रत्येकमेव प्रायश्चित्तमिदं यत्र तु द्वे त्रीणि वा तत्रापि तत्तत्संख्यकमेव प्रायश्चित्तम् ॥ ३१ ॥

अथानाश्रमित्वेति। हारीत इति संवत्सरमनाश्रमीत्यर्थः। द्वितीये तृतीये च वर्षे गते इत्यर्थः कृच्छ्रातिकृच्छ्र इति कृच्छ्रातिकृच्छ्रः पयसा दिवसानेक-

श्चान्द्रायणंप्राजापत्याशक्तौ धेनुरेका देया अतिकृच्छ्रे धेनुत्रितयं कृच्छ्रातिकृच्छ्रे धेनुषट्कं चान्द्रायणे धेन्वष्टकमिति ॥ ३२॥

अथ सूर्य्योदयकालास्तकालयोः शयनप्रायश्चित्तम्।

तत्र मनुः,

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते॥

अभ्युदिते सूर्य्ये शयनकाल इत्यर्थः तथा विष्णुपुराणं यमश्च,

सूर्य्योदये च यः शेते स सूर्य्योदित उच्यते।
अस्तं गते च यः शेते सूर्य्यनिर्मुक्त एव सः॥

एतत् सकृदाचरणे अभ्यासे तु प्राजापत्यं सामान्योक्तं ज्ञेयम्॥ ३३॥

अथ ब्रह्मचारिणः सन्ध्यादीनामतिक्रमप्रायश्चित्तम्।

तत्र वृहस्पतिः,

सन्ध्योपासनमुद्दिष्टं प्रथमं ब्रह्मचारिणः।
अग्नीन्धनं भैक्षचर्य्यं तच्च कुर्वीत प्रत्यहम्॥

---

विंशतिमिति याज्ञवल्क्योक्तोऽभ्यासात्मक इत्यर्थः। धेन्वष्टकमिति यद्यपि चान्द्रायणे सार्द्धसप्तधेनवः तथाप्यर्द्धधेनुदानस्याशक्यत्वाद्धेन्वष्टकमित्युक्तम् एवमन्यत्रापि ज्ञेयम्॥ ३२॥

अथ सूर्य्योदयेति। शयनकाले सूर्य्येऽभ्युदितेऽस्तमिते चेति मन्तव्यं तुल्यत्वात् अभ्यासे त्विति यदोक्तं यत्र वाभीक्ष्णमिह पातकनाशनम्। प्राजापत्येन कर्त्तव्य [illegible] तत्र संशय इत्युशनोवचनादित्यर्थः॥ ३३॥

अथ ब्रह्मचारिण इति। [illegible] कृतसर्वाङ्गहोमवाप इत्यर्थः

अस्य त्वयस्याकरणाद् व्रती रोमविवर्जितः।
अवकीर्णिव्रतं कुर्य्यात् सप्तरात्रमनातुरः॥

एतत्त्रयं प्रत्येकमकृत्वा अवकीर्णिव्रतं कुर्य्यादित्यर्थः पूर्ववाक्ये सन्ध्योपासनादीनामेकैकशोऽभिधानात् सप्तरात्रग्रहणात् एतदूने ऊनमधिके अधिकमिति अवकीर्णिव्रतञ्च याज्ञवल्क्योक्तं यथा,

भैक्षाग्निकार्य्ये त्यक्त्वा तु सप्तरात्रमनातुरः।
कामावकीर्ण इत्याभ्यां हुत्वा चाज्याहुतिद्वयम्।
उपस्थानं ततः कुर्य्यात् समासिञ्चन्ननेन तु॥

अत्र च ब्रह्मचारिणः प्रक्रमात्तस्यैव तत्प्रायश्चित्तं गृहस्थस्य तु मानवं वक्ष्यमाणं ग्राह्यम्। प्रमादात् सन्ध्यानुपासने विष्णुः सूर्य्याभ्युदितोऽभिनिर्मुक्तः सचेलः स्नातः सावित्र्यष्टशतमावर्त्तयेत्। कामतः सकृत् सन्ध्याद्यनुपासने तु संवर्त्तः,

सन्ध्यान्तु यदि नोपास्ते अग्निकार्य्यं यथाविधि।
गायत्र्यष्टसहस्रन्तु जपेत् स्नात्वा समाहितः॥
भिक्षाटनमकृत्वा तु सुस्थो ह्येकान्नमश्नुते।
अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत्॥

तथा गोतमः, सूर्य्याभ्युदितो ब्रह्मचारी तिष्ठेदहरहर्भुञ्जानोऽस्तमितश्च रात्रिं जपन् सावित्रीम्। सावित्रीजप उभयत्रापि सम्बन्धः जपसंख्या च संवर्त्तोक्तैव। अभ्यासे तु मनुः,

---

प्रत्येकाकरणे हेतुमाह पूर्ववाक्य इति उपस्थानमग्नेरिति शेषः गृहस्थस्य त्विति उत्तरप्रकरणे वेदोदितानामित्यादिना वक्ष्यमाणं मनूक्तमहोरात्राभोजनमित्यर्थः पूर्वप्रकरणे गृहस्थस्य सूर्य्योदितस्य सूर्य्यनिर्मुक्तस्य च स्नानमात्रं प्रायश्चित्तमुक्तम् अस्मिन् प्रकरणे तु ब्रह्मचारिणः सूर्य्याभ्युदितादेः प्रायश्चित्तमाह प्रमादादिति

तञ्चेदभ्युदयात् सूर्य्यः शयानं कामकारतः ।
निम्लोचेद्वाप्यविज्ञानाज्जपन् उपवसेद्दिनम् ॥

कामतोऽत्यन्ताभ्यासे तु यमः,

सूर्य्योदये च यः शेते स सूर्य्योदित उच्यते ।
अस्तं गते च यः शेते सूर्य्यनिर्मुक्त एव सः ॥
ब्रह्मस्तेनावुभौ सम्यगहोरात्रोषितौ शुचौ ।
गायत्र्या दशसाहस्रं कुर्य्यातामाह्निकं पृथक् ॥

पृथगिति उभाभ्यामेव पृथक् पृथक् कार्य्यमित्यर्थः ॥ ३४ ॥

अथानातुरगृहस्थस्य सन्ध्यास्नानाह्निकनित्यक्रियाति-
पातप्रायश्चित्तम् ।

तत्र विष्णुपुराणं,

नित्यानां कर्मणां विप्र ! यस्य हानिरहर्निशम् ।
अकुर्वन् विहितं कर्म सद्यः पतति तद्दिने ॥

तत्र प्रायश्चित्तमाह मनुः,

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥

---

सत्कादित्यर्थः संवर्त्त इति सुस्थोऽरोगी गौतम इति अहरहर्भुञ्जानः सावित्रीं जपंस्तिष्ठेत् सायंसन्ध्यामकुर्वाणो रात्रिंभुञ्जानः सावित्रीं जपंस्तिष्ठेत् मनुरिति तं ब्रह्मचारिणं निम्लोचेत् अस्तं गच्छेत् शयानत्वामज्ञानं तस्येत्यर्थः । यम इति उभौ सूर्य्योदितसूर्य्यनिर्मुक्तौ ब्रह्मस्तेनौ वेदविप्लावकौ ब्रह्मचारिणावित्यर्थः ॥ ३४ ॥

अथानातुरगृहस्थस्येति । नित्यानामिति विप्रेति सम्बोधनं स तद्दिने विहितं कर्माकुर्वन्निति हेतोः सद्यः पततीत्यर्थः । अनातुरः सति धने इत्यनेनातुरस्याधनस्य च दोषाभाव इत्युक्तं विष्णुपुराणमिति यतस्तस्य पाप-

हारीतः, न गृही नियमातिक्रमे अश्नीयात्। एतेन सकृन्नियमातिक्रमे एकोपवासः, तदशक्तेन रजतरत्तिकषट्कं देयं तत्तु दिनैकक्रियापाते। दिनत्रयक्रियापाते बृहस्पतिः,

अनिर्वर्त्त्य महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही।
अनातुरः सति धने स तु कृच्छ्रार्द्धमाचरेत्॥

अत्र चतुर्विंशतिः पणा देयाः। युक्तञ्चेदं दिनत्रयनित्यकर्म्मपाते दिनत्रयाभोजनेन कृच्छ्रार्द्धतुल्यत्वात्। वर्षैकनित्यक्रियापाते विष्णुपुराणं,

संवत्सरं क्रियाहानिर्यस्य पुंसः प्रजायते।
तस्यावलोकनात् सूर्य्यो निरीक्ष्यः साधुभिः सदा॥
स्पृष्टेः स्नानं सचेलन्तु शुद्धिहेतुर्महामते!।
पुंसो भवति तस्योक्ता न शुद्धिः पापकर्म्मणः॥
देवर्षिपितृभूतानि तस्य निश्वस्य वेश्मनः।
प्रयान्त्यनर्च्चिता यत्र कस्तस्मात् पापकृन्नरः॥
देवादिनिश्वासहतं शरीरं यस्य वेश्म च।
न तेन सङ्करं कुर्य्याद् गृहासनपरिच्छदैः॥

अनेनाह्निकनित्यक्रियापाते महापातकातिदेश एव कृतः अत्र प्रायश्चित्तविशेषाश्रुतेः एकदिनक्रियापाते प्रायश्चित्तानुसारेण

---

कर्म्मणः शुद्धिर्मनीषिभिः नोक्ता इत्यर्थः अनर्च्चिता इति पुंलिङ्ग आर्षः देवादीनि यत्र वेश्मनि अर्च्चितानि सन्ति तस्य पुंसः तस्माद्वेश्मनो निश्वस्य प्रयान्ति तस्मादन्यः कः पापकृदित्यर्थः सङ्करं मिश्रणम् अनेनेति स्पर्शस्नानादिविधानेनेत्यर्थः एकदिनेति द्वे कृष्णले समधृते इति शास्त्रानुसारेण षड्रत्तिकाभिर्माषद्वयं राजतं भवति तच्च लोकप्रसिद्धद्वादशरत्तिकामितमाषकस्यार्द्धं संवत्सरकृ

द्विकृष्णलरूप्यमाषकत्रयस्य षष्ट्यधिकशतत्रयगुणितस्य दानं लोकप्रसिद्धद्वादशरत्तिकमाषकमानक्रमेण माषकचतुष्टयाधिकतोलकषट्कसमेतं पलद्वयं भवतीति ॥ ३५ ॥

अथ शूद्रव्यतिरिक्तायाज्ययाजनप्रायश्चित्तम् ।

तत्र निन्दायां यमः,

असत्प्रतिग्रहीता यस्तथैवायाज्ययाजकः ।
नक्षत्रैर्जीवते यश्च सोऽन्धकारं प्रपद्यते ॥

वशिष्ठः,

श्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
न त्वेव बहुयाज्यस्य यश्चोपनयते बहून् ॥

प्रायश्चित्ते तु बौधायनः, बहुप्रतिग्राह्यस्य वा प्रतिगृह्य अयाज्यं वा याजयित्वा अप्रतिग्राह्यस्य वा प्रतिगृह्य अनाश्यस्य वा अन्नमशित्वा तरत्समन्दीयं जपेत् । कृत्य लुटो बहुलमिति बहुलवचनादपादाने ण्यत् तेन प्रतिगृह्यते यस्मादिति प्रति-

---

षष्ट्यधिकशतत्रयदिनर्भवति अत एषामर्द्धम् अशीत्यधिकं शतं लोकप्रसिद्धरूप्यमाषकं भवति तेन च मासचतुष्टयाधिकं द्वाविंशतितोलकं भवति पलञ्चाष्टतोलकैरिति ॥ ३५ ॥

अथ शूद्रव्यतिरिक्तेति मनुरिति । असद्भ्रः प्रतिग्रहीतारः नक्षत्रैर्नक्षत्रशास्त्रैः ज्योतिर्विद्यया यो जीवतीत्यर्थः वशिष्ठ इति बहवो याज्या यस्य यश्च बहूनुपनयते बहूनां गायत्रीदानं करोति तस्यान्नं नैव भोक्तव्यमित्यर्थः बौधायन इति बहवः प्रतिग्राह्या दातारो यस्य तस्य प्रतिगृह्य अयाज्यं पातकिनम् अन्त्यजादिकञ्च याजयित्वा वा एतच्च सद्यःपातहेतुयाजनेतरसकृदयाजनविषयम् अप्रतिग्राह्यस्य निषिद्धप्रतिग्रहस्य प्रतिग्रहं कृत्वा वा अनाश्यस्य अभोज्यस्य वार्द्धुषिकादेरन्नं वा भुक्त्वा तरत्समन्दीयं सामवेदैकभागं जपेदित्यर्थः एतच्चेति

आद्यः एतच्च अनादेशे शतमिति वचनाच्छतम् अभ्यासे सहस्रादिकं चान्द्रायणं वा त्रिरात्रं वा वाग्यता अनश्नन्त आसीरन् सहस्रमपरं वा तदभ्यस्यान्तःपूता भवन्तीत्यनुवृत्तौ वशिष्ठः, एतेनैव गर्हिताध्यापकयाजका व्याख्याताः दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायते एतच्च शूद्रेतरस्य उपपातकादिगर्हितस्य पञ्चमहायज्ञयाजनादिविषयमिति धर्मप्रदीपः ॥३६॥

अथ शूद्रयाजनप्रायश्चित्तम्।

तत्र शूद्रपुरोहितयाजकाध्यापकानुवृत्तौ यमः,

एतेषामिव सर्वेषां प्रत्यापत्तिन्तु मार्गताम्।<br>
भैक्षान्नमुपभुञ्जानो द्विजश्चान्द्रायणञ्चरेत् ॥<br>
धनं नागह्रदे तोये प्लावयेदभिभावितम्।<br>
अर्थोत्सर्गेण मन्त्रान्ते तस्मात् पापात् प्रमुच्यते ॥<br>
अक्षारलवणां रूक्षां पिबेद् ब्रह्म सुवर्चलाम्।<br>
तस्योपनयन कृत्वा व्यवहार्य्यस्तदा भवेत् ॥

---

एतत्तु तरत्समन्दीयजपनं शतमित्यर्थः अभ्यास इति अभ्यासानुसारेण सहस्रादिकं सहस्रादधिकञ्चेत्यर्थः चान्द्रायणं वेति चान्द्रायणेन चैकेन सर्वपापक्षयो भवेदिति वचनात् सहस्रादिकमित्यत्र प्रमाणमाह त्रिरात्रमित्यादिगर्हितप्रतिग्रहविषयं वशिष्ठसूत्रं वाग्यतास्त्रिरात्रमुपोष्य पापानुरूपं सहस्रम् अपरं वा तदधिकं वा तरत्समन्दीयम् अन्तरभ्यस्य मनसा जपित्वा पूता भवन्तीत्यनुवृत्तेरित्यर्थः एतेनेति गर्हिताध्यापकयाजकयोरप्येवं प्रायश्चित्तं किन्तु दक्षिणाधनं यत् प्राप्तं तस्य त्यागादेव शुद्धा भवन्तीत्यर्थः ॥ ३६ ॥

अथ शूद्रयाजनेति। यम इति प्रत्यापत्तिं संप्रतिपन्नतां व्यवहार्य्यतां मार्गताम् एषामिदं प्रायश्चित्तमिति शेषः तदाह भैक्षान्नमिति ततोऽर्जितधनं गजमज्जनयोग्यतोये अविभावितम् अविचारितं प्लावयेत् मज्जयेत् ब्रह्मचारिणे तस्यार्थस्योत्सर्गेण दानेन वा मन्त्रान्ते चान्द्रायणव्रतान्ते पापान्मुच्यत इत्यर्थः रूक्षां तीव्रां

नागकूटे गजमज्जनयोग्ये मन्त्रान्ते व्रतस्यान्ते ब्रह्मसुवर्चला पीतवर्णकुसुमसूर्य्यावर्त्तः तेन शूद्रं लोभादिना याजयित्वा अर्जितभुक्तावशिष्टधनमगाधजले प्रक्षिप्य गुरुणा दत्त्वाभ्यनुज्ञाय ब्रह्मचारिणे वा दत्त्वा ब्राह्मणश्चान्द्रायणं कुर्य्यात् ततः पुनरुपनयनञ्च करणीयम् अक्षारलवणां ब्रह्मसुवर्चलाञ्च पिबेत्। एतदशक्तौ तद्धनं परित्यज्य त्रिंशत्पुराणाः प्रदातव्याः। सकृत्करणेऽपि स एव।

पुरोधाः शूद्रवर्णस्य यो ब्राह्मणः प्रवर्त्तते।
स्नेहादर्थप्रसङ्गाद्वा तस्य कृच्छ्रं विशोधनम्॥

अज्ञानतः पञ्चमहायज्ञविषये सुमन्तुः शूद्रयाजकः सर्वद्रव्यपरित्यागात् पूतो भवति प्राणायामसहस्रेषु च दशधाभ्यस्तेषु॥ ३७॥

अथ शूद्रप्रतिग्रहप्रायश्चित्तम्।

तत्र शूद्रप्रतिग्रहविषये मनुः,

राजतो धनमन्विच्छेत् संसीदन् ब्राह्मणः क्षुधा।
याज्यान्तेवासिनोर्वापि न त्वन्यत इति स्थितिः॥

---

उपनयनं कृत्वा कार्य्यमित्यर्थः कर्मणि क्त्वा च प्रत्यय आर्षः तदा स व्यवहार्य्यो भवेदित्यर्थः गुरुणा दत्तानुज्ञा यस्मै तस्मै ब्रह्मचारिण इत्यर्थः एतच्चाग्रिमप्रकरणे यमवचने व्यक्तीभविष्यति एतदशक्ताविति भैक्षान्नेन चान्द्रायणे एकदिनब्रह्मसुवर्चलापाने च अतिकष्टत्वादशक्तेनेव: एतच्च त्रिंशत् पुराणाः पुनरुपनयनं चावश्यकमेवेति स एव यम एव एतेन प्रागुक्तं प्रायश्चित्तं चिराभ्यासविषयं मन्तव्यम् अज्ञानत इति एतच्चिरतरकालाभ्यासे सर्वद्रव्यत्यागादित्यभिधानात् प्रायश्चित्तगौरवाच्च अज्ञानमत्र शूद्रयाजनदोषाभावज्ञानं दशधाभ्यस्तेषु दशसहस्रप्राणायामेषु कृतेष्वित्यर्थः॥ ३७॥

अथ शूद्रप्रतिग्रहेति। मनुरिति अन्यतः शूद्रादेर्न त्वित्यर्थः। न राज्ञ इत्य-

राजशब्दोऽत्र न्यायवर्त्तिक्षत्रियनृपतिपरः।

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः॥ इति।

यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः।

स पर्य्यायेण यातीमान्नरकानेकविंशतिम्॥

इति मनुवचनात्। राजप्रतिग्रहोऽपि प्रशस्तब्राह्मणाभावे यथा व्यासः,

द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः।

अपि वा क्षत्रियाद्वैश्यान्न तु शूद्रात् कदाचन॥

तदेवं शूद्राद्धनागमो निन्दितः स चापात्रीकरणं पापं यथा मनुः,

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्।

अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्॥

अत्र प्रायश्चित्तमाह मनुः,

सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्।

अतः शूद्रप्रतिग्रहे चान्द्रायणं एतज्ज्ञानाभ्यासे। अज्ञानतः सकृत् प्रतिग्रहेऽप्याह मनुः,

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्।

तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव वा॥

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहिताः।

मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्॥

---

नेन क्षत्रियेतरनृपपर्य्युदासः यो राज्ञ इत्यनेन चान्यायवर्त्तिनृपपर्य्युदासः मनुरिति सङ्करीकरणेषु अपात्रीकरणेषु च मासं व्याप्य ऐन्दवं चान्द्रायणं शोधनं प्रायश्चित्तमित्यर्थः। अज्ञानत इति अज्ञानतोऽभ्यासे ज्ञानात् सकृत्प्रतिग्रहे तुल्यमाह

अत्र च सार्द्धैकदिनक्षीरपानेन लघुत्वादेकोपवासपर्य्यवसानात् मासैकपयःपानेन विंशतिरुपवासाः स्युः तेन सपादप्राजापत्यत्रयसमानतया सपादधेनुत्रयं गायत्रीत्रिसहस्रजपे च द्विरत्तिकरजतमाषा नव दातव्याः एतच्च द्रव्यत्यागपूर्व्वकं कार्य्यम् ॥ ३८ ॥

यथा पुनर्मनुः,

जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्।
प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव च॥

अप्सु च प्रक्षेप्यन्तत् अथवा गुरुणा दत्ताभ्यनुज्ञाय ब्रह्मचारिणे देयम्। यथा यमः,

कर्म्मणा गर्हितेनैव यद्वित्तं समुपार्जितम्।
तस्य त्यागेन शुद्ध्यन्ति धर्म्मस्यान्वेषणेन वा॥
अप्सु प्रास्यन्तु तद्द्रव्यमन्यायेन यदागतम्।
प्रतिग्रहानुशिष्टाय देयं वा ब्रह्मचारिणे॥

एतच्च असद्वृत्त्यर्जितधनमात्र एव ज्ञेयं सामान्येन कर्म्मणा गर्हितेनेत्यभिधानात् यद्यपि प्रतिग्रहो विहित एव तथापि

---

मनुरित्यर्थः। जप्यं तपश्च विब्रवीति जपित्वेति अत्र चेति मासैकपयःपाने सपादधेनुत्रयं सावित्रीसहस्रत्रयजपे चार्द्धधेनुः मिलित्वा पादोनधेनुचतुष्टयम् एतच्चाज्ञानाभ्यासोक्तचान्द्रायणार्द्धं ज्ञानतः सकृदज्ञानाभ्यासे च युज्यत इति भावः ॥३८॥

पुनर्मनुरिति। तस्योत्सर्गेण शुद्ध्यन्तीति प्रागुक्तं पुनरप्याह मनुरित्यर्थः। ाम इति धर्म्मस्य प्राजापत्यादिव्रतस्यान्वेषणेनानुष्ठानेन प्रतिग्रहार्थं गुरुणाऽनुशिष्टायेत्यर्थः। निमित्तेषु च सर्व्वेषु उपरागादिषु हारीत इति निरयाय कल्पत इत्यन्तं सूत्रं प्रतिगृहीतं धनमित्यर्थः। आत्मार्थं इत्यनेन देवजये स्वजये वा

गङ्गादितीर्थोपरागादिकालपतितत्वादिदुष्ट-दानविधि-प्रति-गृहीत-सुवर्णादि-स्वरूप-दुष्टोभयतोमुख्यादिसम्बन्धेन गर्हित एव। तथा च मत्स्यपुराणं,

तस्मात्तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु च।
निमित्तेषु च सर्वेषु न प्रमत्तो भवेद्द्विजः॥

हारीतः, पतितदुष्कृतेभ्यः प्रतिगृहीतमस्वर्ग्यमयज्ञियं न तेन पुण्यार्थानाप्नोति आदेशवादाभ्यामीत्यार्थे ब्राह्मणमभिजित्य तामसमन्यस्मै दीयमानं प्रतिगृह्णंस्तस्य दुष्कृतमाप्नोत्या-नृण्यार्थे प्रतिगृह्य तस्योपयोगात् स्तैन्यमेते प्रतिग्रहोपसर्गा यैः प्रतिगृह्णन् निरयाय कल्पते। आदेशवादाभ्यामिति इमं विषमं वेदभागं पठेदिति नियोग आदेशः वाद उद्ग्राह-स्ताभ्यां यत् परं जित्वा लब्धं तेन तदीयदुरितमाप्नोति आनृ-ण्यार्थं इति ऋणपरिशोधनार्थं प्रतिगृह्य ऋणमविशोध्य उप-योगान्तरात् स्तैन्यं स्यादिति। तथा मनुः,

हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्।
अविद्वान् प्रतिगृह्णाणो भस्मीभवति दारुवत्॥

अत्र मन्वाद्यविदुषामेव निषेधो न तूभयतो मुख्यादीनामि-वात्यन्ताप्रतिग्राह्यत्वं तथा,

---

प्रवृत्तस्य जये न दोष इत्यर्थः। तामसं धनं मदहेतुत्वात् अन्यस्मै जिताय दीयमानम् ईश्वरेण दातुमभिप्रेतं धनं प्रतिगृह्णन्नित्यर्थः। एतेऽर्थाः प्रतिग्रहोप-सर्गाः प्रतिग्रहदूषका यैरर्थैः सर्वमन्यद्ग्रन्थकृतैव व्याख्यातम्। अविधिगृहीतम् विद्वानीति तथेति, हिरण्यमिति, हिरण्यमन्नश्चायुरीषतो दहतः एवमन्यत्रापि स्वभावदुष्टेति गर्हितत्वं निन्दनीयत्वं वाच्यं वक्ष्यत इत्यर्थः। केचिदिति

हिरण्यमायुरन्नञ्च भूर्गौश्चाप्योषतस्तनुम्।
अश्वश्चक्षुस्त्वचं वासो घृतं तेजस्तिलाः प्रजाः॥

हिरण्यादीनि क्रमशोऽविदुषामायुरादीनि दहन्तीत्यर्थः। स्वभावदुष्टकृष्णमृगाजिनादीनाञ्च गर्हितत्वमसत्प्रतिग्रहे वाच्यमिति अत्र केचित् स्वभावगर्हितोभयतोमुखीकृष्णमृगाजिनादानविषयमिदं यत् गर्हितेनार्जयन्तीति त्यागेन तपसैव वेति मनुवचनद्वयम्। जपित्वा त्रीणीति मनुवचने असत्प्रतिग्रहप्रायश्चित्तबोधके द्रव्यत्यागो न श्रूयते अतः स्वभावगर्हितदान एव द्रव्यत्यागो न तु दातृयोगाद्गर्हित इति॥ ३९॥

तन्न स्वभावगर्हितविषयत्वे हेत्वभावात् यद्गर्हितेनार्जयन्तीति जपित्वा त्रीणीति वचनयोर्भिन्नविषयत्वे प्रमाणाभावात् जप्येन तपसैव वेति जपतपसोर्विशेषाकाङ्क्षायां द्वितीयवचनावतारात् असत्प्रतिग्रहवचनस्य चोभयवचनाद्वा तदुभयविषयत्वमेव स्यादिति यत् किञ्चिदेतत्। यत्तु चाण्डालपतितान्त्यजप्रतिग्रहेषु प्रायश्चित्तगौरवं तद्विशेषवचनात्तथैव।

---

यद्गर्हितेनार्जयन्तीति वचनं प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव चेति वचनं स्वभावगर्हितप्रतिग्रहविषयम् अत्रैव द्रव्यत्यागस्तत्प्रकरणोक्तवक्ष्यमाणप्रायश्चित्तञ्च न तु पतितदुष्कृतेभ्यः प्रतिग्रहे द्रव्यत्यागः यतो जपित्वेति वचनमुच्यते असत्प्रतिग्रहादित्यनेनासतां प्रतिग्रह एव प्रायश्चित्तं बोधयति न तु स्वभावदुष्टोभयमुख्यादौ तत्र च जपित्वेति वचने द्रव्यत्यागो न श्रूयत इत्यर्थः॥ ३९॥

तन्नेति। यद्गर्हितेनेत्यादिवचनद्वयस्य स्वभावगर्हितमात्रविषयत्वे हेत्वभावात् सामान्यतः श्रवणात् यद्गर्हितेनेत्यादिजपित्वेत्यादिवचनयोर्भिन्नविषयत्वे प्रमाणाभावाच्च प्रत्युत यद्गर्हितेनेत्यादिवचने जप्येन तपसैव चेति जपतपसोर्विशेषाकाङ्क्षायां वचनान्तराभावात् जपित्वेति वचनान्तरस्योपस्थितत्वाच्च यत्रोक्तमसतां प्रतिग्रहादिति तदपि मन्दं षष्ठीसमासे लक्षणाप्रसङ्गात् असन्

श्राद्धञ्च, ब्राह्मणनामगोत्रानुल्लेखेऽपि ब्राह्मणगतस्वत्वहेतु-
त्यागरूपत्वाद्दानं तद्ग्रहणञ्च प्रतिग्रह एव तथा च मनुः,

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्।
त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके॥

केतनमामन्त्रणं स्वस्तिसावित्रीपाठाभावे कथं प्रतिग्रहत्वमिति
चेन्न अदृष्टार्थे दत्तद्रव्ये स्वीकारः प्रतिग्रह इति हि प्रतिग्रह-
लक्षणं स्वस्त्याद्यभावे विधिना तन्न भूतं न तु प्रतिग्रह एव न
भवेत् सामान्योत्सर्गग्रहणे प्रतिग्रहत्वाभावप्रसङ्गात्॥ ४०॥

---

यः प्रतिग्रह इति कर्मधारयः असत्त्वञ्च प्रतिग्रहस्य पापोत्पत्तिहेतुत्वादेव तच्च
यथाऽसतां प्रतिग्रहे तथा स्वभावदुष्टप्रतिग्रहेऽपीत्येतदाह असत्प्रतिग्रहादसत्-
प्रतिग्रहवचनस्य असत्प्रतिग्रहशब्दस्येत्यर्थः यत्त्विति चाण्डालादीनाम् असतां प्रति-
ग्रहे यत् प्रायश्चित्तगौरवं तद्विशेषवचनान्तरात् जापित्वा त्रीणीति वचनोक्तन्तु
तदितरसामान्यविषयमित्यर्थः एवमसतां शूद्रादीनां श्राद्धप्रतिग्रहेऽपीदमेव प्राय-
श्चित्तं तत्र श्राद्धस्य दानत्वं व्यवस्थाप्य तद्ग्रहणस्य प्रतिग्रहत्वं व्यवस्थापयति
श्राद्धञ्चेति दाने सम्प्रदानब्राह्मणनामगोत्रोल्लेखः श्राद्धे तु पितृणामेव न ब्राह्मणस्य
तथापि तद्दानं वेदबोधितत्वे सति स्वत्वजनकत्यागो दानमिति वैधदानलक्षण-
व्यापनात् नामगोत्रोल्लेखस्य किञ्चित्करत्वात् ततश्च श्राद्धग्रहणं प्रतिग्रह एव अत्र
शास्त्रमपि प्रमाणयति तथेति यद्यपि प्रतिग्रहपदं लक्षणयानुमतिमात्रपरं तथा-
प्युपोद्बलकमात्रं दर्शितम् एतदस्वरसेनाह स्वस्तीत्यादि। अदृष्टार्थपदं पुत्रमित्रा-
दिभ्यो द्रव्यदानेऽतिव्याप्तिवारणार्थं दत्तपदं ब्राह्मणोद्देशेन त्यक्तद्रव्यस्य बलात्-
कारेणान्यस्य स्वीकारव्यावृत्त्यर्थम्। तेन यस्य स्वीकारस्तस्य स्वामित्वाभिसन्धानेन
दत्त इत्यर्थः सम्पन्नः अस्ति च श्राद्धे ब्राह्मणस्वामित्वाभिसन्धाने न त्यागः अतएव
श्राद्धविवेकग्रन्थकृता अस्ति चोद्देश्यता ब्राह्मणस्य तद्गतस्वामित्वाभिसन्धानेन
द्रव्यत्यागादित्युक्तं स्वस्त्याद्यभाव इति स्वस्तिवादसावित्रीपाठादिकन्तु न प्रतिग्रह-
लक्षणं स्वीकारस्यैव प्राधान्यात् किन्त्वङ्गमेव अतः स्वस्त्याद्यभावे तत्प्रतिग्रहकर्म
यथाविधि न भूतम् अन्यत्र यादृशसाङ्गविशिष्टं न तथात्र विधेरेव तथात्वात् न तु
प्रतिग्रहो न भूतः अतः प्रतिबन्दिमाह सामान्यत इति सामान्यतो ब्राह्मणमात्रो-

अथ देवलोक्तस्रुवादिसाध्यत्वयागलक्षणाव्याप्तावपि देवतोद्देशेन द्रव्यत्यागो याग इति यागलक्षणकल्पनात् यागरूपमिदं श्राद्धं तथापि लघुयाजनत्वात् प्रतिग्रहसमानतैव अथ भोजनरूपमिदं तथापि भोजनप्रतिग्रहयोस्तुल्यरूपतैव भोजनरूपता च नास्य नियता आमश्राद्धस्याप्युक्तत्वात् अतापद्यपवादे मनुः,

> याजनाध्यापने नित्यं क्रियते संस्कृतात्मनाम् ।
> प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः ॥
> तथा वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः ।
> अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत् ॥

---

द्देशेन उत्सृष्टस्यान्यस्य वाऽनुत्सृष्टस्य द्रव्यग्रहणे सावित्रीपाठाद्यभावे प्रतिग्रहत्वाभावप्रसङ्गः स्यादित्यर्थः । अतः श्राद्धं दानं तद्ग्रहणञ्च प्रतिग्रह इति सिद्धम् अतएव श्राद्धविवेके यागदानोभयरूपता श्राद्धस्येति दर्शितम् ॥ ४० ॥

इदानीं तुष्यतु सुजन इति न्यायेन श्राद्धस्य यागमात्रत्वमङ्गीकृत्यापि दूषयति अथेति । तत्र प्रथमं यागत्वमस्य व्यवस्थापयति देवलेति पशुचोराज्यपुरोडाशसोमौषधिचरुप्रभृतिभिर्हविर्भिः खदिरपलाशाश्वत्थन्यग्रोधोडुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोदूखलमूषलकुठारखनित्रयूपदारुदर्भचर्मग्रावपवित्रभाजनादिभिरध्वर्य्युद्गातृहोतृब्रह्मादिभिर्ऋत्विग्भिः काम्यनैमित्तिकानां यथोक्तदक्षिणानां यज्ञानां समापनं यजनमेतेन याजनं व्याख्यातमिति देवलसूत्रं नैतद्यागसामान्यलक्षणपरं प्रत्येकसमुदायाभ्यां दर्शपौर्णमासादावव्यापनात् यज्ञानां समापनमित्यनेनात्माश्रयदोषाच्च किन्तु याजनं योनिसम्बन्धं स्वाध्यायं सह भोजनम् । कृत्वा सद्यः पतत्येव पतितेन न संशयः । इति स्वयमुक्तसद्यःपातहेतुयाजनपदस्य गुरुयाजनविशेषोपसंग्रहार्थम् । अतएव एतेन याजनं व्याख्यातमित्यन्तोक्तं न त्वन्यत् यजनमेव न भवतीति अतो देवलोक्तयागविशेषलक्षणाव्याप्तावपि देवतोद्देशेन द्रव्यत्यागो याग इति यागसामान्यलक्षणव्यापनात् श्राद्धं याग एवेति न तु दानम् अतस्तद्ग्रहणे प्रतिग्रहत्वाभावान्न दोष इति केषाञ्चिन्मतमपाकरोति तथापीति तथापि श्राद्धस्य यागत्वे सत्यपि ब्राह्मणस्य लघुयाजनत्वादसत्प्रतिग्रहसमानदोष

सर्वतः प्रतिगृह्णीयाद् ब्राह्मणस्त्वनयङ्गतः।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते॥
नाध्यापनाद् याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनार्कसमा हि ते॥

तथा शङ्खलिखितौ, तस्य स्वधर्म एव श्रेयान् स्वल्पोऽप्यनुष्ठितो न तु परं सेवते। जघन्यसेवी हि ब्राह्मणो जघन्येषूपजायते। तस्मात् प्रशस्तसमयाभावः सर्वतः प्रतिगृह्णीयान्नात्मनस्ततस्तृप्तिमिच्छेत् कामं त्रयाणां वर्णानां याजनं कुर्य्यात् तेभ्यो वित्तमादाय धर्मकृत्येषूपहरेत् ऋत्व्यर्थम्॥ ४१॥

अथोच्छास्त्रवर्त्तिक्षत्रियनृपतिप्रतिग्रहप्रायश्चित्तम्।

तत्र हारीतः,

राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत्।
षष्ठे काले पयोभक्ष्यः पूर्णे मासे प्रमुच्यते॥

---

एव असत्प्रतिग्रहीतारस्तथैवायाज्ययाजका इति मनुना तुल्यदोषाभिधानादित्यर्थः। अथ यदि भोजनरूपमेव श्राद्धं न तु दानं न च याग इत्यङ्गीकुरुषे तथापि भुक्त्वा च प्रतिगृह्य चेति मनुना तुल्यदोषाभिधानाद्भोजनप्रतिग्रहयोस्तुल्यतेति अस्मिन् पक्षे व्यभिचारं दोषान्तरमाह भोजनरूपता चेति अतः सर्वथैव श्राद्धग्रहणे दोष इत्यर्थः। अत्रेति आपद्यसत्प्रतिग्रहे दोषापवाद इत्यर्थः संस्कृतात्मनां द्विजातीनां त्रयाणामित्यर्थः अनयं गतः विपदं प्राप्त इत्यर्थः। शङ्खलिखिताविति तस्य ब्राह्मणस्य स्वधर्मः स्वल्पोऽप्यनुष्ठितः श्रेयान् न तु परं परधर्मं सेवते हि यस्मात् जघन्यसेवी नीचधर्मसेवी ब्राह्मणो नीचकुले जायते इति तस्मान्नीचधर्मानुष्ठाननिषेधात् द्विगुणस्वधर्मानुष्ठानविधानाच्चेत्यर्थः। प्रशस्तसमयाभावः विपत्कालं प्राप्त इत्यर्थः अतः प्रतिग्रहात् आत्मनस्तृप्तिं नेच्छेत् आत्मनस्तृप्त्यर्थं न प्रतिगृह्णीयादित्यर्थः किन्तु देवपितृकृत्यार्थं भरणीयपोषणार्थञ्चेति॥ ४१॥

अथोच्छास्त्रवर्त्तीति हारीत इति। दिनद्वयमुपोष्य तृतीयस्य रात्रौ षष्ठकाले

तर्पयित्वा द्विजान् कामैः सततं नियतव्रतः।
तपसा चेज्यया चैव राजपापात् प्रमुच्यते॥

राजपदमत्र उच्छास्त्रवर्त्तिक्षत्रियनृपतिपरं शूद्रनृपतिपरञ्च उभयप्रतिग्रहस्यैव मनुना निषिद्धत्वात् यथा मनुः,

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः।

तथा, यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः।
स पर्य्यायेण यातीमान्नरकानेकविंशतिम्॥

न्यायवर्त्तिक्षत्रियनृपतेः प्रतिग्रहस्य देवलेनाभ्यनुज्ञातत्वात्। यथा देवलः,

धर्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन्।
मेध्यमेव धनं प्राहुस्तीक्ष्णस्यापि महीपतेः॥
अर्थानां भूरिभावाच्च देयत्वाच्च महात्मनाम्।
श्रेयान् प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते॥

राज्ञामिति क्षत्रियनृपतिपरं तत्रैव मुख्यत्वात् ब्राह्मणसन्नि-

---

दुग्धाहार इत्यर्थः कामैरन्नाच्छादनादिभिः तपसा जलवासषष्ठकालाहाररूपेण इज्यया ब्राह्मणतर्पणरूपया च राजपापात् राजप्रतिग्रहपापात् मुच्यते इत्यर्थः शूद्रनृपतिपरञ्चेति न्यायवर्त्तिनोऽपि शूद्रनृपस्य प्रतिग्रहे दोष इत्यर्थः। एतच्च शूद्रनृपस्य दोषाधिक्यप्रदर्शनार्थं ग्रन्थकृतोक्तं किन्तु वैश्यनृपस्यापि अराजन्यप्रसूतित इति मनुवचनात् ब्राह्मणनृपस्य तु नान्येषां ब्राह्मणादृत इति वक्ष्यमाणदेवलवचने प्रतिप्रसवात् देवल इति अशुचीन् दुर्वृत्तान् भूरि भावात् बाहुल्यात् देयत्वात् विधिबोधितत्वेन दानयोग्यत्वात् दानविध्यन्यथानुपपत्त्या प्रतिग्रहलाभादित्यर्थः। यथा याज्ञवल्क्यः अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् इति महात्मनां न्यायवर्त्तिनां सच्छास्त्रवर्त्तिनां राज्ञां क्षत्रियनृपाणां प्रतिग्रहः श्रेयान् नान्येषां नान्यवर्णनृपाणां तथापि ब्राह्मणादृते ब्राह्मणनृपस्य न दोष इत्यर्थः। अतो वैश्यशूद्र-

धानाच्च । अत्र षष्ठकालचौराशनमासैकजलवासक्लेशातिशयात् प्रचुरतरद्विजतर्पणोपदेशाच्च मासोपवासेनास्य सङ्कलनम् । अत्र च पञ्चदशधेनवो द्रव्यत्यागपूर्वकं दातव्याः ॥४२॥

अथान्त्यजप्रतिग्रहप्रायश्चित्तम् ।

तत्र सुमन्तुः, सौरिकव्याधनिषादरजकवरुडचर्मकारा अभोज्यान्ना अप्रतिग्राह्याः तदन्नाशनप्रतिग्रहयोश्चान्द्रायणञ्चरेदिति इदञ्च ज्ञानाभ्यासे अज्ञानाभ्यासे तदर्द्धम् । यत्तु यमवचनं,

रजकश्चर्मकारश्च नटो वरुड़ एव च ।
कैवर्त्तो मेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥
एतेषाञ्च स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति ॥

तच्चाण्डालप्रतिग्रहोक्ताष्टचत्वारिंशद्वाराभ्यासात् द्विगुणाभ्या-

---

नृपतिप्रतिग्रहे दोष इत्युक्तं तत्रैवेति तत्रैव क्षत्रियनृपतावेव राजशब्दस्य मुख्यत्वात् प्रधानं क्षत्रिये कर्म प्रजानां परिपालनं कुसीदं कृषिवाणिज्यं पशुपाल्यं विशः स्मृतं शूद्रस्य द्विजशुश्रूषा तया जीवन् वणिग् भवेदिति याज्ञवल्क्येन क्षत्रियस्यैव नृपत्वप्रतिपादनात् ब्राह्मणसन्निधानाच्चेति ब्राह्मणजातेः प्रतिप्रसवात् राजपदस्य जातिपरत्वोपसंहाराच्चेत्यर्थः । अत्रेति अत्रोक्तप्रायश्चित्त इत्यर्थः मासोपवासव्रतेन सहास्योक्तप्रायश्चित्तस्य सङ्कलनात् तुलनात् .अत्र राजप्रतिग्रहपापे पञ्चदशधेनवो देया इत्यर्थः ॥ ४२ ॥

अथान्त्यजेति । सुरया जीवन्तीति सौरिकाः शुण्डिकाः ज्ञानाभ्यास इति अभ्यासोऽत्र द्विरभ्यासः सकृज्ज्ञाने तु चान्द्रायणार्द्धं तदिति तत् यमवचनम् अज्ञानतश्चण्डालप्रतिग्रहोक्तपतितत्वापादकाष्टचत्वारिंशद्वाराभ्यासस्य द्विरभ्यासेन षण्णवत्यभ्यासेनाज्ञानतः पतितत्वं बोधयति चण्डालतोऽन्त्यजानामुत्कृष्टत्वात् अयमर्थः अज्ञानाद्विरभ्यासे चान्द्रायणार्द्धं प्रागुक्तम् अतश्चतुर्भिरभ्यासैश्चान्द्रायणं स्यात् । एवं

सेनाज्ञानतः पतितत्वं बोधयति। ज्ञानाद् व्रतद्वैगुण्यं तथापि समत्वादव्यवहार्य्यत्वमित्यर्थः अत्रापवादमाहतुर्मनुसुमन्तू,

शय्यां गृहकुशान् गन्धानपः पुष्पं मणीन् दधि।
धान्यान् मत्स्यान् पयो मांसं शाकञ्चैव न निर्नुदेत्॥

न निर्नुदेति अयाचितोपढौकितान्येतानि न प्रत्याचक्षीत। सुमन्तुः, अभोज्यानामपि पुष्पफलशाकतृणकाष्ठधान्यानि क्षेत्रस्थान्यम्बुतड़ागस्थं गोष्ठस्थं पयश्चादत्त्वा न दोषः। एतेषामनुपढौकितानामपि ग्रहणे न दोषः॥ ४३॥

अथ चाण्डालप्रतिग्रहप्रायश्चित्तम्।

मनुः,

चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति॥

---

षण्मवत्यभ्यासे चतुर्विंशतिश्चान्द्रायणानि भवन्ति तैश्चाशीत्युत्तरं धेनुशतं द्वादशवार्षिकब्रह्महत्याव्रतोक्तं स्यादिति ज्ञानात् साम्यं तु गच्छतीति वचनं व्याचष्टे ज्ञानाच्च तद्द्वैगुण्यमिति ज्ञानात् षण्मवत्यभ्यासैस्तद्द्वैगुण्यं पातित्यद्वैगुण्यं तज्जातिसमत्वोपदेशाच्चतुर्विंशतिवार्षिकव्रतं मरणवैकल्पिकमित्यर्थः। तदशक्तौ षष्ठ्यधिकशतत्रयधेनवो देयाः। तथापीति तथापि चतुर्विंशतिवार्षिकव्रते कृतेऽपि साम्योपदेशात् अव्यवहार्य्यता इति एतत् सर्वमनुपातकप्रकरणे विवेचितमस्तीति शय्यामिति अन्त्यजादिभिरयाचितोपनीतं शय्यादिकं न निर्नुदेत् अवश्यं गृह्णीयात् प्रत्याख्याने दोषकथनात् यथैतद्वचनात् प्राङ्मनुः आहृताभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम्। मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः। नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च। न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते। आहृत्योपस्थापितां पूर्वं स्वयमसूचितां तद्दिनमात्रोपयोज्याहाररूपां सूचने तु दोष एव इत्यर्थः। अत्र शय्यादिमध्ये यदुपयोज्यं तदुपयोज्यमेव आमादीनां त्वन्त्यजादिस्पर्शदुष्टानां न स्वयमुपयोगः कार्य्यः ग्रहणन्त्ववश्यमेव सुमन्तुरिति अनुपढौकितान्यपि पश्चादत्त्वेति स्वाम्यनुमत्या आदत्त्वा आदाय स्वयं गृहीत्वा इत्यर्थः॥ ४३॥

अत्राज्ञानादष्टचत्वारिंशद्वारावृत्तचाण्डालान्नभोजने पतितत्वस्य व्याख्यातत्वात् तत्साहचर्य्यात् प्रतिग्रहेऽप्यज्ञानादष्टचत्वारिंशद्वारावृत्तौ पतितत्वाद्द्वादशवार्षिकं प्रतीयते अज्ञानात् सकृत् कृते तप्तकृच्छ्रं चान्द्रायणार्द्धं वा तत्र धेनुचतुष्टयम्। ज्ञानात् चान्द्रायणं ज्ञानात् पुनरष्टचत्वारिंशद्वारावृत्तचाण्डालप्रतिग्रहे चाण्डालसमत्वात् चतुर्विंशतिवार्षिकव्रतेऽपि कृते अव्यवहार्य्यतेत्यर्थः एतत् सङ्कलनं चाण्डालान्नभोजनप्रायश्चित्तरीत्या ऽवज्ञेयम् ॥ ४४ ॥

अथ पतितप्रतिग्रहप्रायश्चित्तम्।

तत्र बृहस्पतिः,

पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा ॥

अत्र अज्ञानाभ्यासे चान्द्रायणं ज्ञानाभ्यासे मासोपवासं सकृदज्ञाने चान्द्रायणार्द्धं सकृज्ज्ञाने चान्द्रायणम् ॥ ४५ ॥

अथ प्रायश्चित्तद्रव्यग्रहणप्रायश्चित्तम्।

नन्वेतद् द्रव्यग्रहणस्य पापजनकत्वे वचनं नास्ति न च

---

अथ चाण्डालप्रतिग्रहेति। द्वादशवार्षिकं द्वादशवार्षिकव्रतापनेयं पतितत्वं प्रतीयत इत्यर्थः अत्रापि यद्यपि चान्द्रायणार्द्धं पादोनधेनुचतुष्टयं तथापि तद्दानस्याशक्यत्वाच्चतुष्टयमित्युक्तं ज्ञानादिति तेन चतुर्विंशतिधाभ्यासे पातित्यम्। तत्र चतुर्विंशतिचान्द्रायणानीति ॥ ४४ ॥

अथ पतितप्रतिग्रहेति। पतितानामिति पतितगृहगमने लघुत्वादत्सरेणैव ज्ञानाज्ञानाभ्यां मासोपवासश्चान्द्रायणञ्चेति संसर्गप्रकरणे प्रागुक्तम् ॥ ४५ ॥

पापक्षयार्थत्वात् पापजनकत्वं प्रमाणाभावात् तुलापुरुषादि-प्रतिग्रहस्यापि गर्हितत्वापत्तेः। अत्र च,

अथातः संप्रवक्ष्यामि महापातकनाशनम्॥

इत्यनेन पापक्षयश्रवणात् अथ प्रायश्चित्तश्रवणात् पापजनकत्वं यथा याज्ञवल्क्यः,

पात्रे धनं वा पर्य्याप्तं दत्त्वा शुद्धिमवाप्नुयात्।
आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी स्मृता॥

एतस्य महापातकविषयत्वात् अन्यस्य गर्हितत्वं न स्यात् अतएव नाददीत नृपः साधुर्महापातकिनो धनमिति राज्ञोऽपि धनग्रहणनिषेधो महापातकविषय एव मनुनोक्तः। पतितद्रव्यग्रहणरूपत्वात् पापजनकत्वं,

पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च।

इति बृहस्पतिवचनादिति चेन्न पातकेतरप्रायश्चित्तद्रव्यस्य ग्राह्यत्वापत्तेः। उच्यते आदातुश्च विशुद्ध्यर्थमिति महापातकश्रवणेऽपि लाघवात् सामान्यश्रुतिरेव कल्पनीया पापक्षयमात्रसाधनत्वेन यदुत्सृष्टं तत् प्रायश्चित्तद्रव्यं न ग्राह्यमिति होलाकाधिकरणन्यायात् अतएव न तुलापुरुषादावतिव्याप्तिः

---

अथ प्रायश्चित्तद्रव्येति। प्रतिबन्द्या दूषयति तुलापुरुषादीति हेतुमाह अत्र चेति अत्र तुलापुरुषादावित्यर्थः। अथात इत्युपक्रम्य मत्स्यपुराणे तुलापुरुषाद्यभिधानात् कस्यचित् सिद्धान्तमुद्भाव्य दूषयति अथेति प्रायश्चित्तद्रव्यग्रहणस्येति शेषः। मतान्तरमुद्भाव्य दूषयति पतितद्रव्येति पातकेतरेति पातकित्वापादकपापेतरपापप्रायश्चित्तद्रव्यस्येत्यर्थः। उच्यत इति आदातुश्चेति वचनस्य महापातकविषये श्रवणेऽपि लाघवात् प्रायश्चित्तद्रव्यं न ग्राह्यमिति सामान्य-

तस्य पापक्षयमात्रफलकत्वाभावात् स्वर्गादिफलस्यापि तत्र श्रुतत्वात् अत उक्तयाज्ञवल्क्यवचनान्महापातकि प्रायश्चित्त-द्रव्य-प्रतिग्रहे सकृत्कृते वैश्वानरीष्टिरत्यन्ताहत्त्या प्रायश्चित्ता-वृत्तिः द्रव्यत्यागश्च जले करणीयः ब्रह्मचारिणे वा देयं यद्यपि प्रायश्चित्तेतरपतितद्रव्यग्रहणे बृहस्पतिना चान्द्रा-यणमासोपवासौ विहितौ तथापि तावभ्यासविषयौ ज्ञेयौ। लघुपापप्रायश्चित्तद्रव्यग्रहणे तु,

> यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्।
> तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव वा॥

इति मनूक्तगायत्रीसहस्रजपमासैकगोष्ठपयःपानव्रतमाचरणी-यम्। लघुतरप्रायश्चित्तद्रव्यग्रहणे तु,

> प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम्।
> जपंस्तरत्समन्दीयं मुच्यते मानवस्त्र्यहात्॥

---

श्रुतिरेव कल्प्या न तु महापातकप्रायश्चित्तद्रव्यं न ग्राह्यमिति विशेष-श्रुतिगौरवादिति। पापक्षयमात्रसाधनत्वेनेत्यनेन प्रायश्चित्तपदार्थः सुखबोध-नार्थं विवेचितः दीलाकाधिकरणञ्च संसर्गप्रकरणे प्रागेव व्याख्यातं ननु महापातकविषये आदातुश्चेति वचनं श्रूयते ततो विधिवाक्ये याद्दृशश्रवणं तादृ-श्येव श्रुतिः कल्पनीया प्रामाणिकन्तु गौरवं न दोषाय अन्यथा अतिप्रसङ्गात् सत्यम् आदातुश्चेति वचनं प्रायश्चित्तविषयकमेव न तु प्रायश्चित्तद्रव्यग्रहणस्य पापजनकत्व-विधायकं किन्तु प्रायश्चित्तान्यथानुपपत्त्या कल्पनीयं तत् तत्र च श्रुतिः कल्प्य-मानासामान्यत एव कल्पयितुं लाघवात् प्रायश्चित्तन्तु प्रकरणात् महापातकद्रव्य-ग्रहण एवेत्यनेनैवाभिप्रायेण ग्रन्थकृदाह अत इति देयमिति प्रायश्चित्तद्रव्यमिति शेषः। ननु पतितस्य प्रायश्चित्तेतरद्रव्यग्रहणे इतोऽप्यधिकं प्रायश्चित्तं चान्द्रायण-मासोपवासव्रतं कथं घटते इत्याशङ्क्याह यद्यपीति तथापि तस्य पतितद्रव्यग्रहण-

इति मनूक्तं दिनत्रयं तरत्समन्दीयजपशतं कुर्य्यादिति ॥४६॥

## अथ स्वभावागाह्यकृष्णाजिनोभयतोमुखीमख्यादिप्रतिग्रह-प्रायश्चित्तम्।

तत्र निन्दायां मत्स्यपुराणं,

न स्पृश्यः स द्विजो राजन् चितियूपसमो हि सः।
दाने च श्राद्धकाले च दूरतस्तं विवर्जयेत्॥

तथा आद्ये,

किं करिष्यत्यसौ मूढो गृह्णन्नुभयतोमुखीम्।
सहस्रं वारुणाः पाशाः क्षुरधाराग्निसन्निभाः॥
पूर्णे वर्षसहस्रे तु पाश एकः प्रमुच्यते।
एतामवस्थां प्राप्नोति गृह्णन्नुभयतोमुखीम्॥

अत्र प्रायश्चित्ते हारीतः, मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् तेषु पञ्च मध्यमे दशोत्तमे द्वादशरात्रं पयोव्रतः शतसहस्रमसत्प्रतिग्रहेषु मण्यादीनामधमानां प्रतिग्रहे द्वादशरात्रं पयोव्रतः सन् सावित्र्यष्टोत्तरसहस्रं जपेत्

---

स्याभ्यासे तावुक्तौ सकृत्कृते तु तदर्द्धम् अतो याज्ञवल्क्योक्तवैश्वानरेष्टितुल्यतेति भावः.। लघुपापेति यज्ञार्हितेनेति जपित्वा त्रीणि सावित्र्या इति क्रमिकवचनद्वयेन मनूक्तेत्यर्थः। शतं कुर्य्यादिति अनादेशे शतमिति वचनात् ॥ ४६ ॥

अथ स्वभावागाह्या इति। न स्पृश्य इति। स कृष्णाजिन गृहीता अस्पर्शने हेतुमाह चितीति। आद्ये आदिपुराणे इत्यर्थः। स्वामिविशेषेति देवब्राह्मणराज्ञाञ्च द्रव्यं विज्ञेयमुत्तममिति नारदवचने वक्ष्यते क्षत्रियवैश्यद्रव्यं मध्यमं शूद्रद्रव्यमधमम् उत्तममध्यमेति यच्च मुनिभिरुत्तममध्यमगणने तन्मध्ये पठितं तदुत्तमं मध्यमञ्च तच्च वक्ष्यमाणम्। स्वगतेति द्रव्यगतोत्कर्षापकर्षवशात् चोत्तमत्वादिकं

तेषु मध्यमेषु सावित्रीपञ्चसहस्राणि तेषु चोत्तमेषु दशसहस्राणि उत्तमादिकत्वञ्च मख्यादीनां स्वामिविशेषसम्बन्धात् उत्तममध्यमगणपाठात् स्वगतविशेषाच्चोक्तम् अत्यन्तनिषिद्धकृष्णाजिनोभयतोमुखीप्रतिग्रहे शतसहस्राणि जपितव्यानि तद्द्रव्यमगाधजले प्रक्षेपणीयं ब्रह्मचारिणे वा देयम्। एतत्-कालपुरुष--यममहिषवशिष्ठोक्त--सुराशस्त्रादि--प्रतिगृह्णीतर्य्यपि योज्यं प्रायश्चित्तान्तरानभिधानात् असत्प्रतिग्रहत्वाविशेषाच्च यथा वशिष्ठः, शस्त्रं वित्तं सुरा चाप्रतिग्राह्या ब्राह्मणस्य। अन्येषाञ्चाप्रतिग्राह्यत्वं स्मृत्यन्तरेऽनुसन्धेयम् अत्र च सार्द्धैकदिनक्षीरपानेनैकोपवासपर्य्यवसानात् द्वादशरात्रपयोव्रतेनोपवासाष्टकं भवेत्। एकस्मिंश्चोपवासे द्विरत्तिकारजतमाषकमानेन द्विरत्तिकारजतमाषकत्रयदानादष्टभिरुपवासैरजतमाषकाश्चतुर्विंशतिर्देयाः। गायत्रीसहस्रजपसमञ्च रजतमाषकत्रयं देयम्। शतसहस्रजपे रजतमाषकशतत्रयं देयम् एवं मध्यमादिष्वूह्येयं द्रव्यसंख्याने नारदः,

> वासः कौषेयवर्जञ्च गोवर्जं पशवस्तथा।
> हिरण्यवर्जं लौहञ्च मध्यं व्रीहियवावपि॥

---

ज्ञेयमित्यर्थः एतदिति कालपुरुषदानं यममहिषदानं वशिष्ठोक्तसुराशस्त्रादिदानम् एषां प्रतिगृह्णीतर्य्यपि एतत प्रायश्चित्तमित्यर्थः। ब्राह्मणस्येत्यन्तं वशिष्ठसूत्रं वित्तं बहुमूल्यमपि रत्नं हारीतवचनैकवाक्यत्वात् अत्र चेति अत्र हारीतोक्तप्रायश्चित्तम् इत्यर्थः। एवं मध्यमोत्तमयोरिति मध्यमे सहस्रपञ्चकमित्युक्तं तत्र पञ्चदशरजतमाषकाः उत्तमे सहस्रदशकमुक्तं तत्र रजतमाषकास्त्रिंशदिति द्रव्यसंख्याने द्रव्यस्य मध्यमोत्तमगणने इत्यर्थः कौषेयं कृमिकोषोत्थं तसरादि अस्योत्तमत्वाद्वर्जनं तथा गोरप्युत्तमत्वादित्यर्थः। लौहं धातुः देवल इति चेवं फलवत् वेश्म सौधादि

देवलः, रत्नचित्रवेश्महेमरूप्याभरणादीन्युत्तमानि चतुष्पद-द्विपदधान्यफलोदकवस्त्रकार्पासादीनि मध्यमानि । नारदः,

हिरण्यरत्नकौषेयं स्त्रीपुंसौ गजवाजिनः ।
देवब्राह्मणराज्ञाञ्च द्रव्यं विज्ञेयमुत्तमम् ॥ ४७ ॥

अथ ब्राह्मणस्य क्षत्रियवैश्यवृत्तिधनार्जनप्रायश्चित्तम् ।

तत्र याज्ञवल्क्यः,

क्षात्रेण कर्म्मणा जीवेद्विशां व्याप्यापदि द्विजः ।
निस्तीर्य्यार्थं समुत्सृज्य पाव्यात्मानं न्यसेत् पथि ॥

पथि यथोक्तवर्त्मन्यात्मानं निवेशयेदित्यर्थः । प्रायश्चित्तमाह प्रचेताः, ब्राह्मणस्यापत्काले मातापितृमतो बहुभृत्यस्यानन्तरं क्षत्रोपनिवेशस्तत्र संवत्सरमनुप्राप्तौ चान्द्रायणञ्चरेत् संवत्सराभ्यन्तरे मासैकद्विकादौ चान्द्रायणभागहारः कल्प्यः एवं संवत्सरादूर्द्धं द्वैगुण्यत्रैगुण्यादिकं कल्पनीयं चान्द्रायणे धेन्वष्टकं देयं याज्ञवल्क्यवचने साहचर्य्यश्रवणात् वैश्यवृत्तावपि चान्द्रायणमेव वैश्यवृत्तौ शास्त्रीयनियमे पापापवादमाह बृहस्पतिः,

---

आभरणं हारादि गोगजवाजिवर्जं चतुष्पदाः नारदवचनात् द्विपदाः पक्षिणः उत्तरवचने स्त्रीपुरुषोत्तमत्वविधानात् वस्त्रं कार्पासं कार्पासिकवस्त्रमित्यर्थः ॥४७॥

अथ ब्राह्मणस्य क्षत्रियेति याज्ञवल्क्यः, इति आपदं निस्तीर्य्य तत्र लब्धमर्थं त्यक्त्वा पाव्यप्रायश्चित्तेनात्मानं पावयित्वा पथि स्वधर्मे आत्मानं न्यसेत् योजयेदित्यर्थः । प्रचेता इति मातापितृयुक्तस्य बहुभरणीयस्य च ब्राह्मणस्य एतत् पोषणार्थमित्यर्थः । अनन्तरमित्यनेन क्षत्रियवृत्त्यशक्तौ वैश्यवृत्तावप्यभिनिवेशः कार्य्य इति याज्ञवल्क्यवचने क्षात्रेण कर्म्मणा जीवेत् विशां वाप्यापदि द्विजः इत्यत्र आपदि उभयवृत्तावपि जीवनविधानात् तत्रैकस्य प्रायश्चित्तोक्त्या तत्सहचरि-

कुषीद कृषिवाणिज्यं प्रकुर्वीतास्वयं कृतम्।
आपत्काले स्वयं कुर्वन्नैनसा लिप्यते द्विजः॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत्।
ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः॥
वणिक् कुषीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम्।
कृषीवलोऽन्नपानानि यानशय्यासनानि च॥
पण्येभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतम्।
वणिककुषीद्यदोषः स्यात् ब्राह्मणानाञ्च पूजनात्॥
राज्ञे दत्त्वा च षड्भागं देवतानाञ्च विंशकम्।
त्रिंशद्भागञ्च विप्राणां कृषिं कृत्वा न दोषभाक्॥

हारीतः,

अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्॥

---

तस्यान्यस्यापि तदेव प्रायश्चित्तमिति भावः। शास्त्रीयनियमे वक्ष्यमाणे परदारा-करणादावित्यर्थः। बृहस्पतिरिति अनापद्यपि अस्वयं कृतं परद्वाराकृतं कुषीदा-दिकं कुर्वीत आपदि तु स्वयं कुर्वन्नपि नैनसा पापेन लिप्यते इत्यर्थः अनापद्यस्वयं करणे आपदि तु स्वयंकरणेऽपि यथा दोषाभावस्तदाह लब्धलाभ इति याज्ञ-वल्क्ये तु आपद्यपि यत् प्रायश्चित्तमुक्तं तदेतन्नियमातिक्रमे बोद्धव्यं वणिगिति वस्त्रादिकं दद्यात् ब्राह्मणेभ्य इति शेषः ब्राह्मणानाञ्च पूजनादित्यग्रेऽभिधानात् वणिककुषीदिनोर्देयद्रव्यपरिमाणमाह पण्येभ्य इति पण्येभ्यो धान्यादिविक्रेयद्रव्येभ्यो यल्लभ्यं लब्धं तस्य विंशतितमभागं ब्राह्मणेभ्यो दत्त्वा पशुस्वर्णवृद्धिग्रहाद् यल्लभ्यं लब्धं तस्य द्विकं शतं शतभागस्य भागद्वयं पञ्चाशत्तमभागं दत्त्वा वणिक्कुषीदी अदोषः स्यात् इत्यन्वयः कृषीवलोऽन्नपानानीति यदुक्तं तत्र विशेषमाह राज्ञे दत्त्वेति कृष्यु-पार्जितधनस्य राज्ञे षष्ठभागदानावशिष्टस्य विंशतितमभागं देवेभ्यो दत्त्वा तदव-शिष्टस्य च त्रिंशत्तमभागं विप्रेभ्यो दत्त्वा कृषिं कुर्वन्न दोषभागित्यर्थः। हारीत

मनुः, अशीतिभागं गृह्णीयात् मासाद्वार्द्धुषिकः शतात्।
द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन्॥
द्विकं शतं हि गृह्णाणो न भवत्यर्थकिल्बिषी।

अशीतिभागं विंशतिपणान् द्विकं पुराणद्वयम् एवंविधं नियममतिक्रम्य अनापदि स्वयम् अन्यद्वारा वा यः स्वच्छन्देन व्यवहरति तस्यैव प्रायश्चित्तम् आपदि तु स्वयंकरणे नियमातिक्रमे च न दोषः॥ ४८॥

अथ ब्राह्मणस्य सेवावृत्तिधनार्जनप्रायश्चित्तम्।

मनुः,

न कथञ्चन कुर्वीत ब्राह्मणः कर्म वार्षलम्।
वृषलः कर्म वा ब्राह्मं पतनीये हि ते तयोः॥

---

इति अष्टाभिर्गोभिर्यद्वाह्यं धर्महलं शास्त्रविहितं हलमुत्तममित्यर्थः। जीवितार्थिनां जीविकाकाङ्क्षिणां हलं मध्यमं नृशंसानां हिंसाणां हलमधमं ब्रह्मघातिनां वेदविप्लावकानां शास्त्राविहितत्वात् गोरतिक्लेशाच्च पापातिशयभागिनां निन्दितमित्यर्थः। वृत्तिग्रहणे नियममाह मनुरिति वृद्ध्याजीवी शतात् शतपणात् शतपुराणाद्वा मूलधनान्मासेऽशीतिभागं सपादपणं सपादपुराणं वा गृह्णीयात् एतत् सबन्धकद्रव्ये अबन्धकविषये तु पणं पुराणं वा मूलधनं शतं प्रतिद्विकं शतभागस्य भागद्वयं पणद्वयं पुराणद्वयं वा गृह्णीयात् एतदुक्तं लभ्यं गृह्णानोऽर्थेन धनेन किल्बिषी न स्यात् अतोऽधिकग्रहणे किल्बिषी स्यादित्यर्थः। एतद्द ब्राह्मणविषये क्षत्रियादिविषये तदेकैकगुणवृद्ध्या ज्ञेयम्। यथा याज्ञवल्क्यः,
अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके। वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा॥ अन्यथाऽबन्धक इत्यर्थः। विंशतिपणान् इति एतच्च मूलधनपुराणाभिप्रायेण सपादपुराणमुक्तमित्यर्थः। एवंविधमिति अनापदि परद्वारा वाणिज्यादिकं कुर्वन्नपि प्रोक्तनियममतिक्रम्य स्वच्छन्दव्यवहारी प्रायश्चित्तेन युज्यत इत्यर्थः। आपदि तु स्वयं करणेऽपि प्रोक्तनियमानतिक्रमे न दोषः नियमातिक्रमात्तु प्रायश्चित्तं याज्ञवल्क्येन आपदि प्रायश्चित्तविधानात्॥ ४८॥

पुनरुपनयनसहितकृच्छ्रत्रयानुवृत्तौ यमः,

प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः।
ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत्॥

ब्राह्मणस्य विकर्मसेवा तस्यावार्षलत्वेन निषिद्धत्वात् तथा शूद्रस्यापि ब्राह्मं कर्म विकर्म तेन द्रव्यत्यागपूर्वकं कृच्छ्रत्रयं कर्त्तव्यं पुनरुपनयनञ्च कृच्छ्रत्रये धेनुत्रयम्॥ ४९॥

अथ ब्राह्मणस्य गीतादिना धनार्जनप्रायश्चित्तम्।

तत्र यमः,

नटनर्त्तकतच्चाणश्चर्मकारः सुवर्णकृत्।
स्थायुकाः षण्डगणिका अभोज्यान्नाः प्रकीर्त्तिताः॥
गान्धर्वो लौहकारश्च सौचिकस्तन्तुवायकः।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा॥
ध्वजी मानोपजीवी च शूद्राध्यापकयाजकौ।
कुलालश्चित्रकर्मा च वार्द्धुषिकश्चर्मविक्रयी॥
समर्घं पण्यमाहृत्य महार्घं यः प्रयच्छति।
स वै वार्द्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत्॥

---

अथ ब्राह्मणस्य सेवावृत्तीति। मनुरिति, वार्षलं वृषलकर्म सेवा ब्राह्मणकर्म याजनाध्यापनादि ते कर्मणी तयोः ब्राह्मणवृषलयोः मनुरिति ब्रह्मणा परित्यक्ताः व्रात्याः एतच्च निस्वजनस्य सावित्रीपाते प्रागुक्तमनुविष्णुसमानार्थम् इदन्तु प्रायश्चित्तं त्रैवर्णिकसेवाविषयं शूद्रसेवायां चान्द्रायणस्य वक्ष्यमाणत्वात्॥ ४९॥

अथ ब्राह्मणस्य गीतादीति। यम इति, नर्त्तकाः शैलूषाः प्रागुक्ताः सुवर्णकृत् सुवर्णवणिजो वृत्तिकारी एवं सर्वत्र स्थायुकाः ग्रामाधिकारिणः स्थायुकोऽधिकृतो ग्रामे इत्यमरः। गान्धर्वो गायनः लौहकारः कर्मकारः तन्तुवायो वस्त्रनिर्माता कितवो द्यूतकारः तस्करश्चौरः चर्मविक्रयी चर्मविक्रयेण यो जीवति,

वृथाश्रमी वृथादाता आश्रमाणाञ्च भेदकः।
पुण्यस्य विक्रयी यश्च योनिसङ्करिकस्तथा॥
रङ्गोपजीवी कुण्डाशी वीरहागुरुगुल्मिगः।
भिषक् च गरदश्चैव रूपाजीवी च सूचकः॥
सौनिकः पर्णिकश्चैव निषादेन समाः स्मृताः।
कर्मस्वेतेषु यो मोहात् ब्राह्मणो वर्त्तते सदा॥
प्रायश्चित्ते तु चरिते व्यवहार्य्यो भवेत् स हि।
एते ब्राह्मणचाण्डालाः सर्वे ब्रह्महनः किल॥
तस्माद्दैवे च पित्रे च वर्जितास्तत्त्वदर्शिभिः।
एतेषामेव सर्वेषां प्रत्यापत्तिन्तु मार्गताम्॥
भैक्षान्नमुपभुञ्जानो द्विजश्चान्द्रायणञ्चरेत्।

चक्रोपजीवी बलीवर्दचक्रेण तैलनिष्पादकः, ध्वजी शौण्डिकः, मानोपजीवी तुलाधारकः, वृथाश्रमी वेदवाह्यजटाधारणादि-युक्तः, ब्रह्मचर्य्याद्याश्रमधर्माणामपलापको वा आश्रमाणाञ्च भेदकः तद्विरुद्धकारित्वात्तद्भ्रंशकः इति लक्ष्मीधरः। योनि-सङ्करिकः सजातीयविजातीयस्त्रीगामी, कुण्डाशी चतुःषष्टि-पलान्नभक्षकः, अथवा

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ।
पत्यौ जीवति कुण्डस्तु मृते भर्त्तरि गोलकः॥

---

वृथादाताऽसत्पात्रदाता पुण्यस्य दाता गङ्गास्नानाद्यदृष्टस्य विक्रेता रङ्गोपजीवी नृत्यस्थाने नृत्यवाद्यादिना यो जीवति चतुःषष्टीति तदुक्तं चतुःषष्ट्या पलैः शुद्धैः कुण्डं प्रस्थचतुष्टयम्। भवेत् तद्व यस्य रोचेत स कुण्डाशी पतत्यधः। भिषक् वैद्यवृत्त्याजीवी गरदी ब्राह्मणेतरव गरदाता रूपाजीवी द्विधेति एकोऽन्येषां सदृश-रूपेण सन्न्यासादिवेशेन ईश्वरं प्रलोभ्य जीवति अपरश्च पित्तलादेः स्वर्णादिरूप-तामापाद्य जीवति ग्रामजालीति जालं कूटव्यवहारः तेन ग्रामं वञ्चयति पर्णिकः

यस्तयोरन्नमश्नाति स कुण्डाश्युच्यते बुधैः।
ते सदा हव्यकव्यानि नाशयन्ति प्रदायिनाम्॥

इति मानवं ग्राह्यम्। वीरहा नष्टाग्निः, गुरुगुप्तिको दम्भादिना गुरुषु गुप्तिकारी, रूपाजीवी द्वेधा सद्दृशरूपाजीवी पित्तलादिना च, सूचको ग्रामजाली सौनिको जन्तुबधनियुक्तः, पर्णिकः पत्राद्याजीविकः, प्रत्यापत्तिः पूर्वाश्रमप्रवेशः मातापित्रादिभरणाशक्तौ ब्राह्मणो यदा गीतवार्द्धुषिकादिवृत्तिमनुतिष्ठति तदार्जितभुक्तावशिष्टं धनं परिहाय चान्द्रायणञ्चरेत् तदशक्तौ धेन्वष्टकम् अत्र संवत्सराश्रुतावपि चात्रवृत्त्युक्तः संवत्सरो ग्राह्यः संवत्सरावृत्तावावृत्तिश्चान्द्रायणस्य स्त्रीधनग्रहणेऽपि स एव,

स्त्रियार्जितानि वित्तानि उपजीवन्ति ये नराः।
तेऽपि कूर्मपुटे घोरे पच्यन्ते दीर्घजीविनः॥

अत्र विवाहादिषु लब्धं श्वशुरादिदत्तञ्चान्यल्लोक्तं स्त्रीधनं ज्ञेयम् अतएव कात्यायनः,

न भर्त्ता नैव च सुतो न पिता भ्रातरो न च।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥

अत्रापि चान्द्रायणेन चैकेन सर्वपापक्षयो भवेदित्यापस्तम्ब-

---

ताम्बूलपत्रविक्रयेण यो जीवति एतेषु प्रागुक्तनटनर्त्तकादिकर्मसु सर्वदा यः प्रवर्त्तते प्रत्यापत्तिं संप्रतिपन्नतां व्यवहार्य्यतां मार्गतामेषामिदं प्रायश्चित्तमिति शेष अत्रेति संवत्सरानुष्ठाने एवैतत् प्रायश्चित्तं चवियवृत्त्यर्जितधने तथा दर्शनात् कुवृत्त्यर्जनसाजात्यादत्रापि तथेति भावः स एव यम इत्यर्थः कूर्मपुटाख्ये नरके

वचनात् चान्द्रायणमेव एतच्च स्त्रियै तद्धनं प्रदाय करणीयम् ॥ ५० ॥

अथ ब्राह्मणस्य शूद्रसेवाप्रायश्चित्तम्।

तत्र निन्दायां शङ्खलिखितौ, तस्य स्वधर्म एव श्रेयान् स्वल्पोऽप्यनुष्ठितो न परं सेवेत जघन्यसेवी ब्राह्मणो हि जघन्येष्वपजायते इत्यादि। प्रायश्चित्ते अत्र मनुः,

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥

सङ्करापात्रकृत्यासु मासं शोधनमैन्दवमित्यनेन चान्द्रायणमुक्तम्। यत्तु बौधायनेनोक्तम् अथ पतनीयानि, समुद्रयानं ब्राह्मणस्य न्यासापहरणं सर्वपण्यैर्व्यवहरणं भूम्यनृतं शूद्रसेवा यश्च शूद्रायामभिजायते तदपत्यश्च भवति तेषां निर्वेशश्चतुर्थकालमितभोजनाः स्युरपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपघ्नन्ति पापमिति अस्य त्रैवार्षिक-

---

इत्यर्थः। एतच्चेति यथा याज्ञवल्क्यः, पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम् ॥ ५० ॥

अथ ब्राह्मणस्य शूद्रसेवेति। शङ्खलिखितेति यद्यप्येतद्वचनं च ब्राह्मणस्य परधर्मसेवननिषेधपरं न तु शूद्रसेवानिषेधार्थं स्वधर्मसुपक्रम्याभिधानात् उपसंहारेऽपि अत आपदि सर्वतः प्रतिगृह्णीयादित्यभिधानाच्च अतएव भगवद्गीता, श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः। तथापि ब्राह्मणस्य शूद्रसेवादिपरधर्म इत्यभिप्रायेण ग्रन्थकृतोक्तमिति ध्येयम्। अथ पतनीयानीति। सुवर्णव्यतिरिक्तन्यासापहरणं सर्वपण्यैर्दुग्धलाक्षादिभिः यो ब्राह्मणः शूद्रायां प्रजायतेऽपत्यमुत्पादयति यश्च ब्राह्मणस्तस्य शूद्रस्यापत्यं पुष्टक्रीतकृतकदत्तादिरूपं भवतीति· तदपत्य इति पुंलिङ्ग आर्षः तेषामयं निर्वेशः प्रायश्चित्तं तदाह चतुर्थकाल इति एकदिनमुपोष्य परदिने

व्रतस्य चतुर्वार्षिकप्राजापत्यतुल्यत्वं दर्शितम्। तेन चिरतरकालाभ्यस्तशूद्रसेवाविषयमिदम् ॥ ५१ ॥

अथाविक्रेयविक्रयप्रायश्चित्तम्।

तत्र विष्णुः, रक्तवस्त्ररङ्गरत्नगुड़गन्धमधुरसोर्णाविक्रयी त्रिरात्रमुपवसेत्। रङ्गः सिन्दूरकुसुमादिः एतत् सकृद्विषये। पैठीनसिः, अथाविक्रेयाणि ब्राह्मणस्य लवणं पक्वान्नं मधु क्षीरं दधि घृतमुदकं सर्वगन्धोपललाक्षारक्तवासो गुड़तैलं ग्राम्यपशूनामेकशफाः केशिनः सर्वे चारण्याः पशवो विद्यापूर्त्तमिष्टं गावः शङ्खश्चोर्णा चेति विक्रयणे तेषामेकैकस्मिन् प्राजापत्यञ्चरेत्। तथा च्यवनः, दधिमधूच्छिष्टसर्पिःपक्वान्नतिल-तैल-तक्रक्षीररसविषशस्त्रतैलाश्म-नीलीकौषेयवासोलाक्षाक्षार-लवणविक्रये प्राजापत्यं चरेत्। एतच्च वारद्वयाभ्यासविषयम् अत्र धेनुरेका दातव्या। हारीतः, लाक्षालवणमधुमांस-तैलक्षीरदधिघृततक्रगन्धचर्मरक्तवाससामेकतमविक्रये चान्द्रायणम्। शातातपः,

---

रात्रौ भोजनं चतुर्थकालभोजनं सवनानुकल्पं प्रतिसवनं त्रिसवनम् अपोऽभ्युपेयुः स्नानं कुर्य्युः स्थानेन दण्डायमानौ स्थित्वा आसनोपवेशनेन वा विहरन्तौ दिनान्तं गमयन्त इत्यर्थः। दर्शितमिति सुरापानप्रकरण इति शेषः ॥ ५१ ॥

अथाविक्रेयेति। विष्णुरिति, रसो घृतादिः ऊर्णा मेषलोम। त्रिरभ्यासेत्याह पैठीनसिरिति ग्राम्यपशूनां मध्ये एकशफाः केशिनः शिरसि दीर्घलोमानः गर्दभाश्वादयः सर्वे च आरण्याः। विद्या पुस्तकम्। पूर्त्तं खातादिकम्। इष्टं यागजन्यं पुण्यम्। च्यवन इति पुनस्तैलपदं तिलकल्कपरम् अतएव विष्णुवचने पिण्याके प्राजापत्यं वक्ष्यते। शातातप इति सर्वपण्यानां दधिमधुक्षीरादीनाञ्चात्यन्ताभ्यासोऽत्र पञ्चदशधाभ्यासः हारीत इति ऊर्णा मेषः केशी गर्दभादिः

आममांससुरासोमलाक्षालवणसर्पिषाम्।
विक्रये सर्वपण्यानां द्विजश्चान्द्रायणञ्चरेत्॥

एतच्च अत्यन्ताभ्यासे चान्द्रायणे अष्टधेनवः। भविष्यपुराणे,

गुड़ं तिलांस्तथा नीलीं केशगोधूमशल्लकान्।
विक्रीय ब्राह्मणो गाञ्च कृच्छ्रं सान्तपनञ्चरेत्।
एतद्वारत्रयाभ्यासे सान्तपने धेनुद्वयम्॥

हारीतः, तथोर्णिकेशिकेशरिणाञ्च धेन्वनडुदश्वशस्त्रविक्रये तप्तकृच्छ्रविधिः। हिङ्गुगुग्गुलुसर्जरसहरितालमनःशिलाञ्जनगैरिकक्षारलवणमणिमौक्तिकप्रवालदन्तनखशङ्खशुक्तिवेणुवैणवमृण्मयविक्रयणे च। आरामतड़ागोदपानपुष्करिणीपूर्त्तसुकृतविक्रयेषु त्रिसवनस्नायी अधःशायी चतुर्थकालभुक् संवत्सरेण पूतो भवतीति। आरामादिनिखिलविक्रये ह्येतदिति धर्मप्रदीपः। तथा हीनमानोन्मानमापनसङ्करसङ्कीर्णविक्रये च। अत्र च कामाकामसकृदभ्यासापेक्षया वैषम्यदोषः समर्थनीयः। हीनमानोन्मानमापनं तुलादिना। सङ्करसङ्कीर्णत्वं द्रव्यस्यापरद्रव्येण॥ ५२॥

---

हिङ्ग्वादीनां विक्रयणे च तप्तकृच्छ्रविधिरित्यन्वयः सर्जरसो धूपः अञ्जनं रसाञ्जनादि वेणुर्वंशः वैणवं तन्निर्मितसूर्पादि। आरामादिषु संवत्सरत्रिसवनस्नानादिकं पूर्त्तं सेतु देवगृहादिकं तड़ागादीनां पृथगुक्तत्वात् सुकृतं पुण्यम् आरामादीति हारीतलिखितवचने आरामादिविक्रये एतत् संवत्सरप्रायश्चित्तं न तु हिङ्ग्वादिविक्रय इत्यर्थः। तथेत्यनेन हारीतवचनान्तरमाह हीनमानेति अत्र चेति पूर्वसूत्रे ऊर्णिकेशिनोर्वैषम्यं हिङ्ग्वादिमध्येऽल्पमूल्यबहुमूल्ययोर्वैषम्यम् आरामादिमध्ये तड़ागोदपानयोर्वैषम्यम्। हीनमानादिषु द्रव्यापेक्षयेति मानं तुला उन्मानमाढ़कादि॥ ५२॥

विष्णुः, प्राणिभूमिपुष्पसोमविक्रयी तप्तकृच्छ्रं कुर्य्यात् अन्नौषधिपुष्पमूलचर्मविदलतुषकार्पासकपालनखकेशभस्मास्थि-गोरसपिण्याकतिलतैलविक्रयी प्राजापत्यम्। विदलः पाटित-वंशादिनिर्मितः। तथा श्लेष्मजतुमधूच्छिष्टशङ्खशुक्तित्रपुसीसकाकृष्णलौहोडुम्बरखड्गपात्र विक्रयी महासान्तपनम्। श्लेष्मा चर्मविकारः वरुडेति यस्य पर्य्यायः, महासान्तपने धेनुद्वयम्। सुमन्तुः, देवर्षिसोमचैत्यान्नापत्यकूपोदपानदारात्मनां विक्रये कृच्छ्रद्वयम्। घृततिलतैलरत्नवस्त्रपक्वान्नानां प्राजापत्यञ्चरेत्। गोविक्रयनिन्दामाह यमः,

गवां विक्रयकारी च गवि लोमानि यानि च।
तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत्॥

यच्च मनुनोक्तं,

सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयात्॥

इति, तन्निन्दातिशयार्थम्। गोतमः पशवश्च हिंसासंयोगे। अस्यार्थः, यत्र विक्रीताः सन्तः पशवो हिंस्यन्ते तत्र तेषाम-

---

विष्णुरिति। ओषधिः फलपाकान्ता पिण्याकस्तिलकल्कः तथेत्यनेन विष्णु-सूत्रान्तरमाह श्लेष्मेति उडुम्बरपात्रं ताम्रभाजनम्। सुमन्तुरिति देवर्षिप्रतिमा चैत्यं प्रान्तरस्थवृक्षः अपत्यं पुत्रादि उदपानं स्वल्पजलाशयः अथाविक्रेयाणीत्यधि-कारे गोतमसूत्रं यत्र विक्रयोत्तरं हिंसा स्यात्तत्र पशवो न विक्रेया इत्यर्थः। शूद्रस्य त्वत्यन्तापदीति अयं भावः शूद्रस्य द्विजशुश्रूषा तया जीवन् वणिग्भवे-दित्यनेन याज्ञवल्क्येन शूद्रस्यापदि द्रव्यविक्रयेण जीवनमुक्तं तत्रापि वक्ष्यमाण-कालिकापुराणवचने मध्वादिवर्जनमुक्तम् आपद्यपि वर्जितानां मध्वादीनां पराशरेण विक्रयविधानमत्यन्तापद्विषयमेवेति ब्राह्मणस्य तु याज्ञवल्क्येन विशां वाप्यापदि

पचत्वं यानि चान्यानि गुरुतरप्रायश्चित्तबोधकवचनानि तानि बहुतरकालाभ्यासे सम्भूह्यानि। शूद्रस्य तु अत्यन्तापदि दोषाभावमाह पराशरः,

> लवणं मधु मद्यं वा दधि तक्रं घृतं पयः ।
> न दूष्येच्छूद्रजातीनां कुर्य्यात् सर्वेषु विक्रयम् ॥

कालिकापुराणे,

> विक्रयं सर्ववस्तूनां कुर्वन् शूद्रो न दोषभाक् ।
> मधु चर्म सुरां लाक्षां त्यक्ता मांसञ्च पञ्चमम् ॥

एतदप्यापदि दोषाभावमाह गोतमः, विनिमयन्तु रसानां रसैः पशूनाञ्च लवणकृतान्नयोस्तिलानाञ्च समेन। पक्वान्नस्य चामान्नेन सम्पद्यते। पशूनां सजातीयैर्वा पशुभिरेव परिवर्त्तो न तु द्रव्यान्तरेण पक्वान्नस्य चामान्नेन तण्डुलादिना तावत्परिमितेनेत्यर्थः। अत्र समशब्दादन्यद्रव्यपरिवर्त्तेऽनियमः। मनुः,

---

द्विज इति वैश्यवृत्तिरापद्येवाभिहिता तत्रापि फलोपलक्षौमसोमसनुष्यापूपवीरुधः तिलौदनरसक्षारदधिक्षीरं घृतं जलम् इत्यादि बह्वन्यभिधायान्ते वैश्यवृत्त्यापि सञ्जीवन् न विक्रीणीत जातु चिदित्यनेनाप्यापदि फलादीनां वर्जनमुक्तं तदनन्तरञ्च लाक्षालवणमांसानि पतनीयानि विक्रये। पयो दधि च मद्यञ्च हीनवर्णकराणि च। इत्यनेन लाक्षादीनाम् अत्यन्तापद्यपि सर्वथैव निषेधमुक्त्वा प्रागुक्तानां फलोपलादीनाम् अत्यन्तापदि प्रतिप्रसव उक्तः। अनेनैवाभिप्रायेण ग्रन्यकृता सद्यः पतति मांसेनेति मनुवचनं निन्दातिशयार्थमिति प्रागुक्तं दोषाभावमाहेति विनिमये इति शेषः मूल्येन द्रव्यदानं विक्रयः मूल्यमनपेक्ष्य द्रव्यान्तरेण द्रव्यदानं विनिमयः मूल्यं व्यवहारविषयीभूतसुवर्णरजतकपर्दकादि। गोतम इति रसास्तैलघृतादयः रसैस्तैलघृतादिभिः पश्वादीनां चतुर्णां समेन समानजातीयेन पश्वादिना न तु विजातीयेन कृतान्नमोदनमक्तादि अत्र समशब्दादन्यत्र रसादौ

रसा रसैर्निमातव्या नत्वेव लवणं रसैः।
कृतान्नञ्चाकृतान्नेन तिला धान्येन तत्समाः॥

वशिष्ठः, रसा रसैः समतो हीनतो वा निमातव्याः। नत्वेव लवणं रसैस्तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्त्तके। नारदः,

अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च।
यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः॥

एतेन काममुत्पाद्य कृष्यान्तु स्वयमेव कृषीवलः। विक्रीणीत तिलान् शुद्धान् धर्मार्थमचिरस्थितानिति मनुवचनं धान्येन तिलविनिमयपरम्॥ ५३॥

अथ निन्दितदेशगमनप्रायश्चित्तम्।

तत्र वायुपुराणे,

कारस्करे कलिङ्गे च ओड्रान्ध्रशवरेषु च।
पीत्वा चापो भूमिलये गत्वा चैव युगन्धरम्॥

---

विजातीयेनापि रसादिना विनिमयः एवं कृतान्नस्य समेनैव विनिमयप्राप्तौ आमान्नेन विनिमयमाह आमान्नेन पक्वान्नस्येति सम्पद्यते विनिमय इति पूर्वेणान्वयः गौतमसूत्रं व्याचष्टे पशूनामिति अस्मिन्नर्थे प्रमाणयति मनुरिति रसैरिति सजातीयैः विजातीयैश्च लवणन्तु समेनैव न तु रसादिभिर्विजातीयैः कृतान्नञ्चाकृतान्नेन तण्डुलेनापि तिलास्तिलैर्विनिमेया इति प्रागुक्तम् अशक्त्यादिना यद्यवश्यं विनिमेयास्तदा धान्यैरेव नान्यैः तत्समाः धान्यसमा एव न तु न्यूना इत्यर्थः। वशिष्ठ इति समतः समरसैः हीनतो हीनरसैर्वापि विद्या पुस्तकं तिलादयः परिवर्त्तके विहिता विनिमेया इत्यर्थः। नारद इति अशक्तौ भक्ष्याभावे उक्तनिमित्तेषु यदा तिला विनिमेयास्तदा धान्यपरिमाणा एव विनिमेयाः। एतेनेति, एतेन मनुना धर्मार्थं यत्तिलविक्रयणमुक्तं तत् समधान्येनैव परिवर्त्तपरम्॥ ५३॥

इत्यभिधायोक्तम्,

आरुह्य भृगुतुङ्गन्तु गत्वा पुण्यां सरस्वतीम् ।
यमुनाञ्च नदीं पुण्यां गङ्गां देवीं महानदीम् ॥
हिमवत्प्रभवा नद्यो याश्चान्या ऋषिपूजिताः ।
सरस्त्रियोनिसम्भेदा नदानां सरसान्तथा ।
गत्वैतान् मुच्यते पापैः स्वर्गं चानन्त्यमश्नुते ॥

देवलः,

सिन्धुसौराष्ट्रसौवीरांस्तथाप्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥

तीर्थयात्राव्यतिरेकेण एतान् गत्वा तत्रैव चिरमुषित्वा गङ्गादिगमनं प्रायश्चित्तं तदशक्तौ पुनरुपनयनम् । अतिचिरवासे पुनरुपनयनं कृत्वा सर्वपापक्षयार्थत्वेन चान्द्रायणं कर्त्तव्यमिति ॥ ५४ ॥

अथासत्याभिधानप्रायश्चित्तम् ।

---

अथ निन्दितदेशेति । भूमिलयगुगन्धरौ देशविशेषौ पीत्वा चाप इत्यनेन चिरस्थितिरुक्ता अतएव चिरमुषित्वेति ग्रन्थकृता वक्ष्यते । आरुह्येति भृगुः प्रपातः तस्य तुङ्गप्रदेशमारुह्य सरस्वत्यादिकं गत्वा स्नात्वेत्यर्थः । अन्या ऋषिसेविता हिमवदुत्पन्ना नद्य इत्यर्थः । त्रयो ब्रह्मविष्णुमहेश्वरा योनिर्यस्य त्रियोनिर्मानसं सरः नदानां सरसां नदीनां च सम्भेदाः सङ्गमाः तड़ागानां सङ्गमासम्भवात् सरःपदमत्र नदीपरं देवल इति प्रत्यन्तवासिनः समुद्रप्रान्तस्थितान् म्लेच्छदेशान् इत्यर्थः । तीर्थयात्रेति अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च । तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति इति वचनादिति भावः गङ्गादिगमनमिति एतच्च प्रत्येकं यथासम्भवं मन्तव्यं न तु समुदितं गङ्गास्नाने इतोऽप्यधिकपापस्य क्षयाभिधानात् अतिचिरवास इति यत्र पुनरुपनयनं तत्रैव चान्द्रायणञ्च न तु गङ्गादिस्नाने ॥ ५४ ॥

तत्र सकृदसत्यभाषणे कृष्णानुस्मरणं प्रायश्चित्तं यथा विष्णुपुराणे,

> कृते पापेऽनुतापस्तु यस्य पुंसः प्रजायते।
> प्रायश्चित्तन्तु तस्यैकं हरेः संस्मरणं परम्॥

अत्यन्ताभ्यासे विष्णुः, निन्दितेभ्यो धनादानं वाणिज्यं कुषीदजीवनम्। असत्यभाषणं शूद्रसेवनमित्यपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति। तप्तकृच्छ्रे -धेनुचतुष्टयम् अतिबहुतरकालाभ्यासे मनुः,

> सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्। इति।
> साक्षिणोऽसत्याभिधाने उक्ता चैवानृतं साक्ष्ये॥

इति मनुवचनात्। ज्ञानतो द्वादशवार्षिकमित्युक्तं प्राक्। अत्र पापलाघवाद्वार्षिकं सम्पूर्णश्रुतिस्तु निन्दार्थवाद इति कश्चित् तच्चिन्त्यं विष्णुना कौटसाक्ष्यं सुहृद्वध इत्यादिना अनुपातकत्वोक्तेः। चातुर्वर्ण्यबधे साक्ष्ये तु अनृतभाषणे अनुपातकत्वाभावात् लघुप्रायश्चित्तमाह याज्ञवल्क्यः,

---

अथासत्याभिधानेति। तत्रेति येषां कृष्णानुस्मरणाल्लघुनः पापस्य क्षयो भवति न वेति सन्देहस्तेषामनिश्चितात्मनामपि सकृदसत्यभाषणे प्रायश्चित्तान्तराश्रवणात् सामान्यतः सर्वपापक्षयसाधनत्वेनोक्तं कृष्णानुस्मरणं प्रायश्चित्तमित्यर्थः। अतएव पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः। हरिरित्यवशो जल्पन् पुमान्नार्हति यातनामिति श्रीभागवतम् एवं बहूनि वचनानि गौरवादुपेक्षितानि। यथेति विष्णुपुराणे लघुपापानि सर्वाण्युपक्रम्य तत्र सर्वप्रायश्चित्तेभ्यः प्रकृष्टं कृष्णानुस्मरणं प्रायश्चित्तम् इत्यस्मिन् वचने परमेकमित्यनेनाभिहितं ततश्च यस्माद् गुरुपापक्षयः तस्मात् किमुत लघुनोऽसत्यभाषणस्येति भावः एतत् सर्वं पापनिष्कृयणप्रकरणे विस्तरतः प्राग्विवेचितम्। अत्यन्ताभ्यासे प्रायश्चित्तान्तरमाह विष्णुरिति,

वर्णानां हि बधो यत्र तत्र साक्ष्येऽनृतं वदेत्।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः॥

यत् पुनर्मनुः,

शूद्रविट्क्षत्रविप्राणां यत्रर्त्तोक्तौ भवेद्बधः।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते॥

तत्प्रशंसापरं यतस्तेनापि प्रायश्चित्तस्योक्तत्वात्। यथा मनुः,

वाग्दैवतैश्चरुभिर्यजेरंस्ते सरस्वतीम्।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम्॥

एतत् त्रैवर्णिकपरम्। शूद्रे तु विष्णुः, तत्पावनाय कुष्माण्डीभिर्द्विजोऽग्निं जुहुयात् शूद्रश्चैकाह्निकं गोदशकस्य ग्रासं दद्यात्। विषयविशेषे अपवादमाह हारीतः, सोमविक्रयकन्याविवाहभयमैथुनबालसंज्ञपनं गोब्राह्मणहितञ्च कुर्वन् मिथ्या न लिप्यत इति संज्ञपनं प्रतारणम्। तथा यमः,

न नर्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं न च मैथुनार्थे।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि॥

तथा सोमविक्रयस्य गर्हितत्वात् अनुकूलानृताभिधाने क्रेतुर्न

---

प्रागिति, अनुपातकप्रकरणे सुवर्णभूम्यादिगुरुविषये साक्ष्येऽनृतमभिधायेत्युक्तं तच्चिन्त्यमिति हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्। राजन्यवैश्यौ चेज्यानावात्रेयीमेव च स्त्रियमित्यनन्तरम् उक्ता चैषानृतं साक्ष्यं इति मनुनाभिधानाच्चेति मन्तव्यं चातुर्वर्ण्येति चातुर्वर्णस्य बधो यत्र तादृशे साक्ष्ये इत्यर्थः। अनुपातकत्वाभावे हेतुरनृतवादविधानं प्रायश्चित्ताल्पता चेति यदिति यत्र ऋतस्य सत्यस्योक्तावित्यर्थः। एतदिति चरुहोमविधानमित्यर्थः। विष्णुरिति आह्निकमेकदिनभोज्यं गोदशकस्य ग्रासं ग्रासं दद्यात्। हारीत इति मिथ्याशब्दोऽव्ययम् अनृतेन लिप्यत इत्यर्थः। यम इति स्वैरवाक्यं प्रौढ़िवादो न हिनस्ति धर्ममिति

दोषः। तथा उत्तमकुलजकन्याविवाहे बालप्रतारणवाक्ये सुहृदोरन्योन्यपरीहासाभिधाने तथोपांशुवचने मैथुनार्थे अलीकभावदर्शने चेत्यर्थः ॥ ५५ ॥

अथोच्छिष्टस्य चाण्डालादिदर्शनप्रायश्चित्तम्।

तत्र बौधायनः, चाण्डालदर्शने ज्योतिषां दर्शनं सम्भाषणे ब्राह्मणसम्भाषणम् उच्छिष्टचाण्डालादिदर्शने एकरात्रमुपवासः सम्भाषणे द्विरात्रं स्पर्शने त्रिरात्रं सहगमने सचेलस्नानमिति। ज्योतिः सूर्य्यादिः। ज्ञानत इदम् ॥ ५६ ॥

अथोच्छिष्टस्य सूर्य्यादिदर्शनप्रायश्चित्तम्।

तत्र निन्दायां मार्कण्डेयपुराणं,

सूर्य्येन्दुतारका दृष्टा यैरुच्छिष्टैस्तु कामतः।
तेषां याम्यैर्नरैराच्यि न्यस्तो वह्निः समिध्यते ॥

अत्र च स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति मनूक्तं सामान्याचारातिक्रमप्रायश्चित्तमभोजनं कार्य्यं तदशक्तौ रजतरत्तिकाष्टकं देयम् ॥ ५७ ॥

अथ तैलाभ्यङ्गादिमूत्रोच्चारसमुत्सर्गादिप्रायश्चित्तम्।

---

शेषः। हारीतादिवचनमेकदा व्याचष्टे सोमविक्रयस्येति न नर्मयुक्तं वचनं हिनस्तीत्यस्य विवरणं सुहृदोरिति मैथुनार्थं इत्यस्य विवरणं तथोपांशुवचन इति मैथुनार्थे रहस्यवचने चकारादलीकभावदर्शने चेत्यर्थः ॥ ५५ ॥

अथोच्छिष्टस्य चाण्डालादीति। आदिशब्दादालापस्पर्शयोर्ग्रहणम्। बौधायन इति चाण्डालेति आदिनाऽनुच्छिष्टस्य चाण्डालदर्शनादौ प्रायश्चित्तमुक्त्वा उच्छिष्टस्य चाण्डालस्पर्शादौ प्रायश्चित्तमाह उच्छिष्टदर्शन इति ॥ ५६ ॥

अथ उच्छिष्टस्य सूर्य्यादीति। याम्यैर्नरैः यमदूतैः समिध्यते दीप्यते ॥ ५७ ॥

तत्रापस्तम्बः,

तैलाभ्यक्तस्तथा वान्तः श्मश्रुकर्मणि मैथुने।
मूत्रोच्चारं यदा कुर्य्यादहोरात्रेण शुद्ध्यति॥

कूर्मपुराणे,

तैलाभ्यक्तोऽथवा कुर्य्याद् यदि मूत्रपुरीषके।
अहोरात्रेण शुद्ध्येत श्मश्रुकर्म च मैथुनम्॥

तैलाभ्यङ्गादिष्वकृतस्नानेन मूत्रोच्चारकरणे उपवासः कर्त्तव्यः। अभ्यङ्ग उक्तः आयुर्वेदे,

मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम्।
स्रोतोभिस्तर्पयेद्गात्रं अभ्यङ्गः स उदाहृतः॥
तैलमल्पं यदङ्गेषु न च स्याद्गात्रतर्पणम्।
सा मार्ष्टिः पृथगभ्यङ्गो मस्तकादौ प्रकीर्त्तितः॥

इति॥ ५८॥

अथ वस्त्रादिदानप्रायश्चित्तम्।

---

अथ तैलाभ्यङ्गेति। वान्तः कृतवमनः तैलमल्पमिति सा मार्ष्टिः अङ्गमार्जनमात्रम् अभ्यङ्गस्तु पृथगेवेत्यर्थः। एतच्च ग्रन्थकृता निन्दातिशयार्थमेवोक्तं वस्तुतस्तु रोगोपशमनार्थं विहितस्यैवाभ्यङ्गस्यायुर्वेदे लक्षणं कृतं न तु स्मृत्युक्तविधिनिषेधविषयस्य पादाभ्यङ्गादिदर्शनात् यथाऽतिथिविषये विष्णुः, प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम्। प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम्। तथा तैलं मांसं भगं क्षौरं सर्वपर्वसु वर्जयेत्। इति हारीतादिनिषिद्धतैलग्रहणमात्रविषयं व्यासः, पक्षादौ च रवौ षष्ठ्यां रिक्तायां सर्वपर्वसु। तैलेनाभ्यज्यमानस्तु चतुर्भिरपि हीयते। तथा भविष्ये, प्रतिपत्सु नवम्याञ्च तथा पञ्चसु पर्वसु। अभ्यङ्गनस्य पानादेस्तैलं नैव स्पृशेन्नरः। अन्यथा पर्वादिष्वायुर्वेदोक्ताभ्यङ्गस्यैव निषेधः प्रसज्येत॥ ५८॥

तत्र यमः,

> वस्तिकर्मनिरूहैश्च प्रच्छर्दनविरेचनैः ।
> शिशुकृच्छ्रेण शुद्ध्येत तस्मात् पापान्न संशयः ॥

वस्तिकर्म तैलदानं प्रच्छर्दनविरेचनयोरभ्यास एव शिशुकृच्छ्रम् ।

> अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
> दुःस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते ॥

इति यमवचनात् ।

> विच्छर्दने द्विजातीनां भिन्नभाण्डे च भोजने ।
> पञ्चगव्येन शुद्धिः स्यादिति शातातपं भवेत् ॥

मतमित्यर्थः शातातपे इत्यपि पाठो दृश्यते इदञ्च मसूरमाषमांसव्यतिरिक्तवमनविषयम् अत्र प्रायश्चित्तविशेषश्रुतेः । तथा यमः,

> मसूरमाषमांसानि भुक्त्वा यो वमति द्विजः ।
> त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ।
> प्राणायामैस्त्रिभिः स्नात्वा घृतं प्राश्य ततः शुचिः ॥

---

अथ वस्तिकर्मादीति । यम इति शूलादिरोगे गुदे चर्मपुटकं दत्त्वा तेनोदरमध्ये तैलादीनां प्रवेशनरूपं वस्तिकर्म वैद्यकप्रसिद्धं तच्च द्विविधम् अनुवासाख्यं निरूहाख्यञ्च गोवलीवर्दन्यायादत्र निरूहपददर्शनात् वस्तिकर्मपदम् अनुवासाख्यवस्तिकर्मपरं तेनैव द्विविधेनैव वस्तिकर्मणा सकृत्कृतेन शिशुकृच्छ्रं प्रायश्चित्तम् । यथा वैद्यके, वस्तिर्द्विधानुवासाख्यो निरूहश्च ततःपरः । यः स्नेहैर्दीयते स स्यादनुवासननामकः। कषायक्षीरतैलैर्यो निरूहः स निगद्यते । शूलेऽस्रपित्तहृद्रोगे योजयेदनुवासनम् । वातव्याधावुदावर्त्ते वातासृक् विषमज्वरे । मूर्च्छातृष्णोदरानाह प्रमेहेषु निरूहणम् । मृगाजशूकरगवां महिषस्यापि वा भवेत् । मूत्रकोषस्य वस्तिस्तु तदलाभे तु चर्मजः । नाली कार्य्या सुवर्णादिधातुभि-

यत्तु हारीतवचनम्, असुरामद्यपानेऽल्पके च चौर्य्ये श्लेषात
प्राशने माषमसूरवमने कृच्छ्रचणे चामेध्यादुत्पन्नानाम् अ
पाने सान्तपनमेव चरेत्। तदत्यन्ताभ्यासविषयं सान्त
धेनुद्वयम्। शिशुकृच्छ्रं चतुरहसाध्यं तदशक्तौ पुराणैकं
मिति ॥ ५९ ॥

अथ विप्राग्न्यादिमध्यगमनप्रायश्चित्तम्।

तत्राङ्गिराः,

दम्पत्योर्विप्रयोरग्न्योर्विप्राग्न्योर्गोद्विजातिषु।
अन्तरं यदि गच्छेत् तु विप्रश्चान्द्रायणं चरेत्॥

एतत्कामतोऽत्यन्ताभ्यासविषयम्। सकृदभ्यासादिषु तु स्ना
व्रतलोपप्रायश्चित्तमेकदिनमभोजनं तदावृत्तिश्चोहनी
अथाग्नौ पादप्रतापनस्य कुशेन पादप्रमार्जनस्य प्रायश्चि
तत्र शङ्खः,

...थ वस्त्र... नं कृत्वा कृत्वा वह्निं तथाप्यधः।
...र्पादौ च दिनमेकं व्रती भवेत्॥

इदं सकृत्... ...गुरुत्वादिकम् ॥ ६० ॥

...न्तः कृतवमनः तैलमे...

...नञ्च ग्रन्थकृता नि...

...वंशवेणुभिः। सुप्तस्य वामपार्श्वेन ... कृतं ...प्रसारिणः। कुञ्चितापरजङ्घ
स्निग्धे गुदे न्यसेत्। बद्ध्वा वस्तिमुखं तत्र वामहस्तेन ... धारयेत्। पीडयेत्
वस्तिं तैलादिपूरितम्। अभ्यास इति सकृद्द्वयमादिभिः स्वल्पप्रायश्चित्तविध
दित्यर्थः असुरेति पानसादिमद्यानामज्ञानतः पाने रोगिणः सान्तपनम् अरोगि
प्रागुक्तमतिकृच्छ्रमेवेति अन्येषां चौर्य्यादीनाम् अत्यन्ताभ्यासे एवेति अल्पके
द्रव्यविषयके चौर्य्ये श्लेषातकः शेलुः अमेध्यादुत्पन्नानाम् अमेध्यसंपृक्ता
अप्रामित्यर्थः ॥ ५९ ॥

अथ विप्राग्न्यादीति। सकृद्गमने एकोपवासः अभ्यासे च तदावृत्ति

## अथ गुरोर्ब्राह्मणस्य च तिरस्कारप्रायश्चित्तम्।

तत्र याज्ञवल्क्यः,

गुरुं हुंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम्॥

एतच्च दर्पणाभिधाने अतएव बृहस्पतिः,

गुरुं हुंकृत्य दर्पेण द्विजं निर्जित्य वादतः।
ताड़यित्वा तृणेनापि प्रसाद्योपवसेद्दिनम्॥

एतत् सकृद्विषयं दर्पात् पुनः पुनर्जये यमः,

वादेन ब्राह्मणं जित्वा प्रायश्चित्तं विधीयते।
त्रिरात्रोपषितः स्नात्वा प्रणिपत्य प्रसादयेत्॥

वादेन शास्त्रीयेन याज्ञवल्क्यबृहस्पतिवचनन्तु ईषत्संरम्भतः सकृज्ज्ञेयम्। तथा,

पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तं विधीयते।
दिवसोपोषणं कृत्वा अभिवाद्य प्रसादयेत्॥

प्रमादस्पर्शे एतत्। क्रोधादिना त्वनुबन्धापेक्षया त्र्यहप्राजापत्यं कल्प्यम्। तथा,

अवाच्यं ब्राह्मणस्योक्त्वा प्राजापत्यं विधीयते।

---

अथाग्न्यादाविति। अङ्ग इति वह्निम् अधः कृत्वा वह्निमुल्लङ्घ्य गमन इत्यर्थः व्रती यावकेन॥ ६०॥

अथ गुरोरिति। अवाच्यमिति उपपातकवादे प्राजापत्यं महापातकवादे कृच्छ्रातिकृच्छ्रं तथेति आक्रोशादिषु सुपांसुपिति सप्तम्यां द्वितीया इत्यार्षः प्रयोगः आक्रोश इति अवाच्यं ब्राह्मणस्योक्त्वेति यमवचने उपपातकाद्याक्रोशे प्राजापत्यादिविधानात् अनृत इति साक्ष्यानृतस्यानृतत्वात्तद्व्यतिरिक्ते प्रतिश्रुत्यद्रव्यादानादि-

कृच्छ्रातिकृच्छ्रं चीर्त्वा तु प्रणिपत्य प्रसादयेत् ॥

अवाच्यं ब्राह्मणस्योक्त्वेति महापापोपपापाभ्यां ब्राह्मणस्य विरुद्धमभिधायेत्यर्थः। तथा,

आक्रोशमनृतं हिंसामनुरूपं समाचरेत्।
एकरात्रं त्रिरात्रं वा षड्रात्रं वा विधीयते ॥

आक्रोशे जातिभ्रंशकरपातकोपपातकादन्यत्र अनृते साक्ष्यव्यतिरेकेण प्रतिश्रुत्यादानादौ हिंसायां सास्थ्यनस्थिप्राणिवधे सहस्रादर्वाक्शकटभाराच्च। अनुरूपमिति आक्रोशानृतवादयोर्लघुगुरुभावं प्राणिनाञ्च भूयस्त्वाल्पत्वं प्रतिसन्धाय एकरात्रत्रिरात्रषड्रात्रोपवासाः त्रयोऽप्येकैकत्र योजनीयाः। अत एवाहतुः शङ्खलिखितौ, आक्रोशानृतवादेषु एकरात्रं त्रिरात्रं वा उपवासः न चायं व्यवस्थितविकल्पः गोतमेनाक्रोशानृतहिंसासु त्रिरात्रं परमं तप इत्यनेन सर्वत्र त्रिरात्राभिधानात् आपस्तम्बेनाप्यनुमतं तद्यथा अनाक्रोश्यमाक्रुश्यानृतञ्च उक्त्वा त्रिरात्रमक्षारलवणभोजनं शूद्रस्य सप्तरात्रमभोजनं स्त्रीणाञ्चैवमिति। एतच्चाक्रोशानृतवादयोर्लाघवापेक्षम्। यमः,

आविध्य ब्राह्मणं कण्ठे प्रायश्चित्तं विधीयते।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ॥

एतत् कर्कशतररज्ज्वा दर्पेण दृढतरं कण्ठे बन्धने बोद्धव्यम्।

---

त्यर्थः। सास्थिवधे सहस्रादर्वाक् अनस्थिवधे शकटभारादर्वाक्सहस्रशकटपरिमितवधे शूद्रहत्यातिदेशात् एकत्रेति एकस्मिन्नेव विषये आक्रोशाद्यनुरूपं बुद्ध्वा एकरात्रादिकं क्रमाद् योजनीयमित्यर्थः न चायमिति आक्रोशे एकरात्रम् अनृतवादे त्रिरात्रमिति व्यवस्थितमित्यर्थः। अनाक्रोश्यं गुरुविप्रादिकं याज्ञवल्कीये

याज्ञवल्कीये एतद्व्यतिरिक्तबन्धने अल्पसंरम्भेण वा ज्ञेयम्। वशिष्ठः, आचार्य्यमातृपितृहन्तारस्तत्प्रसादादप्यपापाः। एतत्-प्रमादतस्तृणादिना हनने। याज्ञवल्क्यः,

प्रतिकूलं गुरोः कृत्वा तं प्रसाद्यैव शुद्ध्यति।

एतदपि सकृत्प्रमादे बोद्धव्यं सुमन्तुः, देवर्षिगोब्राह्मणाचार्य्य-पितृमातृनरेन्द्राणां प्रतिष्ठीवनाक्रोशने चोल्मुकेन जिह्वां दहेत् हिरण्यञ्च दद्यात्। प्रतिष्ठीवनं सम्मुखे श्लेष्मनिरसनम् एत-दपि सकृत् अत्रापवादमाह बृहस्पतिः,

आक्रुष्टस्तु समाक्रोशंस्ताड़ितः प्रतिताड़यन्।
हत्वाततायिनञ्चैव नापराधी भवेन्नरः ॥ ६१ ॥

अथ मिथ्याब्राह्मणशपथयावज्जीवकृतसुकृतशपथप्रायश्चित्तम्। तत्र यमः,

विप्रस्य बधसंयुक्तं कृत्वा तु शपथं मृषा।
ब्रह्महा यावकान्नेन व्रतं चान्द्रायणञ्चरेत् ॥

ऋज्वर्थं मार्कण्डेयपुराणं,

सुकृतं ये प्रयच्छन्ति यावज्जीवकृतं नराः।
ते पिष्यन्ते शिलापेषैर्यथैते पापकारिणः ॥

अत्र प्रायश्चित्ताविशेषाश्रवणात्,

---

बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनमिति वचने। वशिष्ठ इति हन्तिरत्र ताड़नार्थः परतः प्रसादाभिधानात्। बृहस्पतिरिति एतच्च गुरुव्यतिरिक्तविषयम् ॥ ६१ ॥

अथ मिथ्येति। ब्रह्महेति। निन्दार्थवादः सुकृतमिति मम यावज्जीव कृतं

यत्रोक्तं यत्र वा नोक्तम् इह पातकनाशनम्।
प्राजापत्येन कृच्छ्रेण शुद्ध्यते नात्र संशयः॥

इत्युशनसो वचनात् प्राजापत्यम्॥ ६२॥

अथाभिशापकर्त्तुः प्रायश्चित्तम्।

तत्र वशिष्ठः,

पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत्॥

वचनात् सत्यवचनात् यथा याज्ञवल्क्यः,

मिथ्याभिशंसिनो दोषो द्विः समोऽभूतवादिनः।
मिथ्याभिशस्तदोषञ्च समादत्ते मृषा वदन्॥

निन्दार्थवादोऽयं यतो वशिष्ठ एव लघुप्रायश्चित्तमाह। यथा, ब्राह्मणमनृतेनाभिशस्य पतनीयेनोपपतनीयेन वा मासमब्भक्षः शुद्धवतीरावर्त्तयेत्। एतेनाभिशस्तो व्याख्यातः। तथा याज्ञवल्क्यः,

महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम्।
अब्भक्षो मासमासीत स जपी नियतेन्द्रियः॥

---

सुकृतं तव भवतीति शपथं कुर्वन्ति। पिष्यन्ते चूर्ण्यन्ते एते पूर्वोक्तमहापातक्यादय इत्यर्थः॥ ६२॥

अथ अभिशापेति। अभिशापः परीवादः पतितमिति यादृशोऽभिशापः तस्य तुल्यदोष इत्यर्थः। निन्दार्थवादोऽयं न तु वस्तुत इति वक्ष्यते मिथ्याभिशंसेति मिथ्याभिशस्तस्य यो दोषो यत् पातकं तिष्ठति तदपि गृह्णातीत्यर्थः। यथेति पतनीयेन महापातकेन व्याख्यातः अभिशस्तस्याप्येवं प्रायश्चित्तमित्यर्थः। द्वादशधेनव इत्यत्र हेतुमाह मासगोमूत्रेति मासवज्रव्रते पञ्चदशधेनुदानतुल्यमासोपवासस्य पञ्चमभागापकर्ष उक्तस्तद्दभक्षणेऽपि पञ्चमभागापकर्षो यस्मादित्यर्थः।

मासमब्भक्षणे द्वादशधेनवः। मासगोमूत्रयावकन्यायेनाचापि पञ्चमभागापकर्षात् शुद्धवतीशतावर्त्तने धेनुरेका। शुद्धवती एतोन्विन्द्रंस्तवाम इत्यादिना याज्ञवल्क्योक्तजपस्य मन्त्रानिर्देशे सामान्यविहितगायत्र्या वशिष्ठोक्तशुद्धवतीनाम्ना एतत् सकृन्महापातकाभिशापे उपपातके त्वभ्यासतो ज्ञेयं यतः पातकाभिशंसने कृच्छ्रस्तदर्द्धोऽभिशस्त इति बौधायनेन सकृदभिशंसने कृच्छ्रं स्वल्पमुक्तम्। मृषामहापातकाभिशापाभ्यासे तु आवृत्तितारतम्यात् प्रायश्चित्ततारतम्यं कल्प्यम्॥ ६३॥

यथा शङ्खप्रचेतसौ, नास्तिकः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी चेत्येते पञ्चवत्सरान् ब्राह्मणगृहेषु भैक्ष्यं चरेयुः संवत्सरं वा धौतकं भैक्ष्यमश्नीयुः षण्मासान् वा गामनुगच्छेयुः एतेन शुद्धिमाप्नुवन्ति एतेनैवाभिशस्तो व्याख्यात इति। मिथ्याभिशस्तप्रायश्चित्तं चैतदभिशापानन्तरं संवत्सरं यावन्निर्णयाप्रवृत्तस्य वेदितव्यं संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दम इति मनुवचनात् अभिशापकाल

---

शुद्धवतीसूक्तं ऋक्त्रयं तस्य शतम् अनादेशे शतमिति वचनात्। ननु अनादेशे गायत्रीजपो विहितः अत्र तु वशिष्ठेन शुद्धवतीजप आदिष्ट एवेत्यत आह वशिष्ठोक्तेति यत इति यद्यपि पातकाभिशंसन इति सामान्यतः श्रूयते तथापि प्रायश्चित्तस्य लघुत्वात् उपपातकाभिशंसनविषयं बौधायनवचनं मन्तव्यम्। मृषा महापातकेति अभ्यासानुरूपं वक्ष्यमाणशङ्खोक्तलघुगुरुप्रायश्चित्तं कल्प्यम् इत्यर्थः॥ ६३॥

शङ्खेति। पञ्चसंवत्सरान् एकं वा वत्सरं षण्मासं वा इत्यभ्यासतारतम्येन मन्तव्यम्। धौतकं प्रक्षालितमित्यर्थः। मिथ्याभिशंसिनः प्रायश्चित्तमभिधाय मिथ्याभिशस्तस्य प्रायश्चित्ते विशेषमाह मिथ्याभिशस्तेति एतत् सर्वं वशिष्ठाद्युक्तप्रायश्चित्तम्। संवत्सरं यावदिति संवत्सरमध्ये आत्मनः शुद्धिनिर्णयं कर्त्तुमप्र-

एव निर्णयप्रवृत्तस्य च अभिशस्तो मृषा कृच्छ्रञ्चरेदाग्नेयमेव वा निर्वपेद्दा पुरोडाशं वायव्यञ्चरुमेव वेत्यनेन स्वल्पप्रायश्चित्तस्य याज्ञवल्क्येनाभिधानात्। सुवर्चलाधिकारे हारीतः,

अनृताभिशंसनाक्रोशे गुरूणां पैशुनेषु च।
एकविंशतिरात्रन्तु पिबेत्तामेव यत्नतः॥

एतच्च महापातकादन्यत्रेति धर्मप्रदीपः एतेनैतदुक्तं स्यात् यद्यपि पापं कुर्वन् दृष्टस्तथापि प्रथमं तत् पापं न ख्यापनीयं व्यवहारे तु परिहार्य्य एव। अतएवापस्तम्बः, दोषं बुद्धा न पूर्वं पतितस्य समाख्याता स्यात् परिहरंश्चैनं धर्मेष्विति। यथा,

क्रियया गर्हयेदेनं न तु वाचा कथञ्चन।

इति मनुरप्याह वशिष्ठवचने ब्राह्मणपदं क्षत्रियादिव्युदासार्थं तदभिशंसने अनुलोमोक्तदण्डव्यवस्थया कल्पनीयम्। एवञ्च हीनवर्णेनोत्तमवर्णाभिशापे प्रतिलोमोक्तदण्डव्यवस्थया प्रायश्चित्तं कल्प्यम्। तथा च याज्ञवल्क्यः,

---

वृत्तस्यैतदुक्तप्रायश्चित्तमित्यर्थः। अत्र हेतुद्वयमाह संवत्सराभिशस्तस्येति। अभिशापकाल एवेति संवत्सरात् परं निर्णयाप्रवृत्तस्य द्विगुणप्रायश्चित्तस्य विधानात् अभिशापकाले च निर्णयप्रवृत्तस्यातिलघुकृच्छ्रमात्रविधानात् अर्थादुक्तप्रायश्चित्तं संवत्सरमध्ये निर्णयाप्रवृत्तस्य उपतिष्ठत इत्यर्थः। आग्नेयमग्निदैवतं पुरोडाशमित्यर्थः। एतत् सर्वं मृषाभिशस्तस्य एव अभिशापस्य सत्यतानिर्णये तु तत्तत्पापोक्तं प्रायश्चित्तमेवेति हारीत इति गुर्व्वालीकनिर्बन्ध इत्यनेन महापातकस्यानृताभिशंसनेऽनुपातकत्वोक्तत्वात् तदितरपापाभिशंसन इत्यर्थः आक्रोशः परुषोक्तिः एतत् सद्यः प्रसादनेतरविषयं पैशुनेषु असमक्षं लोकस्थाने सत्यदोषस्यापि प्रथमख्यापनेषु तां ब्रह्मसुवर्चलामित्यर्थः एतेनेति पैशुनेषु प्रायश्चित्ताभिधानेनेत्यर्थः। आपस्तम्ब इति बुद्धा ज्ञात्वापि पूर्वमित्यनेन सर्वलोकविदितत्वे सति

प्रतिलोमापवादे तु चतुस्त्रिद्विगुणा दमाः।
वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः॥

ततश्च दण्डवत् प्रायश्चित्तानि भवन्तीति वचनात् प्रायश्चित्तं व्यवस्थेयम्। युक्तञ्चैतत् यस्मात्,

अधमानान्तु वर्णानामुत्कृष्टहनने गुरु।
दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः॥

इति भविष्यपुराणवचनात् अधमेनोत्कृष्टहनने विशेषदर्शनम् अतस्तुल्यन्यायादिहापि तथैव कल्पयितुमुचितम्॥ ६४॥

अथानृताभिशस्तप्रायश्चित्तम्।

तत्र पैठीनसिः, अनृतेनाभिशप्यमानः कृच्छ्रं मासं चरेत् पातकेषु महापातकेषु द्विमासं कृच्छ्रमिति एतच्चाभिशापकालातिक्रमे ज्ञेयमुक्तमनुवचनात् अभिशापकाले निर्णयप्रवृत्तस्य तु अभिशस्तो मृषा कृच्छ्रमित्यादि याज्ञवल्क्योक्तमेव।

---

पश्चात् कथने न दोष इत्यर्थः। एतत् सर्वं ब्राह्मणस्यैवाभिशापे न तु क्षत्रियादीनामित्याह वशिष्ठवचन इति ब्राह्मणमनृतेनाभिशस्येत्यादि प्रागुक्त इत्यर्थः। तदभिशंसने तेषां क्षत्रियादीनामनृताभिशंसन इत्यर्थः प्रतिलोमापवादेऽनुलोमापवादे च दण्डव्यवस्थामाह तथा चेति प्रतिलोमापवादे शूद्रविट्क्षत्रियैर्ब्राह्मणापवादे यथासङ्ख्यं प्रागुक्तपञ्चाशत्पणदण्डस्य चतुस्त्रिद्विगुणा दमाः। अनुलोमापवादे तु ब्राह्मणेन क्षत्रियवैश्यशूद्रापवादे तु अर्द्धार्द्धहान्या दण्डः कार्य्यः अत्रापि तद्व्यवस्थया कल्पनीयं यथा ब्राह्मणेन क्षत्रियादीनाम् अनृताभिशापे उक्तप्रायश्चित्तास्यार्द्धार्द्धहान्या व्यवस्था शूद्रविट्क्षत्रियैर्ब्राह्मणस्यानृताभिशापे यथासङ्ख्यमुक्तप्रायश्चित्तस्य चतुस्त्रिद्विगुणैः प्रायश्चित्तव्यवस्थेत्यर्थः॥ ६४॥

अथानृताभिशस्तेति। पैठीनसिरिति, पातकेषूपपातकेष्वित्यर्थः। एतत् सकृद्विषयं यत्तु प्रागुक्तवशिष्ठवचने एतेनाभिशस्तो व्याख्यात इत्यनेन मासमब्भक्षत्वमुक्तं तदभ्यासविषयं यत्तु शङ्खवचने एतेनाभिशस्तो व्याख्यात इत्यनेन ब्राह्मणवदे

तथैवोपपातकादिना अभिशस्तस्य बौधायनः, पातकाभिशंसने कृच्छ्रं तदर्द्धोऽभिशस्त इति निषिद्धाचरणादिकं विनापि मृषाभिशस्तेन प्राक्कृतभुक्तावशिष्टदुरितसंसूचनात् व्याधितेनेव कुनखित्वादिलक्षणवतेव दुःस्वप्नानिष्टदर्शनवतेव वचनात् प्रायश्चित्तं करणीयमेव ॥ ६५ ॥

अथारूढपतितप्रायश्चित्तम्।

तत्र संवर्त्तः,

> संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं भजेत यः।
> कुर्वीत कृच्छ्रमश्रान्तं षण्मासान् प्रत्यनन्तरम् ॥

व्याधिक्रोधादिना संन्यासवाक्यमुच्चार्य्य यो गृहस्थाश्रममाश्रयितुमिच्छति तेन षण्मासान् प्राजापत्यं कर्त्तव्यं तदशक्तौ पञ्च-

---

संवत्सरभैक्षाचरणमुक्तं तदत्यन्ताभ्यासे तत्रैवोक्तम्। एतच्चेति अभिशापकालातिक्रमे संवत्सरमध्ये निर्णयाप्रवृत्तस्य ज्ञेयमित्यर्थः। सर्वमेतत् प्राग्विवेचितम्। तथैवेति अभिशापकाले निर्णयप्रवृत्तावित्यर्थः। अर्थात् तत्कालनिर्णयप्रवृत्तौ महापातकाभिशस्तस्य कृच्छ्रद्वयमित्यर्थः। पैठीनसिवचने उपपातकाभिशस्तात् महापातकाभिशस्तस्य द्विगुणप्रायश्चित्ताभिधानात् ननु मिथ्याभिशस्तस्य पापाभावात् कथं प्रायश्चित्तमित्याशङ्क्याह निषिद्धेति आदिशब्दाद्दुंशग्रहणं मृषाभिशापेन प्राक्कृतदुरितसूचनात् मृषाभिशस्तेन पुंसावचनात् विधिबोधनात् प्रायश्चित्तं करणीयमित्यन्वयः। अत्र बहूनि दृष्टान्तान्याह व्याधितेनेवेति यथा व्याधितेन रोगैर्दुरितस्य सूचनात् कर्मविपाकोक्तं यथा च कुनख्यादिना कुनखित्वादिलक्षणैः सूचनात् सुरापानप्रकरणशेषे लिखितं विष्णूक्तं यथा च दुःस्वप्नदर्शकेन दुःस्वप्नैः सूचनात् ब्राह्मणभोजनगवाश्वत्थनिवेदनादिकं ज्योतिषोक्तं यथा च यत्राकालेऽनिष्टदर्शकेनानिष्टैः सूचनात् प्राणायामादिकं ज्योतिषोक्तं प्रायश्चित्तं क्रियत इत्यर्थः ॥ ६५ ॥

अथारूढपतितेति। सन्न्यासाद्याश्रमारूढः सन् पतितस्तस्मात् परिभ्रष्ट इत्यर्थः

दश धेनवो देयाः। एतच्च सन्न्यासग्रहणानन्तरं निवृत्तानाम्। चिरकालगृहीतसन्न्यासनिवृत्तानां तु ब्राह्मणानां निर्वासनं क्षत्रियविशोर्दास्यकरणमाह कात्यायनः,

> प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः।
> निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविट् नृपः॥

निर्वासने विशेषमाह दक्षः,

> पारिव्रज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति।
> श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्॥

शातातपः,

> आरूढो नैष्ठिकं कर्म पुनर्व्यावर्त्तयेद् यदि।
> मासं चान्द्रायणं कुर्य्यादिति शातातपोऽब्रवीत्॥

भविष्यपुराणम्,

> आरूढो नैष्ठिकं कर्म प्रत्यापत्तिं व्रजेत यः।
> चान्द्रायणञ्चरेन्मासमिति विद्धि खगाधिप!॥

एतच्च ब्रह्मचारिवानप्रस्थयोर्यावज्जीवव्रतानुष्ठानप्रवृत्तयोर्ज्ञेयम्॥ ६६॥

### अथ जलाग्न्यादिभ्रष्टप्रायश्चित्तम्।

तत्र यमः,

---

संवर्त्त इति प्रत्यापत्तिं पूर्वाश्रमे संप्रतिपन्नताम् अत्यान्तमनवरतं न तु मध्ये मध्ये इत्यर्थः। प्रत्यनन्तरं सन्न्यासानन्तरमेव न तु चिरकालगृहीतसन्न्यास इत्यर्थः। चिरकालेति, चिरकाले सन्न्यासनिवृत्तानां मध्ये इत्यर्थः। कात्यायन इति प्रव्रज्यावसिताः प्रव्रज्याच्युताः यत्र यदा क्षत्रविट् क्षत्रविशौ विभक्तिलोप आर्षः नृपो राजा कारयेदित्यर्थः॥ ६६॥

जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशनच्युताः ।
विषप्रपतनप्रायशस्त्रघातच्युताश्च ये ॥
सर्वे ते प्रत्यवसिताः सर्वधर्मवहिष्कृताः ।
चान्द्रायणेन शुद्ध्येयुस्तप्तकृच्छ्रद्वयेन वा ॥

च्युताः प्राप्तजीवनाः । प्रव्रज्यायान्तु अतिशोकक्रोधस्त्रीव-दम्भैः कृतायां पश्चान्निवृत्तायामिति धर्मप्रदीपः । चान्द्रायणं कार्य्यं तप्तकृच्छ्रद्वयं वा । अत्रैवाभ्यासे अङ्गिराः,

यः प्रत्यवसितो विप्रः प्रव्रज्याग्निजलादितः ।
अनाशकान्निवृत्तश्च गृहस्थत्वं चिकीर्षति ॥
कारयेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ।
जातकर्मादितः प्रोक्तं पुनः संस्कारमर्हति ॥

आपस्तम्बः,

चिताभ्रष्टा तु या नारी मोहाद्विचलिता ततः ।
प्राजापत्येन शुद्धेत्तु तस्माद्धि पापकर्मणः ॥ ६७ ॥

अथ व्रणकृम्युत्पत्तिप्रायश्चित्तम् ।

तत्र भविष्यपुराणं,

---

अथ जलाग्न्यादीति । यम इति, मरणार्थकृतजलप्रवेशादितो भ्रष्टा अनशन-मनशनव्रतं तस्माच्च्युता भ्रष्टाः प्रपतनमुच्चस्थानात् पातः प्रायो महापथगमनं शस्त्रघातः शस्त्रेणोदरघातादि एषु दैवाज्जीवने इत्यर्थः । प्रत्यवसिताः निन्दिताः । ननु प्रव्रज्याभंशे षण्मासप्राजापत्यं प्रागुक्तं कथमत्र तदर्द्धं चान्द्रायणम् इत्या-शङ्क्याह प्रव्रज्यायान्त्विति अतिशब्दः प्रत्येकं सम्बध्यते अतिस्त्रीत्वैस्तमत्यन्तविरक्तः सन्न्यासार्हं इति परकृतत्त्वैरित्यर्थः । एतच्च तत्कालनिवृत्तानामेव । चिरकाल-निवृत्तानान्तु निर्वासनादिकं प्रागुक्तम् अत्रैवेति अत्रैव विषय इत्यर्थः । कारयेदिति कृच्छ्रत्रयं चान्द्रायणत्रयं समुदितम् । चिताभ्रष्टेति ततो मरणव्यवसायान्मोहा-च्चलितेत्यर्थः ॥ ६७ ॥

ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे।
कृमिरुत्पद्यते यस्य निष्कृतिं वच्मि तस्य तु॥
गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानमाचरेत्।
दधि क्षीरं घृतं पीत्वा कृमिदष्टो विशुध्यति॥
अधोनाभ्याः प्रदष्टस्य प्रमादाद्विनतात्मज!।
एतद्विनिर्दिशेत् प्राज्ञः प्रायश्चित्तं खगाधिप!॥
नाभिकण्ठान्तरे वीर! यदा चोत्पद्यते कृमिः।
षड्रात्रन्तु तदा प्रोक्तं प्रायश्चित्तं मनीषिभिः॥
यदा दंशन्ति शिरसि कृमयो विनतात्मज!।
कृच्छ्रं तदाचरेत् प्राज्ञः शुद्धये कश्यपात्मज!॥

दधिक्षीरघृतपानञ्चात्र त्रिरात्रमाचरणीयम्। यथा बौधायनः,

ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत्॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
त्र्यहं स्नात्वा च पीत्वा च कृमिदष्टः शुचिर्भवेत्॥

इदञ्च नाभ्यधोदेशदंशविषयम् एतद्विषय एव शातातपः,

ब्राह्मणस्य व्रणद्वारे यदा सम्पद्यते कृमिः।
प्रायश्चित्तं तदा कुर्य्यादिति शातातपोऽब्रवीत्॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
त्र्यहं स्नात्वा च पीत्वा च कृमिदष्टः शुचिर्भवेत्॥

---

अथ व्रणेति। भविष्यपुराणमिति वच्मि वदामि दधि क्षीरं घृतमिति पञ्चगव्योपलक्षणं बौधायनशातातपवचनैकवाक्यत्वात् षड्रात्रं षड्रात्रोपवासः

ब्राह्मणपदमुपलक्षणार्थं भविष्योक्तकृच्छ्रपदं तप्तकृच्छ्रपरम्। यथा च्यवनः, कृमिदंशने सान्तपनं वृषभो दक्षिणा एतदपि शिरो दंशविषयम्। अत्र सप्ताहसाध्यमनूक्तसान्तपनवृषदानयोः समुच्चयः तेनास्य प्राजापत्याद्गुरुत्वम् अतो भविष्यपुराणोक्तं कृच्छ्रपदं तप्तकृच्छ्रपरम् अत्र च पादोनधेनुचतुष्टयं तेन विकल्पः। किञ्च शिरस उत्तमाङ्गत्वात् कण्ठनाभिस्थलोक्तकृच्छ्रसमानषड्रात्रापेक्षया प्रायश्चित्तगौरवमुचितमेव ॥ ६८ ॥

अथ श्वादिदंशनप्रायश्चित्तम्।

तत्र मनुः,

> श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च।
> न वा श्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति ॥

प्राणायामे विशेषमाह याज्ञवल्क्यः,

> पुंश्चलीवानरखरैर्दष्टः श्वोष्ट्रादिवायसैः।
> प्राणायामं जले कृत्वा घृतं प्राश्य विशुद्ध्यति ॥

एतच्च पादयोरुपरिदंशे। देवलः, विषाणिदंष्ट्रिश्वसृगालविड्वराहखरवानरवायसपुंश्चलीभिर्दष्टः स्रवन्तीं मासाद्यषोड़श प्राणायामान् कुर्य्यादिदं पादयोरतिगाढ़दंशे। अङ्गिराः,

> ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत्।
> गृहस्थो वै त्रिरात्रन्तु एकाहं योऽग्निहोत्रवान् ॥

---

कृच्छ्रं तप्तकृच्छ्रमिति वक्ष्यते त्र्यहं स्नात्वेति पञ्चगव्येनैव पीत्वेति पञ्चगव्यमित्यर्थः। तप्तकृच्छ्रपरत्वे प्रमाणयति च्यवन इति महासान्तपने धेनुद्वयं वृषस्य पञ्चपुराणमूल्यत्वात् तद्दानं पादोनधेनुत्रयसमम् अतस्तप्तकृच्छ्रतुल्यमित्यर्थः। एतेनोक्त स्य प्राजापत्याद्‌ गुरुत्वात् एतद्वचनैकवाक्यतया कृच्छ्रपदं न प्राजापत्यार्थमित्यर्थः ॥६८॥

एतन्नाभेरधस्ताद्गाढ़दंशे। तथा,

> नाभेरूर्द्ध्वन्तु दष्टस्य तदेव द्विगुणं भवेत्।
> तदेव त्रिगुणं बाह्वोर्मूर्ध्नि स्यात्तु चतुर्गुणम्॥

इदं चासृग्रुधिरदंशे देवलः,

> श्वदष्टः सागरगायां नद्यां स्नातो निराहारः

प्राणायामशतमावर्त्तयंस्त्रिरात्रादपगतपाप्मा भवतीति। एतन्नाभेरूर्द्ध्वमतिगाढ़दष्टस्य तथा हंस्यश्वखरोष्ट्रश्वसृगालविड्वराहरासभविड़ालपुंश्चलीभिर्दष्टः समुद्रगां नदीं गत्वा प्राणायामशतं कुर्य्यात् त्रिरात्रोपवासश्च इदञ्च बाह्वोर्दष्टस्य। शङ्खः,

> नौलौकाष्ठक्षतो विप्रः शुना दष्टस्तथैव च।
> त्रिरात्रन्तु व्रतं कुर्य्यात् पुंश्चलीदशनक्षतः॥

इदमपि नाभ्यधोगाढ़दष्टस्य। व्रतं यावकेन अत्र च पञ्चयावकव्रतसमानधेनुमूल्यपञ्चमभागो देयः। अत्रैव विषये व्रतस्थत्वेन विशेषमाह बौधायनः,

> व्रतस्थस्तु शुना दष्टस्त्रिरात्रमुपवसेत्।
> सघृतयावकं पीत्वा व्रतशेषं समापयेत्॥

---

अथ श्वादीति। ग्राम्यक्रव्यादा विड़ालादयः एकवचनादत्रैकप्राणायामः। एतच्चेति न भवति रुधिरं यस्मात्तस्मिन्नित्यर्थः। सर्वाधरदंशेत्याह देवल इति विषाणि शृङ्गी इत्यादि। अङ्गिरा इति ब्रह्मचारिणो रात्रौ त्र्यहं पयःपानं गृहस्थस्य तु यथाकालं त्र्यहं पयःपानम् इति भेदः एतदिति नाभेरधस्तात् पादयोरूर्द्ध्वमित्यर्थः। पादयोर्देवलवचने षोड़शप्राणायाममात्राभिधानादिति नाभेरूर्द्ध्वं द्विगुणं यदुक्तं यत्तुल्यं प्रायश्चित्तान्तरमाह देवल इति अङ्गिरोवचने गृहस्थस्य त्रिरात्रपयःपाने द्वैगुण्यमुक्तम् अत्र तु समुद्रगनदीस्नानप्राणायामशताधिकत्रिरात्रोपवास इति तुल्यं श्वदष्ट इत्यादिदेवलवचने नद्यां स्नात्वा स्वर्गे

बालस्याज्ञानत्वेऽशक्तत्वे वा तदीयपापक्षयं च सङ्कल्प्य पित्रादिः प्रायश्चित्तं कुर्य्यादित्यत्र पैठीनसिः, ब्राह्मणस्तु शुना-दष्टो गायत्र्यष्टसहस्राभिमन्त्रितं कृत्वा दष्टस्थानमुल्मुकेन दहेत् चतुर्भिर्वा कलसैश्च स्नायात् पूतो भवतीति। नदीसङ्गमे बालकस्याज्ञस्य अशक्तस्य वा तत्पितानुध्याय मनसा सर्व-कार्य्याणि कुर्वीत पितुरभावे सत्याचार्य्यः। अष्टसहस्रमष्टो-त्तरसहस्रम् एतच्च त्रिष्वपि सम्बध्यते तेन गायत्र्यष्टसहस्राभि-मन्त्रितं कृत्वा दंशस्थानमुल्मुकेन दहेत्। तथा चतुर्भिः कलसैः स्नायात् तथा नदीसङ्गमे वा स्नायादिति एतत्तु नाभेरधस्तात् अरुधिरदंशने। अस्मिन्नेव विषये शङ्खलिखितौ, श्वसृगाल-विड्वराहनरवानरवायसपुंश्चलीभिर्दष्टस्तु समुद्रगां नदीं गत्वा प्राणायामशतेन घृतप्राशनेन विशुद्ध्यति। उशनाः दंष्ट्रिदष्टे गायत्र्यष्टशतं प्राणायामशतञ्च इदं नाभ्यधः सरुधिरदंशविष-यम्। अष्टशतमष्टोत्तरशतं स्त्रियास्तु विशेषमाह पराशरः,

ब्राह्मणी तु शुना दष्टा जम्बूकोष्ट्रेण वा गवा।
उदितं सोमनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत्॥
कृष्णपक्षक्षये सोमो न दृश्येत कदाचन।

---

प्राणायामशतमुक्तं हस्त्यश्वेत्यादिवचने समुद्रगां नदीं गत्वेत्यनेनान्तर्जले प्राणायाम-शतमिति वाह्योदंशविषयमङ्गिरःप्रोक्तत्रैगुण्यतुल्यमुक्तम् अन्यथा देवलवचनयोः पौनरुक्त्यापत्तेः। शङ्ख इति अङ्गिरःप्रोक्तत्र्यहपयःपानेन त्र्यहयावकाहारस्य तुल्यत्वात् समानविषयतेति भावः। अत्र चेति पञ्चयावके धेनुरेकोक्ता पञ्चस्य पञ्चभागे त्रिरात्रयावकाहाराद्धेनुमूल्यस्य पञ्चमभागोऽयुक्त इत्यर्थः। अत्रैवेति अत्रैव विषये नाभेरधोगाढदंशने। गृहस्थस्य केनचिन्निमित्तेन व्रतस्थत्वे विशेष-माहेत्यर्थः। ब्रह्मचारिणस्त्वङ्गिरोवचने त्र्यह पयःपानमुक्तम् अतो गृहस्थविषयं

यां दिशं व्रजते सोमस्तां दिशं त्ववलोकयेत्।
मनुसमानविषयमेतत् ब्राह्मणीपदमुपलक्षणम्॥

तथा बौधायनः,

ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निवेशयेत्।
समुद्रदर्शनाद्वापि शुना दष्टा शुचिर्भवेत्॥
यां दिशं व्रजते सोमस्तां दिशन्त्ववलोकयेत्।

समुद्रदर्शनात् स्नानादित्यर्थः। नाभेरधस्तात्प्रमादा-दीषद्दष्टस्य। शातातपः,

गवां शृङ्गोदकस्नातः शुना दष्टस्तु ब्राह्मणः।
समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत्॥

शुना घ्रातादावपि स एव,

शुना घ्रातावलीढस्य नखैर्विलिखितस्य च।
अद्भिः प्रक्षालनञ्चोक्तमग्निना चोपचूर्णनम्॥

उपचूर्णनं दहनमित्यर्थः। यानि च मुन्यन्तरोक्तानि गुरुलघु-प्रायश्चित्तानि तान्युक्तविषय एव यथायोग्यं व्यवस्थेयानि॥६८॥

---

बौधायनवचनमिति भावः। आचार्य्य इत्यन्तं पैठीनसिसूत्रं मनसाऽनुध्याय तत्पापक्षयार्थं संकल्पेत्यर्थः। तथेति अष्टोत्तरसहस्राभिमन्त्रितैः चतुर्भिः कलसै-रित्यर्थः। तथाऽष्टोत्तरसहस्राभिमन्त्रिते नदीसङ्गमे वा स्नायात् अस्य त्वङ्गिरः-प्रोक्तप्रायश्चित्तादल्पत्वात् नाभेरधस्तादरुधिरदंशन इत्युक्तम् उशना इति गायत्र्यष्ट-शतं प्राणायामशतञ्च समुच्चितम् अङ्गिरःप्रोक्तत्र्यहपयःपानतुल्यं पराशर इति सोमनक्षत्रञ्चेति कृष्णपक्षचर्य्येऽमावास्यायाम् इत्यर्थः उपलक्षणमिति स्त्रीमात्रोप-लक्षणमित्यर्थः। स्त्रीत्वेन प्रायश्चित्ताल्पत्वस्य युज्यमानत्वात् नाभेरधस्तादिति प्रमादात् पादयोरीषद्दष्टस्येति मनूक्तप्राणायामसमानविषयम्॥ ६८॥

## अथ विप्रादिहते आत्मघातमृते अश्रुपातजलाग्निदान-प्रायश्चित्तम्।

तत्र संवर्त्तः,

> गोभिर्विप्रैर्हते चैव तथा चैवात्मघातके।
> नैवाश्रुपातनं कार्य्यं सद्भिः श्रेयोऽभिकाङ्क्षिभिः॥
> एषामन्यतमं प्रेतं यो वहेत दहेत वा।
> कटोदकक्रियां कृत्वा तप्तकृच्छ्रं समाचरेत्॥
> तच्छवं केवलं स्पृष्टमश्रु वा पातितं यदि।
> पूर्वोक्तेष्वपकारी स्यादेकाहं क्षपणं स्मृतम्॥

ऋज्वर्थं कटक्रिया भूमिप्रस्तरशयनादिका। उदकक्रिया तर्पणश्राद्धादिका। तप्तकृच्छ्रे धेनुचतुष्टयम् उपवासे च रजतरत्तिकाषट्कं देयम्। एतत् सकृत्करणे। अभ्यासे तु पराशरः,

> गोभिर्हतं तथोद्बन्धं ब्राह्मणेन च घातितम्।
> संस्पृशन्ति च ये विप्रा वोढारश्चाग्निदाश्च ये।
> अनुयातारो ये चान्ये ये चान्ये पाशभेदकाः॥
> सर्वे ते पापसंयुक्तास्तेषां वक्ष्यामि निष्कृतिम्।
> तप्तकृच्छ्रेण शुद्ध्येयुः कुर्य्युर्ब्राह्मणभोजनम्॥

---

अथ विप्रादिहतेत्यादि। पूर्वोक्तेषु दहनवहनादिषु अकर्त्ता यदि स्यात् सदा केवलस्पर्शाश्रुपाते एकोपवास इत्यर्थः। पराशर इति उद्बन्धम् उद्बन्धनमृतं पाशभेदकाः मृतस्य उद्बन्धनपाशभेदकाः अग्निदानादीनामभ्यासे तप्तकृच्छ्रमनडुत्सहितगोदानमित्यर्थः। यः क्रोधादिना बन्धनेन आत्मघातार्थं बहुतरव्यापारञ्च कृत्वा स्वयं निवृत्तः स एतेनैव उक्ततप्तकृच्छ्रादिना शुद्ध्येदित्यर्थः। एवञ्चात्यन्ताभ्यासे सकृत्करणे तु प्राजापत्यं वक्ष्यते जलाग्न्यादिभ्रष्टप्रकरणोक्त-

अनुडुत्सहितां गाञ्च दद्युर्विप्राय दक्षिणाम्।
एतेनैव तु शुद्धेरन्तु उद्बन्धो यदि जीवति ॥

गोभिर्हतमिति क्रीड़ादिभिर्गवाहतमित्यर्थः। ब्राह्मणेन च घातितमिति तन्मन्यूत्पादनादभिचारेण शापेन शस्त्रादिना वेत्यर्थः। अत्रैव स्नेहादिविशेषमाह वशिष्ठः, काष्ठलोष्ट्रपाषाण-विषशस्त्ररज्जुभिर्य आत्मानमवसादयति स आत्महा भवति।

य आत्मघातिनः कुर्य्यात् स्नेहात् प्रेतक्रियां द्विजः।
स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम् ॥
जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रञ्चरेत्।
त्रिरात्रं वाप्युपवसेत् घृतं स्निग्धेन वाससा ॥
प्राणायामं समभ्यस्य त्रिः पठेदघमर्षणम्।
अथ वै तेन कल्पेन गायत्रीं परिवर्त्तयेत् ॥

अपि वा

अग्निमुपसमाधाय कुष्माण्डैर्जुहुयाद् घृतम्।

यदन्यन्महापातकेभ्यः सर्वमेतेन पूयते तथाचामेदग्निश्च माम-न्युश्चेत्यादिना ऋचा। जीवन्नात्मत्यागीति क्रोधादिना आत्म-घातार्थं बहुतरव्यापारं कृत्वा मृत्युञ्च न प्राप्य स्वयं निवृत्तः प्राजापत्यं कुर्य्यात् कतिपयव्यापारं कृत्वा निवृत्तश्च घृताक्त-वस्त्राच्छादितः प्राणायामं कुर्वन्नघमर्षणं त्रिः पठंश्च त्रिरात्र-मुपवसेत्। अथवा घृताक्तवस्त्राच्छादितः प्राणायामं कुर्वन् गायत्रीञ्च जपन् त्रिरात्रमुपवसेत् अथवा अग्निमुपसमाधाय

---

चान्द्रायणन्तु बन्धनेन कृतमरणव्यापारस्य दैवादन्येन विमुक्तबन्धनस्य ज्ञेयं घृताक्त-वस्त्रेति घृताक्तवस्त्रस्य स्नेहाविरहात् नित्यस्निग्धता वशिष्ठवचने यदन्यादिति

यद्देवा देवहेलनमित्यादिकुष्माण्डमन्त्रैर्घृतं जुह्वत् त्रिरात्रमुपवसेत्। सर्व्वेष्वेव कल्पेषु अग्निश्च मामन्युश्चेत्यादिना मन्त्रेणाचमनं कार्य्यं यत्तु सुमन्तुनोक्तम्, उद्बन्धनपाशच्छेदनदहनवहनेषु मासं भैक्ष्यभक्षणं त्रिसवनस्नानञ्च स्यादिति तद्बलात्कारेण दहनवहनादिकं कारितस्य ज्ञेयम्। तथा वेतनेन वहनादिकरणे स एव। प्रेतस्पर्शिनाम् सम्बन्धिनां कृच्छ्रपादः प्रेतस्पर्शोऽत्र वहनादिरूपः यत्तु दक्षः,

> उद्बन्धनमृतञ्चैव यः स्पृशेद् ब्राह्मणः क्वचित्।
> तस्यापि शुद्धिर्विज्ञेया प्राजापत्येन नित्यशः॥

इति तदपि दहनवहनव्यतिरेकेण कामतः। सर्वाङ्गीनानभ्यासस्पर्शे ज्ञेयम्। यच्चाङ्गिरसा,

> उद्बन्धनमृतं प्रेतं यः स्पृशेद् ब्राह्मणः क्वचित्।
> तस्य शुद्धिं विजानीयात्तप्तकृच्छ्रेण नित्यशः॥

इत्युक्तं तदपि तथैवाभ्यासे। सर्वाङ्गस्पर्शे पराशरः,

> प्रेतीभूतञ्च यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः।
> अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत्॥
> त्रिरात्रे तु ततस्तीर्त्वा नदीं गत्वा समुद्रगाम्।
> प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति॥

---

महापातकिभ्यो यदन्यत् पापं तत्सर्वमेतेनोक्तप्रायश्चित्तेन पूयत इत्यर्थः। वहनादिरूप इति। आदिशब्दात् बन्धच्छेदनग्रहणं न तु दाहस्य तत्र प्रागुक्तं तप्तकृच्छ्रम् एवेति ध्येयम्। सर्वाङ्गीनेति सर्वाङ्गीनो योऽनभ्यासस्पर्शः सकृत् स्पर्शस्तत्रेत्यर्थः। तदपीति तथैव दहनवहनव्यतिरेकेणेत्यर्थः। विष्णुरिति द्विजस्त्रैवर्णिकः प्रेतानुगमनमर्थाच्छूद्रस्यानुगमनं द्विजप्रेतानुगमनस्य परतो वक्ष्यमाणत्वात् शूद्रप्रेतानु

तथा विष्णुः, द्विजः प्रेतानुगमनं कृत्वा त्रिरात्रमुपोष्य स्रवन्तीमासाद्य गायत्र्यष्टसहस्रं जपेत् द्विजप्रेतस्याष्टशतं शूद्रः प्रेतानुगमनं कृत्वा स्नानमाचरेत्। द्विज इति क्षत्रियो वैश्यश्च एवं द्विजप्रेतस्येत्यत्रापि त्रैवर्णिकस्येति विज्ञेयम्। अष्टसहस्रम् अष्टोत्तरसहस्रम् एवं शतेऽपि। तदनयोः पराशरविष्णूक्तयोर्विकल्पः॥ ७०॥

अथ बलात्कारकारितम्लेच्छदास्याशुभकर्मप्रायश्चित्तम्।

तत्र देवलः,

दासीकृतो बलान् म्लेच्छैश्चाण्डालाद्यैश्च दस्युभिः।
अशुभं कारितं कर्म गवादेः प्राणिहिंसनम्॥
उच्छिष्टमार्जनञ्चैव तथा तस्यैव भक्षणम्।
खरोष्ट्रविड्वराहाणामामिषस्यैव भक्षणम्॥
तत् स्त्रीणाञ्च तथा सङ्गं ताभिश्च सह भोजनम्।
मासोषितद्विजातौ तु प्राजापत्यं विशोधनम्।
चान्द्रायणन्त्वाहिताग्नेः पराकस्त्वथवा भवेत्॥
चान्द्रायणं पराकं वा चरेत् संवत्सरं द्विजः।
संवत्सरोषितः शूद्रो मासार्द्धं यावकं पिबेत्॥
मासं विप्रोषितः शूद्रः कृच्छ्रपादेन शुद्ध्यति।
ऊर्द्ध्वं संवत्सरात् कल्प्यं प्रायश्चित्तं द्विजोत्तमैः॥

---

गमनं चातुर्वर्ण्यप्रेतानुगमनं कृत्वेत्यर्थः। द्विज इतीति न केवलं ब्राह्मणः किन्तु क्षत्रियो वैश्यश्च अतएव पश्चाद्द्विजमित्युक्तं विकल्प इति अनयोः प्राणायामशतगायत्रीसहस्रजपयोः एतेन पराशरवचने ब्राह्मणपदं द्विजात्युपलक्षणं मन्तव्यम्॥७०॥

अथ बलात्कारकारितेति। देवल इति, गोवधादावपि बलात्कारितत्वात्

संवत्सरैश्चतुर्भिश्च तद्भावं सोऽधिगच्छति।
ह्रासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मनः॥

तदिह म्लेच्छैश्चाण्डालाद्यैर्दस्युभिर्यदा अनाहिताग्नि-द्विजातिरुच्छिष्टमार्जनोच्छिष्टभक्षणखरोष्ट्रविड्वराहमांसभक्षणम्लेच्छस्त्रीसङ्गतदीयस्त्रीसहभोजनादिकुत्सितं कर्म बलात् मासैकं कारितस्तदा तेन प्राजापत्यं साग्निना तु चान्द्रायणं कार्य्यं क्षत्रियवैश्याभ्यां पराकव्रतं प्राजापत्ये धेनुरेका चान्द्रायणे धेन्वष्टकं पराके धेनुपञ्चकम्। अनग्निना तु ब्राह्मणेन वत्सरैकदास्यकरणे चान्द्रायणं कार्य्यम् इतराभ्यां पराकः। शूद्रेण तु मासैकदास्ये कृच्छ्रपादव्रतं वत्सरैकदास्ये मासार्द्धयावकपानं कृच्छ्रपादाशक्तौ द्वादशपणलभ्यं काञ्चनं मासार्द्धयावकपानाशक्तौ धेनुरेका देया। वत्सरादूर्द्धं वत्सरचतुष्टयं यावत्तावद्भागहारेण प्रायश्चित्तमूहनीयं तदूर्द्धं तत्समत्वेन पतितत्वात् प्रायश्चित्ताभावाद् मरणम्॥ ७१॥

अथानुदकमूत्रपुरीषकरणप्रायश्चित्तम्।

तत्र मनुः,

विनाद्भिरप्सु वाप्यार्त्तः शारीरं सन्निषेव्य तु।
सचेलो वहिराप्लुत्य गामालभ्य विशुद्ध्यति॥

---

वचनादल्पप्रायश्चित्तं यत्तु सिद्धं भुक्त्वा पराक इति विष्णूक्तं बलात्कारे पराकव्रतं तद्दासीकृतेतरविषयम्। तत् स्त्रीणां सङ्गः सहवासः न तु मैथुनं तत्र चाण्डाल-तुल्यत्वाभिधानात् एवंविधवर्ष्यामासोषिते द्विजातौ त्रैवर्णिके साग्नि विप्रस्य चान्द्रा-यण क्षत्रियवैश्ययोः साग्न्योः पराक इत्यर्थः ह्रासः पादह्रास इत्यर्थः॥ ७१॥

शारीरं मूत्रपुरीषकरणम् इदम् अत्यन्तार्त्तस्य जलं जिहासोः । यमः,

आपद्गतो विना तोयैः शारीरं यो निषेवते ।
एकाहं क्षपणं कृत्वा सचेलं स्नानमाचरेत् ॥ ७२ ॥

इदमभ्यासे ।

### अथ जलाग्न्योरशुचिप्रक्षेपप्रायश्चित्तम् ।

तत्र शङ्खः,

क्षिप्त्वाग्नावशुचि द्रव्यं तदेवाम्भसि मानवः ।
मासमेकं व्रतं कुर्य्यादपाक्रुश्य यथागुरुम् ॥

व्रतं यावकेन इदमभ्यासे अत्र धेनुद्वयम् । शङ्खलिखितौ रेतो मूत्रपुरीषाणि उदके कृत्वा त्रिरात्रोपोषितः इदमापः प्रवहत इति जपेदिदं ज्ञानतः ईषदार्त्तस्य सुमन्तुः । अप्स्वग्नौ वा मेहतस्तप्तकृच्छ्रो भवेदिति । अनार्त्तस्य कौतूहलादिना इदमत्र धेनुचतुष्टयम् ॥ ७३ ॥

### अथान्योन्यानुरक्तद्वेषोत्पादनप्रायश्चित्तम् ।

---

अथानुदकेति । अत्यन्तार्त्तस्य स्वतः जलं जलाक्षेपं जिहासोः त्यक्तुमिच्छोः ॥ ७२ ॥

अथ जलाग्न्योरिति । अशुचि द्रव्यं रेतोमूत्रपुरीषं क्षिप्त्वा कृत्वेत्यर्थः । इदमभ्यास इति सकृत्करणे तु पञ्चव्रतं तत्र धेनुरेका इदमनार्त्तस्य कौतूहलं विना कौतूहले तु तप्तकृच्छ्रं वक्ष्यते ईषदार्त्तस्य तु त्रिरात्रोपवासः । अत्यन्तार्त्तस्य तु प्राक् प्रकरणे मनूक्तं सचेलस्नानमात्रम् अपाक्रुश्य गुरुमिति उपपातकाक्रोशविषयमिदं तत्रैव बौधायनेन कृच्छ्रस्याभिहितत्वात् ॥ ७३ ॥

तत्र प्रचेताः, मित्रच्छेदकरणादहोरात्रमनश्नन् भूत्वा पयः पिबेत् । तदत्र पञ्चरजतमाषका देयाः ॥ ७४ ॥

अथ शक्रधनुपलाशाग्निदर्शकप्रायश्चित्तम् ।

तत्र ऋष्यशृङ्गः,

इन्द्रचापं पलाशाग्निं यदन्यस्य प्रदर्शयेत् ।
प्रायश्चित्तमहोरात्रं धनुर्दण्डस्य दक्षिणा ॥

इदं शक्रधनुरिति व्यपदिश्य कामतो दर्शयित्वा रूप्यमाषकत्रयं देयम् ॥ ७५ ॥

अथ श्राद्धनिमन्त्रितब्राह्मणानाह्वानप्रायश्चित्तम् ।

तत्र यमः,

केतनं कारयित्वा तु योऽभिपातयति द्विजम् ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥
एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतव्रतः ।
यतिचान्द्रायणं चीर्त्वा ततः पापाद्विमुच्यते ॥

अत्र पयस्विधेनुचतुष्कम् देयम् ॥ ७६ ॥

---

अथान्योन्येति तदत्रेति अहोरात्रोपवासे रजतमाषकत्रयम् अपरदिने पयःपानमात्रे रजतमाषकद्वयं मिलित्वा पञ्चमाषकाः ॥ ७४ ॥

अथ शक्रधनुरिति । पलाशाग्निं पलाशवने जातमग्निम् ॥ ७५ ॥

अथ श्राद्धनिमन्त्रितेति । अतिपातयति अतिक्रामयति एतच्चादुष्टब्राह्मणविषयम् ॥ ७६ ॥

अथ देवागारकृतेष्टकाकाष्ठशिलादिना स्वगृहकरण-

प्रायश्चित्तम्।

तत्र निन्दायां यमः,

इष्टकाकाष्ठाश्मलोहान् देवालयसमुच्चितान्।
गृहीत्वा स्वगृहे ये तु लोभाद्वै योजयन्ति च॥
एकाकिनस्तथोद्विग्नास्तृट्क्षुधा परिपीड़िताः।
बन्धने ते तु तिष्ठन्ति यावत् पापस्य संचयः॥

अत्र प्रायश्चित्ताश्रवणात् चान्द्रायणेन चैकेन सर्वपापक्षयो भवेदिति धेन्वष्टकदानम्॥ ७७॥

अथ निष्ठीवनप्रायश्चित्तम्।

तत्र वृद्धशातातपः,

वातकर्मणि निष्ठीवे दन्तश्लिष्टे तथानृते।
क्षुते पतितसम्भाषे दक्षिणश्रवणं स्पृशेत्॥

एतज्जलाद्यभावविषयं तथा,

क्षुत्वा निष्ठीव्य वासन्तु परिधायाचमेद्बुधः।
कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्॥
कुर्वीतालभनं क्वापि दक्षिणश्रवणस्य तु।
यथा विभवतो ह्येतत् पूर्व्वाभावे ततः परम्॥
अविद्यमाने सर्व्वस्मिन्नुत्तरंप्राप्तिरिष्यते।

---

अथ देवागारेति स्पष्टार्थम्॥ ७७॥

इन्द्रियेण प्रमृष्टं स्यादमेध्यं यदि कर्हिचित्।
मुखेऽपि संस्पर्शगतं तत्र स्नानं विशोधनम्॥ ७८॥

अथ यतिप्रायश्चित्तम्।

तत्र छागलेयः,

व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च।
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते॥
अहोरात्रोषितो भूत्वा कृच्छ्रं चान्द्रायणं चरेत्।

कृच्छ्रं चान्द्रायणविशेषणं व्रतोपव्रतान्याह बौधायनः, अथेमानि व्रतानि अहिंसा सत्यवचनमस्तेयं मैथुनस्य वर्जनमथोपव्रतानि। अक्रोधो गुरुशुश्रूषा अप्रमादशौचाहारशुद्धिरिति। ऋत्वर्थम्। ब्रह्मपुराणं,

उपेत्य तु स्त्रियं कामात् प्रायश्चित्तं विधीयते।
प्राणायामशतं कुर्य्यात् कुर्य्यात् सान्तपनन्तथा॥

उपेत्य तु स्त्रियं कामादिति रिरंसया स्त्रीसमीपमुपसृत्यमात्रमित्यर्थः। तथा,

अहोरात्रोपवासश्च प्राणायामशतं तथा।
असद्वादे च कर्त्तव्यं यतिना धर्मलिप्सुना॥

तथा, अकामादेव हिंसेत यदि भिक्षुः पशून् कृमीन्।
कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथाचरेत्॥

---

अथ निष्ठीवनादीति। अनृते अनृतभाषणे आचमनस्थाने अङ्ग इति इन्द्रियेण हस्तपदादिना प्रमृष्टं मर्दितम्॥ ७८॥

अथ यतीति। बौधायन इति अप्रमादः स्वधर्मे सावधानता तथेति असद्वादः असत्कथा मैथुनादिकथा तत्र तथेति पशुहिंसायां चान्द्रायणं, कृमीति

> स्कन्देतेन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यदा यतिः।
> तेन कारयितव्या वै प्राणायामास्तु षोड़श॥
> दिवास्कन्दस्य विप्रस्य प्रायश्चित्तं विधीयते।
> त्रिरात्रमुपवासश्च प्राणायामशतं तथा॥

स्त्रियं विनैव कामतः स्कन्दस्य त्रिरात्रं प्राणायामशताचरणञ्च। तथा,

> रात्रौ स्कन्दः शुचिः स्नातो द्वादशैव तु धारणाः।
> प्राणायामेन शुद्धात्मा विरजा जायते द्विजः॥
> एकान्नं मधुमांसं वा आमश्राद्धं तथैव च।
> अभोज्यानि यतीनान्तु प्रत्यक्षलवणानि च॥
> एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते।
> प्राजापत्येन कृच्छ्रेण ततः पापात् प्रमुच्यते॥

विश्वामित्रः,

> योगिनो योग एवेति प्रमादे शुद्धिरिष्यते।
> ज्ञानिनो ज्ञानमेवेति शुद्ध्यभ्युदयसाधनम्॥

शुद्धिः पापक्षयः, अभ्युदयः स्वर्गादिः। मनुः,

---

बहुवचनात् अनेककृमिहिंसायां कृच्छ्रातिकृच्छ्रं धेनुपञ्चकात्मकं सुमन्तूक्तम्। स्कन्देत शुक्रं त्यजेत दिवास्कन्दनं यस्य तस्य विप्रस्य यतेः षोड़षप्राणायामाः प्रायश्चित्तमित्यर्थः रात्रौ स्कन्द इति स्त्रीदर्शनविषयं द्वादशैव तु धारणाः प्राणायामान् कुर्य्यादिति शेषः एकान्नम् एकगृहभोजनम्। योग आत्मनि मनोयोजनं ज्ञानमात्मज्ञानं स्वर्गादिरिति स्वर्गोऽत्र ब्रह्मलोकः आदिशब्दान्मोक्षग्रहणम्। स्वप्ने सिक्त्वेति यद्यप्येतद्वचनं ब्रह्मचारिविषयम् अतएवावकीर्णिप्रकरणे प्रागुक्तं

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥ ७९॥

व्यक्तार्थम्।

अथ व्रतभङ्गप्रायश्चित्तम्।

तत्र वायुपुराणे,

लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो यदा भवेत्।
उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम् ॥
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्।

वाशब्दः समुच्चये तेन मुण्डनञ्च कुर्य्यादित्यर्थः। अस्य निन्दामाह छागलेयः,

पूर्वं गृहीत्वा संकल्पं नाचरेत् काममोहितः।
जीवन् भवति चाण्डालो मृतः श्वा चैव जायते ॥८०॥

अथोष्ट्ररासभयानप्रायश्चित्तम्।

तत्र मनुः,

उष्ट्रयानं समारुह्य खरयानञ्च कामतः।
स्नात्वा च विप्रो दिग्वासाः प्राणायामेन शुद्ध्यति ॥

[illegible]ज्ञवल्क्यः,

प्राणाया[illegible]मं जले स्नात्वा खरयानोष्ट्रयानगः।
नग्नः स्नात्वा च सुप्त्वा [illegible] गत्वा चैव दिवा स्त्रियम् ॥

---

[illegible]ापि स्वप्ने रेतःस्खलने यतीनां वचनान्तराभावादेतदेव प्रायश्चित्तं कल्प्यम् ॥ ७९ ॥

[illegible]व्रतभङ्गेति स्पष्टार्थम् ॥ ८० ॥

कुर्य्यादित्यध्याहार्य्यम् उष्ट्रयुक्तं यानमुष्ट्रयानम् एवं खरयानमपि इदं सकृदारोहणे। अभ्यासे तु यमः,

खरयानमुष्ट्रयानं योऽधिरोहेद्द्विजोत्तमः।
अपो वा प्रविशेन्नग्नस्त्रिरात्रं क्षपणं स्मृतम्॥

विष्णुः, उष्ट्रेण खरेण वा गत्वा नग्नः स्नात्वा भुक्त्वा च प्राणायामत्रयं कुर्य्यात्। अव्यवधानेन खरोष्ट्रारोहणे इदम्। नग्नस्नाने ईषदभ्यासे शङ्खः,

दिवा तु मैथुनं गत्वा नग्नः स्नात्वा तथाम्भसि।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत्॥

अत्रापि नग्नस्नाननग्नपरस्त्रीदर्शनयोः कामाभ्यासापेक्षया व्यवस्था अत्र उपपातकगणपठिते यत्र प्रायश्चित्तं नोक्तं तत्रोपपातकसामान्यप्रायश्चित्तमेव ग्राह्यं यथा त्रैमासिकं गोव्रतमभिधायाह मनुः,

एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः।
अवकीर्णिवर्ज्जं शुद्ध्यर्थं चान्द्रायणमथापि वा॥

तत्र याज्ञवल्क्यः,

उपपातकशुद्धिः स्यादेवञ्चान्द्रायणेन वा।
पयसा वापि मासेन पराकेणाथवा पुनः॥

---

*अथोष्ट्ररासभयानेति। नग्न इति स्नानशयनाभ्यां संबध्यते यम इति अभ्यासोऽत्र भूयोऽभ्यासः ईषदभ्यासे द्विरभ्यासे इदं प्राणायामत्रयं प्रायश्चित्तमित्यर्थः। शङ्खवचनं कामाभ्यासे एवं दिवामैथुनेऽपि ज्ञेयं तत्र याज्ञवल्क्य इति

एतान्येव प्रायश्चित्तानि गुरुलाघवमवगम्य व्यवस्थेयानि ॥८१॥

अथ जातिभ्रंशकरप्रायश्चित्तम् ।

तत्र मनुः,

ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः ।
जैह्म्यञ्च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥
जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ।
चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥

रुजः कृत्या पीड़ाकरणम् अघ्रेयः लशुनादि जैह्म्यं मित्रे कुटिलत्वं पुंसि मैथुनं पुरुषे ग्राम्यधर्मकरणम् । तत्र कामतः सान्तपनं तत्र धेनुद्वयम्, अकामतः प्राजापत्यं तत्र धेनुरेका एतच्चाभ्यासे बोद्धव्यं रुजः कृत्येति विशेषमाह मनुः,

अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥

तथा याज्ञवल्क्यश्च,

विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥

अत्र दण्डशब्दः शस्त्रमपि लक्षयति अतिकृच्छ्रं धेनुत्रयं कृच्छ्रातिकृच्छ्रे धेनुपञ्चकम् । यमः,

---

तत्र उपपातकप्रायश्चित्त इति प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्यां संसर्गप्रायश्चित्तम् ॥ ८१ ॥

इदानीम् अवसरप्राप्तानां जातिभ्रंशकरादीनां पञ्चानां प्रायश्चित्तानि विवेचयिष्यमाणः प्रथमं जातिध्वंसकरप्रायश्चित्तमाह अथेति । रुजः कृत्येति रुजः कृत्येऽत्र विशेषमाहेत्यर्थः । याज्ञवल्क्यश्चेति अभ्यन्तरशोणिते कृच्छ्रः तप्तकृच्छ्रः

कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथाचरेत्।
दशसंख्याश्च गा दद्यादङ्गच्छेदो यदा भवेत्॥

अत्र च द्विजाङ्गच्छेदे व्रतद्वयस्य गोदानानाञ्च समुच्चयः विशेषमाह बृहस्पतिः,

काष्ठादिना ताड़यित्वा त्वग्भेदे कृच्छ्रमाचरेत्।
अस्थिभेदेऽतिकृच्छ्रन्तु पराकञ्चाङ्गकर्त्तने॥ ८२॥

अथ सङ्करीकरणापात्रीकरणमलावहपापप्रायश्चित्तम्।
तत्र मनुः,

खरोष्ट्राश्वमृगेभानामजाविकबधस्तथा।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्॥
कृमिकीटवयो हत्या मद्यानुगतभोजनम्।
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम्॥

मद्यानुगतभोजनं मद्यपानसमये यदुपस्थापितं फलमूलादि अधैर्य्यं गीतश्रवणादि अल्पेऽप्यपचये अत्यन्तवैकल्यमिति कल्पतरुः,

सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्।
मलिनीकरणीये तु तप्तः स्याद् यावकस्त्र्यहम्॥

---

दण्डनिपातनमात्रेऽतिकृच्छ्रस्योक्तत्वात् धेनुपञ्चकमिति कृच्छ्रातिकृच्छ्रोऽत्र सुमन्तूक्तो ग्राह्यः विषयलाघवात् न तु याज्ञवल्क्योक्तः तत्र धेनुषट्कस्य प्रागुक्तत्वात्॥ ८२॥

अथ सङ्करीकरणेति। मनुरिति सङ्करीकरणापात्रीकरणयोश्चान्द्रायणमत्यन्ताभ्यासविषयं मलिनीकरणे त्र्यहयावकं कामतः सकृद्विषयमिति वक्ष्यते अत्र च यत्र यत्र विशिष्टप्रायश्चित्तं नोक्तं तत्रेदं प्रायश्चित्तम् इति वक्ष्यते। अधैर्य्य-

तथा विष्णुः,

> ग्राम्यारण्यानां पशूनां हिंसासङ्कीर्णकरणम् ।
> सङ्कीर्णकरणं कृत्वा मासमश्नीत यावकम् ॥
> कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तन्तु कारयेत् ।
> निन्दितेभ्यो धनादानं वाणिज्यं कुषीदजीवनम् ॥
> असत्यं शूद्रसेवनमित्यपात्रीकरणम् ।
> अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति ।
> शीतकृच्छ्रेण वा भूमि महासान्तपनेन वा ॥

पक्षिणां जलचराणाञ्च घातनं कृमिकीटघातनं मद्यानुगत-भोजनमिति मलावहानि ।

> मलिनीकरणीये तु तप्तकृच्छ्रं समाचरेत् ।
> कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम् ॥

अत्र, सङ्कीर्णकरणे सकृत्करणे मासयावकम् ।

अभ्यासे कृच्छ्रातिकृच्छ्रम् अत्यन्ताभ्यासे चान्द्रायणम् । अपात्री-करणे च सकृत्करणे तप्तकृच्छ्रं चतुरहसाध्यं शीतकृच्छ्रं वा शीतकृच्छ्रे तप्तकृच्छ्रेति कर्त्तव्यतैव किन्तु तदेव द्रव्यमत्र शीतलमिति विशेषः अभ्यासे तु महासान्तपनम् अत्यन्ता-भ्यासे तु चान्द्रायणं मलावहे तु सकृदाचरणे त्र्यहयावकम्, अभ्यासे तप्तकृच्छ्रम्, अत्यन्ताभ्यासे तु कृच्छ्रातिकृच्छ्रमिति

---

मिति सर्वदा गीतश्रवणनृत्यदर्शनादेर्व्यसनत्वेन पापहेतुत्वादिति भावः । कल्प-तरुमते तु अपचये वैकृत्यस्य पापहेतुत्वानौचित्यमित्यस्वरसः विष्णुरिति असत्यम् असत्यभाषणं शीतकृच्छ्रेण वेत्यनन्तरं भूमीति पाठोऽनाकर एव विष्णु-सूत्रे प्रश्नाभावेन कस्यापि संबोध्यस्याभावात् मनुविष्णुवचनयोर्विषयविभागमा

यथायोग्यमूह्यम्। एषु चतुर्षु यत्र यत्र प्रायश्चित्तविशेषो नोक्तस्तत्रैष एव बोद्धव्यः ॥ ८३ ॥

अथ प्रकीर्णप्रायश्चित्तम्।

तत्र मनुविष्णुविश्वामित्राः,

अनुक्तनिष्कृतीनान्तु पापानामपनुत्तये।
शक्तिञ्चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत् ॥

अनुक्तनिष्कृतीनि विशेषतोऽनुक्तप्रायश्चित्तानि तथा विष्णुः, यदनुक्तं तत् प्रकीर्णकम्।

प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम्।
प्रायश्चित्तं बुधः कुर्य्याद् ब्राह्मणानुमतः सदा ॥

अनुक्तम् अनुक्तनिष्कृतिकं पापम्। शङ्खलिखितौ क्रयविक्रय-दुष्टभोजनप्रतिग्रहेष्वनादिष्टप्रायश्चित्तेषु चान्द्रायणं प्राजापत्यं वा। हारीतः,

चान्द्रायणं पराको वा तुलापुरुष एव वा।
गवाञ्चैवानुगमनं सर्वपापप्रणाशनम् ॥

उशना,

यत्रोक्तं यत्र वानोक्तमिह पातकनाशनम्।
प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः ॥

---

अत्रेति मासयावके धेनुद्वयं कृच्छ्रातिकृच्छ्रे सुमन्तूक्तधेनुपञ्चकं चान्द्रायणे सार्द्ध-सप्तधेनवः अपात्रीकरणे चतुरहसाध्ये तप्तकृच्छ्रे शीतकृच्छ्रे च सपादधेनुः महा-सान्तपने धेनुद्वयं मलावहे तु त्र्यहं तप्तयावकपाने पुराणोक्तं तप्तकृच्छ्रे चतुरहसाध्ये सपादधेनुः तत्रैष इति एषः प्रागुक्तप्रायश्चित्तविशेष इत्यर्थः ॥ ८३ ॥

पापस्य गुरुत्वलाघवं वीक्ष्य प्रायश्चित्तान्येतानि शिष्टैर्व्यव-स्थेयानि ॥ ८४ ॥

अथास्पृश्यस्पर्शनप्रायश्चित्तम्।

तत्रानुच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तमाह। मनुः,

दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकान्तथा।
शवन्तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानं समाचरेत्॥

दिवाकीर्त्तिश्चाण्डालः तत्स्पृष्टी शवस्पृष्टी शवस्पृष्टं दिवाकीर्त्ति-श्चितिं यूपं रजस्वलां स्पृष्ट्वा प्रमादतो विप्रः स्नानं कृत्वा विशुद्ध्यतीति वृहस्पतिवचनात् सस्नेहं मानुषास्थि शवस्पृष्टिन-मिति च्यवनवचनाच्च प्रमादग्रहणादकामविषयमिदं कामे तु वृहस्पतिः,

पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा तु कामतः।
स्नात्वा सचेलं हुत्वाग्निं घृतं प्राश्य विशुद्ध्यति॥

अत्र घृतहोमो महाव्याहृतिभिः द्रव्यशुद्धिप्रकरणे पाठात् घृतप्राशनविधिमात्रं नोपवासः स्नानं सचेलं सशिरस्कमाह वृद्धशातातपः,

चाण्डालं पतितं व्यङ्गमुन्मत्तं शवमन्त्यजम्।
सूतिकां सूयिकां नारीं रजसा च परिप्लुताम्॥

---

इदानीं नवमे प्रकीर्णपापे प्रायश्चित्तं निरूपयति। अथ प्रकीर्णेति अनुक्तनिष्कृतिकं पापं प्रकीर्णाख्यमित्यर्थः तुलापुरुषाख्यं व्रतमित्यर्थः ॥ ८४ ॥

इदानीमस्पृश्यस्पर्शमात्रे लघुसंसर्गे प्रायश्चित्तमाह अथास्पृश्यस्पर्शनेति। नन्व घृतप्राशनमात्रविधानादन्नान्तरनिवृत्तिर्भवतु इत्याशङ्क्याह द्रव्यशुद्धीति घृत-प्राशनं द्विविधं भवति पापक्षयसाधनं शरीरशुद्धिसाधनञ्च तत्र दानेन काम-

श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचेलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति॥

सूयिका या प्रसवं कारयति व्यङ्गः पाख्यादिविकलः व्यङ्गो-न्मत्तयोः सदाचारहीनत्वादस्पृश्यताश्वादीनाञ्च त्रयाणां शिरः-स्पर्शने स्नानमिदं वक्ष्यमाणशातातपवचनात् यतः श्वादिषु कामतोऽपि न स्नानं व्यवस्थातुं युक्तं चाण्डालासमत्वात् अतएवोच्छिष्टस्य कुक्कुरादिस्पर्शे एकोपवासः चाण्डालस्पर्शे तु षड्वक्ष्यते तस्माच्छिरः स्पर्श एव वाचनिकं स्नानं तथा विष्णु-रपि वस्त्रक्षालनमाह चिताधूमसेवने सर्वे वर्णाः स्नानमाचरेयुः मैथुने दुःस्वप्ने वमनविरेकयोश्च श्मश्रुकर्मणि कृते शवस्पृष्टञ्च स्पृष्ट्वा रजस्वलाश्वचाण्डालयूपांश्च भक्ष्यवर्ज्यं पञ्चनखशवं तदस्थि सस्नेहं सर्वेष्वेतेषु स्नानपूर्वं वस्त्रं प्रक्षालितं विभृयात् मैथुने च स्नानम् ऋतुकाल एव यथा शातातपः,

ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम्।
अनृतौ तु यदा गच्छेत् शुद्धिर्मूत्रपुरीषवत्॥

तेनानुच्छिष्टस्य चाण्डालादिस्पर्शे अकामतः सचेलसशिरस्कं स्नानं कामतो होमो घृतप्राशनञ्चाधिकम्। यच्च प्रचेतसोक्तं स्वकायेन चाण्डालकायस्पर्शे त्रिरात्राच्छुद्धिरिति तत् सर्वा-ङ्गीनस्पर्शविषयम् आतुरे विशेषमाह यमः,

---

क्लेशेन वा पापक्षयो भवति अत्र द्रव्यशुद्धिप्रकरणे पाठात् शरीरशुद्ध्यर्थमेव घृत-प्राशनं न तु पापक्षयसाधनं पापक्षयस्तु स्नानादेव अतो घृतप्राशनविधिरयं न तु भक्ष्यान्तरव्युदासरूपा परिसंख्या अतएव साक्ष्यनस्थिवधप्रकरणे पापक्षयसाधन-त्वान्यथानुपपत्त्यैव कायक्लेशहेतुतया घृतप्राशनपरिसंख्योक्तेति वक्ष्यमाणेति शुद्धि भगस्तथा वनिता सर्ववर्णगा इत्याद्यभिधाय एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजा-

आतुरे स्नानमापन्ने दशकृत्वस्त्वनातुरः।
स्नात्वा स्नात्वा स्पृशेत्तन्तु ततः शुद्येत् स आतुरः॥

रात्रौ विशेषमाह देवलः,

दिवाहृतैर्जलैः स्नानं निशि कुर्य्यान्निमित्ततः।
प्रक्षिप्य च सुवर्णञ्च सन्निधाप्य च पावकम्॥

अतएव शातातपः,

आदित्येऽस्तमिते रात्रावस्पृश्यं स्पृश्यते यदि।
भगवन्! केन शुद्धिः स्यात्तन्मे ब्रूहि सुनिश्चितम्॥
अनस्तमित आदित्ये संगृहीतन्तु यज्जलम्।
तेन सर्वात्मना शुद्धिः शवस्पृष्टञ्च वर्जयेत्॥

पराशरः,

स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन तु।

शिशोर्विशेषमाह वृद्धशातातपः,

शिशोरप्युक्षणं कार्य्यं बालस्याचमनं स्मृतम्।
रजस्वलादिसंस्पर्शे स्नातव्यन्तु कुमारकैः॥

तथा,

प्राक्चूड़ाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः।
कुमारस्तु स विज्ञेयो यावन्मौञ्जीनिबन्धनम्॥ ८५॥

---

त्रिषु तोयेन चालनं कृत्वा आचान्तः शुचितामियात् इति वचनादित्यर्थः हीनान्तरमाह यत इति चाण्डालासमत्वात् चण्डालतः प्रकृष्टत्वादित्यर्थः। तस्मादिति असमत्वेऽपि वक्ष्यमाणशातातपोक्तमित्यर्थः। तथेति सचेलस्नाने आदौ वस्त्रचालनरूपं विशेषमाहेत्यर्थः। यच्चेति त्रिरात्राच्छुद्धिः त्रिरात्रात् परं शुद्धिस्त्रिरात्रं व्याप्य शुचिरित्यर्थः आदित्येऽस्तमिते सन्ध्यायामित्यर्थः। भव-

अथोच्छिष्टस्य चाण्डालादिस्पर्शप्रायश्चित्तम्।

तच्च सद्यः स्नात्वा परदिने करणीयं यथापस्तम्बः,

येन केनचिदुच्छिष्टः संस्पर्शं यः परैः सह।
गच्छेत् सद्य स आप्लुत्य प्रायश्चित्तेन युज्यते॥

स्नातकप्रायश्चित्ते वृद्धशातातपः,

चाण्डालैः पतितैः स्पृष्टो विण्मूत्रे तु कृते द्विजः।
त्रिरात्रं तत्र कुर्वीत ऊर्द्धोच्छिष्टः षड़ाचरेत्॥

ज्ञानतः इदं तथा सुमन्तुः,

चाण्डालं पतितञ्चैव तथा नारीं रजस्वलाम्।
उच्छिष्टस्तु द्विजः स्पृष्ट्वा प्राजापत्येन शुद्ध्यति॥

उच्छिष्ट ऊर्द्धोच्छिष्टः प्राजापत्यषड़ुपवासयोश्च समानत्वं तथा-पस्तम्बः,

भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत्।
अर्द्धोच्छिष्टे स्मृतः पादः पाद आमाशने तथा॥

अर्द्धोच्छिष्टो येन ग्रास आस्ये प्रक्षिप्तः न च निगीर्णः।
काश्यपः,

श्वशूकरान्त्यचाण्डालमद्यभाण्डरजस्वलाः।
यद्युच्छिष्टः स्पृशेत्तत्र कृच्छ्रं सान्तपनं चरेत्॥

सान्तपनं सप्ताहसाध्यम् अत्र धेनुद्वयम् एतत्कामाभ्यासे अज्ञाने त्वापस्तम्बः,

---

अथोच्छिष्टस्य चण्डालादीति षड़ाचरेत् षड़ुपवासान् कुर्य्यादित्यर्थः। येनेति

भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा।
प्रमादात् स्पर्शनं गच्छेत्तत्र कुर्य्याद्विशोधनम्॥
गायत्र्यष्टसहस्रन्तु द्रुपदानां शतं तथा।
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥

सुमन्तुकाश्यपवाक्ययोः, साहचर्य्याद्रजस्वलास्पर्शेऽप्येतदेव।
आपदि स्नानादिविशेषमाह दक्षः,

पाने मैथुनसंसर्गे तथा मूत्रपुरीषयोः।
संस्पर्शं यदि गच्छेत्तु शवोदक्यान्त्यजैः सह॥
दिनमेकञ्चरेन्मूत्रे पुरीषे तु दिनद्वयम्।
दिनत्रयं मैथुने स्यात् पाने स्यात्तु चतुष्टयम्॥ ८६॥

अथ तैलाभ्यक्तस्य चाण्डालादिस्पर्शप्रायश्चित्तम्।

तत्र वृद्धशातातपः,

येन केनचिदभ्यक्तश्चाण्डालैः स्पृश्यते यदि।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥

येन केनचिद् घृततैलादिना। व्याघ्र आह,

चाण्डालोदकसंस्पृष्टः स्नानं कृत्वा विशुद्ध्यति।
उच्छिष्टस्तेन संस्पृष्टस्त्रिरात्रेण विशुद्ध्यति॥ ८७॥

अथ रजकादिस्पर्शप्रायश्चित्तम्।

तत्र संवर्त्तः,

---

ग्रासः प्रथमग्रास इत्यर्थः साहचर्य्यादिति चण्डालरजस्वलयोस्तुल्यप्रायश्चित्तचर्य्यदर्शनात् इत्यर्थः॥ ८६॥

अथ तैलाभ्यक्तेति। अत्र व्याघ्रवचनमनाकरं पूर्वप्रकरण एवोपयुक्तम्॥ ८७॥

चर्मारं रजकं वेणं धीवरं नटमेव च।
एतान् स्पृष्ट्वा द्विजो मोहादाचामेत् प्रयतोऽपि सन्॥
एतैः स्पृष्टस्तथोच्छिष्ट एकरात्रं पयः पिबेत्।
तैरुच्छिष्टैस्त्रिरात्रं स्याद् घृतं प्राश्य विशुद्ध्यति॥

आचमनमिदमनुच्छिष्टस्य रजकादेरकामतः स्पर्शे कर्त्तव्यम्। कामतस्तु शिरोव्यतिरिक्ताङ्गस्पर्शे तदङ्गक्षालनपूर्वकाचमनं शिरःस्पर्शे स्नानमित्याह शातातपः,

रजकश्चर्मकश्चैव व्याधजालोपजीविनौ।
निर्णेजकः सौनिकश्च ठकः शैलुषकस्तथा॥
मुखे भगस्तथाश्वा च वनिता सर्ववर्णगा।
चक्री ध्वजी बध्यघाती ग्राम्यशूकरकुक्कुटौ।
एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु।
तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात्॥

ठको धूर्त्तः, एतेन यन्मार्कण्डेयपुराणे स्नानमुक्तं तदपि शिरःस्पर्शविषयं तद् यथा,

अभोज्यसूतिकाषण्ढमार्जाराखुश्वकुक्कुटान्।
पतितापविद्धचाण्डालमृतहारांश्च धर्मवित्।
संस्पृश्य शुद्ध्यति स्नानात् उदक्या ग्राम्यशूकरौ॥

---

अथ रजकादिस्पर्शे इति संवर्त्त इति अत्रापि घृतप्राशनं शरीरशुद्ध्यर्थमेव कामतस्त्विति शातातपवचने सामान्यतः क्षालनाभिधानादकामतोऽपि क्षालनमिति प्राञ्चः एतेनेति शातातपोक्तान्मार्कण्डेयपुराणे यदधिकं चाण्डालादिकमुक्तं तत्र शिरो व्यतिरिक्तस्पर्शे स्नानं मन्तव्यं वनमार्जारपत्वे हेतुमाह ग्टहेति अत्र मैथिलाः मार्कण्डेयपुराणे संस्पृश्येत्यनेन श्वकर्तृकस्पर्शे स्नानं मार्जारकर्तृकस्पर्शे तु सुमन्त्वादिवचनान्न दोषः इत्याहुः युक्तञ्चेति तत्। बौद्धादय इति आदिशब्दः

अभोज्या रजकादयः मार्जारो वनमार्जारः मार्जारस्य सदा शुचित्वात्। यथा सुमन्तुः, स्त्रीबालमशकमक्षिकामार्जारमूषिकच्छाया यानासनशयनपांशुविप्रुषो नित्यं मेध्याः। तथा बृहस्पतिः,

स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन।
मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः॥

मशकमक्षिकयोः साहचर्य्यादत्र गृहमार्जारोऽवगम्यते। अपविद्धो लोकवहिष्कृतः मृतहारान् मूल्येन। कामतः शिरःस्पर्शे सचेलं द्वादशमृद्भिः स्नायादित्याह वायुपुराणे,

उदक्यां सूतिकाञ्चैव श्वानमन्त्यावशायिनम्।
नग्नादीन् मृतहारांश्च स्पृष्ट्वा स्नानं समाचरेत्।
स्नात्वा सचेलं मृद्भिश्च शुद्धेद्द्वादशभिर्नरः॥

नग्ना बौद्धादयः, यथा विष्णुपुराणं,

सर्वेषामेव वर्णानां त्रयी संवरणं नृप!।
तां समुज्झति यो मोहात् स नग्नः पापकृन्नरः॥

---

प्रकारे त्रयीवर्जनात् वेदाचारत्यागात् बौद्धतुल्याविप्रादिवर्णा इत्यर्थः। ग्रथेति संवरणं नियामकमित्यर्थः इदानीमुक्तसंवर्त्तवचने एतैः स्पृष्ट इति वचनं व्याचष्टे उच्छिष्टस्येति मोचकश्चर्मकारः य उच्छिष्टो भटादीन् संस्पृशेत् स यदि अधोच्छिष्टः स्यात्तदा एकरात्रमभोजनं कुर्य्यात् उच्छिष्टानित्यत्र हेतुमाह संवर्त्तैकवाक्यत्वादिति अयम्भावः एतस्योत्तरवचनम्। ऊर्द्धोच्छिष्टो यदा स स्यादिति वक्ष्यते तत्र तैरुच्छिष्टैस्त्रिरात्रं स्यादिति प्रागुक्तवचनैकवाक्यतया भटादीनुच्छिष्टानित्यर्थनिर्णये सति सर्वत्रैव तथान्वयात् ननु अथ उच्छिष्टे ऊर्द्धोच्छिष्टप्रायश्चित्तार्हस्य दृष्टत्वादत्र अथ उच्छिष्टे एकरात्रं न युज्यते तस्माल्लघुतयाऽनुच्छिष्टस्पर्शविषयं वचनमिदं वाच्यमित्याशङ्क्याह किञ्चेति उच्छिष्टस्य चाण्डालादिस्पर्शप्रकरणे चण्डालैः श्वपचैः

मृतहारको वेतनेन। उच्छिष्टस्य तु ब्राह्मणस्यानुच्छिष्टचर्मकारादिस्पर्शे एकरात्रं पयःपानम् उच्छिष्टचर्मकारादिस्पर्शे त्रिरात्रमुपोष्य घृतं प्राशयेदिति ऊर्द्धोच्छिष्टविषयमिदं तथा स्वल्पहारीतः,

उच्छिष्टः संस्पृशेत् यस्तु भटं रजकमोचकौ।
अधोच्छिष्टो यदा स स्यादेकरात्रमभोजनम्॥

अत्र भटादीन् उच्छिष्टान् इति ज्ञेयं संवर्त्तैकवाक्यत्वात् किन्तूर्द्धोच्छिष्टप्रायश्चित्तादधोच्छिष्टप्रायश्चित्तस्यार्द्धस्य उक्तत्वात् अपरदिने सायं भुञ्जीतेत्यर्थः तथा,

ऊर्द्धोच्छिष्टो यदा स स्यात् प्रायश्चित्तं भवेदिदम्।
उपवासस्त्रिरात्रं स्याद् घृतं प्राश्य विशुद्ध्यति॥

इति संवर्त्तवाक्यञ्च ज्ञानविषयम् अज्ञानतस्तदर्द्धम् अज्ञानपक्षे ज्ञानतो द्वैगुण्ये चाण्डालादिसमानता स्यात् तेनानुच्छिष्टशूद्रस्पर्शे उच्छिष्टब्राह्मणस्य नक्तम् उपवासतृतीयभागः कर्त्तव्यः

---

स्पृष्ट इत्यादिशातातपवचने ऊर्द्धोच्छिष्टप्रायश्चित्तार्द्धस्याधोच्छिष्टे उक्तत्वादेकरात्रपदं सार्द्धैकरात्रपरं इत्यर्थः तथेति प्रागुक्तवचनानन्तरं स्वल्पहारीतवचनमिदं संवर्त्तैकवाक्यत्वादिति तैरुच्छिष्टैस्त्रिरात्रं स्यादिति संवर्त्तवचनञ्च ज्ञानविषयमेव नाज्ञानविषयम् अत्र हेतुमाह अज्ञानपक्ष इति संवर्त्तोक्तं त्रिरात्रं यद्यज्ञानविषयं स्यात्तदा ज्ञानतस्तद्द्वैगुण्ये चाण्डालान्त्यजयोः समानता स्यात् चण्डालविषये ऊर्द्धोच्छिष्टः षड्राचरेदिति वचनादित्यर्थः। यद्यप्येतद्वचनम् उच्छिष्टोच्छिष्टस्पर्शविषयम् ऊर्द्धोच्छिष्टः षड्राचरेदिति वचनन्तु उच्छिष्टस्यानुच्छिष्टचण्डालस्पर्शविषयमिति न चण्डालसमानताऽन्त्यजस्य तथापि वक्ष्यमाणप्रकरणे उच्छिष्टस्य ब्राह्मणस्य कामादुच्छिष्टसच्छूद्रस्पर्शे एकरात्रस्य वक्ष्यमाणत्वात् सच्छूद्रापेक्षया अन्त्यजस्य त्रैगुण्येनापकृष्टत्वात् कामविषयमेवेदं त्रिरात्रविधायकं संवर्त्तवचनमिति भावः। तेनेति तेन चण्डालस्पर्शापेक्षया अन्त्यजस्पर्शे ह्रासदर्शनेन अधोच्छिष्टब्राह्मणस्य ज्ञाना-

अकामतः स्नानमात्रं सच्छूद्रस्यान्त्यजापेक्षया त्रैगुण्येन उत्कृष्टत्वात् यतोऽत्रोच्छिष्टब्राह्मणस्योच्छिष्टान्त्यजस्पर्शे उपवासत्रयमुक्तम् । उच्छिष्टशूद्रस्पर्शे एकोपवासो वक्ष्यमाणः ऊर्द्धाध उच्छिष्टस्पर्शे तु देवलः,

> उच्छिष्टं ब्राह्मणं स्पृष्ट्वा भोज्यं वापि समाहितः ।
> तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यति ॥

तथा मनुः,

> उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
> अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥

एतच्चादनीयद्रव्यविषयम् । भोज्यविषये तु वशिष्ठः,

> प्रचरन्नन्नपानेषु यद्युच्छिष्टमुपस्पृशेत् ।
> भूमौ निधाय तद्द्रव्यमाचान्तः प्रचरेत् पुनः ॥

द्रव्यस्य तु अभ्युक्षणं करणीयमित्यत्र शङ्खलिखितौ द्रव्यहस्त उच्छिष्टो निधायाचाम्याभ्युक्षयेत् द्रव्यमिति अत्र द्रव्यहस्त उच्छिष्ट इति क्रमोक्तेः द्रव्यहस्तस्योच्छिष्टस्पर्शे सतीदमशौच-

---

दुच्छिष्टसच्छूद्रस्पर्शे उच्छिष्टान्त्यजज्ञानस्पर्शोक्तसार्द्धदिनस्य तृतीयभागो नक्तं कर्त्तव्यम् ऊर्द्धोच्छिष्टस्य ज्ञानादुच्छिष्ट सच्छूद्रस्पर्शे उच्छिष्टान्त्यजाज्ञानस्पर्शोक्तदिनत्रयस्य तृतीयभाग उपवासः कार्य्य इत्यर्थः । अकामत इति एतच्च नक्तपक्षे अकामतस्तदर्द्धं स्नानमात्रम् उपवासपक्षे अकामतस्तदर्द्धं नक्तमुन्नेयम् एवम् अनुच्छिष्टान्त्यजस्पर्शे एकाहपयःपानं यदुक्तं तस्य तृतीयभागः स्नानमात्रम् अनुच्छिष्टसच्छूद्रस्पर्शे मन्तव्यम् । अन्त्यजोक्त तृतीयभागे हेतुमाह सच्छूद्रस्येति अत्रैव प्रमाणमाह यत इति ऊर्द्धाध उच्छिष्टस्पर्शेऽनुच्छिष्टस्य सवर्णस्य प्रायश्चित्तमित्यर्थः तथाविधम् उच्छिष्टमित्यर्थः एतच्चेति अदनीयद्रव्यमत्रान्नव्यञ्जनादिव्यतिरिक्तं दुग्धकदलकादि अन्नव्यञ्जनादिभोज्यविषये तु वशिष्ठ इत्यर्थः । तथेति शङ्खलिखिताविति उच्छिष्ट-

मित्युक्तं न तु उच्छिष्टस्य सतो द्रव्यहस्तत्वेन एतच्चोच्छिष्टेन द्रव्यहस्तपुरुषे स्पृष्टे वेदितव्यं न तु साक्षादन्नस्पर्शे तस्याभोज्यत्वात् यथा वशिष्ठः, उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतञ्च ॥ ८८ ॥

अथोच्छिष्टब्राह्मणस्योच्छिष्टद्रव्यस्पर्शे प्रायश्चित्तम्।

तत्र शातातपः,

उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः।
उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति ॥

कामत इदम् अकामे नक्तमाह बृहस्पतिः,

उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः।
कृत्वोपवासं नक्तञ्च पञ्चगव्येन शुद्ध्यति ॥

श्वानं शूद्रञ्च कामतः स्पृष्ट्वा उपवासः अकामतो नक्तमित्यर्थः अथवा अकामत उपवासार्द्धेन नक्तप्राप्तौ कामतोऽधोच्छिष्टविषयं नक्तमिति। न तु श्वानं स्पृष्ट्वा उपवासः शूद्रञ्च स्पृष्ट्वा नक्तमिति धर्मप्रदीपव्याख्या युक्ता शुना चोच्छिष्टया शूद्रा-

---

स्पृष्ट इत्यर्थः द्रव्यहस्तस्योच्छिष्टत्वासम्भवात् न तु उच्छिष्टः सन् द्रव्यहस्त इति व्याख्यानं युक्तं क्रमाभिधानात् एतच्चेति एतच्चोच्छिष्टेन तद्द्रव्यस्पर्शं विना वेदितव्यमित्यर्थः तद्द्रव्यस्पर्शे तु नैवं तस्याभोज्यत्वादित्यर्थः ॥ ८८ ॥

अथोच्छिष्टस्य ब्राह्मणस्येति। शातातप इति उच्छिष्टेति। तृतीयालोप आर्षः तच्च शूद्रस्यैव विशेषणं न तु शुनः तस्य सर्वदैवोच्छिष्टत्वात् वक्ष्यमाणब्रह्मपुराणवचनाच्च उच्छिष्टेन शूद्रेण शुना वा उच्छिष्टः संस्पृष्टो द्विज इत्यर्थः। अथ वा उच्छिष्ट इति प्रथमान्तं विसर्गलोपे पुनःसन्धिः नञोऽनित्यत्वात् उच्छिष्टो द्विजः श्वहेतुकः शूद्रहेतुको वा उच्छिष्टसंस्पृष्टः स्यादिति बृहस्पतिरिति उपवासं नक्तं चेति कामाकामविषयमिदम् अथवेति कामादुपवासविधानात् अर्थादकाम-

संस्पृष्टोद्वग्रहमाचरेत्। इति वृहस्पतिवाक्यात्तुल्यत्वावगतेः तथा ब्रह्मपुराणे,

उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः।
उपवासेन शुद्धिः स्याच्छुना संस्पृष्ट एव वा॥ ८९॥

अथोच्छिष्टोच्छिष्टसवर्णस्पर्शप्रायश्चित्तम्।

तत्र ब्रह्मपुराणे,

उच्छिष्टेनाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः।
उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ॥

तेन द्वयोरेवोच्छिष्टयोर्ब्राह्मणयोरन्योन्यस्पर्शे स्नानाच्छुद्धिः तदन्न त्यागादित्यर्थः उच्छिष्टविप्रस्यानुच्छिष्टविप्रस्पर्शे दोषाभाव एव एतदज्ञानतः ज्ञाने त्वाह वृहस्पतिः,

उच्छिष्टोच्छिष्टसंस्पर्शो द्विजातीनां यदा भवेत्।
कुर्य्यान्नक्तोपवासन्तु क्षत्त्रविट् स्पर्शने द्विजः॥

द्विजो ब्राह्मणः कामत उच्छिष्टक्षत्त्रियस्पर्शे नक्तं वैश्यस्पर्शे उपवासः तथा,

---

तस्तदर्द्धं नक्तं प्राप्यते तथापि यन्नक्तोपादानं तत्कामतोऽथोच्छिष्टविषयमित्यर्थः। अत्र धर्मप्रदीपस्य यथासंख्यव्याख्यां दूषयति न त्विति शुना चेति। संसृष्टा रजस्वला इति प्रागुपन्यस्तेनान्वयः अत्रोक्तं शातातपवचनाच्चेति दोषान्तरं मन्तव्यम् एतच्चानुच्छिष्टशूद्रास्पर्शे स्नानमात्रमिति प्रागुक्तमेवेति॥ ८९॥

अथोच्छिष्टस्येति तादृश उच्छिष्टः तदन्न त्यागादिति भोजनसम एव स्पर्शे तदन्नत्यागोऽपि कार्य्यः अन्यथा प्रायश्चित्ताधिक्यं वक्ष्यते अत इति प्रायश्चित्ताश्रवणादित्यर्थः किन्त्वनुच्छिष्टस्य स्पर्शे हस्तपादप्रक्षालनपूर्वकमाचमनं प्रागुक्तमेवेति एतदिति उक्तं स्नानमात्रप्रायश्चित्तमित्यर्थः ज्ञाने त्वाहेति वृहस्पतिना उपसंहारे नक्तं वक्ष्यते तत्र उच्छिष्टविप्रयोः स्पर्शे ज्ञान इत्यर्थः तथेति उपक्रमे उच्छिष्टोच्छिष्ट

क्षत्त्रो विट्शूद्रसंस्पर्शे प्रायश्चित्तमिदञ्चरेत् ।
नक्तं तथोपवासञ्च प्रकुर्वीतानुपूर्वशः ॥

तथा, वैश्यस्तु शूद्रसंस्पर्शे कुर्य्यान्नक्तं घृताशनम् ।
विप्रो विप्रेण संस्पृष्टस्त्वेतदेव व्रतञ्चरेत् ॥

एतदेव नक्तपूर्वं घृताशनमेवेत्यर्थः ऊर्द्ध्वोच्छिष्टे विशेषमाह छागलेयः,

भुञ्जानस्य च विप्रस्य सवर्णस्पर्शनं यदि ।
त्यक्त्वान्नं स शुचिर्भूत्वा प्राणायामेन शुद्ध्यति ॥
अज्ञानाद्भुङ्क्ते चेदन्नं पञ्चगव्येन शुद्ध्यति ।
बुद्धिपूर्वं यदा भुङ्क्ते ब्रह्मकूर्चेन शुद्ध्यति ॥

शुचिः स्नात्वेत्यर्थः प्राणायामो विशेषः पञ्चगव्येनेति अपरदिने नक्तं पञ्चगव्यं पीत्वा भुञ्जीतेत्यर्थः ब्रह्मकूर्चेनेति उपोष्य ब्रह्म-कूर्चं पीत्वा हविष्यम् अश्नीयादित्यर्थः शूद्रस्यापि विशेषा-श्रवणादुच्छिष्टोच्छिष्टस्पर्शे एतदेव नक्ताशक्तौ रजतरक्तिकाद्वयं देयम् ॥ ८० ॥

---

संस्पर्श इत्यभिधानात् सवर्णोच्छिष्टयोरन्योन्यस्पर्शे मन्तव्यम् ऊर्द्ध्वोच्छिष्टे विशेषमाहेति ऊर्द्ध्वाध उच्छिष्टे कामाकामतः सामान्येन ब्रह्मपुराणबृहस्पतिवचनाभ्यां व्यवस्थोक्ता ऊर्द्ध्वोच्छिष्टे तु कामाकामस्पर्शे विशेषं प्राणायामाधिक्यमाहेत्यर्थः अज्ञानादिति । पञ्चगव्यपानमात्रं व्रतरूपमभोजनप्रायश्चित्तं स्पर्शप्रायश्चित्तन्तु प्रागुक्तमेव एवं ब्रह्म-कूर्चपानेऽपि ब्रह्मकूर्चन्तु अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्चविधिः स्मृतः इति जावालोक्तः पञ्चगव्यपानमित्यर्थः । इति स्नात्वेत्यर्थः एतच्चाज्ञानाभिप्रायेण ज्ञाने तु नक्तं घृतप्राशनञ्च बृहस्पत्युक्तम् अपर-दिने इति भोजनापरदिने रात्रौ पञ्चगव्यमात्रं पीत्वा परदिने भुञ्जीत एतच्च ज्ञानोक्तब्रह्मकूर्चव्रतात् अर्द्धत्वेनोचितमेव ब्रह्मकूर्चमिति ब्रह्मकूर्चव्रताङ्गं पञ्चगव्यं पीत्वा तत् परदिने हविष्यभोजनं सर्वव्रतसाधारणं पारणरूपमित्यर्थः शूद्रस्या-पीति उच्छिष्टविप्रयोः यथा व्यवस्थोक्ता उच्छिष्टशूद्रयोरपि तथा व्यवस्थेत्यर्थ

अथ नीलीवस्त्रपरिधानप्रायश्चित्तम्।

तत्र भविष्यपुराणं,

शृणुष्वेति महाबाहो! नीलीरक्तस्य धारणात्।
वाससो गणशार्दूल! गदतो मम कृत्स्नशः॥
पालनाद्विक्रयाच्चैव तद्‌वृत्तेरुपजीवनात्।
पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्व्यपोहति॥
नीलीरक्तेन वस्त्रेण यत् कर्म कुरुते द्विजः।
स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम्॥
वृथा तस्य महायज्ञो नीलीवस्त्रस्य धारणात्।
नीलीरक्तं यदा वस्त्रं कश्चिद्विप्रस्तु धारयेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥

इदमज्ञाने ज्ञाने तु द्वैगुण्यम् अत्रापवादे नीलीत्यनुवृत्तावाप-स्तम्बः,

स्त्रीणां क्रीड़ार्थसंयोगे शयनीये न दुष्यति॥ ९१॥

अथ पलाण्डुलशुनादिस्पर्शप्रायश्चित्तम्।

तत्र बृहस्पतिः,

सुरापलाण्डुलशुनस्पर्शे कामकृते द्विजः।
त्र्यहं पिबेत् कुशजलं सावित्रीञ्च जपेत्तथा॥

---

एवं क्षत्रियवैश्ययोरपि मन्तव्यं तथा उच्छिष्टाधमवर्णस्य उच्छिष्टोत्तमस्पर्शे स्नान-मात्रम् उत्तमस्याधमस्पर्शे बृहस्पतिवचनोक्तैव व्यवस्था॥ ९०॥

अथ नीलीवस्त्रपरिधानेति। पालनात् वृक्षपालनात् तद्‌वृत्तेरुपजीवनात् वाणिज्यकरणात् आपस्तम्ब इति क्रीड़ार्थसंयोग उत्सवादौ शय्यायाञ्च न दोष इत्यर्थः॥ ९१॥

अथ पलाण्डु लशुनादीति। एवमिदमिति ज्ञाने त्र्यहस्योक्तत्वादित्यर्थः अनु-

इदमूर्द्ध्वोच्छिष्टस्य कामतः स्पर्शे तथा,

> पलाण्डुलशुनस्पर्शे स्नात्वा नक्तं समाचरेत्।
> कृतोच्चारस्त्वहोरात्रमुच्छिष्टो त्र्यहमाचरेत्॥

नक्तं शूद्रोच्छिष्टविषयं त्र्यहमिति ऊर्द्ध्वोच्छिष्टविषयम्। त्र्यहमिदमकामतः सावित्रीजपान्वितत्रिरात्रकुशवारिपानाशक्तौ चतुर्विंशतिपणलभ्यं काञ्चनं देयम् अनुच्छिष्टस्पर्शे केवलं स्नानमेव तथा वृद्धशातातपः,

> उच्छिष्टः संस्पृशेद्विप्रो मद्यं शूद्रं शुनोऽशुचीन्।
> अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥

एतदूर्द्ध्वोच्छिष्टस्य कामतः सुरेतरमद्यं शूद्रं शूद्रोच्छिष्टम् अशुचीन् लशुनादीन् सुरानुवृत्तौ यमः,

> दर्शनात् स्पर्शनात् घ्राणात् प्रायश्चित्तं विधीयते।
> प्राणायामैस्त्रिभिः स्नात्वा घृतं प्राश्य विशुद्ध्यति॥

दर्शने कामतः स्पर्शनेऽकामतः घ्राणे चाकामतः, कामतो जातिभ्रंशकरत्वं तथा,

---

च्छिष्टेति सोमपस्य स्नानसहितप्राणायामत्रयस्य वक्ष्यमाणत्वात् असोमपस्य केवलस्नानमेवेति हृदयम् ऊर्द्ध्वोच्छिष्टे त्र्यहं कुशवारिपानं वृहस्पतिनोक्तं शातातपेन चाहोरात्रम् इति विरोधं परिहरति वृद्धशातातप इति सुरेतरेति सुरा मद्ये तु वृहस्पतिना त्र्यहं कुशवारिपानस्य उक्तत्वादित्यर्थः लशुनादिस्पर्शे तु कृतोच्चारस्याकामविषयं वृहस्पतिसमानार्थं सोपवासपञ्चगव्यपानं मन्तव्यं कामत इति घ्रातिरग्नेयमद्ययोरिति मनुवचनादित्यर्थः यम एव दर्शनादित्यादिवचनं सोमपविषयतया स्पष्टयति। तथेति एवञ्च सोमपकस्याकामतः सुरादर्शने प्राणायामत्रयम् असोमपस्य ज्ञाने प्राणायामः अज्ञाने सूर्यदर्शनम् असोमपस्य सुरास्पर्शे व्यासः जान्वधःस्नानमात्रः स्यादानाभेरेकरात्रकं नाभेरूर्द्ध्वं त्रिरात्रं स्यात् मदिरास्पर्शने विधिः। एवञ्च स्पर्शने यदनेन स्नानप्राणायामसहितघृतप्राशनं सोमप

आघ्राय शवगन्धञ्च सुरागन्धञ्च सोमपः ।
स्नात्वोपस्पृश्य कृत्वा त्रीन् प्राणायामान् विशुध्यति ॥

यत्तु सुमन्तुनोक्तं मद्यसङ्करे ऋषभं जपेत् सुराघ्राणे प्राणायाम इति तदसोमपविषयम् । विष्णुः, सुरापस्याघ्राय गन्धं सोमप उदके मग्नस्त्रिरघमर्षणं जप्त्वा घृतप्राशनमाचरेत् ॥ ९२ ॥

अथोच्छिष्टस्य नरादिपुरीषस्पर्शनप्रायश्चित्तम् ।

तत्र लघुहारीतः,

श्वविष्ठां काकविष्ठां वा कङ्कगृध्रनरस्य च ।
अधोच्छिष्टस्तु संस्पृश्य सचेलो जलमाविशेत् ॥
ऊर्द्ध्वोच्छिष्टस्तु संस्पृश्य प्रायश्चित्तमिदञ्चरेत् ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

तेनाधोच्छिष्टस्य पुरीषस्पर्शे स्नानम्, ऊर्द्ध्वोच्छिष्टस्य तु उपवासः पञ्चगव्यञ्च पेयम् ॥ ९३ ॥

अथानुच्छिष्टस्य मलस्पर्शप्रायश्चित्तम् ।

तत्र अङ्गिराः,

ऊर्द्ध्वं नाभेः करौ त्यक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति ॥

---

स्योक्तं तज्ज्ञान्वधोविषयं मन्तव्यम् एवञ्च जानूर्द्ध्वं नाभ्यूर्द्ध्वस्पर्शने एकाहं सा[illegible] व्यासोक्तं प्राणायाम घृतप्राशनसहितं सोमपस्य मन्तव्यम् एतत् सर्वमकामत कामतो द्वैगुण्यं सुराघ्राणे तु सोमपासोमपयोः कामतो जातिभ्रंशकरत्वमेव अकामतस्तु सोमपस्य यमोक्तम् असोमपस्य मनूक्तप्राणायामा इति व्यवस्था यत्त्विति मद्यसङ्करे सुरेतरमद्यघ्राणे ऋषभाख्यं मन्त्रं सकृज्जपेत् विष्णुरिति असोमपस्य तु अघमर्षणजपमात्रम् ॥ ९२ ॥

अधोच्छिष्टस्य नरादिपुरीषेति स्पष्टार्थः ॥ ९३ ॥

अमेध्यादिस्पर्शविषयमिदं न चाण्डालादिस्पर्शविषयमपि तथाच शङ्खः,

रथ्या कर्दमतोयेन ष्ठीवनाद्येन वा पुनः।
नाभेरूर्द्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुद्ध्यति॥

अङ्गिरसोक्तञ्च क्षालनं मृदम्भसा कार्य्यमित्यत्र विष्णुः, नाभेरधस्तात् प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैर्वा उपहतो मृत्तोयैस्तदङ्गं संप्रक्षाल्यातन्द्रितः शुद्ध्येत् अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन चक्षुष्युपहत उपोष्य पञ्चगव्येन दशनच्छदोपहतश्च प्रबाहुषु करयोः। अत्र मृत्तोयपदमुपलक्षणम् अन्यदपि गन्धलेपक्षयकरं ज्ञेयम्। यथा देवलः,

प्रलेपस्नेहगन्धानामशुद्धौ व्यपकर्षणम्।
शौचं क्षालनमित्याहुर्मृदम्भो गोमयादिभिः॥
लेपे स्नेहे च गन्धे च व्यपकृष्टेषु दूरतः।
पश्चादाचमनं वापि शौचार्थं वक्ष्यते बुधैः॥

यत् पुनर्व्यासेनोक्तं,

भासवानरमार्जारखरोष्ट्राणां शुनान्तथा।
शूकराणाममेध्यं वै स्पृष्ट्वा स्नायात् सचेलकम्॥

इति तदप्यनुच्छिष्टस्य नाभ्युर्द्ध्वलेपोपहतविषयम्। लघुहारीतोक्ताधोच्छिष्टविषयञ्च। भासो वनकुक्कुटः। अतएवापस्तम्बः,

---

अथानुच्छिष्टस्येति। अमेध्यादीति स्वीयविष्ठादिस्पर्शविषयम् इत्यर्थः शङ्खवचनेप्येवंव्याख्या। रथ्येति यत्तु रथ्या कर्दमतोयानि नारः पन्थानि च। मारुतेनैव शुद्ध्यन्ति पक्वेष्टकाचितानि च इति वामनपुराणं तन्नाभेरधःस्पर्शविषयं विष्णुरिति कायिकैर्मलैः स्वीयैरित्यर्थः अतन्द्रित इत्यनेन गन्धलेपक्षयो यावद्भवतीत्युक्तम् अन्यत्र नाभेरूर्द्ध्वमित्यर्थः सुरास्पर्शे तु क्षालनस्नानोत्तरं व्यासोक्तमधिक-

यद्विष्ठितं काकबलाकिकाभ्याममेध्यलिप्तञ्च भवेच्छरीरम्।
श्रोत्रे मुखे न प्रविशेच्च सम्यक् स्नानेन लेपोपहतस्य शुद्धिः॥

मलानाह मनुः,

वसा शुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः।
श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः॥

अमेध्यमाह देवलः,

मानुषास्थिशवं विष्ठा रेतो मूत्रार्त्तवं वसा।
स्वेदाश्रुदूषिका श्लेष्मा मद्यञ्चामेध्यमुच्यते॥

इति। एषां देहात् प्रच्युतानामिवामेध्यत्वं देहाच्चैव च्युत मला इति मनुवचनात्। अत्र शुद्धिमाह बौधायनः,

आददीत मृदोपश्च षट्सु पूर्वेषु शुद्धये।
उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुद्ध्यति॥

विशेषमाह ऋष्यशृङ्गः,

मद्यविण्मूत्रविप्रुड्भिः संस्पृष्टं मुखमण्डलम्।
मृत्तिका गोमयैर्लेपात् पञ्चगव्येन शुद्ध्यति॥

स्नात्वोपोष्य पञ्चगव्येन शुद्ध्यतीत्यर्थः उक्तविष्णुवचनात् अत्र विशेषमाह देवलः,

---

मूत्रम् उपोष्येति यथायोग्यं मन्तव्य तत्र कायकमले एकोपवासः सुरास्पर्शे तु व्यासोक्तं त्रिरात्रमिति देवल इति आचमनं वापीत्यनेन यदुक्तं प्रायश्चित्तं तत्र तत् पश्चात् कर्त्तव्यमित्युक्तम्। वक्ष्यते उच्यते इत्यर्थः लघुहारीतोक्तेति प्राक् प्रकरणोक्तस्वविष्ठामित्यादि लघुहारीतोक्तविषयमित्यर्थः आपस्तम्ब इति विष्ठितं विष्ठया लिप्तं श्रोत्रमुखप्रवेशे तु त्रिरात्रोपवासः पञ्चगव्यपानञ्चेति बलाहकी बकः

मानुषास्थिवसां विष्ठामार्त्तवं मूत्ररेतसी।
मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्॥
स्नात्वापमृज्य लेपादीनाचम्य स शुचिर्भवेत्।
तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्जनात्॥

अतः परमलस्पर्शे स्नानम् आत्ममलस्पर्शे प्रक्षालनमाचमनञ्च ॥ ८४ ॥

अथ मानुषास्थिस्पर्शप्रायश्चित्तम्।

तत्र मनुः,

नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा॥

इदमकामतः कामतस्तु विष्णुः,

नारं स्पृष्ट्वास्थिसस्नेहं गायत्र्यष्टशतं जपेत्।

घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत्। अष्टशतम् अष्टोत्तरशतं कामतोऽत्यन्ताभ्यासे सुमन्तुः, सोपस्नेहमानुषास्थिस्पर्शे कृच्छ्रपादस्त्रिरात्रमशौचञ्चात्र भवतीत्याह वशिष्ठः, मानुषास्थिस्निग्धं स्पृष्ट्वा त्रिरात्रमशौचमस्निग्धन्त्वहोरात्रमिति॥८५॥

---

अत्रेति अत्र देहाच्युते स्नात्वेति एतेन विष्णुवचनैः चक्षुर्दर्शनच्छदोपादानं शौचोपलक्षकं मन्तव्यम् ॥ ८४ ॥

अथ मानुषास्थीति। विष्णुरिति। एतदपि गोस्पर्शसूर्य्यदर्शनाभावे कामतो ह्विरभ्यासविषयं पुनः पदोपादानेन मायत्रीजपघृतप्राशनयोः प्राक्परतः स्नानद्वयं विदधाति। वशिष्ठ इति रत्नाकारादयस्तु अपकृष्टजातीयास्थिस्पर्शे वशिष्ठवचनं सजातीयोत्कृष्टजातीयास्थिस्पर्शे मनुवचनमित्याहुः युक्तञ्चैतत् ॥ ८५ ॥

अथ रुद्रनिर्माल्यस्पर्शप्रायश्चित्तम्।

तत्र कालिकापुराणे,

स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः ॥९६॥

अथ रजस्वलायाः सवर्णासवर्णरजस्वलास्पर्शप्रायश्चित्तम्।

तत्र काश्यपः,

रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति॥
रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी यदि।
त्रिरात्रेण विशुद्धिः स्याद् ब्राह्मस्य वचनं यथा॥
रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी तु या।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति॥
रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी यदि।
षड्रात्रेण विशुद्ध्येत्तु ब्राह्मणी कामकारतः।
अकामतश्चरेदर्द्धं ब्राह्मणी सर्वजातिषु॥

एतेन रजस्वलायाः ब्राह्मण्याः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः पञ्चगव्यपानञ्च कामतः, अकामतस्तदर्द्धं नक्तव्रतम् असवर्णरजस्वलास्पर्शे षड्रात्रोपवासः तदशक्तौ धेनुरेका देया अका-

---

अथ रुद्रनिर्माल्येति एतच्च निर्माल्यापकर्षकालव्यतिरिक्तविषयम् ॥ ९६ ॥

अथ रजस्वलाया इति काश्यप इति। ब्राह्मण्या रजस्वलया इत्यर्थात् एवं परतोऽपि राजन्या राजन्यया असवर्णेति असवर्णोऽत्र शूद्रोऽभिप्रेतः शेषवर्णेति पाठे व्यक्त एवायमर्थः यथेति ये नार्य्यौ रजस्वले ते सवर्णे यद्यन्योन्यं स्पृशतः तदा ते पञ्चगव्यं पिबेताम् अतःपरं रजकाद्यन्त्यजरजस्वलास्पर्शे शूद्ररजस्वलाया ब्रह्म-कूर्च्चमित्यर्थः। अतएव ब्रह्मकूर्चविधानात् शूद्राविषयं वचनमिदम् अन्यथा काश्यपवचने ब्राह्मण्याः शूद्रास्पर्शे षड्रात्रविधानविरोधः। एवञ्च रजस्वलाया

मतस्तदर्द्धम् एतच्च विशुद्धिकालानन्तरं कर्त्तव्यं रजस्वलायाः शूद्रायाः सवर्णरजस्वलास्पर्शेऽप्येकरात्रोपवासः पञ्चगव्यपानञ्च। यथा वृद्धशातातपः,

रजस्वले तु ये नार्य्यावन्योन्यं स्पृशतो यदि।
सवर्णे पञ्चगव्यञ्च ब्रह्मकूर्चमतःपरम्॥

पञ्चगव्यपानं व्रतपरं तेन उपवासोऽपि अतःपरमत्यन्ताधम-रजक्यादिरजस्वलास्पर्शे ब्रह्मकूर्चव्रतं द्व्यहसाध्यं तदशक्तौ पुराणैकलभ्यं काञ्चनं देयम् एतत् कामतः अकामतस्तद-र्द्धम्॥ ८७॥

अथ रजस्वलायाः पतितचाण्डालादिस्पर्शप्रायश्चित्तम्।

तत्र वृहस्पतिः,

पतितान्त्यश्वपाकेन संस्पृष्टा स्त्री रजस्वला।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्॥
प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमेव च।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत्॥

तान्यहानीत्यविशुद्धिदिनानीत्यर्थः चतुर्थे नक्तमिति विशुद्धि-

---

ब्राह्मण्यास्तादृशान्त्यजास्पर्शे षड्रात्रं ब्रह्मकूर्चञ्च मन्तव्यम्। व्रतपरमिति कायक्लेशस्य पापक्षयसाधनत्वादित्यर्थः। स चोपवासः पञ्चगव्यपानात् पूर्वदिने ब्राह्मणसवर्णा-विषये काश्यपवचने तथा दृष्टत्वादित्यर्थः द्व्यहसाध्यमिति पूर्वदिने उपवासः परदिने पञ्चगव्यपानमात्रमिति द्व्यहसाध्यता यत्तु रजस्वला तु या नारी अन्योन्य-मुपसंस्पृशेत्। सवर्णे त्वेकरात्रेण त्रिरात्रमसवर्णिके इत्यङ्गिरोवचनं तदनन्तर-वर्णरजस्वलास्पर्शविषयं त्रिरात्रं विदधाति उत्तमवर्णास्पर्शविषये त्वाह विष्णुः अधिकवर्णां रजस्वलां स्पृष्ट्वा स्नात्वा अश्नीयात्॥ ८७॥

अथ रजस्वलायाः पतितेति वृद्धशातातप इति। स्नात्वा चतुर्थदिनात् परं तावत्कालं निराहारा तिष्ठेत् चाण्डालस्पर्शात् परं यावता कालेन शुद्धिस्नानं

स्नानात् पूर्वम्। तथा विष्णुः, रजस्वला चतुर्थेऽह्नि स्नाता शुद्ध्येत्। त्रिरात्राशक्तौ चतुर्विंशतिपणलभ्यकाञ्चनं देयम्। उपवासद्वये पुराणैकमूल्यं काञ्चनं देयम् उपवासैकेन रूप्यमाषकत्रयं नक्ते रूप्यमाषकमेकम् एतच्चाकामतः। वृद्धशातातपः,

रजस्वला यदा स्पृष्टा चाण्डालान्त्यश्ववायसैः।
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति॥

एतदप्यकामतः, अस्यार्थः रजस्वला चाण्डालादिस्पर्शकालादूर्द्ध्वं यावद्दिनैर्विशुद्ध्यति तावत्सङ्ख्यं दिनं चतुर्थदिने विशुद्धिस्नानं कृत्वा पञ्चदिनात्प्रभृतिनिराहारा तिष्ठेत्। कामतस्त्वाह काश्यपः,

चाण्डालेन श्वपाकेन संस्पृष्टा चेद्रजस्वला।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्॥
त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुद्ध्यति।
तां निशान्तु व्यतिक्रम्य अजाघ्राणन्तु कारयेत्॥

अत्र प्रथमादिदिनव्यवस्था नास्ति। तथा वृद्धशातातपः,

उदक्या सूतिका वापि अन्त्यजं संस्पृशेद् यदि।
त्रिरात्रेणैव शुद्ध्येत्तु इति शातातपोऽब्रवीत्॥९८॥

---

करोति काश्यप इतीति निशाम् उपवासनिशां व्यतिक्रम्य पञ्चगव्यपानमजेन घ्रापणञ्च कारयेदित्यर्थः वक्ष्यमाणशातातपवचनेऽप्येतदधिकमूह्यम् अत्रेति वचनमिदं ज्ञानविषयं प्रायश्चित्ताधिक्याभिधानात् ततश्चात्र कामकृते प्रायश्चित्ते प्रथमादिदिने प्रागुक्तविशेषापेक्षा नास्ति अकामकृतात् विशेषस्यौचित्यात् सामान्येनाभिधानाच्चेति॥ ९८॥

अथ रजस्वलाया उच्छिष्टशूद्रीश्वशूकरादिस्पर्शप्रायश्चित्तम्।

तत्र वृहस्पतिः,

शुना चोच्छिष्टया शूद्रया संस्पृष्टा द्व्यहमाचरेत्।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत्॥

व्याघ्रः,

रजस्वला यदा स्पृष्टा श्वजम्बूकखरैः क्वचित्।
निराहारा भवेत्तावद् यावत् स्नानेन शुद्ध्यति॥

अस्यापि वृद्धशातातपवचनोक्तव्याख्यैव। हारीतः,

रजस्वला तु संस्पृष्टा ग्राम्यकुक्कुटशूकरैः।
स्नानं कृत्वा क्षपेत्तावद् यावच्चन्द्रस्य दर्शनम्॥

चन्द्रदर्शनं नक्तमित्यर्थः एतेन प्रथमदिनद्वितीयदिनयोरुच्छिष्ट-शूद्रीस्पर्शे द्व्यहमात्रोपवासः तृतीये एकोपवासः चतुर्थे नक्त-मिति कुक्कुटादिस्पर्शे नक्तमेव इदमपि विशुद्धिस्नानानन्तरं कर्त्तव्यम्। रजकादिस्पर्शे तु श्वस्पर्शसमानमेव प्रायश्चित्त-मूहनीयं तयोः समानत्वादिति एतानि चाकामतः। विशेष-माह आपस्तम्बः,

---

अथ रजस्वलाया इति। वृहस्पतिरिति उच्छिष्टशूद्रीस्पर्शे प्रथमद्वितीयदिन-योर्द्व्यहम् अत्र शूद्रीति लिङ्गमविवक्षितं श्वस्पर्शे तु द्वितीयदिन एव द्व्यहं न तु प्रथमदिने तत्र प्रागुक्तशातातपवचने वक्ष्यमाणव्याघ्रवचने च त्रिरात्राभिधानात् व्याघ्र इति एतेन चाण्डालान्त्यश्ववायसानां जम्बूकखरयोश्च तुल्या व्यवस्था कुक्कुट-शूकरस्पर्शे त्रिष्वपि दिनेषु नक्तभोजनमेव प्रायश्चित्तं हारीतवचनात् समानत्वा-दिति वृद्धशातातपवचने चाण्डालान्त्यश्ववायसैरित्येकत्र पाठादिति भावः एतानि चेति कामतस्तु प्राक् प्रकरणोक्तकाश्यपोक्तैव व्यवस्थेति ध्येयम् उच्छिष्टशूद्रीस्पर्शे तु कामतो द्वैगुण्यम् एवञ्चानुच्छिष्टशूद्रीस्पर्शे उक्तप्रायश्चित्तार्द्धं सर्वत्र मन्तव्यम्

एकवृक्षसमारूढश्चाण्डालोऽथ रजस्वला।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥

वृक्षशब्द एकावयव्युपलक्षकः एतच्च विशुद्धिस्नानानन्तरं कर्त्तव्यं स एवाह,

उच्छिष्टेन तु संस्पृष्टा कदाचित् स्त्री रजस्वला।
कृच्छ्रेण तु द्विजा शुद्ध्येच्छूद्रा दानेन शुद्ध्यति॥

इदमुच्छिष्टचाण्डालादिस्पर्शविषयं कृच्छ्रं प्राजापत्यम्। शूद्रा धेनुदानेन शुद्ध्यतीत्यर्थः। एषु प्रायश्चित्तेषु रजस्वलात्वमेव निमित्तम् अतो न ब्राह्मण्यादिभ्यो विशेषः। स्पर्शप्रायश्चित्तापवादमाह बृहस्पतिः,

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति॥ ९९॥

अथ चाण्डालसङ्करप्रायश्चित्तम्।

तत्र च्यवनः, चाण्डालसङ्करेषु भवनदहनं वपनं सर्वभाण्डभेदनं दारवाणां त्वक् क्षणं शङ्खशुक्तिसुवर्णरजतचेलानामद्भिः प्रक्षालनं कांस्यताम्राणामाकरे शुद्धिः सौवीरपयोदधितक्राणां परित्यागः शेषरसयवसद्रव्यरक्षणं गोमूत्रयावकाहारो मासं

---

आपस्तम्ब इति चण्डालपदं अन्त्यजादीनामुपलक्षणम् एतच्च कामाकामसाधारणं प्रथमादिदिनत्रयसाधारणञ्च। स एवेति आपस्तम्ब एव विशेषान्तरमाहेत्यर्थः। ननु शूद्राब्राह्मण्योः कथं तुल्यप्रायश्चित्तमित्याशङ्क्याह त्रिष्विति शूद्राया विशेष इत्यर्थः बृहस्पतिरिति यात्रां देवयात्रां स्पृष्टोऽस्पृष्टिरस्पृष्टो येन स तथा॥ ९९॥

अथ चण्डालसङ्करेति। च्यवन इति। चण्डालसङ्करेषु चण्डालसहवासेषु

क्षिपेत्। बालवृद्धस्त्रीणामर्द्धं प्रायश्चित्तम् आषोड़शाद्बालः। अशीत्यूर्द्धं स्थविरः। चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं गोशतञ्च दद्यात्, तदभावे सर्वस्वं वपनं पूर्वस्मृत्तिकाकर्षणेन स्मृत्तिकान्तरदानं भाण्डभेदनं मृण्मयभाण्डभेदनम् आकरे अग्नावित्यर्थः अग्निसंयोगात् ताम्रादीनामुत्पत्तेः। शेषरसानां लाक्षादीनां यवसद्रव्याणां धान्यानां रक्षणम्। तथाच पराशरः,

> आकरे तु भवेच्छुद्धिरारकूटे सकांस्यके।
> जलशौचन्तु वस्त्राणां परित्यागन्तु मृण्मये॥
> कुसुम्भगुड़कार्पास लवणं सह सर्पिषा।
> द्वारि कुर्वीत धान्यानि गृहे दद्यात् हुताशनम्।
> हुताशज्वालासंस्पृष्टं शुचि तन्मनुरब्रवीत्॥

तेन रक्षणं घृतादीनामग्निज्वालापवित्रीकृतानां कर्त्तव्यम्। एतच्च प्रायश्चित्तं सद्यः पातहेतुयौनादिवर्जितं संसर्गं ज्ञानतो यावता कालेन पातित्यं भवति अज्ञानतस्तावत्कालसंसर्गं वेदितव्यमिति, तेन संवत्सरैकचाण्डालसंसर्गे मासैकगोमूत्रयावकाहारः कर्त्तव्यः। अनेन च द्वादशधेनवः मासोपवासात्

---

भवनदहन गृहभूमिदाहः भाण्डभेदनं भाण्डत्यागः दारवाणां पीठादीनां सौवीरं काञ्जिकं शेषरसास्तैलघृतादयः यवसद्रव्यं यवसजातद्रव्यं धान्यादिगोमूत्रयावकं वज्रव्रतं पराशर इति कुसुम्भादीनि। द्वारि स्थापयित्वा गृहभूमिं दहेदित्यर्थः। एतच्चेति सद्यःपातहेतुसंसर्गेतरैर्लघुतरैर्वा पतितसंसर्गैर्ज्ञानतो यावत्कालेन पातित्यमुक्तं तैरेवाज्ञानकृतैश्चाण्डालसंसर्गैस्तावत्कालेन मासैकवज्रव्रतं वेदितव्यं ज्ञानतस्तु तदर्द्धकालेन इति। अत्र दिग्दर्शनमाह तेनेति। सहयानासनशयनैकपङ्क्तिभोजनानाच्चतुर्णां मध्ये त्रिभिः पतितसंसर्गैर्ज्ञानतो वत्सरेण पातित्यमुक्तं तैस्त्रिभिरज्ञानतः संवत्सरकृतैश्चाण्डालसंसर्गैर्मासैकवज्रव्रतं ज्ञानतस्तु षण्मासैः एवञ्च

पञ्चमभागापकर्षाद्दोग्रतश्च दक्षिणा एतदेव प्रायश्चित्तम्। ब्राह्मणक्षत्रियविशां तुल्यमेव। तथापस्तम्बः,

अन्त्यजातिरविज्ञातो निवसेद् यस्य वेश्मनि।
स वै ज्ञात्वा तु कालेन कुर्य्यात् तत्र विशोधनम्॥
चान्द्रायणं पराकं वा द्विजातीनां विशोधनम्।
प्राजापत्यन्तु शूद्राणां तथा संसर्गदूषणे॥
यैस्तत्र भुक्तं पक्वान्नं तेषां कृच्छ्रं विनिर्दिशेत्।
तेषामपि च यैर्भुक्तं कृच्छ्रार्द्धन्तु विधीयते॥
तेषामपि च यैर्भुक्तं कृच्छ्रपादो विधीयते।
कूपैकपानदुष्टानां तथा संसर्गदूषणे॥
उपवासेन शुद्धिः स्यात् पञ्चगव्येन शुद्ध्यति।
बालापत्यास्तथा रोगी गर्भिणी वृद्ध एव यः।
तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयम्॥१००॥
अथवा क्रियमाणे तु येषामार्त्तिः प्रदृश्यते।
शेषं सम्पादयेत्तेषां विपत्तिर्न भवेद् यथा॥

तत्र पूर्वोक्तकालादल्पकालसङ्करे चान्द्रायणं स्वल्पतरे पराकः शूद्रस्य प्राजापत्यम्। कूपैकपानदुष्टानामिति एकस्मिन्नेव कूपे द्विजातीनां सहजलपानं कुर्वतां संसर्गदुष्टानां सोपवासः पञ्चगव्यं विशोधनमित्यर्थः। संवर्त्तः,

संलापस्पर्शनिःश्वासैस्त्रिभिर्लघुतरसंसर्गैर्ज्ञानतो वत्सरत्रयेण पात उक्तस्तैस्त्रिभिरज्ञानतो वत्सरत्रयकृतैर्लघुतरचाण्डालसंसर्गैः मासैकव्रतं वज्रं ज्ञानतस्तु सार्द्धवत्सरेण एवमन्यदप्यूह्यम्। द्वादशधेनव इत्यत्राहतुर्मासोपवासादिति प्रागेव व्याख्यातम्। यैस्तत्र भुक्तमिति चाण्डालेन सहवासगृहे चण्डालसहगृहवासिनां पक्वान्नं यैर्भुक्तमित्यर्थः॥ १०० ॥

अथवेति। येषां बालादीनाम् आरब्धे प्रायश्चित्ते आर्त्तिर्दृश्यते तेषां तदेव

चाण्डालसङ्करे विप्रः श्वपाके पुक्कशेऽपि वा।
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति॥

एतदपि स्वल्पकालसङ्करविषयं मासार्द्धयावकाहाराशक्तौ षड्धेनवः। सुमन्तुः, अगम्यागमनस्त्रीबधचाण्डालसम्पर्केषु कृच्छ्रत्रयम् एतदत्यन्तस्वल्पकालविषयं कृच्छ्रत्रयाशक्तस्य धेनुत्रयम्।
तथा,

अविज्ञातस्तु चाण्डालो निवसेद् यस्य वेश्मनि।
विज्ञाते चोपपन्नस्य द्विजाः कुर्य्युरनुग्रहम्॥ इति।

द्वादशाहमुपक्रम्याह पराशरः,

दधिसर्पिः पयोयुक्तं सदा गोमूत्रयावकम्।
भुञ्जीत सह भृत्यैस्तु त्रिसन्ध्यमवगाहनम्॥
भावदुष्टं न भुञ्जीत भोक्तव्यं गोरसप्लुतम्।
त्रिपलं क्षीरदध्नोश्च पलमेकञ्च सर्पिषः॥

तथा, सपूतः सह भृत्यैस्तु कुर्य्याद् ब्राह्मणभोजनम्।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्॥

---

शेषं पञ्चगव्यपानं सम्पादयेत् कारयेत् तदा ते पूता भवन्तीति वाचनिकञ्चेदं संवर्त्त इति श्वपाकैः श्वपाकसङ्करे सुमन्तुरिति अनिवृत्तधर्म्मकर्मणो ब्राह्मणस्य द्विविपुरुषव्यभिचरितपत्नीगमने ब्राह्मणस्याज्ञानतः कृच्छ्रत्रयं वशिष्ठसमानार्थं सकृत् सवर्णाव्यभिचरितशूद्रावधे ज्ञानविषये कृच्छ्रत्रयम् एतच्च तत्तत्प्रकरणे द्रष्टव्यम्। तथेति तथा सुमन्तूक्तकृच्छ्रत्रयविषय इत्यर्थः विज्ञाते चण्डालवासे उपपन्नस्य उपस्थितस्य द्विजाः अनुग्रहं प्रायश्चित्तनिर्णयं कुर्य्युः पराशरः इति केवलगोमूत्रयावकं वज्रव्रतोक्तं भृत्यैः भरणीयैः पुत्रभार्य्यादिभिरेव गृहवासिभिः यदि व्याधियुक्ते गोमूत्रे विचिकित्सा जायते तदाभावदुष्टं तन्न भुञ्जीत किन्तु तत् गोमूत्रयावकं गोरसैः प्रभूतदुग्धैः प्लावितं कृत्वा भोक्तव्यं यथा विचिकित्सा न स्यात् दध्यादीनां परिमाणमाह त्रिपलमिति द्वादशाहमिति दध्यादियुक्तगोमूत्रयाव-

दधिसर्पिः पयोयुक्तं गोमूत्रयावकं द्वादशाहं भुञ्जीतेत्यर्थः।
अत्र परिमाणमेतेषां त्रयाणामुक्तम्। चर्मकारादीनामविज्ञात-
सङ्करे तु चाण्डालसङ्करप्रायश्चित्तस्य षष्ठो भागः प्रायश्चित्तं
कल्पनीयं चाण्डालस्पर्शप्रायश्चित्ताच्चर्मकारादिस्पर्शे प्राय
श्चित्तस्य षष्ठभागदर्शनात्। यथा खल्व यमः,

चाण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे तु कृते द्विजः।
त्रिरात्रं संप्रकुर्वीत ऊर्ध्वोच्छिष्टः षड़ाचरेत्॥

चर्मकारादिस्पर्शे संवर्त्तः,

एतैः स्पृष्टस्तथोच्छिष्ट एकरात्रं पयः पिबेत्।

देवलः, चाण्डालसंयोगे जातश्चाण्डाल एव स्यात् ब्रह्मवधो
द्दिष्टं प्रायश्चित्तं वार्षिकं षाण्मासिकं कृच्छ्रं वा ब्राह्मणस्य
चतुस्त्रिद्व्येकमासाः शेषाणाम् अविज्ञातचाण्डालसम्पर्के विद्य
मान एव दम्पत्योः संयोगतया जातो ब्राह्मणः स वार्षिक
ब्रह्महत्याव्रतं प्राजापत्यं वा षण्मासान् कुर्य्यात् वार्षिकब्रह्म

---

कस्य द्वादशाहं यथेच्छभोजनं प्राजापत्यतुल्यं गोमहिता नडुहानश्च प्राजापत्य
द्वयतुल्यं तेन सुमन्तूक्तकृच्छ्रत्रयविषयं पराशरवचनमित्यर्थः। संवर्त्त इति
एतैश्चर्मकारादिभिः उच्छिष्टः ऊर्ध्वोच्छिष्ट इत्यर्थः। पयोजलं चाण्डालेन सहै
गृहवासे जातस्य प्रायश्चित्तमाह देवल इति चण्डालसङ्कराधिकारे शेषाणामित्य
सूत्रमिदं ब्राह्मण्यां चण्डालसंयोगे यो जातः स चण्डाल एव स्यात् न तत्र प्रायश्चि
मिति भावः किन्तु अविज्ञातचाण्डालेन सहैकगृहवासैः ब्राह्मणदम्पत्योः संयोगात
यो जातः स ब्राह्मणो ब्रह्महत्यायामुपदिष्टं कथितं वार्षिकप्रायश्चित्तं षण्मासप्राज
पत्यं वा कुर्वीत उभयत्रैव पञ्चदशधेनव इति विकल्पः। शेषाणां क्षत्रियवै
शूद्राणां चतुस्त्रिद्व्येकमासा ब्रह्महत्याव्रतकालाः चण्डालेन सहैकगृहवासे क्षत्रि
दम्पत्योर्जातः क्षत्रियो मासचतुष्टयं ब्रह्महत्याव्रतं कुर्य्यात् एवं तादृशो ज
वैश्यः मासत्रयम् एवं तादृशो जातः सच्छूद्रो मासद्वयम् एवं तादृशो जातोऽसच्

हत्याव्रताशक्तौ पञ्चदशधेनवो दातव्याः षाण्मासिकप्राजापत्य-व्रताशक्तावपीति ॥ १०१ ॥

अस्पृश्यस्पर्शनप्रायश्चित्तमभिहितमिदानीं स्पर्श एव निरूप्यते। किं साक्षात् स्पर्श एव स्पर्शशब्दस्यार्थः उत परम्परास्पर्शोऽपि न प्रथमः परम्परया चाण्डालादिस्पर्शे स्नानाद्य-भावप्रसङ्गात् न द्वितीयः संयोगे संयुक्तसंयोगे च एकस्य स्पर्श-पदप्रवृत्तिनिमित्तस्याभावादाकाशादिद्वारेण सर्वेषामेव तत्-सम्भवात्। किञ्च एवमौडुम्बरी सर्वा वेष्टयितव्याः औडुम्बरीं स्पृष्ट्वोद्गायेदित्यत्र सर्वत्र वेष्टनस्पर्शनयोरविरोधः स्यात् उप-स्पर्शस्यापि स्पर्शवाच्यत्वात्। तथाच विरोधाधिकरणोदाहरणं भाष्यकारस्यासङ्गतं स्यात्। तथाच वृद्धशातातपः,

अशुचिं संस्पृशेद् यस्तु एक एव स दुष्यति।
तत्स्पृष्टान्यो न दुष्येत सर्वद्रव्येष्वयं विधिः ॥

तथा, संहतानान्तु पात्राणां यद्येकमुपहन्यते।
तस्य तच्छोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि ॥

---

मासैकमित्यर्थः। सूत्रं व्याचष्टे अविज्ञात इति अविज्ञातश्चाण्डालस्य सम्पर्के विद्यमाने ब्राह्मणदम्पत्योः संयोगात् यो ब्राह्मण इत्यर्थः ॥ १०१ ॥

इति प्रायश्चित्तविवेकटीकायां तत्त्वार्थकौमुद्याम्
अस्पृश्यस्पर्शनप्रायश्चित्तम्।

---

अस्पृश्यस्पर्शनेति। उतेति। अपौत्युनेन साक्षात् स्पर्शः परम्परास्पर्शोऽपौत्युभयमिति द्वितीय विकल्पार्थः केवलपरम्परास्पर्शस्तु न विकल्पविषयः साक्षात् स्पर्शस्य स्पर्शशब्दवाच्यत्वे सर्वत्र व्यवहारसिद्धेर्विरोधाभावात् परम्परया एकदण्डा-दिना। संयोगे साक्षात्संयोगे संयुक्तसंयोगे संयुक्तपरम्परासंयोगे चेत्यर्थः। ननु साक्षात् परम्परोदासीनं संयोगमात्रं विवक्षितमित्याशङ्क्याह आकाशादीति। आदिशब्दाद्वायुग्रहणम्। अथ रूपिद्रव्यसंयोगो विवक्षणीय इत्याशङ्क्याह किञ्चेति।

उच्यते। उपस्पर्शो यद्यपि न स्पर्शशब्दस्यार्थः तस्याप्यत्र वचनादेकावयवद्वारा परम्परास्पर्शोऽपि ग्राह्यः। तथा चापस्तम्बः,

एकशाखां समारूढश्चाण्डालादिर्यदा भवेत्।
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात्॥

आदिशब्दादुदक्यादीनां ग्रहणम्। शाखाग्रहणमेकावयव्युपलक्षणार्थं तेनैकपाषाणादेरपि ग्रहणं तथा स एव,

एकवृक्षं समारूढौ चाण्डालब्राह्मणौ यदि।
फलं भक्षयतस्तत्र प्रायश्चित्तं कथं भवेत्॥
ब्राह्मणानामनुज्ञाप्य सवासाः स्नानमाचरेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥

तथा स एव,

एकशाखां समारूढः फलान्यश्नात्यसौ यदि।
प्रायश्चित्तं त्रिरात्रं स्यात् पञ्चगव्यं विशोधनम्॥

अत्र व्यवधानाव्यवधानाभ्यामेकरात्रत्रिरात्रौ ज्ञानविषयश्चैतदुभयम्। तथाच ब्रह्मपुराणं,

---

औडुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुतिः औडुम्बरी सर्वा वेष्टयितव्येति स्मृतिः तत्र ताम्रघटीसर्ववेष्टने साक्षात् स्पर्शासम्भवात् श्रुतिविरोधः साक्षात् स्पर्शे तु स्मृतिविरोध इति विरोधपरिहारार्थं श्रुतावुपस्पर्शे लक्षणा कार्य्या स्मृतौ वा सर्वपदसंकोचः कार्य्यः एवञ्च उपजीव्यबाधभयात् श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसीति मनुवचनाच्च स्मृतौ सर्वपदसंकोचः स्वीकृतः न तु श्रुतौ लक्षणेति सिद्धान्तः प्रकृते तु स्पर्शशब्दस्य उभयवाचकत्वे श्रुतिस्मृत्योर्विरोधाभावात् विरोधाधिकरणे सिद्धान्तो विरुद्धः स्यादित्यर्थः। एवमुभयार्थत्वेऽधिकरणविरोधमाशङ्क्य स्मृतिविरोधमाशङ्कते तथाचेति। न दुष्येतेति उपस्पर्शस्य स्पर्शपदार्थत्वाभावादित्यर्थः अन्यथा मुनीनां दोषाभावकथनं विरुद्ध्येतेति तथाप्यत्रेति अत्र स्पर्शप्रायश्चित्तवचनात् वचनानु-

विप्रश्चाण्डालसहितो यद्येकस्मिन् वनस्पतौ ।
अज्ञानात्तु फलं भुङ्क्ते चरेत्तत्राघमर्षणम् ॥

उपस्पर्शात् पाद आमाशने तथेति पूर्वोक्तापस्तम्बेन सह न विरोधः । तथापस्तम्बः, मूढः स्रस्तरे वाऽसंस्पृशन्नपि तान् प्रयतो मन्यते तृणस्रस्तरादौ चाण्डालादिभिः सहावस्थितोऽस्पृशन्नपि तान् प्रयतत्वमात्मनो मूढो मन्यते । वस्तुतस्तु अशुचिरेवासाविति पूर्ववाक्योपात्तं स्नानमेव कुर्य्यात् । तथा तृणकाष्ठेषु निखातेषु प्रोक्ष्य वास उपयोजयेत् । संक्रमादौ निखातेषु काष्ठादिषु चाण्डालेन सहावस्थितोऽप्यशुचिरेव तथा प्रोक्ष्य वास उपयोजयेत् । न सचेलं स्नानमित्यर्थः अयमेव विशेषः साक्षात् स्पर्शादस्य । अतो वचनादेकावयविद्वारा परम्परास्पर्शेऽपि स्नानादिकमिति । नौकादिषु न दोष इत्याह पराशरः,

रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च ।
स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकाचितानि च ॥

---

सारात् न तु सर्वत्रेति । स एवेति । असौ ब्राह्मणः अश्नाति भुङ्क्ते अत्रेति एकब्रह्मचारीहे शाखान्तराश्रयणात् व्यवहितोपस्पर्शः एकशाखाश्रयणाच्च सन्निहितोपस्पर्श इत्यर्थः ज्ञानविषयत्वे प्रमाणमाह तथाचेति । अज्ञाने लघुप्रायश्चित्तदर्शनात् प्रागुक्तं ज्ञानविषयमित्यर्थः । चाण्डालस्पर्शे आमाशने आपस्तम्बेन कृच्छ्रपादोऽभिहितः अत्र तु एकब्रह्मचारीहणे चाण्डालस्पर्शे अल्पप्रायश्चित्तं कथं घटतामिति विरोधमाशङ्क्य परिहरति उपस्पर्शादिति उपस्पर्शविषयं प्रागुक्तवचनं कृच्छ्रपादविधायकवचनञ्च साक्षात् स्पर्शविषयकमित्यविरोधः । मूढ इति स्रस्तरे तृणादिनिर्मितकटादौ एकावयविनि सहावस्थितः अप्रयतान् चाण्डालादीन् अस्पृशन्नपि को मूढः प्रयत इति आत्मानं मन्येत तस्मादप्रयतत्वात् प्रागुक्तं स्नानं कुर्वीतेत्यर्थः । सूत्रं व्याचष्टे तृणेति आपस्तम्बस्यैवानन्तर सूत्रमाह तथेति सूत्रं व्याचष्टे संक्रमादाविति तृणनव तृणराजगुवाकतालादि तस्यैव संक्रमादौ

तृणानि तृणसमूहः पक्केष्टकाचितानि मठादीनि। नन्वेवं याज्ञवल्क्यवचनविरोधः। तद्यथा,

उदक्या शौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत्।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा स्मरन्॥

अत्र परम्परोदक्यया अशुचिभिः स्पर्शे आचमनमवगम्यते। तथा शवन्तत् स्पृष्टिनञ्चैव इति मनुवचने तत्स्पृष्टोशवस्पृश्य-भिधीयते तदनर्थकं स्यात् चाण्डालादिस्पृष्टिस्पृष्टिनोऽपि स्नानाभ्युपगमात् न च तच्छब्देन सर्वेषामेव चाण्डालादीनां परामर्शः शवस्पृश्युपस्पर्शे सर्वं उदकोपस्पर्शाच्छुद्धेरदिति। गोतमविरोधात् तथा शवस्पर्शं दिवाकीर्त्तिमित्यादिवृहस्पति-वचनशवस्पृष्टञ्च स्पृष्ट्वेत्यादि विष्णुवचनाभ्याञ्च विरोधः। एषु सर्वेषु शवस्पृष्टिग्रहणात्। उच्यते। एकशाखां समारूढ़ इत्यापस्तम्बवचनं वर्त्तमानाशुचिसंसर्गे स्पर्शविषयम्। याज्ञ-

---

निःस्वती योग्यत्वात् वक्ष्यमाणपराशरवचने तृणसमूहस्य दोषाभावकथनाच्च। तस्यैवानन्तरसूत्रमाह तथेति सूत्रस्य तात्पर्य्यार्थं विवृणोति सचेलमिति। चण्डा-लेन सह साक्षात् स्पर्शात् उपस्पर्शस्यायं विशेषः यत् साक्षात् स्पर्शे सचेलस्नान-नियमः परम्परास्पर्शे चेलं विनापि स्नानम् उपसंहरति अत इति तद्यथेति उदक्याशौचिभिः स स्पृष्टः स्नायात् तैरुदक्याशौचिस्पृष्टैः स्पृष्टः उपस्पृशेदाचामे-दित्यर्थः। तदनर्थकमिति अत्र प्रकरणे एकदण्डोपलक्षणात् परम्परया चाण्डा-लादिस्पर्शेऽपि स्नानाभ्युपगमात् शवोपस्पर्शे विशेषविधानमनर्थकं स्यादित्यर्थः। न चेति तत्स्पृष्टीत्यत्र तच्छब्देन पूर्वोक्तादीनां चाण्डालादीनां सामान्यतः परामर्शात् विशेषाभिधानं न स्यादित्याशङ्कार्थः एष्वितिवचनैकवाक्यतया मनुवचने शवस्यैव परामर्श इत्यर्थः। अतएवेति अतएव देवलवचनमप्येतद्विषयमित्यर्थः। अशुचि-स्पृष्टम् अतीताशुचिस्पर्शं पुरुषं संस्पृश्य आचामेदिति याज्ञवल्क्यसमानार्थे तृतीयं वापीति वर्त्तमानाशुचिस्पर्शपुरुषस्पर्शिनम् अशुच्यपेक्षया तृतीयं स्पृष्टाचामेदिति व्यवस्थितो विकल्पः प्रोक्तसिद्धान्त संवादीत्यर्थः। देवलवचने तृतीयं वापीति

वल्क्यादिवचनञ्च अतीताशुचिसंसर्गि स्पर्शविषयमित्यविरोधः।
अतएव संस्पृश्याशुचिसंस्पृष्टं तृतीयं वापि मानवः।

हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति।

इति देवलवचनमपि वर्त्तमानाशुचिसंसर्गसंस्पृष्टविषयं मूलभूताशुच्यपेक्षया तृतीयं भवति तं स्पृष्ट्वा आचमनमात्रं चतुर्थेनेत्यर्थः। अतीतविषये द्वितीयमेव स्पृष्ट्वाचमनमिति व्यवस्थितविकल्पवाचि वा शब्दार्थः। तृतीयस्पर्शने किञ्चित् चाण्डालादिस्पर्शविषयञ्चैतत्। अतीतान्त्यजस्पर्शविषये तु द्वितीय एव नाचमनम्। यथा शातातपः,

अशुचिं संस्पृशेद् यस्तु एक एव स दुष्यति।
तत्स्पृष्टोऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः॥

एतल्लशुनाद्यशुचिद्रव्याध ऊर्द्ध्वोच्छिष्टस्पर्शविषयमपि अत्रापि। वर्त्तमानान्त्यजसंसर्गिस्पर्शे साक्षात्स्पर्श एवाचमनमेवेति सर्वमुपपन्नम्॥ १०२॥

इति प्रायश्चित्तविवेके अस्पृश्यस्पर्शप्रायश्चित्तम्॥

---

प्रतीकमादौ व्याचष्टे वर्त्तमानेति वर्त्तमानश्चाण्डालादिसंसर्गो विद्यते यस्य तस्य स्पर्शी पुरुषः चाण्डालाद्यपेक्षया तृतीयो भवति तं पुरुषं स्पृष्ट्वा चामेत् एवं य आचमनाधिकारी स चतुर्थः तस्य स्पर्शे न किञ्चिदित्यर्थः। इदानीम् अशुचिस्पृष्टमिति प्रतीकं व्याचष्टे अतीतेति अतीतविषये अतीतस्पर्शविषये तु यस्य चाण्डालादिस्पर्शोऽतीतस्तं चाण्डालाद्यपेक्षया द्वितीयं स्पृष्ट्वा चामेदित्यर्थः अत्र य आचमनाधिकारी स तृतीय इत्यर्थः। चाण्डालादीति येषां स्पर्शे स्नानं तेषां चाण्डालादीनां स्पर्शविषयमिदमुक्तम् अन्त्यजस्पर्शे त्वाचमनमात्रविधानात् अन्त्यजस्पृष्टे द्वितीये एव पुरुषे आचमनं व्यवस्थितं न तु तत्स्पृष्टे तृतीये। तच्चातीतस्पर्शविषयं वर्त्तमानान्त्यजस्पर्शे तु तृतीयस्याप्याचमनं तत्स्पृष्टिनस्तु न किञ्चिदिति वक्ष्यते। अतीतान्त्यजस्पर्शविषये शातातपः प्रमाणयति तथेति अशुचिं यस्य स्पर्शे आचमनं विहितं तम् अन्त्यजादिकमित्यर्थः। एतदिति अन्त्यजस्पर्शे यादृशं

## अथ रहस्यप्रायश्चित्तम्।

तत्र याज्ञवल्क्यः,

> विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम्।
> अनभिज्ञातदोषस्तु रहस्यव्रतमाचरेत्॥

विख्यातदोषोऽन्येन ज्ञातदोषः अनभिज्ञातदोषस्तृतीयेनेत्यर्थः। अन्यथा अगम्यागमनादौ व्यभिचारात्। तेन रहस्यकृते पापे रहस्यप्रायश्चित्तं करणीयम् अन्येनाविदितमित्यर्थः। अतएवाह यमः, रहस्ये रहस्यं प्रकाशमिति तत्र यदि कर्त्ता स्वयं प्रायश्चित्तानभिज्ञस्तदा कस्यचिद्रहस्यपापस्य किं प्रायश्चित्तमिति सामान्येन प्रायश्चित्ताभिज्ञं स्पृष्ट्वा रहस्यप्रायश्चित्तं कुर्य्यात्। तत्र, यत्र मरणान्तिकं प्रायश्चित्तं तत्र रहस्यकृतेऽपि मरणान्तिकं कर्त्तव्यं मरणे ज्ञाता सम्भवात्। यत्र तु व्रतादिकं तत्र

---

प्रायश्चित्तम् उच्छिष्टस्य लशुनादिस्पृष्टस्य स्पर्शेऽपि तादृशमित्यर्थः अतीतान्त्यजस्पर्शं व्यवस्थाय वर्त्तमानान्त्यजस्पर्शं व्यवस्थापयति अत्रापीति ॥ १०२ ॥

इति प्रायश्चित्तविवेकटीकायां तत्वार्थकौमुद्यां स्पर्शनिरूपणम्।

अथ रहस्यप्रायश्चित्तमिति। तृतीयेनेति। अगम्यागमने हिंसायाञ्च अगम्यावध्ययोरवश्यं ज्ञानात् अन्यथानुपपत्त्या तृतीयेनेति कल्पनीयम् अन्यत्र तु द्वितीयेनापि अन्यथा सर्वत्र द्वितीयज्ञानमात्रकल्पने तु अगम्यागमने हिंसायाञ्च व्यभिचारः स्यादित्यर्थः। तत्रेति तत्र रहस्यपापप्रायश्चित्तमध्ये इत्यर्थः। यथेति विंशभागो ब्राह्मणस्य विंशभागः क्षत्रियवैश्ययोः षष्टिभागः शूद्रस्य आढ्यतरुणयोः विंशभागः दरिद्रेतरवृद्धयोस्त्रिंशभागः दरिद्रातिवृद्धयोः षष्ठिभागः वेदाग्निहीनस्य विंशभागः एकगुणयुक्तस्य विंशभागः वेदाग्नियुक्तस्य षष्टिभागः इत्याद्यूह्यं रहस्यपापे मुनिभिस्तत्तद्विशेषोक्तप्रायश्चित्तेन सह विरोधमाशङ्क्य परिहरति अथवेति तेनायमर्थः सम्पन्नः यस्मिन् रहस्यपापे मुनिभिर्विशेषप्रायश्चित्तं नाभिहितं तद्विदं विश्वासित्ववचनमिति भावः। अन्येष्विति अन्येषु उपपातकेषु तदितरपापे इ

जात्याद्यपेक्षया उक्तव्रतस्य विंशतिभागादिकं कार्य्यम्। यथा विश्वामित्रः,

> प्रकाशे उक्तं यत्किञ्चिद्विंशो भागो रहस्यके।
> त्रिंशद्भागः षष्ठिभागः कल्प्यो जात्याद्यपेक्षया॥

आदिशब्दाज्जातिशक्तिगुणापेक्षं सकृद्द्विस्त्रिरित्यादिरुप-संग्रहः। अथवा महापातकेषु सामान्यमहापातकरहस्यप्राय-श्चित्तं मनुनोक्तं करणीयम्। यथा मनुः,

> महापातकसंयुक्तोऽनुगच्छेद् गाः समाहितः।
> अभ्यस्याब्दं पावमानीं भैक्षाहारो विशुध्यति॥

एतेन महापातकेषु कामत आब्दिकं व्रतं करणीयम् अशक्तौ पञ्चदशधेनवो देयाः। अन्येषु पापेषु याज्ञवल्क्योक्तं प्राणा-यामशतं करणीयम्। यथा याज्ञवल्क्यः,

> प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये।
> उपपातकयुक्तानामनादिष्टेषु चैव हि॥

---

विश्वामित्रोक्तं त्रिंशभागादिकम् अत्रेति पापस्य गौरवं लाघवं तदतिशयश्च बुद्ध्यादि-नैकेन वा दिनद्वयेन दिनत्रयेण वा प्राणायामशतमिति क्रमेण सर्वं मासैकं व्याप्य पुनः पुनः शतमभ्यसनीयं तथा पापगौरवातिशयापेक्षया एकाहद्व्यहत्र्यहक्रमेण शतमेव पुनः पुनः षण्मासंवत्सरं वा व्याप्य अभ्यसनीयमित्यर्थः। वशिष्ठ इति जपोऽत्रानादेशे गायत्र्याः होमः व्याहृतिभिर्वाज्येन उभयत्रानादेशेऽष्टोत्तरशतं संख्या। ध्यायिनां किं ज्ञातमिति सर्वदानुध्यायिनाम् अनुतापवतामित्यर्थः। शिरोव्रतैः सशिरस्कस्नानविधिभिः स्वगृह्योक्तैर्ये स्नाताः तेषामित्यर्थः अतएव योगियाज्ञवल्क्यः अगम्यागमनात् पापात् पापिभ्यश्च प्रतिग्रहात्। रहस्याचरितात् पापात् मुच्यते स्नानमाचरन्। ते चेति यथा मनुः अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम्। मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः। त्र्यहन्तूपवसे-

अत्र गुरुत्वलाघवापेक्षया प्राणायामशतमेव एकाहद्व्यहत्र्य-हादिक्रमेण मासं षण्मासं संवत्सरं वा अभ्यसनीयमिति व्रत-करणाशक्तेनापि जपहोमादयोऽत्र कार्य्या इत्याह मनुः,

एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैस्तु शोधयेत् ॥

तथा च वशिष्ठः,

जापिनां होमिनाञ्चैव ध्यायिनां तीर्थसेविनाम् ।
निवसन्ति न पापानि ये च स्नाताः शिरो व्रतैः ॥

संवर्त्तः,

दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजातयः ।
पातकेभ्यः प्रमुच्यन्ते वेदाभ्यासान्न संशयः ॥

ते जपहोमादयः स्मृत्यन्तरेऽनुसन्धेयाः विस्तरभयान्नेह प्रस्तू-यन्ते ॥ १०३ ॥

इति प्रायश्चित्तविवेके रहस्यप्रायश्चित्तम् ॥

---

युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम् । स व्याहृतिः स प्रणवाः प्राणायामास्तु षोड़श । अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः तथा प्रतिग्रह्या प्रतिग्राह्य भुक्त्वा वान्य विगर्हितं जपंस्तावत् समन्नीयं मुच्यते मानव स्त्र्यहात् । मन्त्रैः शाकलहोमीयैः अब्दं हुत्वा घृतं द्विजः । स्व गुर्व्यपि वहन्त्येनो जप्त्वा वा नम इत्यृचम् । एतानि लघुगुरुपापापेक्षया व्यवस्थेयानि यथा याज्ञवल्क्यः त्रिरात्रोपोषितो भूत्वा कुष्माण्डीभिर्घृतं शुचिः । सुरापः स्वर्णहारी तु रुद्रजापी जले स्थितः सहस्रशीर्षाजापी च मुच्यते गुरुतल्पगैर्गोर्दैय कर्मणश्चान्ते पृथगेभिः पयस्विनी षोडशाराभिः सुतं सोमसलिलं पावनं पिबेत् क्लीपवसनं रेतो विण्मूत्रप्राशनं द्विजः ॥ १०२ ॥

इति प्रायश्चित्तविवेकटीकायां रहस्यप्रायश्चित्तम् ।

## अथ व्रतविधिः।

तत्र व्रतधर्माः, तत्र लघुविष्णुः,

दिनान्ते नखरोमादीन् प्रवाप्य स्नानमाचरेत्।
भस्मगोमयमृद्वारि पञ्चगव्यादिकल्पितम्॥
मलापकर्षणं कार्य्यं ब्रह्मशौचार्थसिद्धये।
दन्तधावनपूर्व्वेण पञ्चगव्येन संयुतम्।
व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शने॥

तेन प्रायश्चित्तव्रतारम्भपूर्व्वदिने पञ्चगव्यं प्राश्य दन्तधावनं कृत्वा सायं समये व्रतसङ्कल्पः कर्त्तव्य इति। वशिष्ठः, श्मश्रुकेशनखान् वापयेत् अच्छिलोमशिखावर्जम्। केशधारणेच्छायां द्विगुणव्रतमाह हारीतः,

राजा वा राजपुत्त्रो वा ब्राह्मणो वहुश्रुतः।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्॥
केशानां धारणार्थन्तु द्विगुणं व्रतमाचरेत्।
द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेत्॥

स्त्रियाः केशवपनं न कर्त्तव्यमित्याह बौधायनः, कृच्छ्रे त्रिसवनमुदकोपस्पर्शनमधःशयनमेकवस्त्रता केशश्मश्रुनखरोमवाप-

---

इदानीं पापक्षयसाधने प्राजापत्यादिव्रते निरूपितव्ये प्रथमं तेषां साधारणधर्मान्निरूपयति। अथ व्रतविधिस्तत्र व्रते धर्मा इति धर्मोऽङ्गं लघुविष्णुरिति स्नानपरिपाटीमाह भस्मेति। ब्रह्मशौचं वेदोक्तपापक्षयसाधनं प्राजापत्यादिव्रतं तदर्थं तदधिकारार्थं या शुद्धिस्तदर्थं भस्मादिभिर्मलापकर्षणं कृत्वा स्नायादित्यर्थः। दन्तधावनात् पूर्व्वकृत्येन पञ्चगव्येन पञ्चगव्यप्राशनेन युक्तं यथा स्यादित्यर्थः। वहिः गृहाद्वहिः वशिष्ठ इति श्मश्रु मुखलोम एवमच्छिलोम्नोऽपि वापनप्राप्तौ तन्निषेधमाह अच्छिलोमेति। पञ्चगव्येति पञ्चगव्यप्राशनं प्रागुक्तं वक्ष्यमाणञ्च घृतप्राशनं तयोर्विकल्प इत्यर्थः। शङ्खलिखिताविति। वाप्य वापयित्वा

नम् एतदेव स्त्रियाः केशवापनं वर्जं पञ्चगव्यघृतप्राशनयोर्विकल्पः। तथा शङ्खलिखितौ,

वाप्य केशनखान् पूर्वं घृतं प्राश्य वह्निर्निशि।
प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्॥
प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत्।
एकवासार्द्रवासा वा लघ्वाशी स्थण्डिलेशयः॥
स्थानवीरासनी मौनी मौञ्जी दण्डकमण्डलुः।
भैक्ष्यचर्य्याग्निकार्य्यञ्च कुष्माण्डैर्जुहुयाद् घृतम्॥

प्रत्येकं नियतं कालमिति व्रतकालसंख्या संकल्पवाक्ये उल्लेखनीयेत्यर्थः। वीरासनी कुड्यादावनुपाश्रित्योपविष्टः दण्डकमण्डलुः आर्षत्वान्मतुप्लोपेनैतद्युक्तमित्यर्थः। कुष्माण्डैर्यद्देवा देवहेलनमित्यादिमन्त्रैः। मनुः, महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम्।

अहिंसा सत्यमक्रोधमार्जवञ्च समाचरेत्।
त्रिरह्नस्त्रिर्निशायाञ्च सवासा जलमाविशेत्॥

त्रिरह्नस्त्रिर्निशायाञ्चेति षट्स्नानविधानं पिपीलिकामध्यचान्द्रायणतप्तकृच्छ्रवर्जं फलातिशयार्थञ्च बहुषु त्रिसवनस्नानविधानात्। तथा,

---

आत्मनो नामगोत्रेण सह नियतं कालं व्रतकालसंख्यां प्रत्येकमुच्चार्य्येति शेषः व्रतमादिशेत् सङ्कल्पयेदित्यर्थः। प्रायश्चित्तमुपासीनो गृहीतप्रायश्चित्त इत्यर्थः। स्पृशेत् स्नायात् स्थानम् उत्थाय स्थितिः वीरासनं निराश्रयोपवेशनम् उभयोरन्यतरवान् इत्यर्थः। भैक्षचर्य्याग्निकार्य्यञ्च कुर्य्यादिति शेषः पिपीलिकामध्येति उपस्पृशं स्त्रिसवनमिति तप्तकृच्छ्रे च सकृत् स्नायी समाहित इति मनोस्तत्र [illegible]विधानात् फलातिशयार्थञ्चेति अन्वेति शेषः। बहुषु व्रतपरिभाषावचनै

स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित्।
स्थानासनाभ्यां विहरेदशक्तोऽधःशयी भवेत्॥
ब्रह्मचारी व्रती च स्याद् गुरुदेव द्विजार्चकः।
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः।
सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः॥

ब्रह्मचारी मैथुनवर्जी व्रती छत्रोपानहमाल्याञ्जनगन्धादि-वर्जी। शूद्रेण सावित्रीजपस्थाने नारायणादिमन्त्रजपः कार्य्यः अन्यद्वारा वा कारयितव्यः एवमन्यत्रापि। यथा वराह-पुराणम्,

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते॥ इति।

जावालः,

आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः।
आज्येनैव तु शालाग्नौ जुहुयाद्द्वाहुतीः पृथक्॥
श्राद्धं कुर्य्यात् व्रतान्ते च गोहिरण्यादिदक्षिणा।
गृहे गृही वसन् कुर्वन् ब्रह्मलोके महीयते॥
स्त्रीणां होमो न कर्त्तव्यः पञ्चगव्यं तथैव च।
शूद्राणां पापिनाञ्चैव संवादं न च कारयेत्॥
संवादस्तु न कर्त्तव्यस्त्रिभिर्वर्णैः कदाचन।
ब्राह्मणेनैव कर्त्तव्यमुत्पन्ने प्राणसंशये॥

श्राद्धमिति शुद्ध्यर्थं श्राद्धं दर्शितम्। स्त्रीभिर्होमो न कर्त्तव्यः

---

छत्रोपानहेति द्वन्द्वे तद्धितोऽतप्रत्ययः विप्रो गृह्यते सम्बध्यते शालाग्नौ गृह्याग्नौ दक्षिणा देयेति शेषः। गृहे वसन् अपापी गृहस्थः प्राजापत्यादिकाम्यव्रतं कुर्वन्नित्यर्थः। शूद्रपापिनोरुपस्थितयोः सम्भाषां मौनित्वात् स्वयं न कुर्य्यादेव

पञ्चगव्यपानञ्च कृत्यानां कर्त्तरि षष्ठी। प्रारब्धव्रतपीड़या प्राणसंशये अन्ये वर्णा न प्रष्टव्याः ब्राह्मण एव द्रष्टव्यः व्रते मौनं पूर्वमुक्तम्॥ १॥

अत्र विशेषमाहापस्तम्बः, तत्र मौनयुक्तैः त्रैविद्यवृद्धैर्मुनिभिरन्यैराश्रमवासिभिर्बहुश्रुतैर्दन्तैर्दन्तान् सन्धायान्तर्मुख एव यावदर्थं भाषेत न मन्त्रलोपो भवतीति विज्ञायते। मन्त्रलोपो व्रतलोपः बालवृद्धादिभिरङ्गहीनमपि व्रतं कार्य्यमित्याह लघुविष्णुः,

असंस्कृतो निरुत्साहो रोगी नवति जीवकः।
यथाशक्ति प्रकुर्वीत व्रतं चेषु न लुप्यते॥

अशक्तावन्यद्वारापि कार्य्यमित्युक्तं ब्रह्मपुराणे,

रोगी वृद्धस्तु पोगण्डः कुर्वन्त्यन्यैर्व्रतं सदा।
चतुर्थाद्वत्सराद्रूर्द्धमष्टमं यावदेह हि॥
शिशोर्व्रतं प्रकुर्वीत गुरुसम्बन्धिबान्धवाः।
गुर्विणी बालवत्सा च रोगी द्रव्यपरायणः।
एते नक्तेषु भुञ्जन्ति बाला मध्याह्न एव च॥
व्रतस्थः प्राणरक्षार्थं कदाचिदुदकं पिबेत्।
फलमूलं तथा क्षीरं यज्ञशिष्टं तथा हविः॥

---

किन्त्वन्यद्वारापि न कारयेत् प्राणसंशये समुत्पन्नेऽपि क्षत्रियादिस्त्रिभिर्वर्णैः सह संवादः कदाचिदपि न कार्य्यः मौनस्य व्रताङ्गत्वात् किन्तु ब्राह्मणेन सह प्राणरक्षार्थं कार्य्य इत्यर्थः॥ १॥

आपस्तम्ब इति तिसृणां वेदविद्यानां समाहारस्त्रैविद्यं तत्र वृद्धैर्विज्ञैरित्यनेन प्रामाण्यमुक्तम् अन्तर्मुख एव मुखमध्य एव अस्फुटं भाषेत तदपि यावत् यावदर्थं यावानर्थः प्रयोजनं तस्य यावदनतिक्रमेण प्रयोजनातिरिक्तं न भाषेतेत्यर्थः। लघुविष्णुरिति असंस्कृतो बालः निरुत्साह इति रोगिविशेषणं नवतिवर्षजीवकेति

व्रतमध्ये तु रोगार्त्तो वैद्यप्रोक्तं तथौषधम्।
करोति च गुरोर्वाक्यं व्रतस्थस्तत्क्षणादपि।
ब्राह्मणस्याभिलषितं साधयेदविचारयन्॥
एतान्यष्टौ व्रतस्थानामव्रतघ्नानि कर्हिचित्।
व्रतेष्वेतेषु ये देवास्तान् व्रतस्थस्तु पूजयेत्॥

पोगण्डो बालः, द्रव्यपरायणः कुटुम्बी द्रव्यार्जनपालनतत्परः सन्नित्यर्थः। बौधायनः,

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्॥

हारीतयमौ,

बलयश्चोपहाराश्च हवींषि चरवस्तथा।
निर्विशङ्केन भोक्तव्यं व्रतमस्य न लुप्यते॥

बलिः वैश्वदेवादौ देवताभ्यो दत्तः, उपहारो नैवेद्यं चरुः पार्वणस्थालीपाकादिः। अत्र चैतेषां दत्तावशिष्टं भक्षणीयमिति। देवलः,

उपवासो विनश्येत्तु दिवा स्वप्नाच्चमैथुनैः।
अत्यये जलपानेन नोपवासः प्रणश्यति॥

वृद्धशातातपः,

गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्।
उपवासेन दुष्यन्ति दन्तधावनमञ्जनम्॥

---

पतितद्वीपलक्षणम् एषु बालादिषु अङ्गहीनं व्रतं न लुप्येत ब्रह्मपुराण इति पोगण्डो बालः रोग्यादिरन्यद्वारा व्रतं कुर्वन् शुद्धो भवेदित्यर्थः। तत्रान्यान् विवृणोति चतुर्थादिति। गुरुः पित्रादिः सम्बन्धी मातुलादिः बान्धवो भ्रात्रादिः।

अलङ्कारोऽत्र वस्त्रसिन्दूरालक्तादिः उपवासेन हेतुना इत्यर्थः।

तथा,

स्त्रीणां संप्रेक्षणात् स्पर्शात्ताभिः संकथनादपि।
ब्रह्मचर्य्यं विनश्येत्तु न दारेष्वृतुसङ्गमादिति॥

संप्रेक्षणादिति संकथनादिति अत्र सरागत्वं संशब्दस्यार्थः॥ २॥

अथ प्राजापत्यादिव्रतस्वरूपम्।

तत्र मनुः,

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परन्तु नाश्नीयात् प्राजापत्यं चरन् द्विजः॥

पराशरः,

त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम्।
त्र्यहञ्चैव न भुञ्जीत प्राजापत्यो विधिः स्मृतः॥
सायं द्वाविंशतिर्ग्रासाः प्रातः षड्‌विंशतिस्तथा।
अयाचिते चतुर्विंशः परञ्चानशनं स्मृतम्॥
कुक्कुटाण्डप्रमाणन्तु यावान् वा प्रविशेन्मुखम्।
एतं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम्॥

मनूक्तप्रातरादित्वपराशरोक्तसायमादित्वयोरिच्छाविकल्पः

---

नक्तेषु नक्तव्रतेषु मध्याह्ने भुञ्जीरन्नित्यर्थः। फलमूलादीनि भक्षयेदिति शेषः। अष्टौ उदकादीनि ब्राह्मणाभिलषितान्नानि व्रतदेवताः प्राजापत्ये प्रजापतिः चान्द्रायणे चन्द्र इत्यादयः वलय इति हवींषि यज्ञावशिष्टानि तथेति दारसङ्गमात् ब्रह्मचर्य्यं विपद्येतेति न किन्तु स्त्रीणां संप्रेक्षणादितोऽपि विपद्येत

यावान् प्रविशेन्मुखमित्यत्र आस्याविकारेणेति। तथा गोतमः, ग्रासप्रमाणमास्याविकारेणेति एतच्च प्राजापत्यं द्वादशाहसाध्यं सकलमुनिसाधारणम्। कृच्छ्रार्द्धव्रतमापस्तम्बः,

सायं प्रातस्तथैकैकं दिनद्वयमयाचितम्।
दिनद्वयञ्च नाश्नीयात् कृच्छ्रार्द्धः सोऽभिधीयते॥

एतद्दिनषट्कसाध्यं कृच्छ्रार्द्धव्रतम्। पादकृच्छ्रमाह याज्ञवल्क्यः,

एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः॥

एतच्चतुरहसाध्यं पादकृच्छ्रव्रतम्॥ ३॥

अथातिकृच्छ्रव्रतम्।

तत्र प्राजापत्यमभिधायाह याज्ञवल्क्यः,

अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभक्षणात्।

पाणिः पूर्य्यते येन अन्नेन तन्मात्रभोजनात् नवसु दिवसेष्वयमेव प्राजापत्योऽतिकृच्छ्रसंज्ञो भवति। तथाच मनुः,

एकैकं ग्रासमश्नीयात्त्र्यहानि त्रीणि पूर्ववत्।
त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः॥

एकैकग्रासपाणिपूरणान्नभक्षणयोः शक्ताशक्तभेदेन विकल्पः एतद्द्वादशाहसाध्यमतिकृच्छ्रव्रतम्॥ ४॥

---

प्राजापत्यादीनि त्रीणि प्रकरणानि स्पष्टानि॥ ३॥

अथातिकृच्छ्रव्रतमिति। नवदिवसेष्विति प्राजापत्ये यत्र भक्त्ययस्ति तत्र पाणिपूरणान्नविधिरित्यर्थः। पूर्ववत् प्राजापत्यवत्प्रातःसायमयाचितेषु त्रीणि त्र्यहाणि एकैकं ग्रासमश्नीयादित्यर्थः॥ ४॥

अथ कृच्छ्रातिकृच्छ्रव्रतम् ।

तत्र वशिष्ठः, अभक्ष्यस्तृतीयः कृच्छ्रातिकृच्छ्रो यावत् सकृदाददीत यावदेकवारमुदकं हस्तेन ग्रहीतुं शक्नोति तावन्नवसु दिवसेषु भक्षयित्वा त्र्यहमुपवासः स कृच्छ्रातिकृच्छ्रः। सुमन्तुः, द्वादशरात्रं निराहारः सकृच्छ्रातिकृच्छ्रः। एतत् कृच्छ्रातिकृच्छ्रद्वयं द्वादशाहसाध्यम् अशक्तविषयम्। याज्ञवल्क्यः, कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्। पयो जलं यथा ब्रह्मपुराणे,

चरेत् कृच्छ्रातिकृच्छ्रञ्च पिबेत्तोयञ्च शीतलम् ।
एकविंशतिरात्रन्तु कालेष्वेतेषु संयतः ॥

कालेष्विति प्रातः सायं मध्याह्नेष्वित्यर्थः। इदञ्च शक्तविषयम् ॥ ५ ॥

अथ शिशुकृच्छ्रव्रतम् ।

तत्र मनुः, अहः कल्यमहः सायम् अहरद्यादयाचितम् । अहस्तु वायुभक्षः स्याच्छिशुकृच्छ्रं विधीयते। वायुभक्ष आवर्त्तितदुग्धावाष्पभक्षः एतच्चतुरहसाध्यं शिशुकृच्छ्रव्रतम् ॥ ६ ॥

---

अथ कृच्छ्रातिकृच्छ्रमिति। वशिष्ठ इति प्राजापत्यादिकृच्छ्रं व्रतद्वयं तत्परं कृच्छ्रातिकृच्छ्राख्यं तृतीयव्रतम् आपो भक्ष्या यत्र सोऽब्भक्ष्यः एतच्च प्राजापत्योक्तद्वादशदिनेषु यत्र भक्ष्यमस्ति तत्र जलमात्रविधानम् उपवासत्रयन्तु निर्विवादमेवेति जलप्रमाणमाह यावदिति सूत्रं व्याचष्टे यावदेकवारमिति सुमन्तुरिति। निर्गत आहारो यत्र व्रत इत्यर्थः। प्रातरिति समाह्वये कर्मणीत्यर्थः ॥ ५ ॥

शिशुकृच्छ्रमिति कल्यं प्रातः अत्रापि प्राजापत्योक्तग्राससंख्या ग्राह्या तप्तक्षीरवाष्पपानस्य दृष्टत्वादत्रापि तथेत्यर्थः ॥ ६ ॥

अथ वृद्धकृच्छ्रव्रतम्।

तत्र शङ्खलिखितौ, प्रातः सायमयाचितमुपवासस्त्र्यहं त्र्यहमिति प्राजापत्यं द्व्यहं द्व्यहमिति वृद्धकृच्छ्रः एकैकमिति बालकृच्छ्रः एतदष्टदिनसाध्यं वृद्धकृच्छ्रव्रतम् ॥ ७ ॥

अथ तप्तकृच्छ्रव्रतम्।

तत्र मनुः,

तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्।
प्रतित्र्यहं पिबेदुष्णान् सकृत् स्नायी समाहितः ॥

तप्तानिलपानञ्च तप्तक्षीरवाष्पपानं एतत् द्वादशाहसाध्यम्। जलादिपरिमाणमुक्तं ब्रह्मपुराणे,

तप्तकृच्छ्रव्रतं कुर्वंस्त्र्यहं सायं पिबेच्छुचिः।
षट्पलानि सुतप्तस्य तोयस्य सुसमाहितः ॥
प्रभाते त्रीणि दुग्धस्य सुतप्तस्य पिबेत्त्र्यहम्।
पानं घृतस्य तप्तस्य मध्याह्ने त्रिदिनं पिबेत् ॥
वायुभक्षस्त्र्यहं चान्त्यं निर्दहेत् पातकं द्विजः।

याज्ञवल्क्यः,

तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्रस्तु पावनः ॥

---

अथ वृद्धकृच्छ्रमिति। शङ्खलिखिताविति क्रमेण प्राजापत्यवृद्धकृच्छ्रशिशुकृच्छ्राणां त्रयाणामित्यभिधानम् ॥ ७ ॥

अथ तप्तकृच्छ्रमिति। तप्तक्षीरेति एतच्च वायोस्तप्तत्वानुपपत्त्या युक्तिमात्रम्। वस्तुतस्तु उष्णानिति यथायोग्यमन्वयः अतएव ब्रह्मपुराणे जलादीनि त्रीणि तप्तान्यभिधाय वायुभक्षस्त्र्यहमिति निर्विशेषणमुक्तं न वा दुग्धवाष्पं वायुस्तस्य

एतच्चतुरहसाध्यं तप्तकृच्छ्रव्रतम् ॥ ८ ॥

अथ सौम्यकृच्छ्रव्रतम् ।

तत्र याज्ञवल्क्यः,

पिण्याकाचामतक्राम्बु शक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥

पिण्याकः खलिः आचामो भक्तमण्डः एष तु षड़हसाध्यः सौम्यकृच्छ्रः ॥ ९ ॥

अथ सान्तपनम् ।

तत्र याज्ञवल्क्यः,

कुशोदकञ्च गोक्षीरं दधि मूत्रं शकृद् घृतम् ।
प्राश्यापरेद्युरुपवसेत् कृच्छ्रं सान्तपनं स्मृतम् ॥

प्राश्येति एकदिन एव द्रव्यषट्कप्राशनमात्रं कृत्वेत्यर्थः । एतद्दिनद्वयसाध्यम् । तथाच यमः,

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च श्वपाकमपि शोधयेत् ॥
विण्मूत्रप्राशने ह्येष द्व्यहादेव विशुद्ध्यति ।
सर्वानेव च संसर्गान् त्र्यहात् सान्तपनो विधिः ॥

---

द्रव्यान्तरत्वात् प्रत्युत तत्पाने न व्रतवैगुण्यप्रसङ्गः तस्माद् यावद्ग्रासं सकृत् वायुं पिबेदित्यर्थः । पलं सुवर्णाश्चत्वार इति पलप्रमाणं ग्राह्यम् । याज्ञवल्क्योक्तेति ब्रह्मपुराणोक्तं क्षीरादिप्रमाणं ग्राह्यम् ॥ ८ ॥

अथ सौम्यकृच्छ्र इति स्पष्टार्थम् ॥ ९ ॥

अथ सान्तपनमिति । गौरिति क्षीरादिषु पञ्चस्वन्वयः एकदिन एवेति स्मृत्यन्तरेऽभिधानादिति भावः । यम इति अत्र याज्ञवल्क्यैकवाक्यतया पूर्व-

कपिलायास्तु दुग्धायाधारोष्णन्तु पयः पिबेत्।
एष मैत्र कृतः कृच्छ्रः सर्वपापप्रणाशकः॥

प्रथमं दिनद्वयसाध्यं सान्तपनमुक्त्वा पश्चाद्दिनत्रयसाध्यमुक्तम्। तत्र प्रथमे सान्तपने गोमूत्रादिद्रव्यषट्कं प्राश्य परेद्युरुपवासः कर्त्तव्य इति दिनद्वयसाध्यता द्वितीयसान्तपने तृतीयदिने कपिलाक्षीरपानमधिकम्। एष मैत्रकृच्छ्रोऽपि ब्रह्मपुराणे,

प्रथमेऽहनि नाश्नीयाद्गोमूत्राशी ततःपरम।
तृतीये गोमयाशी स्याच्चतुर्थे क्षीरपो भवेत्॥
पञ्चमे दधिभुक् चैव घृतं षष्ठे भवेदथ।
कुशोदकं सप्तमे तु कृच्छ्रः सान्तपनो विधिः॥

एतच्च सप्ताहसाध्यं सान्तपनव्रतम्। तथा मनुरप्याह,

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्॥

एतच्च सप्ताहसाध्यं न तु द्व्यहसाध्यं यतो मनुना प्राजापत्य-सान्तपनातिकृच्छ्रतप्तकृच्छ्रपराकचान्द्रायणादीनामुत्तरोत्तर-गुरुक्रमेणाभिधानात् किञ्च जातिभ्रंशकरे पापे कामकृते सान्तपनमुक्त्वा अकामकृते प्राजापत्यस्योक्तत्वात्॥ १०॥

---

दिने गोमूत्रादीनां प्राशनं परतो द्व्यहादित्यभिधानाच्च एष सान्तपनो विधिः विस्मूत्रप्राशने द्व्यहाद्विशुद्ध्यति विशोधयतीत्यर्थः। मन्दारिकुसुमादींश्च फल-कन्दमूलकान्। विस्मूत्रदूषितान् प्राश्य चरेत् कृच्छ्रञ्च पादतः॥ इति विण्मूत्र-पादकृच्छ्रविषये सान्तपनमिदं तुल्यत्वात् सर्वानिति वक्ष्यमाणत्र्यहसाध्यसान्तपन-विधिः संसर्गान् विशोधयतीति पूर्वेणान्वयः। तं विधिमाह कपिलायाश्चेति प्रागुक्तदिनद्वयसाध्यसान्तपनं तत्परदिने कपिलाक्षीरपानेन सह त्र्यहसाध्य-मित्यर्थः। धारोष्ण दोहाव्यवहितकालीनं यत इति प्राजापत्यात् गुरुत्वान्यथा-

अथ महासान्तपनम्।

तत्र द्व्यहसाध्यसान्तपनमुक्त्वा याज्ञवल्क्यः,

पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः
सप्ताहेनैव कृच्छ्रोऽयं महासान्तपनः स्मृतः॥

एतच्च सप्ताहसाध्यम्। जावालः,

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
एकैकं क्रमशोऽश्नीयादहोरात्रमभोजनम्॥
कृच्छ्रः सान्तपनो नाम सर्वपापप्रणाशकः।
एकैकमेतदेवं हि त्रिरात्रमुपभोजयेत्।
त्र्यहं चोपवसेदन्त्यं महासान्तपनं विदुः॥

एतत् सप्ताहसाध्यसान्तपनमुक्त्वा एकविंशतिदिनसाध्यं महासान्तपनमुक्तम्॥ ११॥

अथ पराकः।

तत्र मनुः,

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्।
पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः॥

बृहस्पतिः,

---

नुपपत्त्यैव सप्ताहसाध्यतेत्यर्थः किञ्चेति यथा मनुः जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया॥ १०॥

अथ महासान्तपनमिति याज्ञवल्क्य इति एतत् सप्ताहसाध्यं महासान्तपनं ब्रह्मपुराणमनुसमानार्थम् एकविंशतिदिनसाध्यन्तु वक्ष्यते जावाल इति एकैकं गोमूत्रादिद्रव्यम् एवं क्रमेण त्र्यहं त्र्यहं भुञ्जीत त्र्यहं चोपवसेदित्यर्थः॥ ११॥

जपहोमरतः कुर्य्याद्द्वादशाहमभोजनम् ।
पराक एष विख्यातः सर्व्वपापप्रणाशनः ॥ १२ ॥

अथ ब्रह्मकुर्च्चव्रतम् ।

तत्र जावालः,

अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्च्चविधिः स्मृतः ॥

पञ्चगव्यपाने वृद्धशातातपः,

गोशकृद्द्विगुणं मूत्रं सर्पिर्विद्याच्चतुर्गुणम् ।
क्षीरमष्टगुणञ्चैव पञ्चगव्ये तथा दधि ॥

एतद्दिनद्वयसाध्यं ब्रह्मकूर्च्चव्रतं शङ्खः,

गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोऽसीति घृतञ्चैव देवस्य त्वा कुशोदकम् ।
गोमूत्रभागस्तस्यार्द्धं शकृत् क्षीरस्य च त्रयम् ॥
द्वयं दध्नो घृतस्यैकमेकञ्च कुशवारिणः ।
ब्रह्मकूर्च्चमिदं नाम व्रतं सर्व्वाघसूदनम् ॥

एतच्च कुशोदकसहितपञ्चगव्यपानम् उपवासपूर्व्वकं कार्य्यम् । मन्त्राज्ञाने तु प्रणवेनैव सर्व्वं कर्त्तव्यम् । यथा यमः,

---

अथ पराक इति । यतात्मनः संयतचित्तस्य ॥ १२ ॥

अथ ब्रह्मकूर्च्चव्रतमिति । पञ्चगव्यानां शातातपपराशरशङ्खोक्तानि वैकल्पितानि त्रीणि परिमाणान्याह पञ्चगव्यपान इति गोशकृतो गोमयस्य द्विगुणं मूत्रम् अयमर्थः पराशरवचने गोमूत्रे माषकास्त्वष्टावित्यनेन पञ्चगुञ्जापरिमितमाषकाष्टकं तोलकैकं गोमूत्रपरिमाणं वक्ष्यते । तेनात्र गोमयपरिमाणं माषकचतुष्टयं तोलकार्द्धं गोमूत्रस्य गोमयद्विगुणत्वाभिधानात् सर्पिः प्रमाणन्तु गोमयाच्चतुर्गुणं तोलक-

आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन तु।
प्रणवेन समालोड्य प्रणवेनैव तत् पिबेत्॥

एतच्च द्व्यहसाध्यं ब्रह्मकूर्चव्रतम्। परिमाणविशेषमाह पराशरः,

गोमूत्रमाषकास्त्वष्टौ गोमयस्य तु षोड़श।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः॥
गोमूत्रवद् घृतस्योक्तास्तदर्द्धेन कुशोदकम्।
एतद् द्रव्यपरिमाणं शुद्ध्यर्थं कायशोधनम्॥

परिमाणत्रयमिदं वैकल्पिकम्॥ १३॥

अथ चान्द्रायणम्।

तत्र मनुः,

एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्।
उपस्पृशंस्त्रिसवनमेतच्चान्द्रायणं स्मृतम्॥
एतमेव विधिं कृत्स्नमाचरेत् यवमध्यमे।
शुक्लपक्षादिनियतश्चरंश्चान्द्रायणं व्रतम्॥

---

इयं क्षीरदध्नोः प्रत्येकं तोलकचतुष्टयमिति कुशोदकन्तु तदर्द्धेन कुशोदकमिति पराशरवचनात् गोमयतुल्यमेवेति। गोमूत्रभाग इति गोमूत्रे माषकास्त्वष्टाविति वचनात्। गोमूत्रभागस्तोलकैकं तोलकार्द्धं गोमयं क्षीरस्य त्रयोभागास्तोलकत्रयं दध्नस्तोलकद्वयं घृतकुशवारिणोः प्रत्येकं तोलकैकम् एतदिति शङ्खवचनेऽप्यनुक्तोऽप्युपवासो जावालैकवाक्यतया मन्तव्य इत्यर्थः। पराशर इति अत्र सर्वत्र कृष्णलाः पञ्च ते माषा इति याज्ञवल्क्योक्तो ग्राह्यः। घृतस्य गोमूत्रवदष्टौ माषा इत्यर्थः। तदर्द्धेन गोमूत्रार्द्धेन माषकचतुष्टयेन परिमितं कुशोदकमित्यर्थः॥१३॥

अथ चान्द्रायण इति मनुरिति। उपस्पृशन् स्नानं कुर्वन् शिशुचान्द्रायण- [illegible] सर्वेषु मध्यन्दिनविधिः। तिस्रोऽशीतिश्चत्वारिंशदधिकशतद्वयं यथा

अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने गते।
नियतात्मा हविष्याशी यतिश्चान्द्रायणं चरेत्॥
चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम्॥
यथा कथञ्चित् पिण्डानां तिस्रोऽशीतीः समाहितः।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्॥

एतच्च पञ्चविधं चान्द्रायणं पिपीलिकातनुमध्यं यवमध्यं यतिचान्द्रायणं सर्वतोमुखं शिशुचान्द्रायणञ्च। तथाच जावालः,

पिपीलिकं यवमध्यञ्च यतिचान्द्रायणं तथा।
चान्द्रायणं तथा ज्ञेयं चतुर्थं सर्वतोमुखम्।
पञ्चमं शिशुसंज्ञञ्च तुल्यपुण्यफलोदयम्॥

कृष्णप्रतिपदमारभ्य मासमेकं यदा क्रियते तदा पिपीलिकातनुमध्यं भवति शुक्लप्रतिपदारम्भे यवमध्यम् उभयत्रामावा-

---

कथञ्चिन्मासमध्ये ग्रासनियमाभावेनेत्यर्थः। यतिचान्द्रायणादिष्वपि शुक्लादिकः, कृष्णादिको वा इतीच्छा विकल्पः। तथैवोपक्रमात् चन्द्रस्यैति सलोकतामित्यनेन काम्यमपीदमुक्तं जावाल इति शिशुशब्देन साङ्गसनामकं शिशुसंज्ञमित्यर्थः। वशिष्ठ इति मासस्य त्रिंशत्तिथ्यात्मकस्य चान्द्रमासस्य यः कृष्णपक्षस्तदादौ प्रतिपदि चतुर्दश ग्रासा एकग्रासह्रासादित्यर्थः। नन्वेवमिति शुक्लपक्षे वृद्धिक्रमेण विंशत्यधिकशतग्रासा भवन्त्येव कृष्णपक्षे तु एवं क्रमेण ह्रासक्रमेणामावास्याया-मुपवसेत् पञ्चदशग्रासाभावेन पञ्चाधिकशतग्रासाः स्युस्तेन पञ्चविंशत्यधिकशतद्वय-मित्यर्थः। उच्यत इति पिपीलिकमध्ये पौर्णमास्यां संयमः यवमध्येऽमावास्या-यामित्यर्थः। ननु संयमदिनात् परतः प्रतिपदिव्रतारम्भात् संयमदिनभोजनस्य व्रतपूर्वकत्वाभावः। इत्याशङ्क्याह अथवेति पिपीलिकमध्ये पञ्चदशी पौर्ण-मासी यवमध्ये पञ्चदशी अमावास्या एवञ्च पञ्चदश्यामारम्भात् तत्र कृतैः पञ्चदश-ग्रासैः सार्द्धं चत्वारिंशदधिकशतद्वयमित्यर्थः। गौतम इति एकेषामन्येषां मुनीनां मतमेतद्विपरीतम् अमावास्यायां पञ्चदशग्रासान् भुक्त्वा एकैकह्रासा शुक्लपक्षे

स्यायामभोजनम्। कृष्णप्रतिपदि चतुर्दशग्रासभोजनारम्भे ह्रासक्रमेण चतुर्दश्यामेको ग्रासः अमावस्यायामभोजनमेव प्राप्नोति। तथाच वशिष्ठः,

मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश।

नन्वेवं क्रमेण पञ्चविंशत्युत्तरं ग्रासशतद्वयं स्यात् न च द्वाविंशद्-ग्रासाधिकम्। तच्च याज्ञवल्क्योक्तं यथा कथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयमिति। यथा कथञ्चित् पिण्डानां तिस्रो-ऽशीतीः समाहित इति मनुनाप्युक्तम्। उच्यते। संयम-दिवसे पौर्णमास्याममावास्यायां वा पञ्चदशग्रासभोजनेन संख्यापूरणसम्भवात्। अथवा पञ्चदश्यादिकमेवेदं व्रतं न प्रतिपदादिकं चतुर्दश्यामेव व्रतसङ्कल्पः। यथा गोतमः, पौर्ण-मास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नी-यात् अमावास्यायामुपोष्य एकैकोपचयेन पूर्वपक्षं विपरीत-मेकेषाम्। शङ्खलिखितौ, अमावास्यायां व्रतोपायनं यव-

---

कृष्णपक्षे तु प्रतिपदादि तत्र एकैकह्रासेनामावास्यायामुपवास इत्यर्थः। अतएव शुक्लपक्षादि नियत इति मनुवचने शुक्लपक्षादौ अमावास्यायां नियतः कृतारम्भ इत्यर्थो मन्तव्यः एवञ्च मासं शोधनमैन्दवमिति मनुवचने मासपदम् एकाहाधिक-मासपरं मन्तव्यम् अयञ्च पञ्चदश्यादिकल्पः पिपीलिकमध्ययवमध्ययोरेव मुनेस्तथै-वाभिधानात्। यतिचान्द्रायणादिकन्तु प्रतिपदादिकमेव तथैव संख्यापूरणात् मासेनाश्नन्निति मनुवचनाच्च शङ्खलिखिताविति अमावास्यायां व्रतस्योपायन-मारम्भो यत्र तादृशं यवमध्यं कुर्वन् 'अमावास्यायां पञ्चदश ग्रासान् अश्नीया-दित्यर्थः। ननु यवमध्येऽमावास्यायाम् आरम्भे पञ्चदश ग्रासाः तत्परतस्तु ततो न्यूना एव एकादिग्रासाः कथं वृद्धिरित्याशङ्क्याह युक्तश्चैदमिति यथामावास्यायां सूर्य-प्रविष्टस्य चन्द्रस्यैकैककलानिर्गमात् प्रतिपदादिषु वृद्धिशब्दवाच्यता तथाप्यमावा-स्यायां कृतस्य पञ्चदशग्रासस्य प्रतिपदादिष्वेकैकवृद्ध्या वृद्धिशब्दवाच्यता इत्यर्थः। मावास्यस्विति पौर्णमास्यां भोजनाभावप्रतिपादनं मनुगौतमादिविरुद्धं ग्राससंख्या-

मध्यम् अमावस्यायां पञ्चदश पिण्डानश्नीयात्। उपायन-मारभ्भः युक्तश्चेदम् अमावास्यायामपि पञ्चदशकलात्मकस्य चन्द्रमसः सूर्य्यं प्रविष्टत्वात्। अत्र एकैककलानिर्गमस्य प्रति-पदादिषु वृद्धिशब्दत्वात्। जावालस्तु,

एकैकं वर्द्धयेद् ग्रासं शुक्ले कृष्णे च ह्रासयेत्।
अमावास्यां न भुञ्जीत यवमध्यं चरन् द्विजः॥
एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्।
पौर्णमास्यां न भुञ्जीत पिपीलतनुमध्यमम्॥

अत्र कल्पतरुव्याख्यानम् एकैकं ह्रासयेद् ग्रासमिति कृष्णप्रति-पदि पञ्चदशग्रासानारभ्य एकैकापचयेनामास्यायामेको ग्रासः तदनन्तरं प्रतिपदि द्वौ ग्रासौ एवं वृद्धिक्रमेण चतुर्दश्यां पञ्च-दशग्रासाः सम्पद्यन्ते पौर्णमास्याञ्चोपवास इति पिपीलिका-तनुमध्यं चान्द्रायणम्॥ १४॥

---

नियमविरुद्धश्चेत्याशङ्क्याह अत्रेति। अत्र चत्वारिंशदधिकशतद्वयग्रासानामुप-पत्तिमाह एकैकमिति। इदमत्र दूषणं कृष्णप्रतिपदारम्भे पञ्चदशग्रासभोजनात् अन्ते चामावास्यायामेकग्रासात् कृष्णे विंशत्यधिकशतग्रासा निर्विवादा एव शुक्ल-प्रतिपदि द्वौ ग्रासावारभ्य एकैकवृद्ध्या चतुर्दश्यां पञ्चदशग्रासभोजनात् पौर्णमास्यां चोपवासादूनविंशत्यधिकशतग्रासात् कृष्णे विंशत्यधिकशतग्रासा एव भवन्ति ततश्च एकग्रासहान्या चत्वारिंशदधिकशतद्वयसंख्या न पूर्य्येत इति गौतमविरोधश्च स्यात् वस्तुतस्तु मनुवचनैकवाक्यतया जावालवचनेऽपि यवमध्ये पिपीलिकामध्ये प्रागु नैव व्याख्या किन्तु मध्याह्ने भोजनविधानात् तिथिवृद्ध्या दिनद्वये मध्याह्ने पौर्ण मासी लाभे परदिने पौर्णमास्यां न भुञ्जीतेति विधिः एवं यवमध्ये कृष्णे ह्रास क्रमेणामावास्यायामुपवासप्राप्तौ यदमावस्यां न भुञ्जीतेति विधानं तदपि तिथि वृद्ध्या दिनद्वये मध्याह्नेऽमावास्यालाभे परदिनेऽप्युपवासपरं मन्तव्यम् इति विवेकः॥ १४॥

ऋषिचान्द्रायणमाह यमः,

त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढ़व्रतः ।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ॥

अत्र चत्वारिंशच्छतद्वयसंख्या नास्ति। ग्रासपरिमाणमाह पराशरः,

कुक्कुटाण्डप्रमाणन्तु यावान् वा प्रविशेन्मुखम् ।
एतं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम् ॥

सकलचान्द्रायण एव चतुर्दश्यामुपवासं कृत्वा परदिने पञ्चदश्यां संयमः कार्य्यः । यथा बौधायनः, शुक्लां चतुर्दशीमुपवसेत् कृष्णां चतुर्दशीं वा केशश्मश्रुनखरोमाणि वापयित्वा इत्यभिधाय तिथिनक्षत्रादिहोमं प्रत्यहमुक्तवान् विस्तरभयान्नेह लिखितम्। अत्र सामान्यव्रतधर्मः कार्य्यः। विशेषमाह यमः,

आर्द्रवासाश्चरेत् कृच्छ्रं स्नात्वा वस्त्रं न पीड़येत् ।
अङ्गुल्यग्रस्थितं ग्रासं गायत्र्या चाभिमन्त्रयेत् ॥
प्राशयित्वा उपस्पृश्य पुनरेवाभिमन्त्रयेत् ।
आयसं तैजसं पात्रं चक्रोत्पन्नं विवर्जयेत् ।
असुराणां हि तत् पात्रं देवपात्रमचक्रजम् ॥

---

यम इति। अत्र नवति ग्राससंख्या इत्यर्थः। सकलचान्द्रायण एवेति पञ्चदश्यां संयमः कार्य्यः इति यदपि यवपिपीलिकमध्यचान्द्रायणद्वयवर्जमन्ये यतिचान्द्रायणादिषु मन्तव्यं तत्र चतुर्दश्यां संयमः सायं व्रतसङ्कल्पः। पञ्चदश्य व्रतारम्भः इति प्रागुक्तत्वादिति प्राशयित्वेति उपस्पृश्याचम्य पुनरेवाभिमन्त्रये उदरमिति शेषः। तत्पात्रं चक्रजं मृण्मयपात्रमित्यर्थः। एकविंशद्दिनसाध्य मिति एवञ्च यवपिपीलिकमध्यपरं यतिचान्द्रायणादिकं त्रिंशद्दिनसाध्यमेवेति

अचक्रजं कुलालचक्रानिष्पन्नम्। अपरे धर्मा बौधायनादिषु द्रष्टव्या इति एकत्रिंशद्दिनसाध्यं चान्द्रायणव्रतम् ॥ १५ ॥

अथ तुलापुरुषव्रतम्।

तत्र याज्ञवल्क्यः,

एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाह्निकः॥

एषां पिण्याकाचामतक्राम्बुशक्तूनां पूर्ववचनोक्तानां पञ्चदश-दिनसाध्यं तुलापुरुषव्रतम्। विष्णुः,

पिण्याकाचामतक्राम्बुशक्तूनां प्रतिवासरम्।
उपवासान्तराभ्यासात्तुलापुरुष उच्यते॥

एकैकदिनेषूपवासपूर्वमेतानि भक्षयेत्। एतद्दशदिनसाध्यम्।

अथ मासोपवासव्रतम्।

तत्र जावालः,

अनश्नन् मासमेकन्तु महापातकनाशनम्।
नेह नामुष्मिकं पापं कृतेनानेन तिष्ठति॥

---

अत्र च मनुयाज्ञवल्क्यादिभिर्ग्राससंख्यानियमाभिधानात् तिथिह्रासे एकदिने तिथिद्वये ग्रासा भोक्तव्या माससध्ये तिथिवृद्धौ तु दिनद्वये एकतिथिग्रासा विभज्य भोक्तव्याः मासान्ते तु पौर्णमास्यमावास्ययोर्दिनद्वयलाभे परदिनोपवासः पूर्वोक्त एवेति विवेकः॥ १५ ॥

अथ तुलापुरुषेति। स्पष्टार्थम्।

अथ मासोपवासेति। यत्र पुमान् मासमेकमनश्नन् भवेत् तद् व्रतं महापातकनाशनमित्यर्थः। इह ऐहिकम् आमुष्मिकं पारलौकिकम्।

अथ द्वादशवार्षिकेति। वन्यान्येव फलादीनीति तदशक्तावाह भैक्ष्याशीति

अथ द्वादशवार्षिकव्रतम् ।

तत्र मनुः,

ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।
भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ॥

संवर्त्तः,

ब्रह्महा भवनं कृत्वा बालवासा जटी ध्वजी ।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः ॥
भिक्षाशी विचरेद् ग्रामं वन्यैर्यदि न जीवति ।
चातुर्वर्ण्यं चरेद् भैक्ष्यं खट्वाङ्गी संयतः पुमान् ॥
भिक्षास्त्वेषां समादाय वनं गच्छेत्ततः पुनः ।
वनवासी स पापात्मा सदा काममतन्द्रितः ॥
ख्यापयन्नेव तत् पापं ब्रह्मघ्नः पापकृत्तमः ।
अनेनैव विधानेन द्वादशाब्दं समाचरेत् ॥

उपवासादिव्रतमाह विश्वामित्रः,

उपवासस्त्रिरात्रञ्च मासः पक्षस्तदर्द्धकम् ।
षड़ह द्वादशाहादिकार्य्यं शुद्धिफलार्थिना ॥

चशब्दादनुक्तानां ग्रहणम् आदिशब्दात् पञ्चदशाहादिग्रहणम् ॥ १६ ॥

अथैतेषां व्रतानां धेन्वादिसङ्कलनम् ।

तत्र नक्तव्रतं रूप्यमाषकदानेन संकलितं नक्तव्रतरूप्यमाषकदानयोर्विकल्पश्रवणात् । यथा हारीतः, पक्षिवधे नक्तं

---

खट्वाङ्गी त्रिशूली उपवासादीति तदर्द्धं सप्ताहोपवासः आदिशब्दादिति पञ्चदशाहसाध्ययवयावकग्रहणं पक्षपदात् पक्षोपवासग्रहणमिति भेदः ॥ १६ ॥

अथ एतेषामिति । तत्रेति सङ्कलितं तुल्यं किञ्चेति विशिष्टत्वमुत्कृष्टरूप्य-

रूप्यमाषकं वा दद्यात् रूप्यमाषकञ्च रत्तिकाद्वयमाहतुर्मनु-
याज्ञवल्क्यौ,

द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः।

एतेन नक्तव्रतं रूप्यमाषकदानेन तुल्यं वाचनिकमेव क्वचिद्
यौक्तिकं समानत्वं यथा उपवासस्य नक्तत्रयेण। ननु नक्त-
भोजने भोजनकालैकातिक्रमादुपवासे च भोजनकालद्वयाति-
क्रमात् नक्तद्वयतुल्यतैव उपवासस्य युक्ता। तथाच रज-
स्वलायाश्चाण्डालस्पर्शे बृहस्पतिः,

प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमाचरेत्।
एकरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत्॥

अत्रोत्तरोत्तरस्य पूर्वपूर्वापेक्षया अर्द्धत्वप्रतीतेरुपवासापेक्षया
नक्तमर्द्धमवगम्यते। उच्यते। कृतवासराभोजनस्य रात्रि-
क्षपणे क्लेशद्वैगुण्यान्नक्तत्रैगुण्यमेवोपवासस्य युक्तं किञ्च पणा-
ष्टकलभ्यविशिष्टरूप्यदानसमानत्वमस्य वक्ष्यते अतोऽपि नक्त-
त्रैगुण्यमेव बृहस्पतिना तु सार्द्धनक्ता सम्भवात् नक्तमेवोक्तम्
अतो युक्त्या नक्तत्रयोपवाससमानता तेनोपवासाशक्तौ रत्ति-

---

माषकत्रयत्वम्। अस्य उपवासस्य अतोऽपीति नक्तरूप्यमाषकयोस्तुल्यत्वमुक्तमेव
रूप्यमाषक त्रयोपवासयोः साम्यञ्च वक्ष्यमाणम् अतो रूप्यमाषकतुल्यनक्तादुप-
वासस्य त्रैगुण्यमर्थायातमेवेत्यर्थः। नन्विति रूप्यमाषकत्रयस्य उपवाससमत्वो-
क्तेस्तद्द्वैगुण्याद्रूप्यमाषकषट्कदानमुचितं रूप्यमासैकषट्के द्वादशपणा एव भवन्ति
एतच्च निकृष्टरूप्याभिप्रायेणाशङ्कितं सिद्धान्ते तु द्वितीयोपवासे क्लेशाधिक्यादस्य
द्विरात्रव्रतस्य प्राजापत्यस्य तृतीयभागतुल्यत्वं पुराणैकसमताऽतोऽत्युत्कृष्टरजत-
रत्तिका षट्कदानसाम्यं द्विरात्रव्रतस्य न तु निकृष्टरूप्यमाषकषट्कं साम्यम् अत्र
यद्यप्येकोपवासस्यात्युत्कृष्टरजतमाषकत्रयसाम्यं वक्ष्यते तस्य द्वैगुण्यात् पुराणैक-
साम्यं द्विरात्रव्रते स्यात् इत्याशङ्का गन्धोऽपि नास्ति तथाप्यापाततो निकृष्टरूप्याभि-

काइयात्मकरूप्यमाषत्रयदानं कर्त्तव्यं द्विरात्रव्रतं पुराणैक-लभ्यकाञ्चनदानसमानम् । ननु रक्तिकाद्वयपरिमितरूप्य-माषकषट्कदानमत्र उचितं न कृतोपवासस्य द्वितीयोपवासे क्लेशाधिक्यात् आधिक्यस्य युक्तत्वात् तथाच प्राजापत्यतृतीय-भागत्वात् अस्य पुराणैकलभ्यकाञ्चनसमतैव त्रिरात्रव्रतं सार्द्ध-पुराणदानसमं षड़हसमानप्राजापत्यार्द्धरूपत्वात् प्राजापत्ये च पुराणत्रयदानस्य वक्ष्यमाणत्वात् । ननु कृच्छ्रसम्बन्धिनो नवदिवससङ्कलितत्रिरात्रान्निरन्तरमुख्यत्रिरात्रस्य क्लेशाधि-क्यात् गुरुत्वम् अतस्तत्र पुराणद्वयं युक्तं सङ्कलितत्रिरात्रे तु लघुत्वात् पुराणैकं न्याय्यम् इत्यर्थः हि प्राजापत्ये पुराणत्रय-दानम् अतोऽत्र कृच्छ्रार्द्धरूपत्वेऽपि निरन्तरत्रिरात्रत्वात् पुराणद्वयमेव स्यात् उच्यते । षड़्भिरुपवासैस्तावत् प्राजा-पत्यं सङ्कल्पितम् अस्य च षड़हार्द्धत्वात् सार्द्धपुराणमेवोचितम् अन्यथा षड़हे पुराणचतुष्टयं स्यात् किञ्च मुख्यत्रिरात्राद्द्वै-गुण्येन मन्वादीनां कृच्छ्रविधानमनर्थकं स्यात् यथा मनुः,

भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव च ॥

किञ्च कृच्छ्रार्द्धस्थानेऽपि त्रिरात्रविधानं नोपपद्यते । तथाच बृहस्पतिः,

---

प्रायेणाशङ्क्यम् । नन्विति सङ्कलितत्रिरात्रस्य नैरन्तर्य्याभावेन लघुत्वात् निरन्तर-त्रिरात्रोक्तपुराणद्वयावशिष्टं पुराणैकं कार्य्यं न तु तुल्यतेत्यर्थः । देयं दातुं योग्यं स्यादिति । उच्यत इति षडुपवासानां प्राजापत्यतुल्यतोक्ता न तु प्राजा-पत्याङ्गविभागेन षड़हार्द्धञ्च प्राजापत्यार्द्धतुल्यम् अतः सार्द्धपुराणमेव त्रिरात्रे स्यादिति । अत्र प्रतिवन्दिमाह अन्यथेति अथेष्टापत्तिरित्यत आह किञ्चेति । मनुरिति अज्ञानकृताज्ज्ञानकृतस्य द्वैगुण्यादिति भावः । ननु वचनादल्पाधिक्ये-

ऋतौ न गच्छेद्भार्य्यां यः सोऽपि कृच्छ्रार्द्धमाचरेत्।

तथा विष्णुः, पर्व्वानारोग्यवर्ज्जमृतावगच्छन् पत्नीं त्रिरात्रमुपवसेदिति। किञ्च कृच्छ्रार्द्धस्य सार्द्धपुराणदानसमता भवताप्यङ्गीक्रियते। तत्र कृच्छ्रार्द्धं किं सङ्कलितं किं वा मुख्यं सङ्कलिते पुराणैकं स्यात् मुख्ये पुराणद्वयं च स्यात् सार्द्धपुराणन्तु कुत्रापि न स्यात् अतः सङ्कलितासङ्कलितत्रिरात्रयोरेव सार्द्धपुराणमिति स्थितम्। एवञ्च षड़हतृतीयभागत्वात् द्व्यहे पुराणैकलभ्यं काञ्चनमुचितमेव। तथाच षड़हतृतीयभागार्द्धत्वादेकरात्रेऽष्टपणलभ्यं रजतं देयम्। अत्युत्कृष्टञ्च रजतरत्तिका षट्कम् अष्टपणेनैव लभ्यते अनेन पूर्व्वोक्तेन न विरोध इति प्राजापत्यं व्रतं षड्रात्रव्रतसमं पयस्विधेनुदानसमानञ्च। ननु प्राजापत्यव्रते उपवासत्रयं षड्रात्रव्रते च षडुपवासा इत्यतः कथं समानता। अत्र केचित् ग्राससङ्कलनेन षड़ुपवासतुल्यता प्राजापत्यस्य तथाहि प्राजापत्ये नवसु दिवसेषु षोड़शग्रासपरिमित-द्वितीयभोजनपरित्यागेन चतुश्चत्वारिंशदधिकग्रासशतपरित्यागादष्टचत्वारिंशद्ग्रासपरिमितप्रात्यहिकसायंप्रातर्भोजनस्य दिनत्रयसम्बन्धिनोर्व्वर्ज्जनादुपवासत्रयनिष्पत्ते-

---

ऽपि तथाविधानमस्तीत्याशङ्क्याह किञ्चेति वाचनिकप्रामाण्यमुक्त्वा युक्तिमपि प्रमाणयति किञ्चेति तत्रेति सङ्कलितं नवदिनसङ्कलितं त्रिरात्रं मुख्यं निरन्तरोपवासात्मकमवशिष्टत्रिरात्रं तत्रोभयथैव भवन्मतं विरुद्धमिति भावः एतच्च प्रतिबन्दिमात्रम्। वस्तुतस्तु षड़हसाध्यकृच्छ्रार्द्धव्रते चतुर्विंशतिपणा उक्ताः तत्र च सङ्कलनासङ्कलनविकल्पो नास्ति किन्तूक्तमेव वाचनिकं तुल्यत्वं न्याय्यम्। केचिदिति ग्राससङ्कलनेन अभुक्तग्राससङ्कलनेनेत्यर्थः। तथाहीति दिवसे तावद्भोजनद्वयं भवति तत्र प्रथमभोजने द्वाविंशद्ग्रासाः द्वितीयभोजने षोड़शग्रासाः इत्थञ्च दिवसे मिलित्वाऽष्टचत्वारिंशद्ग्रासाः तत्र नवसु दिवसेषु एकभोजनविधानेन

दिनत्रये चोपवास इति षडुपवासाः। तदसत्, द्वितीयभोजनस्य षोड़शग्रासपरिमितत्वे वचनाभावात् द्वात्रिंशद्‌ग्रहस्थस्य इति सायं भोजनेऽप्यविशेषात् पराशरविरुद्धञ्चेदम्। यथा,

सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिस्तथा।
अयाचिते चतुर्विंशः परञ्चानशनं स्मृतम्॥

तदेवं नवसु दिवसेषु एकभोजनत्यागेन सार्द्धचत्वार एव उपवासा भवन्ति नोपवासत्रयमिति। उच्यते वाचनिकमत्र समानत्वं यथा मत्तक्रुद्धातुराणामित्यभिधायाह मनुः,

भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्।
मत्या भुक्त्वाचरेत् कृच्छ्रं रेतो विण्मूत्रमेव च ॥१७॥

अयं ह्यज्ञानभोजने त्र्यहमुपवासं विधाय ज्ञानतो द्वैगुण्येन षड़हप्राप्तौ प्राजापत्यं विदधाति निरुपपदकृच्छ्रशब्दोऽत्र प्राजापत्यपरः। तप्तकृच्छ्रपरतया धर्मप्रदीपव्याख्यानमसङ्गतम्। तस्य धेनुचतुष्टयसङ्कलितत्वेन त्रिरात्रादज्ञानविहितादतिविप्रकृष्टत्वात्। अतः षड़हप्राजापत्ययोश्च समानता। तथाच वृद्धशातातपः,

---

द्वितीयभोजनाभावात् प्रत्यहं षोड़शग्रासहान्या चतुश्चत्वारिंशदधिकशतग्रासहानिः ते च त्रयोऽष्टचत्वारिंशद्‌ग्रासा भवन्ति तेषामभावादुपवासद्वयं स्यादित्यर्थः। यद्वेति प्रथमभोजने द्वाविंशतिः ग्रासा विहितास्तत्र दिनत्रये सायं भोजने प्रत्यहं दशग्रासहान्या त्रिंशद्‌ग्रासहानिः एवं दिनत्रये प्रातर्भोजने प्रत्यहं षड्ग्रासहान्याऽष्टादशग्रासहानिः एवं दिनत्रयेऽयाचितेऽपि प्रत्यहमष्टग्रासहान्या चतुर्विंशतिग्रासहानिः तदेवं मिलित्वा द्विसप्ततिग्रासाभावात् सार्द्धोपवासेन नवसु दिनेषु द्वितीयभोजनत्यागात् उक्तैस्त्रिभिरुपवासैश्च मिलित्वा सार्द्धचत्वार एवोपवासाः स्युः इत्यर्थः ॥ १७ ॥

चाण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे च कृते द्विजः ।
त्रिरात्रं तत्र कुर्वीत उच्छिष्टः षड़ाचरेत् ॥

सुमन्तुः,

चाण्डालपतितांश्चैव तथा नारीं रजस्वलाम् ।
उच्छिष्टस्तु द्विजः स्पृष्ट्वा प्राजापत्येन शुद्ध्यति ॥

इदं यत्रैव षड़हो विहितस्तत्रैव प्राजापत्यं विदधाति । पयस्विधेनुदानसमताञ्च प्राजापत्यस्याह मनुः,

क्रव्यादस्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीम् ।
अक्रव्यादो वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥
तथा दानेन वधनिर्णकं सर्पादीनामशक्नुवन् ।
एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये ॥

अनेन पयस्विधेनुदानाशक्तौ क्रव्यादपशुहिंसाजन्यपापक्षयसाधनत्वं कृच्छ्रस्य विधीयते। अतः पापक्षयलक्षणैककार्य्यकारणत्वात् धेनुदानप्राजापत्ययोः समत्वम् । मनुना,

अभ्रीं कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः ।
वासो दद्याद्धयं हत्वा पञ्चनीलान् वृषान् गजम् ॥

इत्यभिधाय दानेन वधनिर्णकमित्युक्तम् अतो दानान्तरसमत्वमपि स्यात् ॥ १८ ॥

तथापि अतिलघ्वतिगुरुमध्यमेषु उपात्तेषु मध्यमेनैव समव्यवहारो युक्तः सर्वैः सह समव्यवहारस्य वैषम्येनायुक्तत्वा-

---

अयं हीति मनुरित्यर्थः । इदमिति । इदं वचनं प्राजापत्यं विदधातीत्यन्वयः । अनेनेति दानेन वधनिर्णकमित्यनेन कृच्छ्रं विधीयत इत्यन्वयः । एककार्य्यकारणत्वात् तुल्यकार्य्यसाधनत्वादित्यर्थः ॥ १८ ॥

दिति चेन्न एवं सर्पादीनामित्यसङ्गतं स्यात्। उच्यते कृच्छ्र-शब्दोऽत्र शिशुकृच्छ्रार्द्धकृच्छ्रकृच्छ्राभ्यस्तकृच्छ्रपरः तेनाति-लघुसर्पवधे शिशुकृच्छ्रं लघुन्यश्वादिवधे अर्द्धकृच्छ्रं गुरुणि क्रव्यादपशुवधे कृच्छ्रं गजादिवधे अभ्यस्तकृच्छ्रं कृच्छ्रमात्र-परत्वे सर्वत्र कृच्छ्रं न सम्भवति वैषम्यादेव क्रव्यादपशुवध-मात्रविषयत्वे सर्पादिवधोपादानमसङ्गतं भवेत् एतन्मूलमेव प्राचीनैर्लिखितम्। ...मा-

> प्राजापत्यव्रताशक्तौ धेनुं दद्यात् पयस्विनीम्।
> धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः॥

इत्युक्तं न तु तदनाकरत्वं क्वचिदुपपद्यते। अतः प्राजापत्य पयस्विधेनुदानयोः समानता पयस्विधेनुदानाशक्तौ च तन्मूल्य-दानम्।

> गवामभावे दातव्यं तुल्यं मूल्यं न संशयः।

इति गोतमवचनात् गोवधप्रायश्चित्तप्रकरणोक्तमिदं कथम... सम्बध्यते इति चेन्न आकाङ्क्षायामन्यदीयसम्बन्धस्याप्यन्यत्र... दर्शनात् स्थालीपुलाकन्यायाच्च मूल्यदानस्य लोकव्यवहार-

---

कण्टकोद्धारमाह तथापीति मध्यमेन पयस्विधेनुदानेनेत्यर्थः। एवमिति एवं युक्त्या प्राजापत्यस्य पयस्विधेनुतुल्यत्वे निर्णीते अन्यत्र सर्पादिवधे प्राजापत्य विधानासम्भवात् सर्पादीनामित्यसङ्गतं स्यादित्यर्थः। प्रतिवन्दिमाह एवमिति न च कृच्छ्रस्य पयस्विधेनुप्रतिनिधित्वे किं प्रमाणमिति वाच्यं सर्पादिवधे लघुगुरु पापभेदेन शिशुकृच्छ्रादीनां सर्वेषां यथायोग्यं व्यवस्थापितत्वात्। नत्विति क... प्राजापत्यव्रताशक्ताविति वचनमनाकारमिति कृत्वा क्वचित् ग्रन्थे उपलभ्यते स... लिखितत्वादित्यर्थः। आकाङ्क्षायामिति आकाङ्क्षायां सत्याम् अन्यदीयो यः... सम्बन्ध स्तत् सम्बन्धस्यान्यत्रापि दर्शनादित्यर्थः। यथा यजुर्वेदोक्ताऽ... [illegible] सामसम्बन्धः। ननु सामोक्ताग्निष्टोमविधेः प्रकाराकाङ्क्षा...

सिद्धत्वात् मूल्यञ्चास्याः पुराणत्रयमिति प्रामाणिकानां स्वरसः ते किल युक्तिं वदन्ति धेनुमित्यनेनैव पयो योगे सिद्धे यत् पयस्विनीति पदान्तरोपादानं तत् क्षीरयोगातिशयं दर्शयति न च बहुक्षीरा धेनुः पुराणत्रयादल्पमूल्येन लभ्यत इति। यदि कस्मिंश्चिद्देशे कथञ्चिदवस्थायाम् अल्पेनापि लभ्यते तदा कस्मिंश्चिद्देशे कस्याञ्चिदवस्थायां चतुः पुराणादिमूल्यव्यति-धेनुरपि लभ्य इति तन्मूल्यप्रसङ्गोऽपि वक्तुं शक्यते। अतः असामञ्जस्यानुरोधान्मध्यमेनैव पुराणत्रयेण धेनुमूल्येन व्यवहर्त्तव्यम् अतएव षट्त्रिंशन्मतमिति कृत्वा पठन्ति,

धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिकी।
कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता॥

वञ्च याज्ञवल्क्यटीकाकृता धर्मेश्वरेणापि यज्ञदक्षिणायां मूल्ये कात्यायन इति कृत्वा दर्शितम्।

द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेत्।

इति। तथा अपरे पठन्ति,

द्वात्रिंशत्पणिका गावो वृषभः षट्पुराणिकः॥

---

ंदोक्तप्रकार एव सम्बध्यते प्रकृते च मूल्याकाङ्क्षैव नास्तीत्याह स्थालीपुलाकेति पुलाको भक्तपुटकः एकस्य स्थालीस्थस्य भक्तपुटकस्य निष्पन्नत्वे ज्ञातेऽन्येषामपि निष्पन्नत्वमुन्नीयत इति स्थालीपुलाकन्यायः तद्वदत्रापि गोमूल्यदर्शनात् अन्यत्रापि गोमूल्यमनुमीयत इति भावः। अतएव एकत्र परिभाषितोऽर्थः सर्वत्रैवानुगतो न तु प्रकरणनियन्त्रित इत्युक्तम्। नन्वशक्तौ मूल्यदानं यथा प्रतिनिषिद्धस्तथा वस्त्रादिकमपि कुतो न स्यात् इत्याह मूल्यदानस्येति लोके मूल्यदानस्यैव प्रतिनिधित्वेन व्यवहारो दृष्टो नान्यस्येति मूल्यस्येति अस्याः पयस्विधेनोरित्यर्थः। धेनुरिति धेनुशब्दस्य नवप्रसूतिकाभिधेयत्वादित्यर्थः। तथाचामरः, धेनुः स्यान्नव-

इति। एतच्च पुराणत्रयमूल्यं महाव्रतधेनुसङ्कलने व्यक्तमस्माभिर्वक्तव्यम् ॥ १९ ॥

अत्रापि पुराणत्रयलभ्यं गोतमोक्तं हिरण्यादिकमेव देयम्। तथाच गोतमः, हिरण्यं गौर्वासोऽश्वो भूमिस्तिलाघृतमन्नमिति देयानि एतान्येवानादेशे विकल्पेन क्रियेरन्। अन्यथेदमनर्थकं स्यात् प्राजापत्यसमपयस्विधेनुमूल्यानुसारेण शिशुकृच्छ्रे पुराणैकलभ्यं काञ्चनं देयम् अर्द्धकृच्छ्रे चतुर्विंशतिपणलभ्यं काञ्चनादिकं देयमिति। द्वादशवार्षिकमहाव्रतं षड्वार्षिकप्राजापत्यसमम्। साशीतिपयस्विधेनुशतदानसमानम्। अत्र बालकादयः द्वादशवार्षिकमहाव्रतं द्वादशवार्षिकप्राजापत्यसमं समत्वञ्च द्वादशवर्षब्रह्मचर्य्यवनवासजटाधारणादेः कष्टत्वादितिकर्त्तव्यता बाहुल्याच्च प्राजापत्ये चोपवासत्रयेऽपि गृहावस्थानादिति कर्त्तव्यताबाहुल्याभावाच्च। अतः क्लेशसाम्याद्द्वादशवार्षिकमहाव्रतस्य द्वादशवार्षिकप्राजापत्यसमता द्वादशवार्षिकप्राजापत्यैः सषष्टिशतत्रयप्राजापत्यानि भवन्ति। तैश्च सषष्टिधेनुशतत्रयं भव-

---

सूतिका इति तदिति मतुपोऽतिशयार्थत्वादित्यर्थः। धेनुरिति पञ्चभिः पुराणैस्तुल्येत्यर्थः। द्वात्रिंशत् पणिका इति वत्समात्रमूल्यं द्वात्रिंशत् पणाः पुराणद्वयं वत्सस्य च पुराणैकं तेन मिलित्वा धेनुमूल्यं पुराणत्रयमित्यर्थः ॥ १९ ॥

अत्रापीति। मूल्यदानेऽपि पुराणत्रयलभ्यं काञ्चनादिकं देयं न तु रजतकपर्दकादिकं गोतम इति अनादेशे विशेषानादेशे एतानि हिरण्यादीन्येव विकल्पेन इच्छया क्रियेरन् दद्युरित्यर्थः। अन्यथेति अन्यथा गोतमस्य एतान्येव इति नियमविधानमनर्थकं स्यादित्यर्थः। वस्तुतस्तु यत्र दद्यादिति सामान्यविधिरस्ति विशेषस्य देयद्रव्यस्यानादेशस्तद्विषये विकल्पेन हिरण्यादिकदानमिवमनोक्तम् अत्र तु धेनुः पञ्चभिराढ्यानामिति षट्त्रिंशन्मतवचनात् द्वात्रिंश

तीति। तदसङ्गतं द्वादशवार्षिकप्राजापत्यस्य द्वादशवार्षिक-महाव्रतापनेय पापक्षयजनकत्वं सेत्स्यतीत्यत्र वचनं नास्ति। न चशब्दैकगम्येऽर्थे अन्यत् प्रमाणं सम्भवति प्रत्युत षड्वार्षिक-प्राजापत्यप्रतिपादकवचनमेवास्ति। यथा अङ्गिराः,

गते तु द्वादशे वर्षे ब्रह्महा पूयते नरः।
षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुद्ध्यति॥
मासि मासि पराकेण त्रिभिर्वर्षैर्व्यपोहति।
अर्द्धमासेन भुञ्जानो द्विवर्षाभ्यां विमुच्यते।
संवत्सरेण मासाशी पूयते नात्र संशयः॥

कष्टसाम्याद्द्वादशवार्षिकप्राजापत्यसमता कल्प्यतामिति। चेन्न श्रुतौ सत्यां कल्पनाया अयोगात् कष्टसाम्याभावाच्च। महाव्रते द्वादशसु वर्षेषु प्रत्यहमेव भोजनं प्राजापत्ये त्रिरात्रम-भोजनम्। नच वनवासजटाधारणादिक्लेशेन अभोजनक्लेशस्य समता जटाधारणवनवासौ चानियतौ। कृतवापनो वा निव-सेद् ग्रामान्ते गोव्रजेऽपि वा इति मनुवचनात्। किञ्च क्लेश-

---

पणिका गाव इति कात्यायनवचनाच्च गोमूल्यदाने पणपुराणदाने विशेषोऽस्तीति न गोमूल्यदानं गौतमवचनविषयः। द्वादशवार्षिक इति द्वादशवार्षिकप्राजा-पत्यैरिति द्वादशभिर्दिनैः प्राजापत्यमुक्तं तेन मासि सार्द्धप्राजापत्यद्वयं तेन वत्सरे त्रिंशत्प्राजापत्यानि तेन च द्वादशवत्सरे षष्ट्यधिकशतत्रयप्राजापत्यानि भवन्ती-त्यर्थः। यद्यपि वचनं प्रमाणं नास्ति तथापि उक्तिरेव प्रमाणमित्याशङ्क्याह न चेति शब्दैकगम्ये प्रायश्चित्तरूपेऽर्थे वेदादन्यद्युक्त्यादिमात्रं प्रमाणं न सम्भवतीत्यर्थः। अङ्गिरा इति। एतेन कृच्छ्रपराकार्द्धमाससमासोपवासानां चतुर्णां कालविशेषात् महाव्रततुल्यता उक्ता कष्टसाम्यादिति द्वादशवार्षिकप्राजापत्येन समता यस्याः श्रुतेः सा श्रुतिः कष्टसाम्यात् कल्प्यतामित्यर्थः। श्रुताविति साक्षात् श्रुतौ सत्यां वहिरङ्गश्रुतिकल्पनाया अयोग्यत्वादित्यर्थः। श्रुतिकल्पनाहेतुमपि दूषयति कष्ट-

साम्याद्द्वादशवार्षिककार्य्यकरत्वे मरुभूमिकठोररौद्रे कुठारघातस्यापि तत् स्यात् तस्याविहितत्वादिति चेत् समानं प्रकृतेऽपि,

यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते॥

इति छन्दोगपरिशिष्टमपि विहितविषयमेव यथा आधाने दक्षिणायाम् एका देया तिस्रो देयाः षड् देया इति यथा वा श्राद्धे अर्घ्यप्रकरणे याज्ञवल्क्योक्तकाण्डानुशयात् कात्यायनोक्तपदार्थानुशये फलाधिक्यं किञ्च माघ्येऽपि चन्द्रसूर्य्यग्रहस्नानयोः समानफलत्वं नास्ति वचनात्तत्र तथेति चेत्। अत्रापि वचनात् षड्वार्षिकप्राजापत्यस्यैव समानता भविष्यति अतो महाव्रतसमानकार्य्यतया षड्वार्षिकप्राजापत्यस्य शास्त्रेण बोधितत्वात् द्वादशवार्षिकमहाव्रताशक्तौ षड्वार्षिकप्राजापत्यम्। तदशक्तौ साशीतिपर्य्यस्विधेनुशतकं देयं तदशक्तौ तन्मूल्यं चत्वारिंशत्पुराणाधिकपुराणपञ्चशतलभ्यं काञ्चनादिकं देयं प्रत्येकमेकशो द्विशस्त्रिशो वा देयम्॥ २०॥

---

साम्येति तदेव विवृणोति महाव्रत इति न चेति अनुभवविरोधादिति प्रतिवन्दिमाह किञ्चेति। तत् स्यादिति द्वादशवार्षिककार्य्यकरत्वं स्यादित्यर्थः। तस्य तादृशकुठारघातस्य यथेति विहिता एव तिसृषु दक्षिणासु उत्तरोत्तरं फलभूयस्त्वं कल्प्यत इत्यर्थः। यथा वेति श्राद्धं तावत् काण्डत्रयात्मकं तत्र गन्धादिदानान्तमेकम् अग्नौकरणमन्यत् पिण्डदानादिकमपरं तत्र दैवे काण्डमेकं समाप्य तत्काण्डं पित्रे क्रियते इति काण्डानुशय एकैकमासनादिकं दैवे समाप्य तदेव पित्रेऽप्येकैकं क्रियते इति तत्र पदार्थानुशयस्य क्लेशाधिक्यात् फलाधिक्यं यथा क्रममित्यर्थः। क्लेशसाम्यस्य समानफलजनकत्वे प्रतिवन्दिमाह किञ्चेति। साम्ये सामान्यतः क्लेशसाम्येऽपीत्यर्थः। वचनादिति इन्दोः कोटी रवेर्दश इति वचना

जिकनस्तु, यद्यपि प्राजापत्यमेकधेनुदानसमानं तथाप्यविच्छेदेनानेकप्राजापत्येषु क्रियमाणेषु प्राथमिकप्राजापत्याद्वित्रिचतुरादिप्राजापत्येषु उत्तरोत्तरक्लेशगौरवात् द्वित्रिचतुरादिगुणवृद्धाऽक्षद्यूतपणसमानगणनेन त्रैवार्षिकमहाव्रतसमानैः पञ्चचत्वारिंशता प्राजापत्यैर्वृषभाधिकधेनुसहस्रदानम् अर्थाद्द्वादशवार्षिकमहाव्रते वृषभाधिकधेनुसहस्रचतुष्टयदानं वार्षिके पञ्चदशभिः प्राजापत्यैर्वृषभाधिकधेनुशतदानं षाण्मासिकमहाव्रते सार्द्धसप्तभिः प्राजापत्यैर्वृषभाधिकदशधेनुदानं तत्र त्रैवार्षिके महाव्रते त्रिंशदंशन्यूनधेनुदानसमानं प्रथमं प्राजापत्यम्। वार्षिके च षष्ठांशन्यूनधेनुदानसमानं प्राथमिकं प्राजापत्यं स्थिरीकृत्य ज्ञेयम्। यद्यपि षाण्मासिके सार्द्धसप्तप्राजापत्यैरुक्तन्यायेन किञ्चिदूनसप्तविंशतिधेनवो युज्यन्ते तथापि दद्याद्धेनुर्दशाथवेति श्रुतिस्तदनुरूपैव वृद्धिः कल्पनीया। तथा मनुः,

---

दित्यर्थः। प्रत्येकं धेनुदानं तन्मूल्यदानं वा एकश एकवारेण दिशो द्विवारेण त्रिशो वारत्रयेण यथाशक्ति देयमित्यर्थः ॥ २० ॥

जिकनस्त्विति। द्वादशदिनसाध्यतया वत्सरे तावत् पञ्चदशप्राजापत्यानि भवन्ति तेन च वत्सरत्रये पञ्चचत्वारिंशत् प्राजापत्यानि प्रत्येकं धेनुदानं तन्मूल्यदानं वा अत्र च अक्षद्यूते पाशके द्यूते प्रथमवारकृतपणात् प्रतिवारमेकैकगुणवृद्धा पणकरणं द्यूतव्यवहारसिद्धं तद्वदत्रापि प्रथमप्राजापत्यात् उत्तरोत्तरप्राजापत्ये क्लेशगौरवादेकैकगुणवृद्धा पञ्चचत्वारिंशत्प्राजापत्येषु धेनुसङ्कलनया वृषभाधिकसहस्रधेनुदानम्। अत्र यद्यपि यस्य सङ्कलनं कार्य्यं तस्यैकं तेन पूरणं तस्यार्द्धं स्यात् सङ्कलितमित्यङ्कनिपुणा जगुरित्यङ्कशास्त्रानुसारेण सङ्कलनया पञ्चविंशदधिकसहस्रधेनवो भवन्ति तथापि वृषभैकसहस्रा गा दद्यात्क्षुद्रार्थमात्मन इति वक्ष्यमाणमनुवचनानुरोधात् त्रैवार्षिकव्रते प्रथमप्राजापत्यस्य त्रिंशदंशन्यूनधेनु-

> अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
> वृषभैकसहस्रा गा दद्याच्छुद्ध्यर्थमात्मनः ॥
> त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महनो व्रतम् ।
> वसन् दूरतरे ग्रामाद् वृक्षमूलनिकेतनः ॥
> एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ।
> प्रमाप्य वैश्यं वृत्तस्थं दद्याद्वैकशतं गवाम् ॥
> एतदेवव्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत् ।
> वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥

यथा याज्ञवल्क्यः,

> वृषभैकसहस्रा गा दद्यात् क्षत्त्रबधे पुमान् ।
> ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥
> वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम् ।
> षण्मासान् शूद्रहाप्येतद्दद्याद्धेनूर्दशाथ वा ॥

एतद्धेनुसहस्रचतुष्टयम् अत्यन्तशक्तस्य अशक्तस्य सहस्रद्वयम्, अत्यन्ताशक्तस्य सहस्रमेकं देयम् । यथा हारीतः,

> तस्मात् कृच्छ्रमथाप्यर्द्धं पादं वापि विधानतः ।
> ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत् ॥

---

सङ्कलनया उत्तरोत्तर ततसङ्कलनेनार्द्धाधिकसहस्रधेनवो भवन्ति वृषभाधिक्य-कल्पनन्तु मनुवचनादेव एवमुत्तरोत्तरोऽपि एतच्च पञ्चचत्वारिंशत्सङ्कलनप्राप्तस्य पञ्चविंशदधिकसहस्रस्य विंशांशहान्याऽर्द्धाधिकसहस्रं ज्ञेयम् अधिकधेन्वर्द्धन्तु वच-नानुसारात् त्याज्यम् एवं त्रैवार्षिकचतुर्गुणे द्वादशवार्षिके सहस्रधेनुचतुर्गुणं धेनु-सहस्रचतुष्टयं वार्षिकव्रते तु उत्तरोत्तरवृद्ध्या सङ्कलितैः पञ्चदशप्राजापत्यैर्धेनुशत-दानं तत्रापि यद्यपि सङ्कलनया विंशत्यधिकशतधेनवो भवन्ति तथा दद्याच्चैक-शतं गवामिति मनुवचनानुरोधात् षष्ठांशन्यूनप्रथमप्राजापत्यस्य सङ्कलने शतधेनव-स्तु एतच्च पञ्चदशसङ्कलनप्राप्तस्य विंशत्यधिकशतस्य षष्ठांशहान्या मन्तव्यं षाण्मा-

पादविधानात्ततो न्यूनं न कर्त्तव्यमित्यर्थः। तदयुक्तं बुद्धिमत्तामात्रकल्पितम् ॥ २१ ॥

अवाचनिकमनुपादेयञ्च यदि कृतप्रथमप्राजापत्यस्य द्वितीयादिप्राजापत्येषु क्लेशाधिक्याद्‌ गुर्व्वादिकं कल्प्यते। तर्हि कृतत्रैवार्षिकव्रतस्यापरव्रताचरणेऽपि क्लेशाधिक्याद्‌ गुर्व्वादिकं कुतो न कल्प्यते। तथाच द्वादशवार्षिके धेनुसहस्रचतुष्टयमिति व्याहतं स्यात् बहुतरमेवाधिकं भवेत्। अत्र त्रैवार्षिकव्रतस्य क्लेशसहिष्णुतया अपरव्रताचरणे क्लेशाधिक्यं नास्तीति चेत् समानं द्वितीये प्राजापत्येऽपि ॥ २२ ॥

---

सिके तु यद्यपि सार्द्धसप्तप्राजापत्यानां पूर्ववत् षष्ठांशहान्या सङ्कलनया किञ्चिदूनसप्तविंशतिधेनवो युज्यन्ते तथाप्येतत् दद्याद्धेनूर्दशाथ वेति वचनानुसारात् धेनुसङ्कलना कार्य्या किन्तु किञ्चिदधिकपादपादवृद्धिः सङ्कलनीया यथा दशधेनवः सम्पद्यन्त इत्यर्थः। तदयुक्तमिति बुद्धिमत्तामात्रं न तु विशिष्टबुद्धिस्तेन कल्पिता ॥ १२१ ॥

अथ वचनानुसारात्तथा कल्पित इत्याशङ्क्याह अवाचनिकमिति वक्ष्यमाणरीत्या वचनस्यान्यथोपपत्तेरिति भावः। अथ वचनस्य भवतामन्यथा कल्पने मनूक्तकल्पने च विनिगमना विरह इत्याशङ्क्याह अनुपादेयञ्चेतियुक्तेरसम्बन्धत्वादिति भावः। तदेव विवृणोति। यदीति बहुतरमिति द्वादशवर्षे तावदशीत्युत्तरशतप्राजापत्यानि भवन्ति तेषामुक्तरीत्या धेनुसङ्कलनयेति त्रिंशांशहान्या च सप्तचत्वारिंशदुत्तरसप्तशताधिकपञ्चदशसहस्राणि १५७४७ धेनवो भवन्तीति अतो बहुतरमधिकमित्यर्थः। समानमिति प्रथमप्राजापत्ये क्लेशसहिष्णुता जाता ततश्च द्वितीयादिप्राजापत्येऽपि क्लेशाधिक्यं नास्तीत्यर्थः। जिकनयुक्तौ दूषणान्तराणि यदि प्राजापत्यं पयस्विधेनुदानसमानमिति सिद्धान्तस्तदा कथमत्र त्रिंशत्भागहानिः अस्यापि प्रजापत्यत्वात् अथ वचनात्तथेति चेत् तर्हि वचनमेव धेनुनहुसं प्रमाणम् अलं सिद्धान्तविरुद्धयुक्त्येति। वचनविरुद्धापि युक्तिः। किञ्चेति त्रैवार्षिके त्रिंशद्भागहानिः षाण्मासिके सङ्कलनमपि नास्ति किन्तु किञ्चिन्मात्रवृद्धिरन्यत्र तु सर्वत्र धेनुदानतुल्यमिति परस्परविरुद्धं युक्तिकल्पनमुपहासास्पदमेव किञ्च वृषभाधिक्ये युक्तिरुदासीनेति परिहार्य्योऽयं पन्थाः ॥ १२२ ॥

यच्च कामतः क्षत्रियादिवधे गोसहस्रादिविधानात् द्यूतपणन्यायेन वृद्धिः कल्प्यते इत्युक्तं तदप्ययुक्तं तस्य वैरनिर्यातनार्थत्वेन विधानात्। यथापस्तम्बः, क्षत्रियं हत्वा गवां सहस्रं वैरनिर्यातनार्थं दद्यात् शतं वैश्ये दद्यात् दश शूद्रे वृषभश्चाधिकः तत्र कपर्दिभाष्यं वैरनिर्यातनार्थमिति। यो येन हन्यते स तमवश्यं हन्ति अतः प्रायश्चित्तं कुर्य्यात्। यथा नासौ हन्यते इति तन्निर्यातनं भवतीति। अथवा विपुलवित्तविषयमिदम् अतएव द्वादशवार्षिकमहाव्रतसमानतया आत्मतुलितसुवर्णदानम्। तथाच धनं वाजी वनायालं गृहं वा सपरिच्छदमिति महादेवपादैरपि विपुलधनविषयत्वेन व्याख्यातम्। यथा भविष्ये,

> वेदाभ्यासविहीनो वै धनवानग्निवर्जितः।
> प्रायश्चित्तं तदा कुर्य्यादिदं पापविशुद्धये।
> धनं वा जीवनायालं गृहं वा सपरिच्छदम्॥

इति। अथवा अभिषिक्तक्षत्रियवधविषयमिदम्। अत्र चतुर्विंशतिवार्षिकमहाव्रतविधानात्। यथा ब्रह्मपुराणं,

---

अथ गोसहस्रविधायकवचनान्यथानुपपत्त्या इत्थं युक्तिः कल्प्यते इत्याशङ्क्याह यच्चेति। अस्येति गोसहस्रस्येति अत्र प्रमाणमाह यथेति। व्याख्यातमिदं सुवर्णस्तेयप्रकरणे तस्येति षष्ठ्यधिकपयस्विधेनुशतत्रयस्येत्यर्थः। तथाहीति पञ्चदशभिः पणैव धेनुरूपा धेनुभिन्ना वृषभव्यतिरिक्ता गौः सर्वत्र लभ्यत इति व्यवहारविदां सिद्धं ततश्च तत् त्रैगुण्येन पणत्रयाधिकपुराणत्रयेण सह पयस्विधेनुमूल्यस्य किञ्चिदूनं समानत्वं चतुर्विंशतिवार्षिकवृषभाधिके गोसहस्राभिधानेन दर्शयता अमुना किञ्चिदूनपुराणत्रयमूल्या पयस्विधेनुरिति दर्शितम् अयम्भावः। सप्तदशपणप्रमाणेन गोसहस्रमूल्यमष्टपणाधिकद्विषष्ठ्युत्तरसहस्रपुराणं भवति तस्य च चतुर्विंशतिवार्षिकाविहितेन प्राजापत्येन षष्ठ्यधिकशतत्रयेण हरणाक्ष्य

यज्ञसंस्थौ तु पितरौ राजानं वाप्यनागसम्।
हत्वा चरेद् व्रतं तद्दच्चतुर्विंशतिवत्सरान्॥

चतुर्विंशतिवार्षिके चोक्तरीत्या षष्ट्यधिकं पयस्विधेनुशतत्रयम्। अत्र च संख्यावैषम्येऽपि मूल्यद्वारा गोसहस्रदानं समानमेव गोमूल्यात् पयस्विधेनुमूल्यस्य किञ्चिन्न्यूनत्रिगुणत्वेनोत्कर्षात्। तथाहि किञ्चिदधिकपुराणैकेनात्र धेनुरूपा गौः सर्वत्र प्राप्यते तत्त्रैगुण्येन किञ्चिन्न्यूनसमानत्वं दर्शयता किञ्चिन्न्यूनपुराण-त्रयमूल्या पयस्विधेनुरिति दर्शितं गोश्च सप्तदशपणमूल्येति अतएव यत् केचिदुक्तं कथं द्वादशवार्षिकं साशीतिधेनुशत-दानसमानत्वं गोसहस्रदानसमत्वात् द्वादशवार्षिकस्य। यथा अङ्गिराः,

गते तु द्वादशे वर्षे ब्रह्महा पूयते नरः।

इत्यभिधायाह गवां सहस्रं विधिवत् पात्रेभ्यः प्रतिपादयेत्।

ब्रह्महा वै प्रमुच्येत सर्वपापेभ्य एव हीति॥

तन्निरस्तं गोसहस्रदानस्य मतिपूर्वब्रह्मवधे महादेवपादैर्व्यव-स्थापितत्वात्। मतिपूर्वब्रह्मवधस्य चतुर्विंशतिवार्षिकव्रता-

---

अष्टादशवराटोत्तरपञ्चदशपणाधिकपुराणद्वयं धेनुमूल्यं भवतीति किञ्चिन्मूल्य-पुराणत्रयमित्युक्तं सषष्टीति न च वैश्यवधोक्ताब्दव्रततुल्यपञ्चदशधेनुस्थाने गोशत-दानस्य विधानात्तदनुसारेण धेनुमूल्यं कल्पनीयमिति वाच्यं गोशतदानस्य वैर-निर्यातनार्थत्वेन भिन्नविषयत्वात् अत्रेदमालोचनीयम्। गोसहस्रदानविधिर्गो-धेन्वोरुभयोर्मूल्येन प्रमाणं किन्तु एकस्य मूल्यनिर्णयेऽपरस्य मूल्यनिर्णायको भवितु शक्तः न च व्यवहारः सप्तदशपणात्मके गोमूल्ये प्रमाणमिति वाच्यं व्यवहार एव सन्देहात् प्रत्युत धेनोः पुराणत्रयमूल्ये वचनमेव प्रमाणं यथा षट्त्रिंशन्मतम्। धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिकीति। तथा कात्यायनः, द्वात्रिंशत्प-

पनेयत्वात् । चतुर्विंशतिवार्षिके च सषष्टिशतत्रयपयस्वि-धेनुदानमुक्तं तस्य तु गोसहस्रदानतुल्यत्वमेव । यथा भविष्ये,

मतिपूर्वं यदा हन्याद् ब्राह्मणं जातिमात्रकम् ।
गोसहस्रं तदा दद्यान्निर्गुणः स्वर्जिता यजेत् ॥

सषष्टिपयस्विधेनुशतत्रयसमानगोसहस्रदानविधिरेव उक्त-रीत्या पयस्विधेनोः किञ्चिदूनपुराणत्रयमूल्ये गोश्च सप्तदशपण-मूल्ये प्रमाणम् अतः सिद्धं द्वादशवार्षिकमहाव्रतं साशीति-पयस्विधेनुशतदानसमानमिति ॥ २३ ॥

अथ पराकः ।

पयस्विधेनुपञ्चकदानसमानः । यथाङ्गिराः,

मासि मासि पराकेण त्रिभिर्वर्षैर्व्यपोहति ।

प्रतिमासैकैकपराकानुष्ठानेन संवत्सरेण द्वादशमासात्मकेन द्वादशपराकाः सम्पद्यन्ते त्रिभिर्वर्षैः षट्त्रिंशत्पराका भवन्ति । अतः षट्त्रिंशत्पराकाशीत्यधिकप्राजापत्यशतयोस्तुल्यत्वं षट्-त्रिंशत पराकेभ्यश्चाशीत्यधिकशतप्राजापत्याः पञ्चगुणा भवन्ति

---

णिका गावी वत्सः पौराणिकी भवेदिति एवञ्च निर्णीतधेनुमूल्यानुसारेण षष्ट्य-धिकशतत्रयधेनुस्थानीयगोसहस्रविधानाद्गोमूल्यं कल्पनीयं तच्च सार्द्धपञ्चगण्डा-धिकसप्तदशपणात्मकं भवति तथा हि प्रत्येकं पुराणत्रयव्यवस्थया षष्ट्यधिकशत-त्रयधेनुमूल्यस्याशीतिपुराणसहस्रसङ्ख्याया हरणात् लब्धं गोमूल्यं भवति तच्चोक्त-मेव अन्यथा द्वादशवार्षिकव्रतानुकल्पधेनुमूल्यदाने चत्वारिंशदधिकपञ्चाशत्पुराण-दानं बहुशो ग्रन्थकृतोक्तमसङ्गतं स्यात् प्राजापत्यधेनुसङ्कलनेऽपि पुराणत्रयं धेनुमूल्यं निर्णीतमिति ॥ १२३ ॥

अथ पराक इति । गते तु द्वादशे वर्षे ब्रह्महा पूयते नरः । षड्भिर्वर्षै ब्रह्मचारी ब्रह्महा तु विशुद्ध्यतीत्यनन्तरं मासि मासीति वचनं षड्भिर्वर्षैस

तेनैकः पराकः प्राजापत्यपञ्चतुल्यः अतः पराके पञ्चधेनवः ।
यानि तु वचनानि,

चान्द्रायणं त्रिभिः कृच्छ्रैः पराकस्तद्द्वयेन तु ।
एतत् कृच्छ्रप्रमाणन्तु विद्वद्भिः परिकीर्त्तितम् ॥

तथा, चान्द्रायणमकुर्वाणाः कुर्य्युः कृच्छ्रचतुष्टयम् ।

तथा, चान्द्रायणपराकाभ्यां निष्कृतिं यो न शक्नुयात् ।
स करोत्यात्मशुद्ध्यर्थं प्राजापत्यस्य पञ्चकम् ॥

इत्यादीनि तान्यनाकराण्येव भोजदेवादिभिरलिखितत्वात् ॥ २४ ॥

अथ चान्द्रायणं सार्द्धसप्तधेनुदानसमम् । अथैकचान्द्रायणे चत्वारिंशत्ग्रासाधिकशतद्वयभोजनं मासेकेन भवति । तेन द्वात्रिंशत्तु गृहस्थस्येति मनुवचनेन सार्द्धसप्तदिनभोजनं सम्पद्यते सार्द्धद्वाविंशतिदिनेषूपवासस्तमस्य नैरन्तर्य्याभावात् अष्टादशदिनोपवासात्मकसार्द्धपराकसमत्वमस्य तेन सार्द्धसप्तधेनवः । तच्चिन्त्यं सङ्कलितोपवासानां सार्द्धपराकसमानत्वाभावात् । वस्तुतस्तु वचनात् समानता यथापस्तम्बः,

---

अशीत्युत्तरशतप्राजापत्यानि भवन्ति वत्सरत्रये षट्त्रिंशत्पराकाः अत एकस्मिन् ब्रह्महत्याविषये द्वयोर्वैकल्पिकविधानात् तुल्यत्वं तत्र च प्राजापत्यस्याशीत्यधिकशतसंख्याः पराकस्य षट्त्रिंशत्संख्यायाः पञ्चगुणा भवन्ति । अतः पञ्च प्राजापत्यतुल्यः पराक इति निर्गलितार्थः । षट्त्रिंशत्पराकेभ्य इति अशीत्यधिकशतप्राजापत्यानि षट्त्रिंशत्पराकेभ्यः सकाशात् संख्यया पञ्चगुणानि भवन्तीत्यर्थः ॥ १२४ ॥

चान्द्रायणमिति । अष्टादशेति । अष्टादशदिनोपवासात्मकस्तत्समानत्वमस्य चान्द्रायणस्येत्यर्थः । तथापीति । ननु अज्ञानादैन्दवद्वयमिति वचनं चान्द्रायणमात्रं विदधाति न तु चान्द्रायणविशेषम् । अतः शिशुचान्द्रायणेऽपि